उपदिशानि । तथैव सर्वैर्विद्वद्भिः सर्वमनुष्येभ्यो वेदचतुष्टयी वागुपदेष्टव्या । कस्य कस्य वेदाध्ययनश्रवणेऽधिकारोऽस्तीत्याकांक्षायामिदमुच्यते । **ब्रह्म-राजन्याभ्यां** ब्राह्मण-क्षत्रियाभ्यां, **आर्याय-वैश्याय, शूद्राय-चारणाय** अतिशूद्रायान्त्यजाय, **स्वायस्वात्मीयाय** पुत्राय भृत्याय च । सर्वैः सैषा वेदचतुष्टयी श्राव्येति । **प्रियो देवानां दाक्षिणायै दातुरिह**– यथाहमीश्वरः पक्षपातं विहाय देवानां विदुषां प्रियः, दातुर्दक्षिणायै सर्वस्वदानाय प्रियश्च स्यां तथैव भवद्भिः सर्वोपकारं मत्वा सर्वेभ्यो वेदवाणी श्राव्येति । यथा अयं **मे कामः समृध्याम्**– इयमिष्टसुखेच्छा समृध्यतां सम्यग्वर्धताम् । यथा वः सर्वमिष्टसुखं मामुपनयति । **उपमादो नमतु** तथैव भवतोऽपि सर्वमिष्टसुखमुपनमतु सम्यक् प्राप्नोत्वित्यर्थः । ”

अयमेवार्थः **उवटाचार्यकृत-मन्त्रभाष्ये महीधरकृत-वेददीपाख्यभाष्ये** च समर्थितः । एतेन मानवसामान्यस्यापि वेदाधिकारोऽस्तीति सम्यग्विज्ञायते ।

किंच– जात्या शूद्रस्य वेदाध्ययननिराकरणे देवा अपि कुप्यन्तीति **ऐतरेयब्राह्मणे** काचन आख्यायिका श्रूयते । यथा–

“सरस्वतीतीरे मुनिभिः कश्चन याग आरभ्यते । **“कवष ऐलूषो”** नाम कश्चिद् बालस्तत्रागत्योवाच– **“मामपि यागकर्मणि नियोजयतु”** इति । ऋषयोऽब्रुवन्– **“शूद्रस्त्वं बहिर्गच्छ”** इति । ऐलूषस्तु विषादेन ततो निर्जगाम । यथा मुनयो यागे हविर्ग्रहणाय देवानाह्वयन्ति तदा न कापि देवता तत्रागता । तेन संभ्रान्ता ऋषयस्सर्वे ऐलूषमन्विष्य तं प्रसन्नीकृत्य यागशालामुपनिन्युः । देवास्तदागत्य हविरगृण्हन्निति ” ।

अनया चाख्यायिकया च ज्ञायते यज्जात्या शूद्रोऽपि वेदाध्ययनादिकस्य अधिकारीति । उक्तञ्च भगवतापि को वा ब्रह्मविद्याधिकारीति । यथा–

> **[1]इदं ते नातपस्काय नाभक्ताय कदाचन ।**
> **न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥**

---

[1] भ. गी. १८-६७.

[1]य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥

यस्य च भगवति भक्तिस्तपस्विता तद्विषयशुश्रूषा वास्यात् स एव ब्रह्मविद्याधिकारीति स्पष्टमुपदिष्टम् । किन्तु न ब्राह्मण्यादिकमधिकारिता निरूपकम् ।

अन्यच्च– चातुर्वर्ण्यादिकस्यापि स्वरूपमुपदिष्टं तत्रैव "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इत्यादिना । चातुर्वर्ण्यमपि गुणकर्मस्वभावत एव सिध्यति न जन्मतः । उक्तं च भगवता मनुनापि–

[2]जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते ।
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥

शूद्रः पूर्णविद्या-सैशील्यादिगुणयुक्तश्चेत् ब्राह्मणतामेति ब्राह्मणभावं प्राप्नोति । एवमेव ब्राह्मणोऽपि कुचर्याऽधर्माचरण-निर्बुद्धि-मूर्खत्व-पराधीनता-परसेवादि-शूद्रगुणैर्युक्तश्चेत् शूद्रतामेति । उक्तं च आपस्तम्बसूत्रेऽपि–

[3]"धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णतामापद्यते जातिपरिवृत्तौ ॥ १ ॥
अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ २ ॥

सत्यधर्माचरणेनैव शूद्रो वैश्यं– क्षत्रियं-ब्राह्मणं च वर्णमापद्यते । एवमधर्माचरणेन सैव जघन्योऽपि सम्भवति ।

एतेन अज्ञत्व मूर्खत्व-दौर्जन्यात्वादिकमेव शूद्रत्वप्रवृत्तिनिमित्तमिति विज्ञायते । अज्ञत्वेन वेदाध्ययने अशुद्धपठनं अपस्वरोच्चारणं च संभवति । तच्च महाननर्थहेतुः । उक्तं च पाणिनिशिक्षायाम्–

---

[1] भ.गी. १८.६८. [2] मनुः अ १०-६५. [3] आप. प्रश्न. २. पटल ५. खं ११. सू. १०-११.

"स वाग्वज्रो यजमानं हन्ति। यथेन्द्रशत्रुः स्वरतोऽपराधात्" इत्यादिना अर्थप्रतिपत्तिपूर्वकसुस्पष्टोच्चारणस्य महत्फलमपि निर्दिष्टं महाभाष्यकारेण पतञ्जलिना— "एकः शब्दः सम्यक् ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके कामधुक् भवति" इति। पाणिनिशिक्षायान्तु—

"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" ॥ इति।

एतेन पूर्वोक्तपाठकाधमत्वलक्षणलक्षितत्वविशिष्टअज्ञत्व-मूर्खत्वादियुक्त एव शूद्र अतः सैव ब्रह्मविद्यानधिकारीति शास्त्रेषु व्यवह्रियत इति निर्णीयते।

५

## ब्रह्मविद्याधिकारिनिर्णये वीरशैववैशिष्ट्यम्।

यद्यपि ब्रह्मविद्याधिकारिनिर्णये अपशूद्राधिकरणव्याख्यातृभिः शङ्कर-रामानुजादिभि-राचार्यैः जात्या शूद्राणां संस्काराभावेन "न तेषां ब्रह्मविद्याधिकारः" इति निर्णीतम्। युक्तं चैतत् यतस्तैः जन्मना जातित्वमभ्युपगम्यते।

किञ्च— प्राकृतवर्णाश्रमानुयायिभिस्तु तैः द्विजेतराणां उपनयनसंस्कारो निषिध्यते; तथापि अप्राकृतवर्णाश्रमानुष्ठानवतां शक्तिपातनिमित्तगुरुकृपालब्धशिवदीक्षादीक्षितानां वीरशैवाना-मेतन्न रोचते। उक्तं च भगवता नीलकण्ठशिवाचार्येण वीरशैवस्वरूपम्— "ते वीर-शैवा लोकानां नित्यं क्षेमाभिलाषिणः"[1] इति। अस्मिन् प्रकरणे उमचिगी शङ्कर-शास्त्रिमहोदयेन अपशूद्राधिकरणं वीरशैवसिद्धान्तरीत्या सम्यक् व्याख्यायोक्तं स्वकीयब्रह्म-सूत्रवृत्तौ—

"भृगुसंहितायां"—

"सदा सन्निहितः शैवश्चण्डालो .... नैव सर्वदा।
गतं शूद्रस्याशूद्रत्वमन्यथा ब्राह्मणस्य तु" ॥
"शिवसंस्कारसम्पन्ने जातिभेदो न विद्यते"।

---

[1] क्रियासारः पु १५६.

उक्तं च– गारुडपुराणे–

"नमके चमके पञ्चब्रह्ममन्त्रे च वैदिके।
तेषामप्यधिकारोऽस्ति शिवदीक्षाप्रभावतः॥"

उक्तं च शिवपुराणे–

"यथा पङ्के सरोजं स्यात् यथा काष्ठे हुताशनः।
यथा सुवर्णं पाषाणे भक्तश्चण्डालवंशजः॥

स्त्रीवाथ पुरुषष्षण्डश्चण्डालो द्विजवंशजः।
न जातिभेदो लिङ्गार्चस्सर्वे रुद्रगणाः स्मृताः॥

शिवदीक्षाभिजातस्य पूर्वजातिं न चिन्तयेत्।
सुप्रतिष्ठितलिङ्गे तु न यथा पूर्वभावना॥"

उक्तं च लैङ्गेऽपि–

दार्वश्मलोहमृद्रत्नजातलिङ्गं प्रतिष्ठितम्।
यथा पूज्यं तथैव स्यात् भक्तश्चण्डालवंशजः॥

उक्तं च शिवरहस्ये–

"सर्ववेदेषु सर्वज्ञस्सर्वयज्ञेषु दीक्षितः।
महापातककोटिघ्नः श्वपचो लिङ्गपूजकः"॥

उक्तं च महाभारतेऽपि–

"जन्मना जायते शूद्रः कर्मणा जायते द्विजः।
वेदशास्त्रार्थविद्विप्रो ब्रह्म जानाति ब्राह्मणः॥"

उक्तं च स्कान्दे–

"ये रुद्रपिण्डसंजाता ये वेदक्रमपाठकाः।
ये विदुर्ब्रह्मवाच्यं श्रीरुद्रं ते ब्राह्मणाः स्मृताः॥"

इत्याद्यसंख्यातवाक्यानां प्रामाण्यात् शूद्रादीनां संस्काराधिकारत्वात् तेषां संस्कृतत्वे वेदाध्ययनवेदार्थविचाराधिकारवत्वात्, [1]"तेषां संस्काराधिकाराभावात् न ब्रह्मविद्याधिकारः" इति वादिनां मतं शिष्टादरणीयं न भवितुमर्हति।

उक्तं च मुण्डकोपनिषदि ब्रह्मविद्याधिकारमधिकृत्य—

[2]"तेषामेवैतां ब्रह्मविद्यां वदेत।
शिरोव्रतं विधिवद्यैस्तु चीर्णम्॥"

उक्तं चात्र शङ्करभगवत्पादाचार्यैः यतिप्रकरणे संन्यासविधानानन्तरमुपसंहारे इदमुच्यत इति। अतः संन्यासिन एव ब्रह्मविद्याधिकारिण इति मतमिदं सोपपत्तिकं निराकृत्य नीलकण्ठभगवत्पादाचार्यैः निरूपितं क्रियासारे—

अत्याश्रमत्वं किं नाम मोक्षमार्गोपयोगिता।
सा हि दृष्टा गृहस्थे च वामदेवे महात्मनि।
गार्ग्यामपि स्त्रियां चैव सा यतो ब्रह्मचारिणी॥

एतेन ब्रह्मविद्याधिकारः न केवलं संन्यासिनामेव, किन्तु वामदेव-वशिष्ठ-जनक-जानश्रुति प्रभृतीनां गृहस्थानां; न च ब्राह्मणादिद्विजातीनामेव किन्तु जाबाल-कवष-ऐलूष-विदुरादिभगवद्भक्तानां; न च केवलं पुरुषाणामेव किन्तु गार्गी-मैत्रेयीप्रभृतीनां ब्रह्मचारिणीनां स्त्रीणामपि विद्यते; यतस्ता अपि "पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते" इत्यादिना विधिवदुपनीय वेदमधीत्य गुरुसन्निधौ ब्रह्मविद्यामधिगतवत्य आसन्निति श्रूयते।

शक्तिपाताद्यवच्छिन्नश्रीगुरुकरुणाकटाक्षलब्धलिङ्गधारणात्मकशिवदीक्षादीक्षितानां सर्वेषां ब्रह्मविद्याधिकार इति [3]"संस्कारपरामर्शात् तदभावाभिलापाच्च" इति सूत्र व्याख्यायां सुगृहीतनामधेयेन उमचिगि शङ्करशास्त्रिणा राद्धान्तितम्— उक्तंच— "संस्कारो नाम शिवदीक्षा" इति वायवीये कृष्णोपमन्युसंवाद-परिशीलनेन ज्ञायते।

---

[1] ब्रह्मसूत्रवृत्तिः पृ. १९६. [2] मुं. ३, २, १०. [3] ब्र. सू. १, ३. ३६.

तथाहि—

"इदानीं श्रोतुमिच्छामि शिवसंस्कारमुत्तमम्" इति

प्रश्ने—

"हन्त ते कथयिष्यामि सर्वपापविशोधनम्।
संस्कारं परमं पुण्यं शिवेन परिभाषितम्॥
सम्यक् कृताधिकारस्स्यात् पूजादिषु नरो यतः।
संस्कारः कथ्यते तेन षडध्वपरिशोधनम्॥
दीयते येन वै ज्ञानं क्षीयते पाशबन्धनम्।
तस्मात् संस्कार एवायं दीक्षेत्यपि च कथ्यते॥"

इत्यादिभिः क्रियासारकारादृतश्लोकैः शिवदीक्षायाः संस्कारत्वदर्शनात्। एतादृश-संस्कारस्य को वाधिकारीत्यपेक्षायां—

"शक्तिपातानुसारेण शिष्येऽनुग्रहमर्हति।
शिवधर्माधिकारस्य तन्मूलत्वात्समासतः॥"

इत्यादिकैः प्रमाणैः निर्णीयते। यस्मिन् शक्तिपातः आर्थात् शिवकृपापातः तस्य-शिवदीक्षाधिकारित्वमुक्तम्। उक्तं च शक्तिपातलक्षण शिवागमेषु—

[1]"येषां शरीरिणां शक्तिः पतत्येव निवृत्तये।
तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ, द्वेषो भवस्थितौ॥
भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके शिवे।
एभिर्लक्ष्यैरविच्छिन्नैः शक्तिपातो महात्मभिः॥
अनुमेयः सदीक्षैश्च शक्तिपातानुसारतः।
शक्तिपातं समालोक्य दीक्षया योजयेद्गुरुः॥"

---

[1] पारमेश्वर मृगेन्द्रागमयोः (वेदान्तसार वीरशैवचिन्तामणौ- प्र. ३. श्लो. ६-८.)

उक्तं चानधिकारित्वमपि तत्रैव—

"यत्र शक्तिर्न पतिता तत्र शुद्धिर्न जायते ।
न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः ॥

तस्माल्लिङ्गानि संवीक्ष्य शक्तिपातस्य भूरिशः ।
ज्ञानेन क्रियया वाथ गुरुः शिष्यं विशोधयेत् ॥

इत्यादिनोक्तम् । शक्तिपातचिह्नानि तु—

"लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः ।
सा यस्मात्परमा शक्तिः प्रबोधानन्दरूपिणी ॥

आनन्दबोधयोर्लिङ्गमन्तःकरणविक्रिया ।
यथा स्यात् कम्परोमाञ्चस्वरनेत्राङ्गविक्रिया ॥

इत्यादिभिरुक्तानि बोद्धव्यानि ।

किञ्च—

"किमत्र बहुनोक्तेन भक्तास्सर्वेऽधिकारिणः ।
मम पञ्चाक्षरे मन्त्रे तस्मात् श्रेष्ठस्ततो हि सः ॥

इत्यनेन मनुदीक्षाधिकारित्वस्यापि भक्तमात्रे कथनात् ।

किञ्च—

"भगवन् मोक्षमार्गोऽयं त्वया सम्यगुदाहृतः ।
तत्राधिकारिणं ब्रूहि तत्र मे संशयो महान् ॥" इति

रामप्रश्ने—

"ब्रह्म-क्षत्रिय-विट्-शूद्राः स्त्रियश्चात्राधिकारिणः ।"

इति परमशिवेनैव सर्वेषां मोक्षमार्गाधिकारित्वस्योक्तत्वात् । उक्तं च **वीरशैवधर्मशिरोमणिकारैरपि**—

"यश्च मत्करुणापात्रं चरमं जन्म यस्य वै ।
तस्यैव जायते भक्तिः मम लिङ्गस्य धारणे ॥"

इत्यादिना शिवसंस्कारस्य भक्तमात्राधिकारित्वमुक्तम् ।

किञ्च—

"भक्तिमात्रपवित्रा हि सर्वे एवाधिकारिणः ॥" इत्युक्तत्वाच्च ।

परिपक्वमलान् शाम्भुः सकलानां च मध्यतः ।
कृपया परया वीक्ष्य दीक्षयेद्देशिकोत्तमः ॥

गुरुश्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ।
ब्राह्मणं क्षत्रियं वैश्यं द्विवर्षं त्रिवर्षं तथा ॥

प्राणद्रव्यप्रदानाद्यैरादेशैश्च समागमैः ।
आकृष्टास्ताडिता वापि ये विषादं न यान्त्यपि ॥

ते योग्याः संयताः शुद्धाः शिवसंस्कारकर्मणि ।
अहिंसका दयावन्तः नित्यमुद्युक्तचेतसः ॥

अमानिनो बुद्धिमन्तः त्यक्तस्पर्धाः प्रियंवदाः ।
ऋजवो मृदवः स्वस्था विनीताः स्थिरचेतसः ॥

शैवाचारसमोपेताः शिवभक्ता द्विजातयः ।
किमत्र बहुनोक्तेन योऽपि सोऽपि शिवाश्रितः ॥
संस्कार्यो गुर्वधीनश्चेत् संस्कारात् प्रतिभिद्यते ॥"

इत्युक्तत्वात् शिवसंस्कारार्हत्वं सर्वेषामिति सिद्धम् ।

किञ्च–

> श्रीलिङ्गधारणमहाविभवेन सर्वे
> रुद्रा बभूवुरत एव न तारतम्यम् ।
> एतन्मते स जननीक सुता इव स्युः
> वीराः परस्पर सहोदरभावभाजः ॥

इत्यभियुक्तोक्तेश्च ।

> "यथा हि रजतं ताम्रं रसयोगात्सुवर्णताम् ।
> तथा शिवज्ञानरसात् शूद्रादिश्शिवतां व्रजेत् ॥
> यस्यैव शाम्भवी भक्तिर्भवेद्गुरुकृपावशात् ।
> पूर्वजात्यादिकं तस्य न स्मरेत् प्राकृतं हि तत् ॥
> अप्राकृतस्य भक्तस्य गुरुहस्तकृपाम्बुजात् ।
> पुनर्जातस्यात्मजन्मजात्यादिं न च कल्पयेत् ॥
> पाषाणादिकृतं लिङ्गं यद्वत् पूज्यं प्रतिष्ठितम् ।
> नीचवंशोद्भवश्चापि भक्तश्चेत् ईश्वरे तथा ॥"

किञ्च–

> "श्वपचोऽपि द्विजश्रेष्ठः शिवभक्त्या द्विजाधिकः ।
> शिवभक्तिविहीनस्तु ब्राह्मणश्श्वपचाधमः ॥
> शिवसंस्कारहीनस्तु द्विजोऽपि श्वपचाधमः ॥"
> [1]काञ्चनं रजतं ताम्रं लोहं चेति चतुष्टयम् ।
> यद्वदेति सुवर्णत्वं रसवेधप्रभावतः ॥

---

[1] शिवरहस्ये पृ १८६, १९५.

तद्वत् शूद्रादिपात्रं हि शिवमात्रात्मकेन तु ।
विद्धरसेन महता परब्रह्मत्वमेत्यलम् ॥

शिवसंस्कारसम्पन्नो ह्ययं शूद्रो ह्ययं द्विजः ।
लिङ्गभेदः कृतो येन रौरवं नरकं व्रजेत् ॥"

इत्यादिना समर्थितं ब्रह्मविद्याधिकारित्वं शिवदीक्षासंस्कृतहृदयानां सर्वेषाम् ।

६

## आगमसंस्कृतिकमलाकरः शैवसन्तानपादपश्च

उपनिषदुद्यानं प्रविश्य भारतीयविचारधाराझरी वेदोपनिषत्सारसंवलिता अगमसंस्कृति-कमलाकरं प्रविशति । यद्यपि भारतीया संस्कृतिः निगमागमसारभूतैव ; तथापि वैदिक-संस्कृत्यपेक्षया आगमिका संस्कृतिः प्राचीनतरेति ऐतिह्यासिकानामाशयः ; यतो वैदि कार्याणां भारतागमनात्पूर्वं भारतमूलनिवासिनां द्राविडाख्यानां संस्कृतिः उत्कृष्टेति सिन्धूप्-त्यकाखननावसरे उपलब्धैर्ध्वंसावशेषैः अभ्यूह्यते । "परस्सहस्रवर्षं यावत् आर्यद्राविडसंस्कृत्योः परस्परसङ्घर्षमहिम्ना कालान्तरे भारतीया संस्कृति राविर्बभूव"– इति इतिहासज्ञा वदन्ति । सैव सैन्धवीसंस्कृतिः आगमसंस्कृतेः मूलमिति तेषामाशयः निविधनां आगम संस्कृति कमलानां आकरत्वात् सैन्धवीसंस्कृतिः कमलाकरत्वेन रूप्यते ।

आगमसंस्कृतिः वैदिक्या संस्कृत्या संमिळिता भारतीयसंस्कृतिस्वरूपतामभजत । तत्र च प्ररूढः शैवसन्तानपादपः पल्लवितः कुसुमितश्च ऐहिकामुष्मिकफलभरितः सर्वान् समुद्धरते ।

वेदोक्तायाः उच्चसंस्कृतेः ख्यापनार्थमेव आगमसम्प्रदायः प्रदुरासीदिति विदुषा-माशयः । तत्र निगमागमोक्तैः संस्कारैर्जनाः सुसंस्कृता अभवन् । तत्रादौ संस्कार-संस्कृत्योः स्वरूपं पश्यामः ।

**संस्कार-संस्कृति शब्दार्थः**– सम्पूर्वक-डु-कृञ्धातोः भावार्थे घञि सुटि वृद्धौ "**संस्कार**" शब्दः निष्पद्यते । आत्मशरीरान्यतरनिष्ठविहितक्रियाजन्योऽतिशयविशेषः संस्कारः । संस्कृतिः संस्करणमित्यनर्थान्तरम् । भावे ल्युटि संस्करणं, स्त्रियां भावे क्तिनि संस्कृतिरिति ।

मानवस्य मृगस्य चान्तरप्रकाशनं संस्कृतेः **वैशिष्ट्यम्**। अर्थात् आत्मनो विकासः संस्कृतिः। सा च संस्कृतिः (culture) बाह्यवेषभूषणादिरूपनागरिकतातः (civilization) भिन्ना आत्मनो जन्मान्तरीयवासनाविशेषात् तदन्तःकरणेऽङ्कुरिता सती चित्तवृत्तिं बुद्धि-व्यापारञ्च रूपयित्वा अन्तस्सत्त्वरूपेण समुज्ज्वलतीयं संस्कृतिः। क्षीरे नवनीतमिव सा नरस्य जीवनव्यापारेष्वोतप्रोततयाऽभिव्याप्ता प्रगतिमार्गमुपदिशति। **"असतो मा सद्गमय"** इति पूर्वोक्तश्रुत्यर्थं इदमुपबृंहयति।

## वेद-आगम-तन्त्र शब्दार्थः-

कथितं चैतत् यत् **'विद्— ज्ञाने'** इति **'विद्'** धातुनिष्पन्नस्य **'वेद'**शब्दस्य ज्ञानमर्थः इति। एवं गत्यर्थक-**'गम्लृ'**-धातुनिष्पन्नस्य आगमशब्दस्यापि आगमनमर्थः। अर्थात् **'परम्परया आगतोऽयं आगम'** इत्यवगम्यते। किञ्च— **"ये गत्यर्थकास्ते ज्ञानार्थकाः"** इत्युक्त्या **"आङ्"**-पूर्वकस्यास्य **'गम्लृ'** धातुनिष्पन्नस्य **'आगम'**-शब्दस्य **'पूर्णज्ञानम्'** इत्यर्थो लभ्यते। तथा च आगमः वेदोद्देशमेव साधयती-त्यवगम्यते; यतो वेदोक्तानां मन्त्राणां ऋषि-छन्दो-देवता-पल्लवादिनिरूपणद्वारा मन्त्राणां अनुष्ठाने उपयुज्यन्ते आगमाः। वेदोऽपि 'आगम' इति तत्र तत्र प्रयुज्यते **"निगमागम"** **'वेदागम'** शब्दौ पर्यायभूतौ।

"तन्त्र" शब्दोऽपि आगमपदस्य पर्यायभूतः। **सूक्ष्मतन्त्रे "श्रुतितन्त्रं"** इत्यभिहितम्। **"तन्यते— विस्तार्यते, ज्ञानमनेन ज्ञायते च तन्त्रम्"**। तन्त्रेण मानवस्य ज्ञानं विकसति; तेन तदुद्धारः इति स्फुटं ज्ञायते। उक्तं च—

**तनोति विपुलानर्थान् मन्त्रतन्त्वसमन्वितान्।**
**त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥** इति।

अतः मन्त्रतन्त्रसमन्वितार्थनिरूपणद्वारा मानवमुद्धरतीत्यन्वर्थकोऽयं तन्त्रशब्दः।

## वेदागमयोः समप्रामाण्यम्।

**"आप्तोक्तिरागमस्सोऽपि"** इति **पौष्करवचनात्—** आगमानामपि वेदवत् आप्तवाक्यत्वं युक्तम्। **मनुस्मृतिव्याख्याता कुल्लूकभट्टः "वैदिकी तान्त्रिकी चैव**

द्विविधा श्रुतिर्कीर्तिता" इति जगाद। तेन वेदागमाः श्रुतित्वेन निर्दिष्टाः। उक्तं च श्रीपतिपण्डितभगवत्पादाचार्येण स्वकीये सूत्रभाष्ये शास्त्रयोनित्वाधिकरणे–

[1]" अष्टादशानामेतासां विद्यानां ब्रह्मधर्मनाम्।
आदिकर्ता शिवः साक्षात् शूलपाणिरिति स्थितिः॥
विमर्शरूपिणी शक्तिः शिवस्य परमात्मनः।
निगमागमरूपा स्यात् सर्वतत्त्वप्रकाशिनी॥"

एवमेव [2]सर्वत्र प्रसिध्यधिकरणेऽपि– "किञ्च– एककर्तृत्वेन वेदमूलत्वेन कामिकादि-शिवागमानां वेदवत्प्रमाणत्वाच्च तदुभयप्रतिपाद्यत्वेन शैवमतं वैदिकमेव। तदुक्तं सिद्धान्तशिखामणौ च–

वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने।
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम्॥
पाञ्चरात्रस्य सांख्यस्य योगस्य च तथा मुने।
वेदैकदेशवर्तित्वं शैवं वेदमयं मतम्॥
वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने।
सर्ववेदानुसारित्वात् शैवतन्त्रं विशिष्यते॥
शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रमाणं वेदवत्सदा॥" इति।

इत्यादिना वेदमूलत्वात् शैवागमानां प्रामाण्यं प्रतिपाद्य वेदोपनिषदुक्तमन्त्रानुष्ठा-नाङ्गन्यासादिनिदर्शकत्वादप्यागमानां प्रामाण्यं निरूपितम्।

"किञ्च–मुण्डक-माण्डूक्य-छान्दोग्य बृहदारण्यककठवल्ल्यादिसर्वोपनिषत्सिद्धजीव ब्रह्मैक्यव्यवस्थापकत्वेन, षडक्षर त्र्यम्बक-गायत्र्यादिसर्वमन्त्राणां कराङ्गन्यासादिध्यानविधायक-

---

[1] श्रीकरभाष्यम् १.३.३ p. ७०. [2] श्रीकरभाष्यम्- अ. १, पा. २, प्रकृतग्रं- पु. १८३-१८४.

त्वेन, **गौतम-भारद्वाज-शौनकाद्याचारविषयककर्षणादिप्रतिष्ठान्तोत्सवादिविधायकत्वेन,** **"भूत्यै न प्रमदितव्यम्" "अग्निरिति भस्म"** इत्यादियजुराथर्वण बृहज्जाबाल-**कालाग्निरुद्रोपनिषदादि**प्रतिपादित**भूति-रुद्राक्षधारण**-विधायकत्वेन, यजुरारण्यान्तर्गतसद्यो-जातादिपञ्चब्रह्ममन्त्रप्रतिपादकत्वेन, **"अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमसि"** इति सिद्धवर्ण-पद-मन्त्र-कला-भुवन तत्त्वात्मकषडध्वप्रतिपादकत्वेन, **"या ते रुद्र" "यश्छन्दसां ऋषभो" "सोमा रुद्रा"** इत्यादिश्रुतिसिद्ध**लिङ्गधारण**विधायकत्वेन, **"अर्चत प्रार्चत" "तमुष्णुहि"** इति मन्त्रबोधितपूजाविधायकत्वेन च श्रुत्यागमानां समा-नार्थत्वात् साक्षाद्वैदिकत्वं आगमानां [1]निष्प्रत्यूहम्" इत्यादिना समर्थितञ्च। उक्तं च श्रीकण्ठभाष्येऽपि—

[2]"**वयं तु वेदशिवागमयोः भेदं न पश्यामः**" इति ; **ब्रह्मप्रणव-पञ्चाक्षरी-प्रसादादिमन्त्राणां पशु-पति-पाशादिवस्तुव्यवहाराणां भस्मोद्धूलनत्रिपुण्ड्रधारण-लिङ्गार्चन-रुद्राक्षधारणा**दिपरधर्माणामन्येषां च सर्वेषां व्यवहाराणामुभयत्रापि सममेव दर्शनादुभावपि प्रमाणभूतौ वेदागमौ"।

[3]**तिरुमूलर्** महाशयोऽपि तिरुमन्दिराख्ये द्रामिडप्रबन्धे वेदागमयोः समप्रामाण्यं प्रतिपाद्य **वीरागमप्रतिपादितं वीरमाहेश्वरमतोक्तं षट्स्थलसिद्धान्तं** सूचयति। ब्रुवन्ति च **डा. रमणशास्त्रिणः— "शैवमतं आगमान्तं"** इति। **सर् जान् उड्राफ्महोदयस्तु "शक्तिशाक्ताख्ये"** स्वकीये प्रबन्धे— **"वेदविषयकाः** केचित् दुराशयाः आगमेषु निर्मूलिताः" इत्यवदत्। भारतमहाराष्ट्रस्य पूर्वाध्यक्षाः **दि॥ डा॥ एस्. राधाकृष्णन्** महोदयास्तु [4]"विवेकिनोऽस्मत्पूर्वजाः वेदागमान् समयोजयन् इति साभिप्रायमवोचन्।

### आगमविभागः

[5]"**आगमा बहुधा प्रोक्ताः शिवेन परमात्मना।**
**शैवं पाशुपतं सोमं लाकुळं चेति भेदतः॥ ९॥**

---

[1] श्रीकरभाष्ये १.२.१. (पृ १८४). [2] श्रीकण्ठ. भा. २.२.३७ पृ. १५६. [3] तिरुमूलरस्य कालः क्रि. श. ६००. [4] कमला लेक्चर्स्. [5] सिद्धान्तशिखामणेः- परिं. ५.

> [1]तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।
> वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञकम् ॥ १० ॥
>
> शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।
> सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ॥ ११ ॥
>
> वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः ।
> वेदबाह्यविरोधित्वात् वेदसम्मत उच्यते ॥ १२ ॥"

इत्यादिना सुस्पष्टमेव सर्वेषां नास्तिकानां आस्तिकानाञ्च आगमानां विभागः कृतः । एवं सौर-गाणापत्यादितन्त्राण्यपि श्रूयन्ते । किञ्च पाञ्चरात्रागमाः १०८, शाक्तागमाः ६४, उपतन्त्राणि ३२७, शैवतन्त्राणि २८, उपतन्त्राणि १२७, वैष्णवतन्त्राणि ७५, उपतन्त्राणि २०५, इत्यादिप्रभेदाश्च श्रूयन्ते ।

## आगमानां कालः

आगमसंस्कृतिसत्तायाः समयनिर्णये त्चिकीर्षिते– सिन्धूपत्यकायां "हरप्पा-मोहेञ्जो-दारो" भूखननोपलब्धस्य प्रागैतिहासिकसंस्कृतिसूचकस्य वस्तुजातस्य परिशीलने च एवं विज्ञायते– यत् शैवागमपरम्परायाः सत्ता इतः पूर्वं पञ्चसहस्रवर्षपूर्वा इति ।

यद्यपि आगमोक्तस्य भाषाशैल्यादिकस्य पर्यालोचने तद्गताचारपरिशीलने च आगमानामर्वाचीनत्वं सुस्पष्टम्; तथाप्यागमिकी संस्कृतिः प्राचीना ; यतः पाञ्चरात्रागमोक्ता पूजापद्धतिः क्रि. पू. द्वितीयशतककालिकत्वेन ज्ञायमानस्य महाभारतस्य शान्तिपर्वणि २५० तमेऽध्याये निरूपिता । किञ्च क्रि. पू. पञ्चमशतककालिकत्वेन निर्दिश्यमाना । भगवद्गीतायां पाञ्चरात्रागमोक्तं वासुदेवमहत्वं दृश्यते । पाञ्चरात्राणां "सात्वत"-संज्ञा तु ऐतरेय-शतपथब्राह्मणयोः निरूपिता । अन्यच्च– भगवद्गीतायां शैवागमोदिता बहवो विषयाः यथाश्रुतं निबद्धाः । [2]एभिः कारणकलापैः पाञ्चरात्रागमाः क्रिस्तोः पूर्वं चतुर्दशशतकात् पूर्वजा इत्यवगम्यते । [3]डा· एस्. सि· नन्दीमठ महोदयास्तु

---

[1] सि. शि. परि. ५. [2] मल्लादिसूर्यनारायणशास्त्रि रचितम्- संस्कृतवाङ्मयचरितम्– पृ– ७१. शिवानुभवः त्रैमासिकी बिजापुर सं. ६ सं· १. एप्रिल् १९३१.

**"पाञ्चरात्रागमेषु शैवागमानां प्रस्तावो दृश्यते ; परन्तु वैष्णवागमानामुल्लेखः शैवागमेषु नास्ति"** ; इत्यतः शैवागमाः वैष्णवागमापेक्षया प्राचीनतराः इत्यवदन् । [1]अत एव शैवागमाः कनिष्ठं द्विसहस्रवर्षपूर्वं आसन्निति भूतपूर्वराज्यपालाः **श्री-रङ्गनाथदिवाकरमहोदयाः** लिलिखुः । [2]क्रि. श. पञ्चमशतकीयासु **काञ्चीशिलालेखासु** २८ शैवागमानां उल्लेखो दृश्यते ।

**काञ्चीशिलाशासनेषु शिवलिङ्गधारिणां राज्ञां प्रस्तावः ।**

[3]विदितचरमेवैतत् यत् क्रिस्तादनन्तरं प्रथमशताब्द एव महामाहेश्वराणां **जङ्गम-पुङ्गवानां** शैवाचार्याणां मठः **श्रीशैलमहाक्षेत्रे** आसीदिति विद्वद्भिरादियते । क्रि. श. १५० समये शिवभक्ताग्रेसराः "**भारशिव**" वंशीया राजानः शिवलिङ्गधारिण आसन् । यतस्तदानीन्तनशिलालेखेषु– [4]**"अंसभारसन्निहितशिवलिङ्गोद्वहनशिवपरितुष्टसमुत्पादित-राजवंशानां"** इत्यादिका उल्लेखा दृश्यन्ते ।

**किञ्च**– क्रिस्तादनन्तरं षष्ठशताब्दे काञ्चीसाम्राज्यसार्वभौमाः **पल्लववंशीया** राजानः परमशिवभक्ता इति शिलालेखेषु समुपलभ्यते ; यतः परमशिवभक्तेष्वेतेषु मध्ये **अत्यन्त-काम-गुणभर-राजसिंहप्रमुखाः** धर्मशास्त्रानुसारेणैव स्वीयोत्तमाङ्गेषु **शिवलिङ्गधारणं** कृत-वन्तः इति तदानींन्तनशासनावलोकनेनैव स्फुटीभवति । तत्र–

**श्रीमतोऽत्यन्तकामस्य द्विषद्दर्पापहारिणः ।**
**श्रीनिधेः कामरागस्य हराराधनसङ्गिनः ॥ ८ ॥**

**अभिषेकजलापूर्णे चित्ररत्नाम्बुजाकरे ।**
**आस्ते विशाले सुमुखः शिरस्सरसि शङ्करः ॥ ९ ॥**

**विदितबहुनयः शैवसिद्धान्तमार्गः........ ।**
**श्रीमानत्यन्तकामः .... ......... .... ॥**

---

[1] वचनशास्त्ररहस्यम् पृ. २८९-२९९. [2] दि॥ एस्. राधाकृष्णन् विरचितम्. इण्डियन् फिलासफि भा २. [3] डा ॥ चिदकूरे नारायणराव् संम्पादितः मल्लिकार्जुनपण्डिताराध्यचरितोपोद्घातः पृ. ३४४. [4] निवृत्त-मुख्यन्यायालयन्यायमूर्तिनां: श्री विद्यावाचस्पति बिरुदभाजां श्री टि. एन्. मल्लप्पमहोदयानां कृतिः "वीरशैव- उगमः प्रगतिश्च" पृ ४१.

अत्र डा ॥ हुल्श्महोदयस्य आंग्लानुवादोऽयम्–

[1] " Siva abides on the head of Atyantakama meens the same as " he bears Shiva on his head " (verse 3) viz " he is a divotee of Shiva. "

तत्रैव शासनसम्पुटे ३३-३४ संख्याक-शासनाभ्यां **गुणभरमहाराजोऽपि लिङ्गधारी** समभूदिति व्यज्यते–

[2]**गुणभरनामनि राजन्येन लिङ्गेन लिङ्गिनि ज्ञानम् ।**
**प्रथतां चिराय लोके विपक्षवृत्तेः परावृत्तम् ॥**

**शासने ३४–**

[3]**निर्मापितामतिमुदा पुरुषोत्तमेन**
**शैलीं हरस्य तनुमप्रतिमामनेन ।**
**कृत्वा शिवं शिरसि धारयितात्मसंस्थ-**
**मुच्चैः शिरस्त्वमचलस्य कृतं कृतार्थम् ॥** इत्यादि ।

अत्र '**लिङ्गेन लिङ्गिनि ज्ञानम्**' "**शिवं शिरसि धारयता**" इत्यादिषु **गुणभरमहाराजस्य** लिङ्गधारित्वं सुस्पष्टम् । ३४ संख्याके शासने "**शिवचूडामणिः**" "**श्रीवृषभलाञ्छनः**" "**श्रीआगमप्रमाणः**" "**आगमानुसारी**" इत्यादिकानि राजविशेषणान्युल्लिखितानि ।

"**श्रीपल्लवान्वयकुलाचलराजसिंहो**
**यः क्षत्रसिंह इति विश्रुतपुण्यकीर्तिः ।**
**जीयान्महेश्वरशिखामणिदीप्तमौलि-**
**र्युद्धार्जुनः स खलु लोकनरेन्द्रकीर्तिः ॥**"

अत्रत्यं "**महेश्वरशिखामणिदीप्तमौलि**"पदं राजसिंहनृपतेः शिरोलिङ्गधारित्वं निर्दिशति ।

---

[1] South Indian Inscriptions Vol. 1. No- 1. [2] South Indian Inscriptions Vol, 1. No. 33. [3] South Indian Inscriptions Vol. 1. No. 34.

अन्यच्च— अतःपरमष्टमशताब्दे विलिखिते **आनन्दगिरेः शङ्करविजये**—

> "**भुजद्वयलिङ्गधारकाः शैवाः फाले त्रिशूलधारिणो रौद्राः ।**
> **भुजद्वये डमरुधारिण उग्राः फाले लिङ्गचिह्नधारिणो भट्टाः ॥**
> **हृदि त्रिशूलं शिरसि पाषाणलिङ्गञ्च धारिणो जङ्गमाः ।**
> **ललाटे भुजद्वये हृन्नाभिषु लिङ्गधारिणः पाशुपताः ॥"**

इत्यादिना शिवलिङ्गधारिणामुल्लेखो दृश्यते । गोकर्णक्षेत्रे तावत् **ब्रह्म— शिवसूत्र-भाष्यकर्ता** पाशुपतधर्मानुगो **नीलकण्ठशिवाचार्यो हरदत्तप्रमुखैः शिष्यैः** सार्धं आगत्य **आचार्यशङ्करैस्सह** शास्त्रार्थं विधाय निर्जित इति **माधवाचार्यविरचिते शङ्करदिग्विजये** प्रस्तूयते । अयं चाचार्यो **शिरोलिङ्गधारी जङ्गमपुङ्गव** इति सुस्पष्टम् ।

इत्यादिकैरुल्लेखैः चारित्रकदृष्ट्याच आगमधर्मः ततोप्यतिप्राचीन इति संसूच्यते । अन्यच्च— [1]**कालिदासविरचिते शाकुन्तलेऽपि** कण्वाश्रमस्था वटवः **वैखानसागमानु-यायिन** इति निर्दिष्टाः । [2]**तिरुमूलर् रचिते तिरुमन्दिरे,** [3]**राजानकरामकण्ठस्य मतङ्ग-वृत्तौ, उमापतिशिवाचार्यस्य पौष्करभाष्ये,** [4]**अघोरशिवाचार्यकृतौ** [5]**माधवाचार्यस्य सर्वदर्शनसंग्रहे,** [6]**ईशानशिवस्य ईशानशिवगुरुपद्धतौ** च आगमविषयकाः उल्लेखाः बहवो विद्यन्ते ।

अपरं च **भिटा, गुडिमल्लं** इत्यादिषु विद्यमानानि शिवलिङ्गानि क्रि. पू. **प्रथम-**शतकात् पूर्वजानीति विद्वद्भिराकलितानि । न केवलं भारते **एव** प्रथितेऽयं आगमिकी संस्कृतिः, किन्तु **अन्नां (इण्डो चैना)** देशे, **मिसोना** (भद्रेश्वरः), **मेक्सिको-जावा-काम्बोडिया-चम्पा-इण्डोनेषिया-चीना-जपान**।**द्वीपौ**रस्त्यदेशेषु, लिङ्गपूजा क्रि. श. ५५० पूर्वमासीत् । तत्र विद्यमानाः आगमोक्ताः शिवालयाः अद्याप्यस्या आगमसंस्कृतेः [7]गतवैभवमुद्घोषयन्ति । पूर्वोक्तदिशा **मोहेञ्जोदारो** उपत्यकासंशोधनानन्तरं तु तत्रोपगतैः

---

[1] कालिदासस्य कालः- क्रि. श. ५००. [2] तिरुमूलर् कालः- क्रि श. ६००. [3] राजानकरामकण्ठ; कालः- क्रि. श. ९००-९२५. [4] अघोरशिवाचार्यकालः क्रि. श. ११००. [5] माधवाचार्यकालः- क्रि श. १४०० [6] ईशानशिवकालः- क्रि. श ११००. [7] काम्बोडियाशासनानि (षट्स्थलज्ञानसारामृतम्- डा॥ आर्. सि. हिरेमठसम्पादितम् (पृ. ९९ धारवाड).

शिवलिङ्गादिभिः आगमोक्ता संस्कृतिः वेदपूर्वकालिकीति कैश्चिदभ्यूह्यते ; इत्यादिकं मयापि [1]"**आगमसंस्कृति**" नामकेलेखने सम्यक् समर्थितं च–

**शैवागमपरम्परा**

आगमग्रन्थरचनायाः अर्वाचीनत्वेऽपि तत्सम्प्रदायस्य प्राचीनत्वमुपपादितम्। स्वय मागमशब्दार्थ एव तेषां परम्परागतत्वं पिशुनयति। **भगवद्गीतोक्ताध्यात्मविद्या** यथा **भगवता विवस्वते**, ततो **मनवे**, तत **इक्ष्वाकवे**, इत्यादिपरम्परया आगता; तथैव आगमपरम्परापि उपदिष्टा। अनया दिशा **कामिकादिवातुलान्ता अष्टाविंशत्यागमा** इत्थं निर्दिश्यन्ते–

**कामिक-योगज-चिन्त्य कारण- अजित-दीप्त- सूक्ष्म- सहस्र- सुप्रभ- अंशुमत्- विजय- निश्वास-स्वायम्भुव-अनल- मार- रौरव- मकुट- विमल- चन्द्रज्ञान- बिम्ब- ललित- प्रोद्गीत-सिद्ध- सन्तान-सर्वोक्त-पारमेश्वर-किरण-वातूला** इति। उक्तं च मुद्रितमृगेन्द्रागमभूमिकायाम्–

**कामिकं योगजं चाथ तथाचिन्त्यश्च कारणम्।**
**अजितं दीप्तसूक्ष्मौ च सहस्रश्च तथांशुमान्॥**
**सुप्रभेदस्तथा ह्येते शैवाः सम्परिकीर्तिताः॥** इति।

किं चात्र कामिकस्य त्रय उपभेदाः उक्ताः–

**नारसिंहं च वक्त्रारं भैरवोत्तरमेव च।**
**नारसिंहाख्यमेवैतन्मृगेन्द्रमिति कथ्यते॥** इति।

अत्र प्राथमिकाः दशागमाः "**शैवागमा**" इति, अवशिष्टाः **अष्टादश** आगमाः "**रुद्रागमा**" **इति** कथ्यन्ते। तत्र **शैवागमाः** वारत्रयं, **रुद्रागमा** द्विवारं च पुनर्ग्रथिता इति ज्ञायन्ते। तत्र प्रथमः **कामिकः** पूर्वं **प्रणवाय**, ततः त्रिकालाय, त्रिकालात् **हराय**

---

[1] "आगमसंस्कृतिः" :– वाराणसीयसंस्कृतविश्वविद्यालय (त्रैमासिकी) पत्रिका "सारस्वती-संवत् सुषमा" २०१७ (अङ्काः- १, २, ३, ४).
"ऋषिकल्पन्यासः"– भारतीपरिषत्, प्रयागः १९७० (पु. ९२-९६).

वारत्रयं कथित इत्यनुश्रूयते। एवमन्येऽपि **शैवागमाः तथैव**। **रुद्रागमेषु विजयागमः** प्रथमतः **रुद्राय,** ततः **परमेशाय** इति द्विरावृतः।

इत्थं **शाक्त-पाञ्चरात्रा**द्यागमेष्वपि आवृत्तिर्दृश्यते। अत एव **सुप्रभेदे** विस्तृतात् ग्रन्थान्तरात् संगृहीता "**अकुञ्चिता वृत्तिः**" इत्युक्तम्। किञ्च तत्र तत्र "**सारात्सार-तरः**" इत्याद्युल्लेखाः इममेवार्थं समर्थयन्ति।

## आगमोक्ता विषयाः

आगमेषु **क्रिया, चर्या, योगः, ज्ञानं** (विद्या) इति पादचतुष्कं विद्यते। अद्योपलभ्य-मानेष्वागमेषु केचन पादा न विद्यन्ते। तदुक्ता विषया अत्र सङ्गृह्यन्ते—

**क्रियापादः**— अस्मिन् पादे **देवालयानां संस्थापनं, मूर्तिरचना, तत्प्रतिष्ठा-दयो** विषयाः प्रतिपादिताः। **सुप्रभेदे कामिकादिषु** च देवतागाररचनाविचारः, सुविपुलमुपलभ्यते। निसर्गरमणीये पवित्रोद्देशे देवतायतनानि स्थापयितव्यानि। तत्र प्रथमतः क्षेत्रं कर्षणादिना संस्कृत्य व्रीह्यादिबीजान्यवोप्य, वर्धितेषु व्रीह्यादिषु तान् पशु-पक्षिभ्यो वितीर्य, ततस्तत्रालयनिर्माणं कार्यम्। शुभेऽहनि शङ्कुं संस्थाप्य विध्युक्त बलिहरणादिकमाचरेत।

यद्यप्यालयनिर्मितिः मूर्तिपूजादिकमज्ञजनमनोरञ्जनायेति केषाञ्चिदाशयस्तथापि तेन शिल्पशास्त्रोज्जीवनमभूत्। शिल्पशास्त्रोद्गमे आगमा एव निदानम्। वैदिकसाहित्ये प्रायः अस्य नातीवावकाशः; मूर्तिपूजाया आकरं आगमा एव। **आगमोक्तं शिल्पशास्त्र-वैभवमद्यापि एल्लोर-अजन्ता-एलिफेण्टा-बादामी-बेलूर्-हलेबीडु-सोमनाथपुर्-हम्पी-लेपाक्षी-**त्यादिषु विश्वविख्यातेषु देवायतनेषु गुहान्तर्देवालयेषु च दरीदृश्यते।

देवालयनिर्माणे तावत् **गर्भन्यास-पीठ-कण्ठ-मण्टप-प्राकारा**दिसूक्ष्मविषया अपि आगमेषु सम्यक् उपनिबद्धाः। विग्रहाराधनं यद्यपि न वैदिकयुगीनमिति सन्दिहन्ते संशोधकाः; तथापि तत् **यास्क-पाणिन्यादिभ्योऽपि** मूर्तिपूजा प्राचीनेत्यवधार्यते; यतः

श्रुतिषु "या ते रुद्र शिवा तनूः" "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ ; घोरान्या, शिवान्या" इति मूर्तिविषयः सूचितः । उक्तं च—

"घोरा शिवा महेशस्य मूर्तिर्देवैः प्रकीर्तिता ।
नमकैः पूज्यते घोरा शिवा च चमकार्चिता ॥" इति ।

इत्याद्युक्तयः भगवतः शरीरवर्णनं कुर्वन्ति । मानसिकैकाग्रतासाधनाय विना विग्रहाराधनं नास्त्यपरमुत्तमं साधनमिति स्वामीविवेकानन्दा "हिन्दूधर्मसारे" अवोचन् । विग्रहेषु चलाचलप्रभेदाः सन्ति । मूर्तयः सकलाः लिङ्गानि निष्कलानीति उच्यन्ते ।

**चर्यापादः**— पादेऽस्मिन् मानवप्रतिष्ठितानां मूर्तीनां पूजोत्सवादिप्रकाराः प्रतिपादिताः । स्नानार्चननैवेद्यादिकानां च विधानादिकं, अग्निकुण्डसमिदादीनां च निरूपणं कृतम् । आगमिकक्रियाकलापेषु शैवाग्निहोत्रस्य प्राधान्यम् ; न तु वैदिकाग्नेः ; यतो वैदिकाग्नितः शैवाग्निः प्रशस्ततरः । दीक्षितः शैवाग्निमेवोपयुञ्जीत । पारमेश्वरतन्त्रे वीरशैवैरपि [1]शिवदीक्षादिषु कर्माङ्गभूतहवनादिकं कर्तव्यमित्युक्तम् ।

**योगपादः**— पातञ्जलस्य योगशास्त्रस्य आगमा एव मूलमिति विद्वद्भिरभ्यूह्यते । ईशानशिवगुरु-निजगुणशिवयोगिप्रभृतयः आगमोक्तमेव योगपद्धतिमनुसृत्याष्टाङ्गयोगसाधनं न्यरूपयन् ।

**ज्ञानपादः**— पति-पशु-पाशात्मकः त्रिकसिद्धान्तः अस्मिन् पादे प्रस्तूयते । अस्यैव भारतीयसंस्कृतिभूमिकायां प्ररूढस्य पाशुपतसिद्धान्तात्मकस्य शैवसंतानपादपस्य बीजं षट्त्रिंशत्तत्त्वसंन्दोहः । अयं च सन्दोहः परमशिवडमरूत्थितेषु माहेश्वरसूत्रेषु अभिव्यक्तः परमेश्वरास्थाने प्रमथाग्रगण्येन आचार्यनन्दिकेश्वरेण ऐदम्प्राथम्येन तद्रचितासु नन्दिकेश्वरकारिकासु षट्त्रिंशत्तत्त्वबीजानि जगत्सृष्टिमूलानीति निर्दिष्टानि ।

तस्यैव शैवसन्तानभूरुहस्य शाखोपशाखाः विश्वमभिव्याप्य विराजन्ते । तेषु द्वैतशैव-सिद्धान्तशैव- शैवाद्वैत-द्वैताद्वैत- शैवविशिष्टाद्वैत- शैवविशेषाद्वैतप्रमुखा यथावकाशमत्र सङ्क्षेपतो निरूप्यन्ते ।

---

[1] पारमेश्वरतन्त्रम्- पटलः ३, ४, ५.

७

# षट्त्रिंशत्तत्त्वबीजानि जगत्सृष्टिमूलानि

शैवदर्शनस्य आधारभूतानि षट्त्रिंशत्तत्त्वानि। शैवागमोक्तानि तानि प्रथमतो परममहामाहेश्वरस्य **नन्दिकेश्वरस्य कारिकासु** संदृश्यन्ते।

सुप्रसिद्धं खलु शब्दशास्त्रम्। तच्च **सदाशिवडमरुध्वानसमुद्भूतैः "अ-इ-उ-ण्"** इत्यादिभिश्चतुर्दशभिः सूत्रैर्निबद्धमिति। **पाणिनि-पतञ्जल्यादिमुनयस्तु** सूत्राण्येतानि केवलं शब्दशास्त्रस्य मूलभूतानीति मत्वा सूत्र-भाष्यादिद्वारा शब्दशास्त्रं व्यरचयन्। किन्तु सदा सदाशिवसन्निधिमलंकृत्य तन्मनोभावग्राही प्रमथाधिपतिः **श्रीनन्दिकेश्वरः** शिवसूत्र-चतुर्दशकस्यास्य मुमुक्षुजनमोक्षसिद्धिरूपपरमप्रयोजनमेव मुख्योद्देशमित्याकलय्य **सनक-सनन्दन-सनत्कुमार-व्याघ्रपाद-वसिष्ठादिमहर्षिगणप्रार्थनानुसारेण तेषां माहेश्वरसूत्राणां** तत्र निगूढं शिवतत्त्वं **षड्विंशतिकारिकाभिः** समुपदिदेश। ता इमाः कारिकाः षट्त्रिंशत्तत्त्व-निरूपणद्वारा **शक्तिविशिष्टपरब्रह्मस्वरूपं** स्फुटं प्रकटयन्त्यो मुमुक्षूणां मनो महानन्दसिन्धौ निमज्जयन्ति।

गूढार्थगर्भितानामेतासां कारिकाणां **उपमन्युमहामुनिर्व्याख्यां** विलिख्य लोकोपकारं चकार। उक्तं च **पातञ्जलमहाभाष्यस्य** व्याख्याकारेण [1]**नागोजीभट्टेन** स्वकीये **प्रदीपोद्योते–**

[2]"**व्याख्याता चैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण; तदर्थं सकल-वाग्ज्ञानार्थं ब्रह्मबोधनार्थं च। अनेन यत्फलं तदक्षरसमाम्नायज्ञानेन सूचितम्।**"

"**सोऽयमक्षरसमाम्नायो ब्रह्मराशिः" अर्थात् "ब्रह्मतावमेव शब्दरूपेण द्योत्यते"** इति **कैयटेनापि** समर्थितम्। **बादरायणेनापि– "परमशिवस्य ब्रह्मणः अर्थप्रपञ्चकर्तृत्वं जन्माद्यधिकरणे, शब्दप्रपञ्चकर्तृत्वं शास्त्रयोनित्वाधिकरणे निरूपि-तम्"** इति।

---

[1] नागोजीभट्टस्य कालः- क्रि. श. १६००. [2] महाभाष्य-प्रदीपोद्योते अ. १. पा. १. आ २. पृ. ९०.

अथेदानीं शिवतत्त्वरहस्यजिज्ञासूनामुपयोगार्थं **नन्दिकेश्वर**कारिकाणां तत्त्वविमर्शिनी-तदाशयाभिव्यञ्जकटिप्पणीभिस्साकं **व्याख्या,** सङ्क्षेपतो निरूप्यते ।

**नन्दिकेश्वरकारिकासु शैवदर्शनोदयगभस्तयः**

पुरा किल **परमशिवः सनकादिमहर्षीनुद्धर्तुकामो** डमरुनिनादव्याजेन चतुर्दश-सूत्रात्मकं तत्त्वमुपदिदेश । तदनु सर्वे मुनीन्द्राः अस्य सूत्रजालस्य तत्त्वार्थं नन्दि-केश्वरो जानातीति तं प्रणिपत्य पृष्टवन्तः । स च **षड्विंशति**कारिकारूपेण तत्त्वं सूत्राणां उपदेष्टुमिच्छन्निदमाचचक्षे–

**नृत्तावसाने नटराजराजो**
**ननाद ढक्कां नवपञ्चवारम् ।**
**उद्धर्तुकामः सनकादिसिद्धा-**
**नेतद्विमर्शे शिवसूत्रजालम् ॥ १ ॥** इति ।

अहमिति शेषः । **नटराजराजः** परमेश्वरः स्वान्तर्गतमात्मतत्त्वं प्रकटयितुं **नृत्तावसाने नवपञ्चवारं ढक्कां ननाद** नादितवान् । अहं विततनिनादोद्भूतवर्णात्मकमाद्यं महारहस्यं **एतत् शिवसूत्रजालं** सूत्रसमूहं **विमर्शे** स्फुटीकरोमीत्यर्थः ॥ १ ॥

**अत्र सर्वत्र [2]सूत्रेषु अन्त्यवर्णचतुर्दशम् ।**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ २ ॥**

अनुबन्धाः (ण्, क् प्रभृतयः) पाणिन्याद्युद्देश्यका एवेत्याह– " **अत्रेति** " एष्वित्यादि-रर्थः । अन्त्यं वर्णेति वा पाठः । उभयथापि बहुव्रीहिः । कदम्बमन्यपदार्थः । समासान्तः । चतुर्दशेति वा पाठः । तदा तत्पुरुषात् " **द्वेकयोः** " इतिवच्चतुर्दशेति प्रयोगः । **धात्वर्थं** धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थमित्यर्थः । " **अन्त्यवर्णजालं शब्द** " इति

---

[1] ' अ इ उ ण् ' इत्यादिषु ' हल् ' इत्यन्तेषु चतुर्दशसूत्रेष्वित्यर्थः ।

न्यायात्। तथाचोक्तं इन्द्रेण । "अन्त्यवर्णसमुद्भूता [1]धातवः परिकीर्तिताः।" इति ॥ २ ॥

अइउण्

[2]अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ।
[3]चित्कलामिं समाश्रित्य [4]जगद्रूप उणीश्वरः ॥ ३ ॥

तत्राद्येन सूत्रेण सर्ववर्णानां समस्तभुवनानां च समुद्भवरूपं स्वात्मतत्त्वमुपदिष्टम् तदाह– ॥ अकारो ब्रह्मेति ॥– अः परमेश्वरो निर्गुणः इं [5]मायामाश्रित्य उः व्यापकः सगुणः ण् आसीत् इत्यर्थः। सर्ववस्तुषु परा-पश्यन्ती-मध्यमा-वैखर्यादिषु इं चित्कला-मित्यत्र गायत्रीमिं च" इतिवदीकारो बोध्यः। अत्र ईकारस्तु सूत्रे नोदितः इकार एव प्रकटितः। सर्गसम्भवकाले 'अ, इ, उ, ऋ, ऌ,' इति वर्णपञ्चकमेव सर्वेषा मेकोनपञ्चाशदक्षराणां भूतपञ्चकादिपञ्चवर्गाणां क्रमेण योनिरिति। 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति श्रुतिः। असद्ब्रह्म वै निश्चयेन अग्रे सृष्टेः पूर्व-

---

[1] सकलस्यापि शब्दशास्त्रस्य "अण् इण् उण् अक् अच्" इत्यादिचतुश्चत्वारिंशत्प्रत्या-हारैकमूलत्वात्, प्रत्याहाराणां च "अइउण्" इत्यादिचतुर्दशसूत्रान्त्यवर्णमूलत्वात् तदिदं चतुर्दश-सूत्रघटितान्त्यवर्णजालं धातुमूलकसकलशब्दशास्त्रमूलमिति भावः।

[2] परब्रह्मणः सर्वदैव कल्याणगुणगणाकारत्वादत्र निर्दिष्टं निर्गुणपदं हेयगुणराहित्यपरम्।

[3] चिच्छक्तिमित्यर्थः।

[4] विमर्शाख्या पराशक्तिर्विश्ववैचित्र्यकारिणी।
यस्मिन् प्रतिष्ठितं ब्रह्म तदिदं विश्वभाजनम् ॥ (परि. २०)
पत्रशाखादिरूपेण यथा तिष्ठति पादपः।
तथा भूम्यादिरूपेण शिव एको विराजते ॥ (परि. १०)

इति सिद्धान्तशिखामणौ अयमेवाशयः स्फुटीकृतः।

[5] ऊर्ध्वमायाम्।

मिदमक्षरात्मकमासीत् ; ततोऽक्षरात् सगुणमजायत ; जातमित्यर्थः । तदुक्तं गीतायाम्–
'अक्षराणामकारोऽस्मि' इति ॥ ३ ॥

**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।**
**[1]आद्यमन्त्येन संयोगादहमित्येव जायते ॥ ४ ॥**

अत एवाह ॥ **अकार इति** ॥ आदिरकारः अन्त्यः हकारः अकारादिहकारान्ताः वर्णास्ततः परमात्मनः समभवन्नित्यर्थः । परमः शिव इति पाठान्तरम् ॥ ४ ॥

**[2]सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ।**
**ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता ॥ ५ ॥**

**वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ।**
**सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता ॥ ६ ॥**

---

[1] आद्यवर्णेन अकारेण अन्त्यवर्णस्य हकारस्य संयोजनात् "अहम्" इति जायते । परशिवब्रह्म अहंपदवाच्यमिति भावः ।

अकारः शिव आख्यातः हंकारः शक्तिरुच्यते ।
शिवशक्तिमयं ब्रह्म स्थितमेकमहम्पदे ॥ (सिद्धान्त शिखामणी परि· २०)

[2] सकलचराचरात्मकमिदं विश्वं सृष्टेः पूर्वं परा वागात्मकचैतन्यस्वरूपमासीत् ; चैतन्यस्वरूपा सा परा वागेव क्रमेण पश्यन्ती-मध्यमा-वैखरीरूपेण परिणामं प्राप्य चराचरात्मकविश्वाकारेण– "विराजत इति भावः । परादिवाक्चतुष्टयमेतच्छक्तिपरिणामात्मकमिति बोध्यम् । परा-पश्यन्ती-मध्यमाख्यं वाक्त्रयं शरीरान्तर्निगूढं सत् प्रकाशते । एतत्तु योगिनामेव गम्यम् । वैखरी वागपि वक्त्रादाविर्भूय स्पष्टोच्चाररूपा भवति ।

तां देवीं वाचं हविषा यजामहे । सा नो दधातु सुकृतस्य लोके ।
चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेंगयन्ति । तुरीयं वाचो मनुष्या वदन्ति ॥
(तैत्तिरीयब्राह्मणम् २·८·८)

—परब्रह्म अक्षरात्मकसकलशब्दराशिस्वरूपमिति भावः ।

[1]ईश्वर एवानादिजीवोपाध्याश्रितकर्मप्रेरितप्राणव्यापारानन्तरं नाभौ पराख्यं [2]मायापरिणाममुपेत्य, हृदि पश्यन्त्याख्यमुपेत्य, विशुद्धचक्रे मध्यमाख्यमुपेत्य, वक्त्रे वैखर्याख्यमुपेत्य च वेदादिरूपो भवतीत्यर्थः। श्रुतिरपि **"वागेव विश्वा भुवनानि जज्ञे"** इति। सूक्ष्मा वागेव विश्वाकारेण विपरिणमते इति बोध्यम्। **श्रुत्यन्तरमपि– "वाचैव विश्वं बहुरूपं निबद्धं तयैवैकं प्रविभज्योपभुङ्क्ते"** इति ॥ ५-६ ॥

**अकारं सन्निधीकृत्य जगतां कारणत्वतः।**
**इकारः सर्ववर्णानां शक्तित्वात्कारणं मतम् ॥ ७ ॥**

तत्र सर्वत्रेकारस्यैव स्वतन्त्रतामाह–॥ **अकारमिति** ॥ **अर्थात् इकारवाच्या शक्तिः** अकारवाच्यं परब्रह्म अविनाभावसम्बन्धेन समाश्रित्य सकलसचराचरप्रपञ्चस्य कारणं भवतीति भावः ॥ ७ ॥

**जगत् स्रष्टुं प्रभोरिच्छा यदा ह्यासीत्तदाऽभवत्।**
**[3]कामबीजमिति प्राहुर्मुनयो वेदपारगाः ॥ ८ ॥**

**[4]अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता।**
**उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः ॥ ९ ॥**

---

[1] अत्र ईश्वरपदं स्वापृथक्सिद्धशक्तिविशिष्टेश्वरपरम्।
आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात् ॥ ६६ ॥ (सि शि १०)

[2] मायापरिणामं शक्तिपरिणाममित्यर्थः अस्य सर्वत्रान्वयः।

[3] परमात्मन इच्छामात्रसृष्टेः कामबीजमिति संज्ञा वर्तते।

[4] अकारः– चैतन्यस्वरूपपरमात्मवाचकः, इकारः शक्तिवाचकः, उकारश्च व्यापकत्वधर्मवाचकः; एतदक्षरत्रयस्य तात्पर्यं– शक्तिविशिष्टः परमेश्वरः सकलचराचरप्रपञ्चव्यापक इति बोध्यम्। तृतीयश्लोकव्याख्याने उपमन्युनाप्ययमेवार्थः स्फुटीकृतः।

" जगत्स्रष्टुमिति " उक्तञ्च–

" स्वप्रकाशपरमात्मवस्तुनो
दृश्यमान जगतः सिसृक्षया ।
कामतः परशिवप्रकाशितं
कामबीजमिदमेव निश्चितम् ॥ " इति ।

बीजविन्दुद्वयारूढं सार्धयोनिस्वरूपकम् ।
महाकामकलारूपमात्मानं चिन्तयेत् प्रिये ॥ " इति च । (८.९)

ऋऌक्

ऋऌक् सर्वेश्वरो [1]मायां मनोवृत्तिमदर्शयत् ।
तामेव [2]वृत्तिमाश्रित्य जगद्रूपमजीजनत् ॥ १० ॥

---

[1] मायां- मं- शिवं, अयति- स्वभावतः प्राप्नोतीति माया, परशिवब्रह्मनिष्ठशक्तिरित्यर्थः ।

" मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः ।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी ॥ " इति ।

सिद्धान्तागमे मायाशब्दनिर्वचनं स्पष्टीकृतम्–

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् । " (४-१०)

इति श्वेताश्वतरेऽप्ययमेवाशयः प्रदर्शितः ।

[2] वृत्तिर्नाम परमेश्वरनिष्ठधर्मरूपशक्तिविशेषः, परमेश्वरः तादृशशक्तिविशेषविशिष्टः सन् सकलचराचरात्मकं जगज्जनयामास ।

तदीया परमा शक्तिः सच्चिदानन्दलक्षणा ।
समस्तलोकनिर्माणसमवायिस्वरूपिणी ॥ (सि. शि. प. २)

इति सिद्धान्तशिखामणौ अयमेवाशयः सूचितः ।

[1]वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते।
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपि ॥ ११ ॥

स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मूलयत्यसौ।
वर्णानां मध्यमं क्लीवमृलृवर्णद्वयं विदुः ॥ १२ ॥

ननु सर्ववेदान्तेषु परमेश्वरः एक इति निश्चितत्वात् मायामिं चित्कलां समाश्रित्य जगद्रूपोऽभूदित्युक्तेऽद्वैतहानिर्जायतेत्याशङ्क्याह– ॥ ऋलृगिति ॥ ऋ– परमेश्वरः, लृ- मायाख्यां मनोवृत्तिः क्– अदर्शयत्। तामेवाश्रित्य स्वेच्छया जगज्जनयामासेत्यर्थः। "सोऽकामयत बहुस्यां प्रजायेय" इति श्रुतिः। श्रीतन्त्रेपि "मत्तो ह्यभून्मनोरूपलृकारः परमेश्वरि" इति। ऋलृवर्णौ यथा तादात्म्यमापन्नौ तथेत्यर्थः ॥ १०-११-१२ ॥

---

[1] धर्मधर्मिणोरभेदः स्वभावैकत्वात्। अतो धर्मधर्मिणोः कियानपि भेदो नास्ति। चन्द्रस्य चन्द्रिकायाः, वाचः अर्थस्य च यथा नित्यसम्बन्धो वर्तते तथा शक्तिशक्तिमतोः नित्यसम्बन्धो वर्तत इति बोध्यम्।

"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥" (रघुवंशे १-१)

इति कालिदासेन अमुमेवाशयमवलम्ब्य मङ्गलमाचरितम्।

"शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः।
शक्तिस्तु शक्तिमद्रूपाद्व्यतिरेकं न गच्छति ॥
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव।
शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः ॥ (श्रीकण्ठभाष्ये १, २, ९)

"यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा ॥" (सि. शि. परि. १०)

इत्ययमेव भावः प्रदर्शितः रेणुकभगवत्पादाचार्यैरपि।

## एओङ्

एओङ् मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु ।
साक्षित्वात् सर्वभूतानां स एक इति निश्चितम् ॥ १३ ॥

ननु जनयामासेत्युक्ते जन्यजनकभावेऽद्वैतहानिः स्यादित्याशङ्क्य "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतिमाश्रित्याह– ॥ एओङिति ॥ जन्यजनकत्वं च स्वस्यैव तत्तद्रूपेण वर्तमानत्वादिति नाद्वैतहानिः । आकारोकाराभ्यां निष्पन्नप्रणवरूपेण ओकारेण सगुणनिर्गुणयोरैक्ये बोधिते तेनैव दृष्टान्तेन सर्वत्रैक्यबुद्धौ द्वैतनिरासो ध्वनितः । समष्टिव्यष्टिभेदेन पूर्ववर्णयुतद्वितीयस्य पूर्ववर्णयुततृतीयस्य च समन्वयबोधकमिदं सूत्रम् । अ– अक्षरात्मकः इ– मायायुक्तः सन् यः, सः अ-उ प्रज्ञानस्वरूपः, प्रज्ञानात्मा । सर्ववस्तूनामेकत्वात् अद्वैतोपपत्तिः ; न नानात्वं जन्यजनकत्वं च । स्वयं प्रविश्य तत्तद्रूपेण वर्तत इत्यर्थः । वटबीजन्यायेन च पूर्वसूत्रद्वयगतवर्णपञ्चकमेव सकलजगत्कारणमिति प्रागुक्तम् । उत्तरसूत्रवर्णानामपि तस्मादेव सम्भवः । अत्राप्यपरत्वे सर्ववेदसम्मतत्वम् । तथा च सनक-दक्षिणामूर्तिसंवादे महावाक्यविवरणे–

"शृणु त्वं सावधानेन चतुर्णां च समानताम् ।
वेदानां च महाभाग चतुष्टयमिहोच्यते ॥

ब्रह्मशब्देन यद्वस्तु तत्प्रज्ञानमितीरितम् ।
प्रज्ञानं ब्रह्म यस्माद्धि तस्माद्ब्रह्माऽस्म्यहं ततः ॥

तद्ब्रह्म सर्वसाक्षीति तत्त्वमस्येव तत्त्वतः ।
अन्यत्ववारणार्थायाऽयमात्मेत्यपि वर्ण्यते ॥ १३ ॥" इति ।

## ऐऔच्

ऐऔच् ब्रह्मस्वरूपः सन् जगत्स्वान्तर्गतं ततः ।
इच्छया विस्तृतं कर्तुमाविरासीन्महामुनिः ॥ १४ ॥

स्वात्मभूतस्य परमेश्वरस्य जगत्कारणत्वं कथमित्याशङ्क्याह– ॥ ऐऔजिति ॥ ततः स्वान्तर्गतं जगद्विस्तारयितुमिच्छुः ऐ ज्ञानादिशक्तियुक्त इति । अतः अकारस्य पूर्व-

सूत्रगतस्य एकारस्य च योगे ऐकारत्वमेकत्वं च। संप्रज्ञानस्वरूपपरमेश्वरो यः स पूर्वसूत्रगत-एव। अकारस्य पूर्वसूत्रगतस्य ओकारस्य च योगे औकारत्वम्। यः संप्रज्ञानात्मा माया शबलितः स ऐकारो यः स आ ई आ ऊ इत्याविर्भावे उक्तः। उक्तं च **स्वर-विमर्शिन्याम्**— "उकारज्ञानसंयोगात्सर्वसंहतिरिष्यते" इति। इच्छया जगद्विस्तार-यितुमुद्युक्त इत्यर्थः। अत्राह— "**प्रणवेन जगद्व्याप्तं मायायामवतिष्ठते**" इति **ज्ञानोत्तमे**। एवं तत्त्वसमुदायानां त्रयोदशवर्णेभ्यः शिवादिप्रकृत्यन्तानामुद्भवः। प्रकृति-पुरुषविवेक उत्तरत्र वक्ष्यते; [1]अस्मिन् सूत्रे स उपसंहारत्वेन पठितः।

अत्र ह्रस्वदीर्घप्रभेदात् चतुर्दशस्वराणामेव सङ्कीर्तनं **चतुर्दशभुवन-चतुर्दशचक्र-चतुर्दशप्रकाराणामिति** निष्कर्षः। तदुक्तं **शिवगौरीसंवादे महामन्त्रतत्त्वप्रकाशिन्याम्**—

"तव मंत्रोऽहमीशानि मम रूपं त्वमेव हि।
चतुर्दशात्मकं चक्रं स्वरचक्रमितीरितम्॥
त्रयोदशात्मकं तुर्यमावयोर्मन्त्रमम्बिके।
[2]उच्छूनकाले विन्द्वात्मा तस्मादक्षरसम्भवः॥
बिन्दुस्फोटनमात्रेण वर्णानां च समुद्भवः।
तस्माद्व्योमादिकं भूतपञ्चकं समजायत॥
बिन्दुः श्रीचक्रराजस्य परब्रह्मात्मकस्त्विति।
चतुर्दशात्मकः पश्चाच्चक्राकारेण सम्भवः।
जातानि भुवनान्यत्र चतुर्दश चतुर्दश"॥१४॥ इति।

**हयवरट्**

भूतपञ्चकमेतस्माद्धयवरण्-महेश्वरात्।
व्योमवायुवम्बुवन्ह्याख्य-भूतान्यासीत्स एव हि॥१५॥

---

[1] शिव शक्ति-सदाशिव-ईश्वर-शुद्धविद्या-माया-कला-विद्या-राग-काल-नियति-पुरुष-प्रकृत्याख्यानि त्रयोदश तत्त्वानि। [2] जगत्सृष्टिसमये इत्यर्थः।

तत आत्मनः सकाशादाकाशादिभूतसम्भवमाह— ॥ **भूतपञ्चकमिति** ॥ ॥ **स एवेति** ॥ परमेश्वर एवेत्यर्थः ॥ १५ ॥

**हकाराद्व्योमसंज्ञं च यकाराद्वायुरुच्यते ।**
**रकाराद्वह्निस्तोयन्तु वकारादिति सैव वाक् ॥ १६ ॥**

॥ **हकारादिति** ॥ "**तस्माद्वा एतस्मादात्मन आकाशः सञ्जातः**" इति श्रुतिः तस्मात्परमेश्वराद्भूतपञ्चकमासीत् इत्युक्तम् ॥ १६ ॥

लण्

**आधारभूतं भूतानामन्नादीनां च कारणम् ।**
**अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥ १७ ॥**

तत्राकाशादिभूतचतुष्टयमेवोक्तं न पृथिवीत्याकाङ्क्षायामाह— ॥ **आधारेति** ॥ **भूतानां**— प्राणिजातानामुद्भिज्ज-स्वेदज-जरायुजाण्डजादीनां प्रधानाधारत्वादाधारभूता पृथिवी । पुनश्चान्नपानादीनां कारणत्वात्प्रत्येकत्वेन **लणि**त्युदीरितमित्यर्थः ॥ "**अन्नाद्रेतः**" इति न्यायात् ॥ १७ ॥

ञमङणनम्

**शब्द-स्पर्शौ-रूप-रस-गन्धाश्च ञमङणनम् ।**
**व्योमादीनां गुणाह्येते जानीयात्सर्ववस्तुषु ॥ १८ ॥**

ततः पृथिव्यादीनां कारणत्वेन स्थितानां तन्मात्राणां उत्पत्तिक्रममाह— ॥ शब्देति ॥ ॥ १८ ॥

झभञ्

**वाक्पाणी च झभञ् आसीद्विराड्रूपं चिदात्मनः ।**
**सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते ॥**
**वर्गाणां तुर्यवर्णा ये कर्मेन्द्रियमया हि ते ॥ १९ ॥**

ततः सूत्राभ्यां कर्मेन्द्रियवर्गमुपदिशति– ॥ **वाक्पाणीचेति** ॥ विराड्रूपस्य शिवस्य प्राणिजातस्य च झकारभकारौ स्थावरादिषु विना **विराड्रूपं** विज्ञेयमित्यर्थः ॥ १९ ॥

**घढधष्**

**घढधष् सर्वभूतानां पादपायू उपस्थकः ।**
**कर्मेन्द्रियगणाह्येते जाता हि परमार्थतः ॥ २० ॥**

अथ क्रमप्राप्तं पादादिक्रमाह– ॥ **घढधषिति** ॥ परमशिवसकाशात् कर्मेन्द्रियगणाः पाद-पायूपस्थानि **घढधषवर्णा** जाता इत्यर्थः ॥ २० ॥

**जबगडदश्**

**श्रोत्रत्वङ्नयनघ्राणजिह्वाधीन्द्रियपञ्चकम् ।**
**सर्वेषामपि जन्तूनामीरितं जबगडदश् ॥ २१ ॥**

अथ क्रमप्राप्तेन्द्रियसम्भवमाह– ॥ **श्रोत्रेति** ॥ "**वर्णानां मध्यवर्णोत्थो ज्ञानेन्द्रिय-गणः स्मृतः**" इति वचनशासनाज्जबगडदवर्णसमूहो ज्ञानेन्द्रियाणां जनक इति ज्ञात-व्यमित्यर्थः ॥ २१ ॥

**खफछठथचटतव्**

**प्राणादिपञ्चकं चैव मनोबुद्धिरहङ्कृतिः ।**
**बभूव कारणत्वेन खफछठथचटतव् ॥ २२ ॥**

ततः प्राणादिपञ्चकमनोबुध्यहङ्काराः समुन्मील्यन्ते– ॥ **प्राणादीति** ॥ स्पष्टम् ॥ २२ ॥

**वर्गद्वितीयवर्णोत्थाः प्राणाद्याः पञ्च वायवः ।**
**मध्यवर्गत्रयाज्जाता अन्तःकरणवृत्तयः ॥ २३ ॥**

॥ **वर्गेति** ॥ एतैरष्टवर्णैः प्राणादिपञ्चकं मनोबुद्ध्यहङ्कृतयश्च जगतां कारणत्वेन सम्भूता इत्यर्थः ॥ २३ ॥

कपय्

**प्रकृतिः पुरुषश्चैव सर्वेषामेव सम्मतौ ।**
**सम्भूताविति विज्ञेयं कपय् स्यादिति निश्चितम् ॥ २४ ॥**

ततः सर्वप्राणिकारणत्वेनाद्यन्तवर्गद्वयाक्षरग्रहणेन सम्पुटीभावं प्रकृति-पुरुषाभ्यां प्रकाशयति ॥ **प्रकृतिमिति** ॥ २४ ॥

आदितश्चतुर्विंशतिकारिकापर्यन्तं **शिवागमप्रसिद्धानि षट्त्रिंशत्-तत्त्वानि** प्रतिपादितानि ।

शषसर्

**सत्त्वं रजस्तम इति गुणानां त्रितयं पुरा ।**
**समाश्रित्य महादेवः शषसर् क्रीडति प्रभुः ॥ २५ ॥**

**शकाराद्राजसोत्पत्तिः षकारात्तामसोद्भवः ।**
**सकारात्सत्त्वसम्भूतिरिति त्रिगुणसम्भवः ॥ २६ ॥**

तत्रावस्थात्रयं निरूपयति– ॥ **सत्त्वमित्यादिना** ॥ **पुरा** सृष्टेः प्राक्, श-ष-सवर्ण-सम्भूतान् सत्त्वरजस्तमोगुणान् आश्रित्य परमशिवः सर्वभूतेषु क्रीडतीत्यर्थः ॥ २५-२६ ॥

हल्

**तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः ।**
**अहमात्मा परो हल् स्यामिति शम्भुस्तिरोदधे ॥ २७ ॥**

**इति नन्दिकेश्वरकारिका**

सर्वतत्त्वजनकः स्वयं तत्त्वातीत इति ज्ञापनार्थमेतत्सूत्रं चकारेत्याह– ॥ **तत्त्वातीत इति** ॥ **सर्वानुग्रहविग्रहः साक्षी तत्त्वातीतो हल् स्यामिति** ढक्कानिनादव्याजेन **शम्भुः सर्वेषां मुनि**जनानां तत्त्वमुपदिशन् **तिरोदधे** इत्यर्थः । **"हकारः शिववर्णः स्यादिति शैवागमस्थितिः"** इति शिवम् ॥ २७ ॥

**इति नन्दिकेश्वरकारिकाविवरणम् ।**

८

## अथ प्रवृत्तौ षट्त्रिंशत्तत्त्वक्रमेण प्रपञ्चसृष्टिक्रमः

प्राक् सृष्टेः परब्रह्मणः परशिवस्य पराशक्तेश्च सूक्ष्म-स्थूल-चिदचिद्रूपादि-नाम-रूप-विभागानर्हदशायां आगमा इदमामनन्ति— उक्तं च श्वेताश्वतरे—

"यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एष केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी ॥" इति ।

यस्मिन् काले चन्द्रसूर्यादिप्रकाशकवस्तूनां शून्यत्वेन दिवारात्रिविभागरहितं नामरूपविशेषाभावदशायां सूक्ष्म-स्थूलचेतनाचेतनसदसद्व्यक्तिव्यवस्थाभावतः सर्वमिदं तमसावृतमासीत् ; तदा नन्दिकेश्वरोक्तदिशा "हल्" सूत्रनिर्दिष्टः सर्वतत्त्वजनकः स्वयं तत्त्वातीतः शक्तिविशिष्टः शम्भुः "सोऽकामयत बहुस्यां प्रजायेय" इति श्रुत्युक्तबहुप्रपञ्चभावनात्मकविमर्शशक्तिरूपेण सृष्ट्युन्मुखो भवति तदा तन्निष्ठा विमर्शशक्तिरेव इच्छाशक्तिरूपेण परिणमति—

"अनादिनिधनाच्छान्तात् शिवात्परमकारणात् ।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया ॥
तत्रोत्पन्नानि भूतानि भुवनानि चतुर्दश ॥"

इति शिवागमोक्तप्रकारेण उत्पत्तिरहितात् परमकारणात् शान्तात् तत्त्वातीतात् शिवात् पूर्वं इच्छाशक्तिः ततो ज्ञानशक्तिक्रियाशक्ती आविर्भवतः । इच्छाशक्तेः ज्ञानशक्तिरन्तरङ्गभूता ; क्रियाशक्तिर्बहिरङ्गभूता च भवतः । परशिवं ब्रह्म इच्छाशक्त्यन्तरङ्गभूतज्ञानशक्तिमनुप्रविश्य "सर्वज्ञोऽहं" इत्यभिनिविष्टं सत् "शिवतत्त्वं" इत्युच्यते । इदमेव शिवतत्त्वं कुम्भस्य कुलालो यथा तद्वत् भाविप्रपञ्चस्य निमित्तकारणं भवति ।

परशिवं ब्रह्म इच्छाशक्तिबहिरङ्गभूतक्रियाशक्तिमनुप्रविश्य "**सर्वकर्ताऽहं**" इत्यभिनिविष्टं सत् "**शक्तितत्त्वं**" इत्युच्यते। इदं च शक्तितत्त्वं घटस्य मृत्तिका यथा तथा भाविप्रपञ्चस्य **उपादानकारणं** भवति।

**इदं** च शक्तितत्त्वं स्वेच्छाशक्त्यन्तरङ्गभूतज्ञानशक्त्युद्रेकानुप्रविष्टं सत् जलाधिवसितचणकादिवत् किञ्चिद्वैलक्षण्येन अङ्कुरायमाणेदन्ता(**अहमिदं**)रूपं विश्वस्फुरणरूपं "**सदाशिवतत्त्वं**" इत्युच्यते।

तदेव शक्तितत्त्वं इच्छाशक्तिबहिरङ्गभूतक्रियाशक्त्युद्रेकदशाप्रविष्टं सत् कृतवस्तुवदङ्कुरिता(**अहमिदं**)रूपं स्वाहन्तया आच्छाद्य वर्तमानं विश्वस्फूर्तिमयं "**ईश्वरतत्त्वं**" इत्युच्यते। इदमेव **नारायणापरपर्यायेश्वरतत्त्वम्**।

तदेव शक्तितत्त्वं क्रियाशक्तिप्रधानेदन्तायाः संविद्रूपाहन्तान्तर्गतत्वेन प्रकाशमानत्वात् विभागनिबन्धनभेदघटि**तसागरतरङ्गन्यायेना**हन्तेदन्तयोः ऐक्यप्रतिपत्तिरूपं ब्रह्मापरपर्यायं **शुद्धविद्यातत्त्वम्**। इदं च शास्त्रगुरुलब्धं मुक्तिहेतुभूतं **तत्त्वज्ञानमिति** वदन्ति।

शुद्धविद्यातत्त्वमेव **मयूराण्डरसन्यायेन** स्वान्तर्लीनेषु समधिगतभवनक्रियोन्मुखेषु भावेष्वन्योन्याभावनिबन्धन-भेदबुद्धिप्राधान्यमवलम्ब्य "**मायातत्त्वात्मना**" परिणमते।

पुरुषस्य महेश्वराद्विभक्तत्वेन मायापहृतैश्वर्यत्वात् असङ्कुचिततत्कर्तृताशक्तिरेव किञ्चित्कर्तृतारूपं "**कलातत्त्वं**" इत्युच्यते।

ज्ञातृताशक्तिरेव किञ्चिज्ज्ञत्वलक्षणं "**अविद्यातत्त्वं**" इत्युच्यते। पूर्णताशक्तिरेव अपूर्णतां प्राप्य स्रक्चन्दनवनितादिविषयासक्तिलक्षणं "**रागतत्त्वं**" इत्युच्यते।

नित्यता ह्यनित्यतां प्राप्य भूतभविष्यद्वर्तमानरूपं "**कालतत्त्वं**" भवति।

व्यापकता व्याप्यतां प्राप्य "**मयेदं कर्तव्यं**" इति नियमहेतुभूतं "**नियतितत्त्वं**" भवति।

काष्ठयोगेन वह्नेः विस्फुलिङ्गाविर्भावात् परमेश्वरेच्छाशक्तिवशात् विभक्तः सन् मायाशक्तौ प्रविष्टो यः प्रकाशः स "**पुरुषतत्त्वं**" भवति।

कला-विद्या-राग-काल-नियतिरूपपञ्चतत्त्वानि **पुरुषस्य कञ्चुकरूपाणीति** कथ्यन्ते। अस्य पुरुषतत्त्वस्य मायामलावृतत्वात् आत्मनि अनात्मज्ञानं, अनात्मसु वस्तुषु आत्मज्ञानं च उदेति। अयं च पुरुषः आणवादिमलावृतत्वात् "**संसारी**" इति कथ्यते।

सृष्ट्यादिव्यापारौन्मुख्यगर्भिता सेयमिच्छाशक्तिरेव प्रतिस्फुरणगत्या स्वगतज्ञानक्रियान्योन्याभावलक्षणमायाप्रतिस्फुरणरूपं सुखदुःखमोहहेतुभूतानां सत्त्वरजस्तमसां साम्यावस्थारूपं बुध्यहङ्कारादिपृथिवीतत्त्वपर्यन्तसर्वतत्त्वानां मूलकारणं **प्रकृतितत्त्वं** भवति।

"इदमित्थं" इति निश्चयकारणं "**बुद्धितत्त्वं**" (महत्तत्त्वं च) "**अहं**" "**ममेदं**" इत्यभिमानसाधनं "**आहङ्करतत्त्वं**" "**स्थाणुर्वा पुरुषो वा**" इति संकल्पविकल्पयोः साधनं "**मनस्तत्त्वं**" बुध्यहङ्कार-मनस्तत्त्वानि शरीरान्तर्गतत्वात् "**अन्तःकरणं**" इत्युच्यन्ते। इदमन्तःकरणमिच्छाशक्तिप्रधानम्।

पूर्वोक्तं प्रकृतितत्त्वमेव शरीरवाह्यलग्नं सत् पञ्चज्ञानेन्द्रियरूपेण परिणमते।

तत्र शब्दज्ञानसाधनं "**श्रोत्रतत्त्वं**"; स्पर्शज्ञानसाधनं "**त्वक्तत्त्वम्**"; रूपज्ञानसाधनं "**चक्षुः तत्त्वं**"; रसज्ञानसाधनं "**जिह्वातत्त्वं**"; गन्धज्ञानसाधनं "**घ्राणतत्त्वम्**"।

एतद्बाह्यकारणपञ्चकं ज्ञानशक्तिप्रधानत्वात् **ज्ञानेन्द्रियमि**त्युच्यते।

पूर्वोक्तं प्रकृतितत्त्वमेव क्रियाशक्त्युद्रेकदशापन्नं सत् रजोगुणप्रधानतया कर्मेन्द्रियपञ्चकत्वेन रूपेण परिणमते। तत्र उच्चारणक्रियासाधनं "**वाक्तत्त्वं**"; दानादानादिक्रियासाधनं "**पाणितत्त्वं**"; गमनागमनादिक्रियासाधनं "**पादतत्त्वं**"; मलपरित्यागरूपक्रियासाधनं "**पायुतत्त्वं**"; रेतोमूत्रपरित्यागरूपक्रियासाधनं "**उपस्थातत्त्वम्**"; एताद्बाह्यकरणपञ्चकं क्रियाशक्तिप्रधानत्वात् "**कर्मेन्द्रियं**" इत्युच्यते।

पूर्वोक्तानि **त्रयोदश तत्त्वानि** यथाक्रमं इच्छा-ज्ञान-क्रियात्मकानीति मन्तव्यम्।

केवलश्रोत्रेन्द्रियग्रहणविषयीभूतं "**शब्दतत्त्वम्**"। केवलत्वगिन्द्रियग्रहणविषयीभूतं "**स्पर्शतत्त्वम्**"। केवलनेत्रेन्द्रियग्रहणविषयीभूतं "**रूपतत्त्वम्**"। केवलजिह्वेन्द्रिय-

ग्रहणविषयीभूतं **"रसतत्त्वम्"**। केवलघ्राणेन्द्रियविषयीभूतं **"गन्धतत्त्वम्"**। एतेषु **शब्दस्पर्शादिषु** तत्तद्विशेषगुणा अनभिव्यक्तत्वेन प्रतिभासन्त **इति** तन्मात्राणीत्युच्यन्ते।

एवं वाय्वग्निजलपृथिवीतत्त्वानां अवकाशप्रदत्वात् **आकाशः, "आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी"** चोत्पद्यन्ते। आकाशादिपञ्चतत्त्वानि **"महाभूतानि"** इत्युच्यन्ते। उक्तं च—

> **"शक्त्यण्डमृत्पिण्डमुपाददानो**
> **मायाण्डचक्रभ्रमणक्रमेण।**
> **मूलाण्डदण्डेन मुहुर्विधत्ते**
> **ब्रह्माण्डभाण्डं भगवान् कुलालः॥"**

अस्मिन् श्लोके **षट्त्रिंशत्तत्त्वात्मकं जगत्सृष्टिरहस्यं** सर्वं सुस्पष्टमेव।

इत्थं शिवादिपृथिवीतत्त्वान्तं **षट्त्रिंशत्तत्त्वानां** स्वरूपं निरूपितं **शैवदर्शने** (तत्त्वप्रकाशिकायां) भोजदेवेन। पुरुषादिपृथिवीतत्त्वान्तं **पञ्चविंशतितत्त्वानां** च स्वरूपं **साङ्ख्यैः** सपरिकरं प्रतिपादितम्। **श्रीकरभाष्येऽपि सर्वत्रप्रसिध्यधिकरणे** [1]**"स्मृतेश्च"** इति सूत्रभाष्ये पञ्चब्रह्माभिधैर्मन्त्रैः शिवलिङ्गस्य षट्त्रिंशत्तत्त्वात्मकत्वं सम्यक् निरूपितम्।

एवंविधस्य षट्त्रिंशत्तत्त्वबीजादुद्भूतस्य शैवदर्शनकल्पतरोरेव विविधाः शैवदर्शन शाखाः समुद्भूय निखिलं च विश्वं विशेषतः भारतावनिमभिव्याप्य जनमनांसि तर्पयन्ति।

९

# शैवदर्शनप्रभेदविवरणम्

अद्यावधि भारतावनौ प्रविराजमानेषु शैवप्रभेदेषु **द्वैत-अद्वैत-द्वैताद्वैत-विशिष्टाद्वैत-विशेषाद्वैताभिध-शक्तिविशिष्टाद्वैतप्रमुखाः** शाखाः मुख्यत्वेनादृताः। तत्र शैवद्वैतमेव प्राथम्यं

---

[1] श्रीकरभाष्ये (अस्मिन्नेवग्रन्थे) २१२ तः २१४ पत्रेषु द्रष्टव्योऽयमंशः।

यतोऽस्य प्रचारः क्रिस्तोदयात्पूर्वमेवेति अवगम्यते। उक्तञ्च च **अद्वैतशैवागम**प्रवर्तकेन **सोमानन्देन शिवदृष्ट्याख्ये** स्वकीये प्रकरणग्रन्थे। तत्रोक्तत्र्यम्बकादित्यादिआनन्दान्त-अद्वैतशैवागमगुरुपरम्परायां **सोमानन्दः** एकोनविंशतितमः। स च **अभिनवगुप्तस्य** परमो गुरुः। **अभिनवगुप्तस्तु** क्रिस्तादनन्तरं दशमशतकस्योत्तरार्धे एकादशशतकस्य पूर्वार्धे वा अभूदिति निश्चीयते। एतेनायं **सोमानन्दः** क्रि. श. नवमशतकमध्ये आसीत् इति वक्तुं शक्यते।

**किञ्च**– सोमानन्दगुरुपरम्परायां अनुगतस्य विंशतिसङ्ख्याकस्य आद्यस्य गुरोः (एकैकस्य पञ्चविंशतिवर्षपरिमिते काले आधुनिकैतिहासिकानां मतरीत्या स्वीकृते) क्रि. श. चतुर्थशतकीयत्वं सिध्यति।

**अन्यच्च**– शैवागमाश्रितद्वैताद्वैतप्रतिपादक**लकुलीशपाशुपतदर्शन**प्रवर्तको **लकुलीशः** क्रि. श. २०० शतकारम्भेऽभूदिति **मधुरास्तम्भलेख-सोमनाथशिलालेखाभ्यां** निर्णीयते।

**अपरञ्च**– बादरायणेन ब्रह्मसूत्रेषु पाशुपतदर्शनं निराकृतम्। स च बादरायणः क्रि. पू. चतुर्थ-पञ्चमशतकयोर्वा पूर्व इति विदुषामाशयः। एतेन **पाशुपतद्वैतशैवदर्शनं** ततोऽपि प्राचीनं इत्यत्र न कोऽपि सन्देहः। उक्तञ्च **अभिनवगुप्तेन तन्त्रालोके**–

> [1]तेषां क्रमेण तन्मध्ये भ्रष्टं कालान्तराद्यदा।
> तदा श्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन्॥ ११॥
>
> त्र्यम्बकामर्दकाभिख्यश्रीनाथा अद्वये द्वये।
> द्वयाद्वये च निपुणाः क्रमेण शिवशासने॥ १२॥

**श्रीसिद्धतन्त्र**मनुसृत्य अद्वैत-द्वैत-द्वैताद्वैतदर्शनानि यथासङ्ख्यं **त्र्यम्बक-आमर्दक-श्रीनाथैः** कलौ समकालमेव प्रकाशितानीति। उक्तञ्च **सूतसंहितायामपि** "भेदाभेदस्तथाभेदो भेद एते मतास्त्रयः" इति।

एतेन द्वैतशैवप्रचारोऽपि क्रि. पूर्वकालिक इति सिध्यति।

---

[1] तन्त्रालोके षट्त्रिंशदाह्निकम्, श्लो. ११. १२.

शैवदर्शनविभागक्रमस्तु [1]शैवबिन्द्वाधारितः ।

**शैवदर्शनबिन्दौ यत्कान्तिचक्रसमीरितम् ।**
**समीक्ष्यते समासेन बिन्दुस्सिन्धुरभूद्यतः ॥**

## १. शैवद्वैतदर्शनम्

शैवद्वैतप्रतिपादकं दर्शनं **द्विविधम्** । **पाशुपतदर्शनं सिद्धान्तशैवदर्शनञ्चेति** । अनयोः दर्शनयोः **मुख्यो** भेदोऽयं यत् पाशुपतदर्शनं पूर्वोक्त**शैवागमाभिख्यया** प्रथितेषु **कामिकादि-अंशुमदन्तेषु** दशागमेषु प्रतिपादितम् । **सिद्धान्तशैवदर्शनञ्च रुद्रागमाभिख्यया** प्रसिद्धेषु **विजयादिवातूलान्तेषु अष्टादशागमेषु** निरूपितं च । अन्यच्च– यद्यपि मुद्रित**मतङ्गपारमेश्वरागमस्य** द्वैताद्वैतागमेषूपन्यासस्तथापि तस्य **रामकण्ठ-कृताद्वैतानुसारिणी** [2]व्याख्यापि दृश्यते । **एतेन एवं निश्चीयते**– यत् श्रुतिवाक्यानि यथा द्वैताद्वैतादिविभिन्नमतानुगैराचार्यैः स्वस्वाभिमतानुसारं व्याख्यातानि तद्वत् शैवागमा अपि विभिन्नशैवदार्शनिकैः स्वस्वमतसमर्थनाय तत्तत्परतया व्याख्याता इति बोध्यते । एवं **अभिनवगुप्तेन** निर्दिष्टानां दशागमानां द्वैतप्रतिपादकत्वं प्रायः **श्रीश्रीकण्ठ्यनुसारं** स्वीकृतम्; तथापि एतद्विषये मतभेदो दृश्यते, द्वैताद्वैतप्रतिपादकत्वेन अभिनवगुप्तस्वीकृता-नामागमानां सिद्धान्तशैवैः द्वैतप्रतिपादकत्वेन स्वीकरणात् । तथैव मृगेन्द्रागमस्य श्रीश्रीकण्ठ्यां द्वैताद्वैतप्रतिपादकत्वेऽपि नारायणकण्ठेन काश्मीरिकेन तस्य द्वैतपरतया व्याख्यानाच्च ।

प्रकृते शैवद्वैतप्रतिपादकः न कोऽपि ग्रन्थ उपलभ्यते । उपलभ्यमानेष्वप्यागमेषु दार्शनिकप्रक्रियाप्रतिपादकाः विद्यापादाः समग्रा न दृश्यन्ते ।

यद्यपि द्वैतशैवदर्शनस्य तात्त्विकं स्वरूपमधिगन्तुं न शक्यते; तथापि **बादराय-णीय-ब्रह्मसूत्रेषु तट्टीकासु** च खण्डनार्थं उपन्यस्तं **हरिभद्रसूरि-राजशेखर**विरचितयोः "**षड्दर्शनसमुच्चय**"नाम्न्योः ग्रन्थयोः संग्रहेण प्रतिपादितं च तन्मतस्वरूपं अत्र सङ्गृह्यते–

---

[1] शैवदर्शनबिन्दुः– डा॥ कान्तिचन्द्रपाण्डेयः, वाराणसेय संस्कृतविश्वविद्यालयप्रकाशनम्, संवत्-२०२१. [2] "काश्मीर् शैविज़म्"– जगदीशचन्द्रचटर्जीविरचितम् ।

## ब्रह्मसूत्रेषु पत्यधिकरणम्

बादरायणकृतब्रह्मसूत्रेषु पत्यधिकरणे पाशुपतं निराकृतं [1]"पत्युरसामञ्जस्यात्" इत्यादिना। तत्र शङ्करादीनां सर्वेषामाचार्याणां सम्मतिर्दृश्यते।

**अत्र केचित्**– "**पत्युरसामञ्जस्यात्**" इति सूत्रे निराक्रियमाणं दर्शनं **लकुलीशपाशुपतम्**; अतस्तत्र लकुलीशपाशुपतदर्शनस्वीकृताः **कारण-कार्य-योग-विधि-दुःखान्ताः** पञ्च पदार्थाः समुपस्थिताः इति (शाङ्करभाष्यम्)। तत्र– यत आचार्यशङ्करेणैव तत्र निराक्रियमाणं "**द्वैतदर्शनं**" इति कण्ठरवेणोक्तम्। यस्मिन् "**अप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वरः**" इति। **माहेश्वरदर्शन**विषये च स्पष्टमुल्लिख्यते– "**माहेश्वरास्तु**" मन्यन्ते– **कारण-कार्य-योग-विधि-दुःखान्ताः** पञ्च पदार्थाः पशुपतिनेश्वरेण पशु-पाशविमोक्षणायोपदिष्टाः। पशुपतिरीश्वरो निमित्तकारणमिति वर्णयन्ति" इति।

**उक्तञ्च** शाङ्करभाष्यांशस्य व्याख्यां कुर्वता **वाचस्पतिमिश्रेण भामत्याम्**– "चत्वारो माहेश्वराः– **शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति**"। चत्वारोऽप्यमी महेश्वरप्रणीतसिद्धान्तानुयायित्वात् माहेश्वराः.... ....। एष तेषामभिसन्धिः। "[2]चेतनस्य खल्वधिष्ठातुः कुम्भकारादेः कुम्भादिकार्ये निमित्तकारणत्वमात्रं न तूपादानत्वमपि। तस्मादिहापीश्वरो जगत्कारणं निमित्तमेव न तूपादानमपि, एकस्याधिष्ठातृत्वाधिष्ठेयत्वविरोधात्" इति।

अत्र निमित्तोपादानकारणयोः पारस्परिकभेदस्वीकारात् इदं द्वैतदर्शनम्। **श्रीकण्ठभाष्ये**प्ययमाशयः समर्थितः।

**उक्तञ्च** [3]"पत्युः परमेश्वरस्य श्रुतिसिद्धजगदुभयकारणत्वस्यापि तदागमनिष्ठास्तन्मताभिप्रायानभिज्ञाः एकदेशिनस्तान्त्रिकाः केवलनिमित्तत्वं वदन्ति" इति।

**रामानुजास्तु**– [4]"इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्याच्चानादरणीयतोच्यते। तन्मतानुसारिणश्चतुर्विधाः– **कापालाः, कालामुखाः, पाशुपताः, शैवाश्चेति**। निमित्तकारणं च पशुपतिमाचक्षते" इति वदन्ति।

---

[1] ब्र. सू. अ. २ पा. २. अधि. ८. सू. ३७. [2] डा॥ कान्तिचन्द्रपाण्डेयविरचितः। शैवदर्शनबिन्दुः– पृ. ६ [3] श्रीकण्ठ भा पृ १५३. [4] श्रीभाष्ये पत्यधिकरणम्।

**श्रीपतिपण्डिताराध्यचरणैस्तु**— "[1] पत्युः पशुपतेः शिवस्य परब्रह्मणः जगदुपादान-प्रधानादिप्रेरकत्वेन निमित्तकारणमात्रत्वं न सम्भवति। कुतः? असामञ्जस्यात्।........ भूतपतेः शिवस्य जगदुभयकारणत्वविधायकशुद्धसात्त्विकशैवमतस्य प्राधान्यमुत शैवमताभासक-**मिश्र-रौद्र-पाशुपत-गाणपत्य-सौर-शाक्त-कापालिक-वैष्णव**ादिमतानां वा इति विषयः" इति सत्पाशुपतं शैवमताभासकमतेषु परिगणितम्।

**अन्यच्च— पाशुपत लकुलीशपाशुपतयोः** मोक्षस्वरूपे भेदो दृश्यते। पाशुपतमते सर्वेषां दुःखानामन्त एव मोक्षः। लकुलीशपाशुपतमते तु न केवलं दुःखान्तः किन्तु परमैश्वर्यावाप्तिर्मोक्षः इति।

## षड्दर्शनसमुच्चयोक्तं पाशुपतम्

यद्यपि **हरिभद्रसूरिः** स्वकीये **षड्दर्शनसमुच्चये** परस्परतो भिन्नानां परश्शतं दर्शनानां सत्तां स्वीकरोति। तथापि **दर्शनानि** धर्मोद्भवानीति मत्वा **धर्म-मोक्षोपाय-मोक्षस्वरूप**-दार्शनिकत्वाद्याश्रयेण भारतीयानि दर्शनानि षडेव इति निश्चिनोति। तत्र **बौद्ध-नैयायिक-साङ्ख्य-जैन-वैशेषिक-जैमिनी**याख्यानि प्रधानानि मनुते। तत्र **न्याय-वैशेषिकदर्शन**प्रवर्तयितारौ **शैवावास्ताम्**। मोक्षश्च तयोर्मते दुःखान्तस्वरूपः इति। उक्तञ्च **तट्टीकाकारेण मणिभद्रसूरिणा— "यत्तयोर्मते सृष्टिकारणमीश्वरः, शिवो वा, केवलं निमित्तकारणं"** इति।

**राजशेखरस्तु** स्वकीये **षड्दर्शनसमुच्चये न्यायदर्शनं योगनाम्ना** समुल्लिख्य शैवानां वेषादिकं वर्णयति—

> **अथ यौगमतं ब्रूमः शैवमित्यपराभिधम्।**
> **ते दण्डधारिणः प्रौढकौपीनपरिधायिनः॥**
> **कम्बलिकाप्रावरणा जटापटलशालिनः।**
> **अक्षपादो गुरुस्तेषां तेन ते चाक्षपादिकाः॥** इत्यादि।

**हरिभद्रसूरिणापि**—

> **शैवाः पाशुपताश्चैव महाव्रतधरास्तथा।**
> **तुर्याः कालामुखा मुख्या भेदा एते तपस्विनाम्॥** इति।

---

[1] 'श्रीकरभाष्ये पत्यधिकरणम्'।

एतेन अस्मिन् दर्शने **कारण-कार्य-योग-विधि-दुःखान्तरूपाः** पञ्च पदार्थाः ; ये च **लकुलीशपाशुपत**नामकद्वैताद्वैतशैवदर्शनप्रवर्तकेन **लकुलीशेनापि** स्वीकृताः। अत्र **ईश्वरः** पतिर्वा **निमित्तकारणम्**। दुःखान्त एव च मोक्षः इत्यभ्युपगतम्।

## २. अथ शैवद्वैते सिद्धान्तदर्शनम्

अस्य दर्शनस्य आधारभूताः अष्टादश **'रुद्रागमाः'**। ते च यद्यपि पूर्वोक्ताः तथापि किञ्चिन्मतभेदेनात्र पुनस्सङ्गृहीताः— **विजय निश्वास मद्गीत-पारमेश्वर मुख बिम्ब-सिद्ध-सन्तान-नारसिंह-चन्द्रांशु-वीरभद्र-आग्नेय-स्वायम्भुव-विसर-रौरव-विमल-किरण-ललित-सौरभेया** इति।

क्रि. श. नवमशतकादारभ्य द्वादशशतकपर्यन्तं चास्य प्रचारः **काश्मीर-चोल-लाट-मध्यप्रदेश-कान्यकुब्जादिषु** च प्रदेशेषु आसीत्। अस्य दर्शनस्य परम्परा **रुरोः** (**रौरवागमद्रष्टा**) कालादारभ्य **मोक्षकारिकाकर्तृसद्योज्योति**पर्यन्तं [1]अभिव्याप्ता।

### शैवसिद्धान्तप्रतिपादकाचार्याः

**१) सद्योज्योतिः**— आचार्योऽयं **खेटपाल-खेटकनन्दने**त्यपरनामद्वयेन प्रसिद्धः। अभिनवगुप्तस्तु अमुमाचार्यं शैवसिद्धान्तप्रतिपादकं निर्दिशति **तन्त्रालोके**। अतोऽयं आचार्यः क्रि. श. नवमशतके आसीदित्यभ्यूह्यते।

**सद्योज्योतिरचिता इमे ग्रन्था**—

**१. रौरवागमटीका, २. स्वायम्भुवागमटीका, ३. तत्त्वत्रयनिर्णयः, ४. भोगकारिका, ५. मोक्षकारिका, ६. तत्त्वसंग्रहः, ७. परमोक्षनिरासकारिका** च।

---

[1] शिवात् परम्परायातौ भोगमोक्षौ ससाधनौ।
आत्रेयाय मुनीन्द्रेण रुरुणा सम्प्रकाशितौ॥

मन्दबुद्धिप्रबोधाय करुणाविष्टधीः स्फुटम्।
सद्योज्योतिस्तु सङ्क्षेपात्तावेतौ परिबद्धवान्॥

यं चानुशासयामास भगवानीशसम्मतः।
उग्रज्योतिर्गुरुः श्रीमान् सर्वविद्यासरित्पतिः॥ इति।

—भो. का. १२-३.

अनेनैव चाचार्येण अस्य दर्शनस्य "सिद्धान्त" इति शब्दः [1]ऐदम्प्राथम्येन प्रयुक्तः ।

अतः परमयं [2]"सिद्धान्त"शब्दः **अघोरशिवाचार्येण** (श्रीकण्ठकृतरत्नत्रयटीकाकारः) पङ्कजादिशब्दवद्योगरूढ्या शिवप्रणीतेषु **अष्टादशसु तन्त्रेषु** प्रथितः ।

**परन्तु** शिवागमोक्तोऽयं "**सिद्धान्त**"शब्दः अतः पूर्वमपि प्रयुक्त इति [3]सिद्धान्तशिखामणौ (क्रि. शं. सु. ६००) **श्रीरेणुकाचार्यपादैः** सूचितः ।

२) **बृहस्पतिः–** अयं **सद्योज्योति**समकालिकः । अभिनवगुप्तेन तन्त्रालोके तन्मतप्रतिक्षेपात्, **अघोरशिवाचार्येण मोक्षकारिकाटीकायां** "तौ वन्द्यौ सद्योज्योति-बृहस्पती" इति द्वयोरपि समसुपन्यासाच्च । "**शिवतनुशास्त्रा**"भिधा एकैवास्य कृतिः इयं कृतिः **तन्त्रालोक**वाक्यादेवावगम्यते ; नाद्यावधि उपलब्धा ।

३-४) **शङ्करनन्दन-देवलौ–** अनयोर्मतयोः [4]**तन्त्रालोक**टीकायां जयरथेन प्रत्याख्यातत्वेन ज्ञायते यदिमावपि द्वैतशैवावास्तामिति–

**द्वैतशैवसिद्धान्तप्रचारः**

**सद्योज्योतिमहाशयस्य** बहवश्शिष्याः **काश्मीरे** आसन्; यतोऽस्य **मोक्षकारिकायाः** टीकां काश्मीरनिवासी **द्वितीयरामकण्ठो**ऽलिखत् । उक्तञ्च तत्रैव–

---

[1]रुरुसिद्धान्तसंसिद्धौ भोगमोक्षौ ससाधनौ ।
वच्मि साधकबोधाय लेशतो युक्तिसंस्कृतौ ॥ इति ।
(मो. का).

[2] र. त्र. टीका– ५.

[3]सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ॥ (सि. शि. प ५)

[4]सद्योज्योति-देवल-शङ्करनन्दन-कणभुगादिमतम् ।
प्रत्याख्यास्यन्नवममाह्निकं व्याचख्यौ जयरथः ॥ इति ।
(जयरथकृततन्त्रालोकटीका)

**इति मोक्षकारिकायां नारायणकण्ठसूनुना रचिता ।**
**संक्षेपाद्वृत्तिरियं शिष्यहिता भट्टरामकण्ठेन ॥ इति ।**

अस्य काश्मीरनिवासित्वं तद्रचितनादकारिकायां सूचितम् ।

**प्रथमो रामकण्ठः** शैवाद्वैतप्रतिपादिकायाः **स्पन्दकारिकायाः** टीकां "**सद्वृत्ति**"-नामकमपरमपि द्वैतपरं ग्रन्थं च लिलेख ; यस्यानुकरणं [1]**श्रीकण्ठः** स्वीयरत्नत्रये अकरोत् ।

अत्र यथाक्रमं **प्रथमो रामकण्ठः मृगेन्द्रतन्त्रवृत्तिं, श्रीकण्ठः रत्नत्रयं, नारायणकण्ठः** (प्रथमरामकण्ठप्रशिष्यः) **मृगेन्द्रवृत्तिं, द्वितीयरामकण्ठः** (नारायणकण्ठसुतः) सिद्धान्तागमानामुपरि बह्व्यः टीकाः अलिखत् ।

**द्वितीयरामकण्ठोपज्ञः अभिव्यक्तिपक्षः ।**

अयञ्च रामकण्ठः स्वकृतटीकयोः **उत्पत्तिसमतापक्षं, समतासङ्क्रान्तिपक्षं, आवेशपक्षञ्च** सोपपत्तिकं निरस्य **अभिव्यक्तिपक्षं** संस्थापयामास । तत्र–

अ) **उत्पत्तिसमतापक्षः**– यदनुसारं सर्वज्ञत्वं सर्वशक्तिमत्वञ्च जीवे न नैसर्गिके ; अपि तु मोक्षे उत्पद्येते ।

आ) **समतासंक्रान्तिपक्षः– लकुलीशपाशुपत**सम्मतः । यदनुसारं कस्तूरिकागन्धो वस्त्रान्तरमिव सर्वज्ञत्वसर्वशक्तिमत्वे शिवान्मुक्ते सङ्क्रामतः ।

इ) **आवेशपक्षः**– यदनुसारं स्वस्थानस्थो ग्रहः पुरुषविशेषमिव शिवस्थे सर्वज्ञत्वसर्वकर्तृत्वे मुक्तमाविशत इति मतत्रयं निरस्य अयं **रामकण्ठः** चतुर्थं **अभिव्यक्तिपक्षं**

---

[1]श्रीरामकण्ठसद्वृत्तिं मयैवमनुकुर्वता ।
रत्नत्रयपरीक्षेयं कृता श्रीकण्ठसूरिणा ॥ इति
(रत्नत्रयपरीक्षान्तिमश्लोकः)

अस्थापयत् ; यदनुसारं जीवे स्वाभाविके सर्वज्ञत्व-सर्वकर्तृत्वे मलतिरोहिते व्यपगतमले मुक्ते अभिव्यक्तीभवतः ।

**मन्त्रविवेकटीका, आगमविवेकः** इत्यादयो ग्रन्थाः एतत्कर्तृका इति विज्ञायन्ते ।

**द्वैतसिद्धान्तप्रचारः**

आसीन्मालवेषु धारानगरस्याधिपो परमारवंशभवो राजा [1]भोजः । यश्चालङ्कार-शास्त्र-वास्तुशास्त्रयोरपि न केवलं पारीणः किन्तु द्वैतशैवसिद्धान्तप्रवर्तकश्चाभूत् । यञ्च-श्लोकः "सर्वागमार्थनिर्णेता" "सर्वतन्त्रस्वतन्त्रः" इत्यादिभिर्विशेषणैः सम्भावयति स्म । द्वैतशैवसिद्धान्तप्रतिपादकेन तेन विरचिता "तत्त्वप्रकाशिका" अद्यावधि तस्य वैदुष्यं शिवभक्तिं च ख्यापयति । तस्याः उपरि कैश्चन सिद्धान्तशैवरहस्यानभिज्ञैः अद्वैतदृष्ट्या टीकाः कृताः इति [2]अघोरशिवाचार्यो निर्दिशति ।

**तत्त्वप्रकाशिकायां** शैवसिद्धान्तमूलभूतानि षट्त्रिंशत्तत्त्वानि सम्यगुपपादितानि ; येषां च मूलं **नन्दिकेश्वरकारिकासु** इतःपूर्वमेवास्माभिः प्रतिपादितम् ।

**भोजराजस्य** गुरुं अधिकृत्य एवं श्रूयते—

**"यस्याभूल्लाट उत्तुङ्गशिवो विन्ध्ये यतीश्वरः ।**
**कल्याणनगरीवासी गुरुः पद्धतिकृत्सुधीः ॥**

**सर्वविद्याधिपो यस्य कनीयानान्ध्रदेशजः ।**
**सर्वागमार्थनिर्णेतुः श्रीभोजनृपतेर्गुरुः ॥"** इति ।

**तत्त्वप्रकाशिकायाः** व्याख्यात्रयं विद्यते । तत्राद्या— **"तात्पर्यदीपिका"** श्रीकुमारकृता । तदन्ते "इति भारद्वाजकुलालङ्कारभूतेन शङ्करसूनुना विधिविहितसोमरसा-

---

[1] भोजस्य कालः- क्रि. श. १०१८–६०.

[2] अद्वैतवासनाविष्टैः सिद्धान्तज्ञानवर्जितैः ।
व्याख्यातोऽत्रान्यथान्यैर्यत् स ततोऽस्माकमुद्यमः ॥ (त. प्र. १).

स्वादनपरिपोषिणा शिवाङ्घ्रिकमलद्वयासक्तमधुकरायमाणमानसेन श्रीमता श्रीकुमारेण रचिता तत्त्वप्रकाशतात्पर्यदीपिका परिपूर्णा" इति ।

अन्यद्व्याख्या अघोरशिवाचार्यविरचिता । [1]तृतीया तु पर्वतेश्वरस्वामिकृत' कर्णाटकभाषामयी टीका । एतट्टीकात्रयसारभूतमेव पुस्तकं [2]"शैवदर्शनेतिहासः तत्त्वप्रकाशिका च" इति प्रकाशितम् ।

## १) दक्षिणभारते शैवद्वैतसिद्धान्तदर्शनम्

शैवद्वैतसिद्धान्तदर्शनप्रतिपादकानां बहूनां ग्रन्थानामुपरि अघोरशिवाचार्यकृताः व्याख्याः विद्यन्ते । स चाचार्यः चोलदेशीयकुण्डिनकुलवास्तव्यः । उक्तञ्च तत्त्वत्रयनिर्णयटीकान्ते—

"श्रीमदघोरशिवाह्वयेन गुरुणा श्रीजन्यया व्याख्यया
लोकेऽपि प्रथितेन कुण्डिनकुलं चोलेष्वलङ्कुर्वता ॥ इति ।

[3]श्रीमदघोरशिवाचार्यविरचिताः ग्रन्थाः

काव्यानि— १) आश्चर्यसारः । २) पाखण्डापजयः । ३) भक्तप्रकाशः ।

नाटकम्— अभ्युदयः ।

शैवद्वैतग्रन्थटीकाः— १) भोजकृततत्त्वप्रकाशिकायाष्टीका । २) सद्योज्योतिकृततत्त्वसंग्रहः । ३-४) तत्त्वनिर्णयभोगकारिकाणां टीकाः । ५) द्वितीयरामकण्ठकृतनादकारिकायाष्टीका, ६) श्रीकण्ठकृतरत्नत्रयस्य टीका । ७) नारायणकृतमृगेन्द्रागमवृत्तेष्टीका च ।

---

[1] तत्त्वप्रकाशिका वीरशैवग्रन्थप्रकाशिकाप्रकाशनम्, मैसूरु १९०८ [2] शैवदर्शनेतिहासः तत्त्वप्रकाशिका च· श्री एम् जि नंजुण्डाराध्यविरचिता, प्रबोधपुस्तकमाला प्रकाशनम्, मैसूरु— १९७५.
[3] अघोरशिवाचार्यस्य कालः— क्रि श. ११५७.

## २) कान्यकुब्जे शैवाद्वैतसिद्धान्तदर्शनम्

पूर्वं **काश्मीरिकरामकण्ठद्वयस्य** विचार आवेदितः। अयमपरो रामकण्ठः; यश्च भगवद्गीतायाः **सर्वतोभद्राभिधटीकाकर्ता कान्यकुब्जवासिनो नारायणवंशजमुक्ताकणस्य** कनीयान् भ्राता च। **मुक्ताकणस्तु काश्मीरराज्ञः अवन्तिवर्मणः** आस्थानकविष्वेकतमः। एतेन कान्यकुब्जेऽपि सिद्धान्तशैवदर्शनप्रचारः आसीदिति निश्चीयते। अतो शैवद्वैतसिद्धान्तमतस्य प्रचारः क्रि. श. ९००–१२०० शतकपर्यन्तं **मध्यप्रदेशे, गुर्जरे, चोले, कान्यकुब्जे, काश्मीरे** च आसीदिति सिध्यति।

### शैवसिद्धान्तप्रतिपन्नानि तत्त्वानि

एतन्मते तत्त्वं यन्महार्थसंहारे महाप्रलयेऽपि च तिष्ठति। उक्तञ्च **भोजदेवेन**–

> "[1] आप्रलयं यत्तिष्ठति
> सर्वेषां भोगदायि भूतानाम्।
> तत्तत्त्वमिति प्रोक्तं
> न शरीरघटादि तत्त्वमतः॥ ७३॥" इति।

सर्वेषां सांसारिकाणां विश्वोत्तीर्णानां चानुभवानां साक्षात्परम्परया वा पृष्ठभूमिः इयं भूः। महाप्रलये सर्वमपि मायाया महामायायाश्च कार्यजातं स्वोपादानकारणे निमज्याभेदरूपेणास्ते। उक्तञ्च तत्रैव–

> "[2] मायाया परतोऽध्वा
> शुद्धशक्तौ निलीयते सकलः।
> परमात्मनि सापि शिवे
> तिष्ठत्यविभागमापन्ना॥ ६८॥

इयञ्च कार्याणां स्वोपादानाऽभेदावस्था सृष्टिभाविबहुत्वस्य कारणशक्तिरूपा। सृष्टिश्च द्विविधा– शुद्धा अशुद्धा च। एवं मायापि द्विविधा। तत्रैका सा यस्याः

---

[1] त. प्र. परि- ६। [2] त. प्र. परि ५।

कार्यजातं सांसारिकानुभवस्य कारणम्; **अपरा च** सा, यस्याः कार्याणि विश्वोत्तीर्णानुभवानां **मन्त्र-मन्त्रेश मन्त्रमहेशैरनुभूयमानानां** कारणत्वेन स्वीक्रियन्ते। सा च महामायेत्युच्यते। महाप्रलये सर्वाण्यनुभवकारणानि वक्ष्यमाणरूपायां शक्तौ प्रलीयन्ते; सा च महामायायाम्।

## तत्त्वत्रयम्

**सिद्धान्तशैवैः** जगत्सृष्टिकारणत्वेन त्रीणि प्रधानतत्त्वानि अभ्युपगतानि—(१) **महामाया,** (२) **पुरुषः,** (३) **शिवश्चेति।** उक्तञ्च— "[1] **माया-पुरुषशिवा इत्येतत्त्रितयं महार्थसंहारे**" तदेदं तत्त्वत्रयं **पतिः पशुः पाश** इति नामत्रयेणाभिधयते तैः। अत्र यद्यपि **पति-पशुशब्दौ शिव-पुरुषपर्यायौ** तथापि महामाया-पाशयोर्महदन्तरं विद्यते। यतो मुख्यतत्त्वत्रये स्वीकृतः पाशः महामायापेक्षया अतीव व्यापकः। पाशान्तर्गताः अमुख्यपदार्थाः **मल-माया-रोधशक्ति-कर्म-विन्दुरूपाः।** तत्र बिन्दोः महामायापर्यायत्वेन स्वीकरणात्।

## मुख्यतत्त्वत्रये षट्त्रिंशत्तत्त्वानामन्तर्भावप्रकारः

**शैवसिद्धान्तनये** स्वीकृते मुख्यतत्त्वत्रये शैवागमोक्तानि षट्त्रिंशत्तत्त्वानि अन्तर्भवन्ति। यथा— **शिव-शक्ति-मन्त्रमहेश-मन्त्रेश-मन्त्ररूपाणि** पञ्च तत्त्वानि **पतिपदार्थेऽन्तर्गतानि,** **विज्ञानाऽकल-प्रलयाकल-सकलेत्यवान्तरभेदभिन्नानि** **पशुपदार्थेऽन्तर्भवन्ति।** **मल-निरोध-शक्ति-माया-विन्दु-कर्मरूपपञ्चप्रधानतत्त्वानि पाशपदार्थेऽन्तर्गतानि** मायापरिणामभूतं **कला नियति-राग-अविद्या-कालसहितं साङ्ख्यस्वीकृतप्रकृत्यादिपृथिव्यन्तचतुर्विंशति चैकीकृत्य** षट्त्रिंशत् तत्त्वानि **मुख्यतत्त्वत्रयेऽन्तर्भूतानि** भवन्ति।

## मुख्यपदार्थत्रयस्वरूपम्

(१) [2]**पतिः**— विश्वोत्तीर्णं **शिवापराभिधं प्रथमं तत्त्वम्;** स च पतिरेकः, सर्वव्यापी, नित्यः अनाद्यन्तः, अनादिमुक्तः, निर्मलः, चिद्घनः, प्रभुः, शान्तः, अकारण-

---

[1] त. प्र. परि ५-६९.

[2] निमित्तकारणं त्वीशो ह्युपादानं च शक्तयः।
समवायि तथा माया कार्यमेतज्जगत्त्रयम्॥
(म. पा. ३७)

कारणम्, सर्गादिकार्याणां कर्तापि अविकारी, कमलोन्मीलनकर्ता सूर्य इव सः जगतो निमित्तकारणम्; तच्छक्तयः उपादानकारणम्, माया च समवायिकारणम्।

शक्तिस्तस्योपादानभूता यथा स विश्वं सृजति; यत्र जीवाः स्वस्वकर्मानुसारं सुखानि दुःखानि वाऽनुभवन्ति; अन्ते च पतिस्तान् पाशमुक्तान् करोति। इयमपि परमार्थतः चित्स्वरूपैव, अतश्च मायेव न विपरिणमते। पत्या सहैतस्याः समवायः सम्बन्धः। उक्तञ्च—

[1]शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य।
तामेकां चिद्रूपामाद्यां सर्वात्मनास्मि नतः॥ इति।

[2]आद्यां प्रधानभूतां समवेतां परन्तु श्रीकण्ठकृते [3]रत्नत्रये शिवस्य शक्त्या सम्बन्धः सूर्यस्य स्वरश्मिभिरिव वर्णितः। उक्तञ्च सिद्धान्तशिखामणौ—

"[4]यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा॥" इति।

इयममोघा, अपरिच्छिन्ना, अत एवाविकल्परूपा, अकारणा, स्वप्रकाशा, सर्वोत्तीर्णा, अतिसूक्ष्मा, शिवादनन्यभूतापि शिवे धर्मिणि धर्मरूपेण स्थित्वा सिद्धान्तशैवानां द्वैताद्वैतप्रभावितत्वं गमयति। तत्रेदमभ्युपगम्यते यच्छिवशक्त्योरैकात्म्यम्, उभयोश्चित्स्वरूपत्वात्। स्वनिष्ठा चित् शिवः, ज्ञानार्थं विषयाश्रिता च चिच्छक्तिः। तयोश्च धर्म-धर्मिरूपः सम्बन्धः। शिवः परानपेक्षः। परं शक्तिः परापेक्षिणी। यथा अग्नेः दाहकशक्तिः दाह्येन्धनादिसम्बद्धैवाभिव्यक्तीभवति, तथैव शिवस्य शक्तिः बाह्यजगत्सम्बद्धैव स्वात्मानमभिव्यनक्ति।

---

[1] शिवशक्तिसम्बन्धविचारे— त. प्र. ५ द्रष्टव्यम्। [2] शिवशक्त्योरविनाभावेऽपि— त. प्र. टी. ५ द्रष्टव्यम्। [3] शिवस्य शक्त्या सम्बन्धविचारः— र. त्र. २ द्रष्टव्यः। [4] सि. शि. परि. १०.

अथ– [1]सृष्टिर्द्विविधा **शुद्धा अशुद्धा** च। शुद्धायाः पतिः (शिवः) साक्षात्कर्ता। अस्याः समवायिकारणं **बिन्दुः**। तस्माच्च शुद्धतत्त्वभुवनाद्युत्पाद्य मुक्तान् विद्येश्वरादीन् बैन्दवशरीरैर्योजयति।

**शुद्धसृष्टौ बिन्दोर्नादः–** "**तस्माच्च** परिणामक्रमेण शुद्धविद्याविर्भवति। यद्यपि पतिः नित्यशुद्धापरिमितसर्वाधिकज्ञानक्रियाशक्तिमान् अशरीरः तथापि शुद्धां सृष्टिमुत्पादयति, यथा परिमितात्मा शरीरे स्पन्दम्। इदं तु सर्वस्वीकृतं यन्निमित्तकारणं शरीरं तदैवापेक्षते यदा तस्य सर्जनव्यापारः सविकल्पज्ञानग्राह्यवस्तुविषयो भवति। एवञ्च यतः शुद्धा सृष्टिः सविकल्पज्ञानग्राह्या न भवति अतः तत्कर्ता शिवः तदुत्पादनार्थं नापेक्षते शरीरम्। शुद्धा सृष्टिर्निर्विकल्पज्ञानभूमिः ; न तस्यां विकल्पः प्रोद्भवति, यतः सा विकल्पज्ञानापेक्षितशब्दोत्पत्तिभूमेरूर्ध्ववर्तिनी"।

**अशुद्धा सृष्टिः** पतिप्रेरितबैन्दवशरीरविद्येशानन्तादिकर्तृका। अत एवेयमशुद्धेत्युच्यते। यतोऽस्याः समवायिकारणं माया, यतश्चास्यां पाशबद्धाः पशवः कर्मानुसारं विविधसुखदुःखान्यनुभवन्तश्च सन्ति। इयं सविकल्पा सृष्टिः, यत इयं शब्दोत्पत्त्यनन्तरमस्तित्वं भजते।

**२. पाशः–** अस्मिन् नये द्वितीयः मुख्यः पदार्थः, यश्च पशोः पत्युश्च भेदकारणम्। तदन्तर्गताः **मल-माया-कर्म-निरोधशक्ति-बिन्दुसंज्ञकाः पञ्च** अवान्तरपदार्थाः। एतन्मते माया-कर्माख्यमलद्वयमुक्ताः परं ध्वंसोन्मुखाणवमलयुक्ताः पशवो विज्ञानाकला इत्युच्यन्ते। इमे च यदा शुद्धायां सृष्टौ बैन्दवशरीराणि **स्वीकृत्य** आणवमलस्य ध्वस्यमान-ध्वस्ताद्यवस्थानुसारं **विद्या-ईश्वर-सदाशिवाभिधाः** उच्चोच्चभूमिकाः नीयन्ते, तदा ते क्रमशो **मन्त्र-मन्त्रेश-मन्त्रमहेशशब्दैः** अभिधीयन्ते। **मोक्षोऽपि** द्विविधः **परः अपरश्च**। तत्तत्प्रकरणानुसारं पाशसङ्ख्याभेदो वर्णितः।

**१. मलः–** आणवः। यद्यपि मलशब्दः **आणव-मायाकार्मरूप**मलत्रयसाधारणः तथापि पाशान्तर्गतपदार्थगणनायामयं शब्दः आणवमलार्थे प्रयुक्तः। अनादिरयं पशुज्ञान-

---

[1] सृष्टिविचारः– त. प्र. टी. ९ सम्यग्विवृतः।

क्रियाशक्तितिरोधायकः । एकस्याप्यस्यानन्ताः शक्तयः । तासु एकया एकस्य पशोः ज्ञानक्रिया-शक्ती तिरोधत्ते ; अत एवैकस्य परिमितात्मनः आणवमलापगमे न सर्वमुक्तिसम्भवः। मलश्चायं चक्षुःपटलवत् द्रव्यस्वरूपः । अस्य निवृत्तिस्तु **पतिरूपवैद्यव्यापारसाध्या** ।

**किञ्च–** वैद्यव्यापारोऽपि यथा चक्षुःपटलपरिपाकमपेक्षते तथैव ईश्वरव्यापारः मलपरिपाकमपेक्षते । अयञ्च परिपाकः **शैवागमोपदिष्टक्रिया-चर्या-योगानुष्ठानसाध्यः** ।

**२) माया–** इयं वस्तुरूपा सद्रूपा च । इयमशुद्धिमृद्धिगतस्य सर्वस्य **कला भुवन-सूक्ष्म-स्थूल-शरीर**तदुपभोग्यविषयजातादेः उपादानकारणम् । परं मायाशब्दो बन्धन-त्रयान्तर्गतैकबन्धनार्थे प्रयुक्तो मायाकार्याणि द्योतयति । मायीयो मलः आत्मनो बुध्यादिभि-स्तादात्म्यं जनयति । अनिदञ्च इदन्तया भासयति । अतो माया अभ्युपेया ।

**३) कर्म–** अनुष्ठितकर्मणां फलराशिस्वरूपं कर्म प्रवाहानादितयाऽनादिरित्युच्यते । इदञ्च कर्म भोगस्य सुखदुःखादेः, भोगसाधनानां च शरीरेन्द्रियाणां प्रत्यात्मनियतत्वेन विचित्र-त्वात् तद्वैचित्र्यकारणत्वेन अवश्यमभ्युपेयम् । अनन्तादिकृता अशुद्धा सृष्टिः कर्माधीना ; यतस्ते प्राणिकर्मभोगार्थं सृज्यमानायां सृष्टौ सर्वान् भोग्य-भोजक-भोगसाधनादीन् सृजति, यथा सर्वे स्वस्वकर्मानुसारं भोगं भोक्तुं शक्नुयुः । **"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्"** इत्येष सिद्धान्त सम्यगनुसृतः कुपथान्निवार्यसुपथं नयति ।

**४) निरोधशक्तिः–** तिरोभावः । इयं च शक्तिः न केवलं पाशेषु परि-गणिता, किन्तु पारमेश्वरशक्तिष्वपि । मुख्यतया इयं पारमेश्वरशक्तिरेव । [1]पाशत्वं चास्याः पाशधर्मानुवर्तनेनोपचारात् , यतः सा परमेश्वरस्योपकरणम् । मलान्तरसहकृतेनानेन उपकरणेन निगडेनेव नियम्य प्राणिनः स्वस्वभोग्यभोगान् प्रति नयति प्रभुः परमेश्वरः ।

**५) बिन्दुः–** बिन्दुर्न केवलं मलस्वरूपः, किन्तु– शुद्धसृष्ट्युपादानभूतोऽपि, मलस्वरूपस्य बिन्दोः मोक्षविचारधारयातीव घनिष्ठः सम्बन्धः । **मोक्षो** द्विविधः **परोऽ-परश्चेति** । उक्त एव माया-कर्मरूपपाशद्वयविमुक्तः पशुर्न सर्वथा मुक्तः, आणवापर-पर्यायशुद्धमलस्य सद्भावात्, अतः सोऽपरमोक्षभाक् ।

---

[1] निरोधशक्तेः पाशत्वे– त प्र. १० द्रष्टव्यम् ।

**सिद्धान्तशैवाः** एवमामनन्ति– (१) अस्माल्लोकादूर्ध्वं बहवो लोकाः, सन्ति। तत्रापि कर्मादिपाशबद्धा जीवाः कर्मभोगान् भुञ्जन्ति। (२) मायोर्ध्वभाविनः पञ्च पदार्थाः, येषु **सदाशिव-ईश्वर-विद्याख्यत्रयं** गण्यते। (३) मायाकर्मोभयपाशविमुक्ताः ध्वस्यमानाद्यवस्थावशिष्टाणवमलाः क्रमशोऽनुभूत**विद्या-ईश्वर-सदाशिवतत्त्वाः** पशवः मायीयलोकोर्ध्वोर्ध्ववर्तिषु त्रिषु लोकेषु क्रमशो निवसन्ति। ते च क्रमशो **मन्त्र-मन्त्रेश-मन्त्रमहेश**शब्दैः अभिधीयन्ते। एषां शरीराद्युपादानकारणं बिन्दुः। एवञ्चैतादृशप्रकरणेषु बिन्दुरुपादानस्वरूपत्वेन सृष्टिकारणत्वेन व्याख्यायते; परन्तु यतो यावद्बिन्दुकारणकाच्छरीरान्मुक्तिर्न भवति, न तावत् परमोक्षः, अतो बिन्दुर्मलत्वेनाप्युच्यते।

## बिन्दोः अवान्तरपदार्थेषु प्राथम्यम्–

[1] सिद्धान्तशैवाभ्युपगमेषु षट्त्रिंशदवान्तरपदार्थेषु **बिन्दुः प्रथमः**। स च शिवशब्देनाप्यभिधीयते। बिन्दुः शिवापरपर्यायो महामायाशब्देनाप्यभिधीयते। अयमेको नित्यः, **शक्ति सदाशिव ईश्वर-विद्याख्याश्चा**वान्तरपदार्थाः अस्यैव परिणामभूताः शरीरांशे। अयं तत्तद्भुवनेश्वराराधनात् दीक्षया वा स्वकार्यभूतशुद्धाध्वभुवनप्राप्तानां ज्ञानक्रिये प्रकटयति। अयं **कुण्डलिनी**शब्देनाप्यभिधीयते। अयं परशिवस्य परिग्रहशक्तिरूपः। नायं स्वतन्त्रः, जाड्यात्, अपि तु परशिवेच्छापरवशः।

## बिन्दुपरिणामो नादः–

**बिन्दुर्न** केवलं शुद्धसृष्ट्युपादानकारणत्वेनाभ्युपगतः, अपि तु परिमितप्रमात्रुपाधिभूतनादकारणत्वेनापि। नादरूपोपाधेरावश्यकतया चेत्थं स्थाप्यते– [2] **सिद्धान्तशैवनये** ज्ञानं नात्मनि समवेतम्। अपि तु तदुपाधिरूपे नादे, यो बिन्दोः परिणामः। असङ्ख्याः नादाः प्रत्यात्मभिन्नाः। परिमितात्मन उपाधिभूतो नादोऽभिधेयबुद्धिबीजरूपः आत्मनो ज्ञानशक्तिर्विभिन्नसूक्ष्मशब्दरूपनादवृत्तिसंपृक्ता सती मायीयसविकल्पार्थावलोकने प्रवर्तते। नादरूपोपाधिकारणाद्भिन्नेव भासते च। भिन्नानि ज्ञानानि नादवृत्तिरूपाण्येव, न तु बुद्धिवृत्तिरूपाणि, यथा साङ्ख्याः कथयन्ति।

---

[1] सिद्धान्तशैवानां बिन्दोरवान्तरपदार्थेषु प्राथम्यविचारे अभिप्रायः- त. ८– २७ द्रष्टव्यः।

[2] ज्ञाननादयोस्समवेतत्वे र. त्र– २३–४ द्रष्टव्य।

## स्फोटनिरसनपूर्वकं नादसमर्थनम्

**वैयाकरणास्तु स्फोटाख्यं** वस्तु अभ्युपगच्छन्ति। तेषामयमाशयः— **कथं** शब्दाः वाक्यानि च अर्थज्ञानं जनयन्ति? स चैवमुत्थाप्यते— शब्दघटकान्यक्षराणि क्रमशः श्रुतिपथमागच्छन्ति; क्रमेणैव ज्ञायन्ते; नश्यन्ति चोच्चारणक्षणसमनन्तरमेव। एवञ्चार्थस्य शब्देन सह सम्बन्धात्, शब्दघटकाक्षराणामुच्चारणक्षणसमनन्तरविनाशित्वादक्षरराशिस्वरूपाणां शब्दानां तद्घटितवाक्यानां च प्रत्यक्षीकरणासंभवात् न सम्भवत्यर्थज्ञानम्। न च तदर्थज्ञानं शब्दान्तिमवर्णात् श्रूयमाणात् सम्भवति यदा "गौः" इति शब्दात् भाविनो विसर्जनीयात् इति वाच्यम्। तदा "नरः" शब्दान्तभाविनः श्रूयमाणाद्विसर्गात् कुतो न भवति सास्ना-लांगूल-ककुद-खुर-विषाणिनो ज्ञानम्? अन्त्यविसर्गस्योभयत्राप्युपलभ्यमानत्वात्।

प्रश्नस्यास्योत्तरं **वैयाकरणैरित्थं** प्रदीयते— पूर्वपूर्ववर्णसंस्कारसहितान्त्यवर्णाभिव्यङ्ग्योऽन्य एवाविनिर्भक्तो **मयूराण्डरसवदनेकवर्णावभासकः** पदात्मा पदव्यतिरिक्तश्च वाक्यस्वभावः **समस्तस्य** जगतो युगपत्क्रमेण वार्थप्रतीतिहेतुत्वात् व्यापको नित्यश्च **स्फोटोऽभ्युपगन्तव्यः**। यतः स एव व्यवहर्तॄणामर्थं **स्फुटयति**। इत्थञ्च **'स्फुटत्यर्थो यस्मात् सः स्फोट'** इति वैयाकरणैः **स्फोटसिद्धान्तः** स्थाप्यते।

स च वादः **सिद्धान्तशैवैरेवं** निरस्यते— न स्फोटः स्वीकर्तुं शक्यते, यतो वर्णव्यतिरिक्तस्य तस्याननुभवात्, तस्य वर्णेभ्यो भिन्नाभिन्नत्वप्रतिपदनस्याशक्यत्वात्। न तावद्भिन्नः, वर्णव्यतिरेकेण शशविषाणादेरिव तस्यानुपलब्धेः। न चानुमानात् स्थितिरुपपद्यते; तस्य प्रत्यक्षनिराकृतत्वात्, अभिन्नत्वे स्वीकृते **"हस्तः करः"** इतिवत् एकार्थाभिधानात् वर्ण एव स्फोटः, न तु ततो भेदेनावस्थित इत्यापातात्। विभुत्वे चास्यैकपुरुषोच्चारितैर्वर्णैरभिव्यक्तिमत्वे सति विशेषाभावात् देशान्तरेऽपि नित्यत्वाच्च कालान्तरेऽपि प्रमातॄणामर्थप्रतिपत्तिस्स्यात्।

**नादस्तु** अक्षरबिन्दुरूपस्यान्तस्सञ्जल्पस्य कारणम्।

### अत्र अर्थग्रहणप्रकारः

**नादोऽन्तस्सञ्जल्पस्या**ऽक्षरबिन्द्वपराभिधस्य कारणम्। एवञ्च **नाद** एव **शब्दार्थज्ञानस्य** कारणम्; यतो नादोऽन्तस्सञ्जल्पं जनयति; येन बुद्धिर्बाह्यविषयप्रतिबिम्बमध्य-

वस्यति । बाह्यो व्यक्तशब्दः आन्तरसङ्कल्पस्य बाह्याकार एव । अतो न परमार्थतोऽर्थ-बुद्धिजनकः ।

असङ्ख्येयाः नादाः । एष्वेकः प्रत्येकेन परिमितात्मना संबद्धः । स च व्यक्तिविशेषेषु अन्तरसङ्कल्पोद्भावको बाह्यविषयस्य सविकल्पग्रहणकाले । सङ्कल्पश्च-शब्दार्थयोः ऐक्यरूपात्मकः ।

श्रूयमाणा वर्णाः श्रोतृनिष्ठं नादमभिव्यक्तीकुर्वन्ति । अभिव्यक्तो नादः श्रोतृबुद्धेः पुरतः शब्दार्थैक्यात्मकान्तरसङ्कल्पमुपस्थापयति । श्रोतृबुद्धिः शब्दार्थयोः पृथक्करणरूपमध्यवसायं कृत्वाऽस्यायमर्थ इति अध्यवस्यति ।

बिन्दुः पराशब्देनाप्युच्यते । अस्मादेव सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीरूपाश्चतस्रो वाचः समुद्भवन्ति ।

भर्तृहरिमते पश्यन्तीसाक्षात्कार एव ब्रह्मसाक्षात्कारः । पश्यन्त्याः ब्रह्मरूपत्वात् ।

शिवशक्तिशब्दाभ्यामुच्यमानौ बिन्दु-नादौ सिद्धान्तशैवाभ्युपगतषट्त्रिंशदवान्तरपदार्थेषु प्रथम द्वितीयौ ।

३) पशुः– तृतीयो मुख्यः पदार्थः ।

क्षेत्रज्ञादिपर्यायः पशुः न देहात्मा यथा देहात्मवादिचार्वाकमते, न ज्ञेयो यथा नैयायिकमते, न देहपरिमाणः यथा जैनमते, न क्षणिको यथा बौद्धमते, नापि परमार्थतो ब्रह्मस्वरूपः यथा वेदान्तिमते, नापि ज्ञान-क्रियाशक्तिरहितः यथा साङ्ख्यमते; परन्तु ज्ञानक्रियाशक्तिमान् नित्यः, यस्यापरिमितज्ञानक्रियाशक्ती ईशप्रसादान्मुक्तौ अभिव्यक्ते भवतः ; एवञ्च यः शिवसाम्यमवाप्नोति ।

पशुस्त्रिविधः, विज्ञानाकल–प्रलयाकल–सकलभेदात् । विज्ञानाकला एव आणवमलस्य विभिन्न-ध्वस्यमान-ध्वस्तादिदशानुकुलं मन्त्र-मन्त्रेश-मन्त्रमहेशशब्दैरुच्यन्ते । विज्ञानाकलाश्च कलादितत्त्वविमुक्ताः मायीय-कार्ममलद्वयरहिताः विध्वंसिष्वाणवमलमात्रयुताः स्वीक्रियन्ते ।

प्रलयाकलः आणवकार्मीयमलद्वययुक्तः पशुः प्रलयाकलभावितपरिमितप्रमातृरूपः । सकलो मलत्रययुक्तः पशुः । अयं खलु कलादिपृथिव्यन्तत्रिंशत्तत्त्वसम्बद्धः, यथावयम् ।

## मोक्षः

मतेऽस्मिन् **परापरभेदेन मोक्षो** द्विविधः इति पूर्वमुक्तम् । तत्र परमोक्षस्य **शिवसाम्यरूपत्वं** पूर्वमेवावेदितम् । परमोक्षे तु अपरिमितज्ञानक्रियाशक्ती पशौ वर्तमाने परं मलाच्छादिते; **क्रिया-चर्या-योगानुष्ठानात्** व्यपगत- **माया-कर्ममले** ईशानुग्रहादपेताणवमले च पशावभिव्यक्तीभवतः । ततश्च पशुः शिवसाम्यमवाप्नोति । परन्तु शिवात्पृथगेव सन्तिष्ठते । अतो मोक्षेऽपि पशोः शिवात् पृथक् सत्तास्वीकारात् **द्वैतमिदं दर्शनम्** ।

"**द्वैतदर्शनमिदं** सांसारिकसाधारणजनदृष्टिकोणमाश्रित्य प्रवर्तते । साधारणो जनो दुःखाक्रान्त ईश्वराराधनेन दुःखविमुक्तो भवति । धर्माचरणमपि द्वैतमाश्रित्यैव सम्भवति । अतः साधारणजनैः द्वैतमेवाश्रयणीयम्" इति **सिद्धान्तशैवैरभ्युपगम्यते** ।

## अस्य सिद्धान्तस्य वैशिष्ट्यम्

मौलिकसिद्धान्तानां **वैशेषिक-न्याय-साङ्ख्य-वेदान्त-पाशुपताद्यपरसिद्धान्तानां** मध्ये **द्वैतशैवसिद्धान्तदर्शनस्य** वैशिष्ट्यमवलोकनीयम् ।

## द्वैतशैव-वैशेषिकदर्शनयोः भेदसूचनापद्धतिका

क) अधोनिर्दिष्टेषु अंशेषु शैवद्वैतसिद्धान्त-वैशेषिकदर्शनयोः अन्तरं परिदृश्यते—

| **शैवद्वैतसिद्धान्तदर्शनम्** | **वैशेषिकदर्शनम्** |
|---|---|
| १) सत्कार्यवादः । | असत्कार्यवादः । |
| मायैव कला-विद्यादितत्त्वरूपैः परिणमते; पयो दधिवदवस्थान्तरं परिगृण्हाति । | माया घृतं तत्पतितकीटन्यायेन अंशेनैव रूपान्तरं गृण्हाति । |
| २) कर्म बुद्धिधर्मः । | आत्मधर्मः कर्म । |

| | |
|---|---|
| ३) कालः भूतभविष्यद्वर्तमानरूपः अचेतनः अनित्यः । | कालः नित्यः । |
| ४) अचेतनानां परमाणूनां अनित्यत्वम् । | परमाणूनां नित्यत्वम् । |
| ५) आत्मा ज्ञानस्वरूपः । | ज्ञानं आत्मगुणः |

## ख) सिद्धान्तशैव-साङ्ख्ययोः भेदसूचनपद्धिका

अधो निर्दिष्टेषु अंशेषु साङ्ख्य-सिद्धान्तशैवयोरन्तरं परिदृश्यते—

| सिद्धान्तशैवदर्शनम् | साङ्ख्यदर्शनम् |
|---|---|
| १) पुरुषः अनादिमलोपेतः । | पुरुषः पुष्करपलाशवन्निर्लेपः । |
| २) चेतनः पुरुष एव कर्ता भोक्ता च । | साङ्ख्याभ्युपगतो भोगः चतुष्टयमपेक्षते—<br>१. बुद्धिपतितस्वप्रतिबिम्बतादात्म्यापन्नं पुरुषं अपेक्षते । "पुरुषप्रतिबिम्बं विषयप्रतिबिम्बेन संयोजयति ।"<br>२. आन्तरपुरुष-बाह्यवस्तुजातप्रतिबिम्बग्राहिणी बुद्धिं "पुरुषप्रतिबिम्बं पुरुषेणैकीकरोति ।"<br>३. बुद्धिप्रतिबिम्बितविषयं अपेक्षते । "पुरुषप्रतिबिम्बतादात्म्यं व्यवहारार्थमुपयुनक्ति ।"<br>४. अहंकारं चापेक्षते ; "अहमिदं जानामि" इति धियं च जनयति— |

## ग) सिद्धान्तशैव-अद्वैतवेदान्तयोर्भेदसूचनपद्धिका

| सिद्धान्तशैवदर्शनम् | अद्वैतवेदान्तदर्शनम् |
|---|---|
| १) असङ्ख्यानां जीवानां ब्रह्मणः पृथक्सत्तां स्वीकरोति । जीवाश्च भोगमोक्षार्थं परमात्मपरतन्त्राः । | जीवब्रह्मणोरैक्यं मनुते । |

२) जगदुपादानकारणं निमित्तकारणात् भिन्नम्। उपादाननिमित्तयोरेकत्वम्।

३) मोक्षोपायाः क्रिया-चर्यायोगानुष्ठानादयः। ज्ञानं मोक्षोपायः।

घ) द्वैतपाशुपताद् सिद्धान्तद्वैतस्य भेदसूचनापद्धिका

| सिद्धान्तशैवद्वैतम्। | पाशुपतद्वैतम्। |
| --- | --- |
| १) पति-पशु-पाशरूपाः त्रयः पदार्थाः। | कारण-कार्य-योग-विधि-दुःखान्ताः पञ्च पदार्थाः। |
| २) शिवसाम्यं मोक्षः | दुःखान्त एव मोक्षः। |

१०

# अथ शैवाद्वैतदर्शनम्।

## विविधदर्शनविचारधारासंगमभूमिः काश्मीरः—

शैवाद्वैतमतविभागेषु प्रत्यभिज्ञासिद्धान्तस्यैव प्राधान्यं वक्तव्यम्; यतोऽद्यापि तत्प्रतिपादकसाहित्यं वैपुल्येनोपलभ्यते। काश्मीरः सिद्धान्तस्यास्य केन्द्रमासीत्। सुप्रसिद्ध एवायं विषयोऽपि यत् काश्मीरः "शारदापीठः" इति। प्रत्यभिज्ञादर्शनोत्थानसमये काश्मीरः बहूनां दार्शनिकविचारधाराणां सङ्गमस्थानमासीत्। [1]अशोकसमयादारभ्य काश्मीरो बौद्धानां प्रधानकेन्द्रमभूत्। अत्र कानिष्कः बौद्धधर्मग्रन्थेषु परस्परनिरुद्धांशान् सङ्गमयितुं बौद्धपण्डितानामेकां महतीं सभामायोजयत्। बौद्धमतसत्ता [2]कानिष्कसमये काश्मीरिकशैवानामरुन्तुदा संजाता; यदा कानिष्कः सम्पूर्णां काश्मीरभूमिं बौद्धभिक्षुसङ्घाय प्रादात्। तन्नेता तु नागार्जुनः। स च आर्थिकवैभवसहकृतं स्वीयं विचित्रबुद्धिवैभवं बौद्धधर्मप्रचाराय शैवधर्मोन्मूलनाय च प्रायौक्षीत्। नागार्जुनस्य

---

[1] अशोककालः— क्रि. पू. २७३-२३२. [2] कानिष्ककालः- क्रि. श. ७८-१०० ।

तदनुयायिनां च शैवधर्मद्वेष्टृत्वं कह्लणविरचितायां [1]राजतरङ्गिण्यां [2]वरदराजकृतशिव-सूत्रवार्तिके च सूचितम्।

[3]पाणिनीयव्याकरणदर्शनस्य अध्ययनाध्यापनपरम्परां काश्मीरराजः अभिमन्युः समचालयत्। पुण्यराजो वाक्यपदीयटीकान्ते (द्वितीयाध्यायस्य) राजानकशूरवर्म-शशाङ्क-नामानौ स्वगुरु-परमगुरू कीर्तयति स्म। हेलराजः भूतिराजतनयः। स च वाक्यपदीयस्य अपरः टीकाकारः। इमावुभौ अभिनवगुप्तस्य गुरू आस्ताम्। अभिनवगुप्तस्तु वैयाकरणसिद्धान्तसंवेत्ता अत एव सः नवः शेषः; "अभिनवगुप्तपाद" इति संस्तुतः।

न्यायदर्शनस्य तथा अद्वैतवेदान्तदर्शनस्य च काश्मीरे समीचीनः प्रचारः आसीत्। तत्रैव न्यायसिद्धान्तमवलम्ब्य श्रीशङ्ककृतस्य, वेदान्तसिद्धान्तानुसारं भट्टनायककृतस्य च रससूत्रव्याख्यानं विनिर्मितम्। अभिनवगुप्तपादः स्वीयकथामुखतिलके न्याया-भ्युपगतषोडशपदार्थान् प्रतिपादयति स्म। मालिनीविजयवार्तिके च वैशेषिकाभ्युप-गतसमवायविशेषाभावान् दृढं समालोचयति स्म। ध्वन्यालोकलोचने च अभिहितान्वय-वाद-अन्विताभिधानवाद-मीमांसकसिद्धान्तवादौ च न्यरूपयत्। प्रथमव्याख्याने सङ्कीर्तिताः रामकण्ठादयः द्वैतशैवसिद्धान्तदर्शनं व्याचख्युः। नैषधचरितकर्ता [4]श्रीहर्षः जयन्तचन्द्राज्ञानुसारं स्वनिबन्धं काश्मीरविदुषः प्रदर्शयितुं शारदाहस्ते च स्वीकृत्यर्थं समर्पयितुं काश्मीरं जगाम। अतः क्रि. पू. चतुर्थशतकादारभ्य क्रि. श. द्वादशशतक-पर्यन्तं काश्मीरस्य "शारदापीठत्वम्" विविधदार्शनिकविचारधारासङ्गमभूमित्वं चाक्षत-मासीत्।

---

[1]नागार्जुनेन सुधिया बोधिसत्वेन पालिताः।
क्रियां नीलपुराणोक्तामाच्छन्दन्नागमद्विषः ॥ (रा. त.) इति।

[2]नागबोध्यादिभिः सिद्धैः नास्तिकानां पुरस्सरैः।
आक्रान्ते जीवलोकेऽस्मिन्नात्मेश्वरनिरासकैः ॥ (शि. सू. वा.) इति।

[3] पाणिनेः कालः– क्रि. पू. ४००. [4] कान्यकुब्जाधिपश्रीहर्षकालः– क्रि. श. ११६९-९५.

[1] आचार्यशङ्करोऽपि बौद्धमतमुन्मूलनाय, अद्वैतवेदान्तज्ञानसंवर्धनाय, शैवाद्वैत-विचारधारां दक्षिणामूर्तिस्तोत्रादिद्वारा प्रोत्साहयितुं काश्मीरमगमत्। सुरेश्वराचार्यश्च तच्छिष्यः दक्षिणामूर्तिस्तोत्रं अद्वैतशैवागमानुसारं व्याख्याय, शैवागमपारिभाषिकशब्दान् प्रयुञ्जन्, तत्रत्यशैवानां दृष्टिं मौलिकशैवाद्वैतसिद्धान्तान् प्रति आकर्षयन्, शाङ्करान्तस्य शैवाद्वैतसाम्यं दर्शयन् आगमाश्रितशाङ्कराद्वैतं प्रचारयामास।

सुविदित एवायं यच्छङ्करः शैव आसीत्। स च चतुष्षष्ठ्यागमाननुसरति स्म। उक्तञ्च सौन्दर्यलहर्याम्–

"चतुष्षष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनम्" इति। श्रीचक्रं शैवागमानुसारतः जगन्नाथपुरीस्थे स्वमठे स्थापयामास।

सोमानन्दाभिनवगुप्तपादादयस्तु विविधान्यद्वैतवेदान्तमतानि समालोचयन्तः, तत्र तत्र जडब्रह्मवाद-अभावब्रह्मवाद-शून्यब्रह्मवादादिशब्दान् प्रयुञ्जन्तोऽपि न क्वचन शङ्करनाम गृण्हन्ति। तत्रेदं निदानम्–

अभिनवगुप्तः स्वीये ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यन्ते अद्वैतशैवात् अद्वैतवेदान्तस्य मौलिकं भेदं मायास्वरूपमेव मनुते। अद्वैतशैवः मायां, शक्तिं स्वीकरोति। अद्वैत-वेदान्तस्तु सदसद्भ्यामनिर्वचनीयां तां मनुते। शङ्करस्तु तत्र तत्र स्वभाष्ये मायाविषये शक्तिशब्दं प्रयुनक्ति। यथा– [2] "शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः ........ अविद्यात्मिका बीजशक्तिः" [3] "सर्वज्ञस्येश्वरस्य मायाशक्तिः" इत्यादि।

## प्रत्यभिज्ञादर्शनेतिहासः तत्साहित्यञ्च

सोमानन्दः अभिनवगुप्तपादस्य परमेष्ठी गुरुरिति पूर्वमेवोक्तम्। [4] अभिनव-गुप्तश्च ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीं (क्रि. श. १०१५) समापितवात्। तस्य परमेष्ठी गुरुः [5] सोमानन्दः तस्मात्पूर्वतरः भवेदित्यत्र नास्ति कस्यापि संशीतिः।

---

[1] शाङ्कराचार्याणां कालः– क्रि. श ८००. [2] शा. भा. २९७. [3] शा. भा. ३८२ [4] अभिनवगुप्तकृत-ईश्वरप्रत्यभिज्ञाविमर्शिनीनिर्माणकालः– क्रि. श-१०१५. . [5] सोमानन्दकालः– क्रि. श. ९००.

सोमानन्दः शैवागमिकविचारधारायाः आणव-शाक्त-शाम्भव-प्रत्यभिज्ञाख्येषु चतुर्षूपायेषु ऊर्ध्वतमं अन्तिमं अनुपायापरपर्यायं प्रत्यभिज्ञेति विश्रुतं स्वसमकालभाव्यद्वैतशैवप्रतिपादकवसुगुप्ताचार्याऽविदितं मोक्षोपायं प्रत्यभिज्ञेयमहेश्वररूपं च युक्तिभिः संसाध्य शिवदृष्ट्या प्रकटीचकार। अत एव शिवदृष्टौ प्रतिपादितं दर्शनं "प्रत्यभिज्ञादर्शनं इत्युच्यते।

शिवदृष्टिप्रतिबिम्बभूतां ईश्वरप्रत्यभिज्ञाकारिकां तस्याश्चोपरि वृत्तिनाम्नीं टीकां, तस्याः उपरि विवृत्याख्यां टीकां च सोमानन्दशिष्यः उत्पलाचार्यो लिलेख। अभिनवगुप्ताचार्यः उत्पलार्यकृत्योः ईश्वरप्रत्यभिज्ञाकारिका तद्विवृत्योरुपरि क्रमशः विमर्शिनी विवृतिविमर्शिनीति प्रसिद्धे द्वे टीके रचयामास। इदमेम शिवदृष्टयाख्य प्रकरणसहितं मुख्यतया प्रत्यभिज्ञादर्शनोपपादकं ग्रन्थपञ्चकमिति प्रथितम्।

अभिनवगुप्तानन्तरं न कोऽपि मौलिको ग्रन्थः प्रत्यभिज्ञाप्रतिपादकः समुपलभ्यते। अभिनवगुप्तकृततन्त्रालोकस्तु त्रयाणामपि अद्वैतशैवदर्शनानां क्रम-कुल-प्रत्यभिज्ञेति विख्यातानां प्रतिपादनपरः।

**इमे प्रत्यभिज्ञाविषयकाः ग्रन्थाः–**

१. प्रत्यभिज्ञाहृदयम् – क्षेमराजकृतम् (अभिनवगुप्तशिष्यः) प्रत्यभिज्ञादर्शनस्य संक्षिप्तो ग्रन्थः।

२. परमार्थसारटीका – योगराजकृता (क्रि. श. १०६०)

३. तन्त्रालोकटीका – जयरथलिखिता। (क्रि. श. ११८०)

४. ईश्वरप्रत्यभिज्ञाटीका (भास्करी) – भास्करकण्ठकृता। (क्रि. श. १७८०) इत्यादि।

**शिवसूत्राणि न प्रत्यभिज्ञाप्रतिपादकानि–**

किञ्च- महादेवगिरौ शिलोत्कीर्णानि सोमानन्दपूर्वभाविना [1]वसुगुप्तेन लब्धानि प्रकाशितानि च शिवसूत्राणि न प्रत्यभिज्ञादर्शनप्रतिपादकानि। तेषु प्रत्यभिज्ञाख्योपायस्य

---

[1] वसुगुप्तकालः– क्रि. श. ८२५.

नाममात्रेणाप्यनुल्लेखात्, शाम्भव-शाक्त-आणवाख्यानां उपायानां क्रमेणैकैकेनाध्यायेन अध्यायत्रयविभक्ते शिवसूत्रे व्याख्यानाच्च। एतदङ्गीकृत्यैव **ईश्वरप्रत्यभिज्ञाकारिकायां-उत्पलाचार्यस्य-**

**इति प्रकटितो मया सुघट एष मार्गो नवो।**
**गुरुभिरुच्यते स्म शिवदृष्टिशास्त्रे यथा॥**

इयमुक्तिः नान्यथा सङ्गमयितुं शक्यते। **प्रत्यभिज्ञामार्गस्याभिनवत्वं** वसुगुप्तेनाऽप्रतिपादनाच्च।

**स्पन्दशास्त्रं न प्रत्यभिज्ञाप्रतिपादकम्—**

**एवं स्पन्दकारिका** तदाश्रिताश्च ग्रन्था न **प्रत्यभिज्ञादर्शन**प्रतिपादनपराः; यतः **स्पन्दकारिका शिवसूत्र**संग्रहपरा; **उक्तञ्च क्षेमराजेन शिवसूत्रविमर्शिन्याम्—**

[1]"**एतानि च सम्यगधिगत्य भट्टश्रीकल्लटाद्येषु** प्रकाशितवान् **स्पन्दकारिकाभिश्च** सङ्गृहीतवान्" **इति।**

**स्पन्दशास्त्रं प्रत्यभिज्ञाशास्त्रात् भिन्नं, तस्य** प्राधान्येन **शाक्तोपायप्रतिपादकत्वात्। उक्तञ्च क्षेमराजेन-** [2]"श्रीपूर्वशास्त्रे ध्यानाद्येवाणवत्वेनोक्तम्। **एतच्च स्थूलत्वात् शाक्तोपायप्रकाशनात्मनि स्पन्दशास्त्रे न सङ्गृहीतम्" इति। शिवसूत्र**प्रदर्शितास्त्रयो **मार्गाः आगमाश्रिताः। शिवसूत्रस्यापि** [3]"**रहस्यागम**"**सारसंग्रहरूपत्वात् इति।**

**प्रत्यभिज्ञादर्शनस्वरूपम्**

**प्रत्यभिज्ञादर्शनं स्वातन्त्र्यवादः, आभासवादः, संविदद्वयवादः, यथार्थप्रत्ययवादः काश्मीरशैवाद्वैतं इत्यादि** नामभिः तत्र तत्र **समुल्लिखितम्।**

**१) स्वातन्त्र्यवादः**– स्वतन्त्रः परमशिवो महेश्वरः। स एव स्वात्मनः सकाशात् स्वात्मन्येव स्वयैवेच्छया **परदशायां** स्वाभेदेनाऽहन्तारूपतया स्वस्मिन् वर्तमानं पदार्थजातं,

---

[1] शिवसूत्रविमर्शिन्याम्- ३. [2] शिवसूत्रविमर्शिन्याम्– ७९. [3] शिवसूत्रविमर्शिन्याम्– ५५.

**अपरदशायां** भेदात्मना निर्भासयन्, भेदेनावभासितानां पदार्थानां कार्यकारणभाव-क्रियाकारकभावादीन् पारस्परिकसम्बन्धांश्चावभासयन् सर्वेषां पारमार्थिकः स्वभाव इति **स्वातन्त्र्यवादाद्वैतशैवानां सिद्धान्तः।** अत्र प्रकाशविमर्शात्मा संवित्स्वभावः परमशिवः, स्वातन्त्र्यादेव **मन्त्र-मन्त्रेश-मन्त्रमहेश-अकल-सकलादीन्** विविधप्रमातृरूपतया, सांसारिक-विवेचकदृष्ट्याऽतिरिक्ततयैव भासमानेन, स्वरूपानाच्छादकेन, संविद्रूपेनान्तरीकस्वातन्त्र्यमहिम्ना प्रकाशत इति **स्वातन्त्र्यवादः** स्थापितः।

[1]**कालो** ह्यस्मिन् सिद्धान्ते त्रिविधः– **शक्तिरूपः, परिमितप्रमातृकञ्चुकरूपः, सूर्यादि परिस्पन्दरूपश्च।** अन्त्यश्चास्मिन् सिद्धान्ते क्रियावैचित्र्याभासरूपः एव।

सर्वश्च क्रमः [2]चित्राभासकृतः प्रभोः कालाख्यया शक्त्या आभास्यते।

एवञ्च कालशक्त्यवभास्यः **कला-नियति-राग-विद्या-कालाख्य**परिमितप्रमातृकञ्चुक-मध्यपतितकालाख्यपारिमित्यकारणग्राह्यत्वात् परिमितप्रमातृलग्नतयैव भवन् तद्विषयीकरणीय-भावनिष्ठः क्रम एव **कालः।** तथा च **सूर्यादिनिष्ठो** नियतो यः क्रियावैचित्र्यरूपो क्रमः, स एव **कालः।** सुप्रसिद्धमिदं यन्नियतपरिमाणेन परिवर्तकादिना हेम मीयते, तथैव प्रसिद्धपरिमाणया अर्कोदयाऽस्तमय्या क्रियया चैत्रगमनं। यथोच्यते '**दिवसं चैत्रो गच्छति**' इति।

योऽपि **कालः वैशेषिकाणां** द्रव्यरूपः, **कापिलानां रजस्स्वभावः** प्रवर्तनात्म-कत्वात्, **वैय्याकरणानां नित्यानाश्रितप्रवृत्तिस्वभावः सौगतानां सन्तन्यमानभावैकपर-मार्थः,** सोऽपि वस्तुतः क्रमरूपतां नातिक्रामतीति क्रम एव नाम **बहिःकाल** इति व्यवह्रियते।

---

[1]मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः॥ इति।

[2]क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्वतः।
आभाससदसत्वे च चित्राभासकृतः प्रभोः॥ **इति।**

## २. आभासवादः

आभासशब्दोऽद्वैतवेदान्तसाहित्येऽपि बहुशः प्रयुज्यते। परन्तु एष शब्दः काश्मीराद्वैतशैवसाहित्ये वेदान्तस्वीकृतार्थाद्भिन्नेऽर्थे प्रयुज्यते। वेदान्तिनये आभासः सदसद्भ्यामनिर्वचनीयया जडया मायया कल्पितत्वात् जड अनिर्वचनीयश्च। नहीश्वरत्वेन स निर्वक्तुं शक्यते, जडाजडयोरभेदायोगात्। नापि तदन्यत्वेन शक्यनिर्वचनः, स्वातन्त्र्येण तस्य सत्तास्फूर्त्यसम्भवात्।

मिथ्याज्ञानार्थेऽप्याभासशब्दः प्रयुज्यमानः उपलभ्यते– यतः शुक्तौ रजतभ्रमे 'अविद्या' रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमत इति वेदान्त्यभ्युपगमः। तथा च प्रतिबिम्बार्थेऽप्ययं शब्दः प्रयुज्यते।

एवञ्च वेदान्तिनये प्रतिबिम्बादिवदवास्तवरूपमविद्याकार्यं मृषाबुद्धिश्चायमाभासः। अयं शब्दो वैभाषिक-वैशेषिक-पारमर्ष-सौत्रान्तिक-योगाचार-विज्ञाननयेषु साधारणो यथायोगं तदौन्मुख्य-तत्प्रकाश-तत्प्रतिबिम्ब-तदुल्लेखेषु प्रयुक्तः।

परन्तु अद्वैतशैवनये सङ्कोचरूपे ईषदर्थकादाङुपसर्गपूर्वकात् प्रकाशापरपर्याय "भा–दीप्तौ" इत्यर्थकाद्धातोः घञन्तात् निष्पन्न आभासशब्दः परिच्छिन्नप्रकाशरूपे यौगिक एवार्थे प्रयुज्यते आभासवादविचारे। एवञ्च यत्किञ्चिदपि बाह्येन्द्रियग्राह्यमन्तःकरणग्राह्यं वा, यच्चान्तःकरणबहिःकरणव्यापारविरतौ सुषुप्तिमूर्च्छादौ भाति, यच्च परिच्छिन्नप्रमात्रा न शक्यते ग्रहीतुं, अतश्च समाधिमात्रगम्यम्, यत्किञ्चिदप्यस्ति, यस्य केनापि प्रकारेण सत्तानुभूयते, यद्विषये च कथमपि शब्दव्यापारः सम्भवति, तद्विषयरूपं विषयिरूपं ज्ञानकारणरूपं ज्ञानरूपं वा सर्वमाभासः। एवं स्थिते शिवादिधरण्यन्तस्य षट्त्रिंशतत्त्वजातस्य ईश्वरप्रत्यभिज्ञायां प्रतिपादितस्याऽभासरूपता।

शैवाद्वैते प्रविभागदृष्ट्या परतत्त्वस्य रूपद्वयं स्वीक्रियते, विश्वोत्तीर्णं विश्वमयञ्च। न च तयोः पार्थक्यं कथञ्चन। विश्वोत्तीर्णतायामपि विश्वरूपता, विश्वरूपतायां चापि विश्वोत्तीर्णताऽविच्छिन्नतयैवास्ते।

विश्वोत्तीर्णोऽनुत्तर इति परः शिवश्चोच्यते। अद्वैतशैवनये प्रपञ्चः पारमार्थिकः अनुभवसिद्धः, प्रमाणबद्धश्च ; न मिथ्यारूपः। यस्मादेव तत्त्वाज्जगदुद्भवः तदेव तत्त्वं

मोक्षे भाति, तन्निर्भरमेव च न ज्ञानस्मृत्यादि। जगदुद्भावकतत्त्वस्य न किमपि क्षीयते जगदुद्भावने, नापि तस्मात् बाह्यं किमप्यनिर्वचनीयम्। **वेदान्तिनये** अन्ततो विनाशिनी मायेव भासमानः जगत्कारणम्– यतो मोक्षो न मायानाशात्; अपि तु मायोत्तीर्णत्वात्। परं तत्त्वं च न मोक्ष एव भाति, अपि तु साधारणस्येन्द्रियकानुभवस्य सम्यग्विश्लेषणे क्रियमाणे समग्रज्ञानाग्रज्ञातृस्पर्शदशासु तथा तत्फले स्फुटं लक्ष्यते। [1]शिवाद्वैते शक्ति-शक्तिमतोरभेदः। एवं[2] **वैयाकरणनयेऽपि**।

तत्राभेदः सर्वशक्तिसामरस्यरूपः यथैव **विभाव-अनुभाव-व्यभिचारिस्थायिन पानकरसन्यायेन** सामरस्यरूपः सहृदय-प्रेक्षकानुभूयमानो **रसः** एकः, तथैव **सर्वशक्तिसामरस्यात्मकः परः शिवः एक एव परं तत्त्वम्**। **स** च प्रकाश**विमर्शात्मा, स्वप्रकाशः, स्वप्रकाशविश्रान्तः, परानपेक्षः, सर्वशक्तिसामरस्यतया** पूर्णः, पूर्णत्वात् स्वप्रकाशस्वरूपविश्रान्तत्वाच्चानन्दरूपो विश्वोत्तीर्णः **परः शिवः, "निर्वृतचित्"** शब्देनाभिधीयते।

## भर्तृहरिनये स्वातन्त्र्यवादः

भर्तृहरिः न केवलं **काश्मीरशैवाद्वैत**साधारणं **स्वातन्त्र्यवाद**मपि तु **अद्वैतशैवागम**प्रतिपादितान् अन्यानपि बहून् सिद्धान्ताननुसरति। तेषु द्वावेव प्रकरणसंबद्धाविह प्रदर्शनीयौ। तथा हि–

(१) **भर्तृहरिनयेऽस्मिन्** ब्रह्मणोऽन्तस्सकलोऽपि विकारग्रामः तदेकीभावेन पारस्परिकभेदविरहेण सृष्टेः प्रागवतिष्ठते। इयं खलु **ब्रह्मणः संवर्तावस्था**। **विवर्तावस्थायां** तु तत एव सकलमेव चराचरं प्रथमत उत्पद्यते। प्रथममनाकृतं रूपं, द्वितीयन्तु व्याकृतं रूपम्। द्वयमपि क्रमशो विद्याऽविद्यारूपतच्छक्तिप्रभावात् यथा स्वप्नावस्थायां

---

[1] न शिवः शक्तिरहितो न शक्तिः शिववर्जिता।
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव॥ इति।

[2] तत्स्वरूपत्वेनाव्याहता नित्या अपि यस्य कलाः शक्तयः
(वा प. टी. १-२.)

एक एव शालक्षणो भिन्नजातीयाऽनेकपदार्थावभासी जायते, तथैव संवृतं ब्रह्म विवर्तेऽनेकपदार्थावभासि जायते। अतो **भर्तृहरिनये संवृते ब्रह्मणि** तदेकात्मतया विद्यमानं भावजातं सृष्टिकाले परस्परविविक्तं भासते, स्वीयाविद्याशक्तिबलात्।

(२) **तथा भर्तृहरिनये त्रयः प्रकाशाः**, ये न केवलं स्वयं प्रकाशन्ते, अपि तु **परानपि प्रकाशयन्ति।**

अ) **एकोऽग्निः**, यस्तमोऽपनयनादात्मानं परश्च घटादि प्रकाशयति।

आ) **अपरः** आन्तरो **बुद्धिरूपः**, यो बाह्येन्द्रियग्राह्यान् **घटपटादीन् आंतरांश्च सुखादीन्** प्रकाशयति, स्वयं विदितत्वाच्चात्मानम्।

इ) **तृतीयस्तु** शब्दाख्यः प्रकाशः, यः प्रकाशरूपं जातवेदसं बुद्धिं तथाऽप्रकाशरूपान् घटादीन्, येनाग्निवत् बुद्धिवद्वा स्वयं प्रकाशाः, तान् सर्वान् प्रकाशयति; स्वयञ्च प्रकाशते। "[1] इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूप-पररूपयोरवद्योतकाः। तद्यथा योऽयं जातवेदा यश्च पुरुषेष्वान्तरः प्रकाशो यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः, तत्रैतत्सर्वमुपनिबद्धं यावत्स्थास्नु चरिष्णु चेति" इति।

## स्वातन्त्र्यवादी पाणिनिः

**पाणिनिः स्वातन्त्र्यवादं** मनुते। तच्च '**कारके**' इति '**स्वतन्त्रः कर्ता**' इति च सूत्रयो व्याख्याने (पातञ्जलमहाभाष्ये, तस्य च कैयटकृते प्रदीपे च) स्फुटो भवति।

करोतीति कारकमित्यन्वर्थसंज्ञा चेत् तदा स्वतन्त्रस्यैव कर्तृसंज्ञावत् कारकसंज्ञापि प्राप्नोति; न तु करणाधिकरणादीनामस्वतन्त्राणाम्। एवं च स्वव्यापारे स्वातन्त्र्यात् कारकत्वम्, पच्यादिवाच्यमनूद्य प्रति पारतन्त्र्यात् करणत्वञ्च।

---

[1] वा. प. का. सं. २४।

## पतञ्जलिनये एकस्यैव कारकत्वमधिकरणत्वञ्च।

पतञ्जलिरेकस्यैव कारकत्वमधिकरणत्वादि च प्रकारद्वयेन साधयति—

(१) 'स्वतन्त्रः कर्ता" इत्यत्र हि कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वातन्त्र्यश्रुतिर्नियमार्था। तस्मात् यस्य स्वातन्त्र्यमेव तस्यैव कर्तृसंज्ञा; न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य। कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमुद्भूतत्वेनाविवक्षितमिव स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात् प्रवर्तते। यत्र च शक्तीनां निमित्तानिमित्तभावेन युगपद्विवक्षा, तत्र संज्ञानां विप्रतिषेधो भवति।

स्वतन्त्रशब्दार्थः- "स्वतन्त्रः कर्ता" इति सूत्रं व्याचक्षाणेन पतञ्जलिना "तन्त्रशब्दः प्राधान्ये वर्तते" इत्युक्तम्। स्वशब्दः आत्मवाची। एवञ्च स्वः आत्मा तन्त्रं प्रधानं यस्येति विग्रहानुसारं स्वप्रधानापरपर्यायः स्वतन्त्रशब्दः। तथैवाह कैयटोऽपि—

"[1] तदधीनप्रवृत्तिनिवृत्तित्वात् करणादीनाम्। तस्य च प्रागन्यतः शक्तिलाभात् प्रतिनिध्यदर्शनात् करणाद्यभावेऽपि 'आस्ते शेते' इत्यादौ केवलस्य कर्तुर्दर्शनात् कर्तृरहितानां करणानामदर्शनात् प्राधान्यं कर्तुः" इति।

एवञ्च कर्ता स्वतन्त्रः। स ह्यन्यतः शक्तिलाभात् प्रागेवार्थितादिवशेन साधनाद्युपार्जने प्रवर्तते। करणानि कुठारादीनि। अतः कर्त्रायत्तव्यापारत्वात् करणादीन्यस्वतन्त्राणि।

## अद्वैतशैव-वेदान्तमतयोः मौलिको भेदः

| अद्वैतवेदान्तमतम् | शैवाद्वैतमतम् |
|---|---|
| (१) सत्त्वं केवलं अस्तित्वमात्रम्। | प्रकाशमानत्वम्। |
| (२) चित्त्वं स्वप्रकाशमात्रत्वम्। | प्रत्यवमर्शात्मत्वम्। |

[1] म. भा. प्र. भा. २; नि. पृ. २४५.

| | |
|---|---|
| (३) आनन्दश्च दुःखाभावस्वरूपः । | स्वात्मविश्रन्तिरूपः । |
| (५) माया सदसद्भ्यामनिर्बचनीया । न च भजते ब्रह्मतादात्म्यम् । | माया परमशिवाभिन्नतत्तादात्म्यावस्थितशक्तिपरमार्था, शक्तिशक्तिमतोस्तादात्म्याभ्युपगमात् । |

११

# अथ शैवद्वैताद्वैतदर्शनम्

अथेदानीं शैवद्वैताद्वैतपरं **लकुलीशपाशुपतदर्शनं** सङ्क्षेपतो निरूप्यते। दर्शनेऽस्मिन् धर्म-दर्शनयोः पार्थक्यं न क्रियते। अत इदं न केवलं दार्शनिकत्वनिरूपणपरमपि तु परमोपेयपरतात्वप्राप्त्यर्थं अनुष्ठेयकर्मरूपधर्मप्रतिपादनपरमपि, दार्शनिकपदार्थेषु विधेरपि स्वीकरणात् ।

### लकुलीशपाशुपतदर्शनोदयकालः

**लकुलीशपाशुपतदर्शनोदयसमयविषये** नास्ति कश्चन सन्देहः । यतो **मधुरास्तम्भलेख-सोमनाथ-शिलालेख-वायुपुराण-लिङ्गपुराण-सूतसंहिता-राजशेखरकृतषड्दर्शनसमुच्चयेषु लकुलीशस्य तच्छिष्यपरम्परायाश्च** निर्देशः कृतः । अतो **लकुलीशः** क्रि. श. द्वितीयशतके आसीदिति निश्चीयते ।

**मधुरास्तम्भलेखः**– तत्रस्थात् **"एकषष्ठे (६११) (प्र)थमे शुक्लदिवसे पञ्चम्यां"** इति वाक्यात् **'एकषष्टिशब्दः'** समुद्रगुप्तपुत्रविक्रमादित्योपाह्वचन्द्रगुप्तसञ्चालित**गुप्तशतकपरः** । यस्य प्रारम्भः फ्लीट् सिल्वन्लेव्यादिसंशोधकानां मतानुसारेण एकोनविंशत्यधिकद्विशततमे (क्रि.श.२१९) ईसवीयवर्षे अभूत् । तेन तदैव संजातोऽयं लेख इति निश्चीयते । लेखेऽस्मिन् **लकुलीशशिष्यपरम्परा** समुत्कीर्णा ।

**लकुलीशमधिकृत्य वायुपुराण-लिङ्गपुराणयोः इदमैतिह्यं श्रूयते** [1]**'यल्लकुलीशः महेश्वरस्यान्तिमोऽवतारः । स च कायारोहणे कायावतारापरपर्याये समभूत् । इदं**

---

[1] एपिग्राफिका इण्डिका भा । पृ २७१ डा. ब्यूलर् ।

स्थानमद्यत्वे बडोडाराज्यान्तर्गतं कारवन् इति नाम्ना ख्यातम्। तस्य चत्वारः शिष्याः कौशिक-गर्ग-मित्र-कौरुष्याभिधाः आसन्" इति। इदं च पौराणिकं वचनं सोमनाथमन्दिरगतशिलालेखेऽपि समुपलभ्यते। लेखोऽयं चालुक्यवंशजस्य राज्ञः शार्ङ्गदेवस्य काले समुत्कीर्णः।

पुराणनिर्दिष्टस्य लकुलीशशिष्यस्य कौशिकस्याभिधानं सूतसंहितायां लकुलीशक्षेत्र-प्रसङ्गे, राजशेखरकृते षड्दर्शनसमुच्चये, हरिभद्रसूरिकृतषड्दर्शनसमुच्चयस्योपरि गुणरत्नसूरिकृतायां टीकायां, कौण्डिन्यकृतपाशुपतसूत्रव्याख्यायामपि दृश्यते।

एतेन कौशिको लकुलीशस्य प्रथमः शिष्यः। उदिताचार्यः— यस्याभिधानं मथुरास्तम्भलेखे समुत्कीर्णम्। सः कौशिकाद्दशमोऽभूत्। अयं लेखः क्रि.श. ३८० तमे वर्षे समुत्कीर्णः। एतच्च उदिताचार्यस्य पूर्वगुरुपरम्परायामेकादशो लकुलीशः ईसवीयचतुर्थशतकान्त्यचतुर्थभाग(क्रि.श.४००)भवात् उदिताचार्यात् पञ्चाशदधिकद्विशत-(२५०)भवात् प्राक् आसीदिति विज्ञायते। तथा च क्रि.श. द्वितीयशतकप्रथमार्धे (२५०) अयमभूदिति नूनमभ्युपेयम्। अतः लकुलीशोक्तस्य शैवद्वैताद्वैतप्रतिपादकस्य लकुलीश-पाशुपतदर्शनस्य उदयः क्रि.श. २०० शतके सञ्जातः इति निर्धार्यते।

## लकुलीशपाशुपतसिद्धान्तप्रतिपादकाः ग्रन्थाः

तत्र पूर्वोक्ताः अष्टादश द्वैताद्वैतप्रतिपादकाः आगमाः प्राथम्यं लभन्ते।

| | | |
|---|---|---|
| १. | पाशुपतसूत्रम् | लकुलीशकृतम्। |
| २. | पञ्चार्थभाष्यनाम्नी तट्टीका | कौण्डिन्यविरचिता। |
| ३-४. | यमप्रकरण-आत्मसमर्पणे | विशुद्धमुनिकृते। |
| ५. | गणकारिका | हरदत्ताचार्यविरचिता। |
| ६. | गणकारिकाटीका | भासर्वज्ञकृता। |
| ७. | सत्कार्यविचारः | " |
| ८. | टीकान्तरम् | " |

९. संस्कारकारिका — अज्ञातकर्तृकः
१०. टीकाकाराः — ,,
११. कारणपदार्थः — ,,
१२. पञ्चार्थभाष्यदीपिका — ,,
१३. आकरः — ,,
१४. आदर्शः — ,,

इत्यादयो ग्रन्थाः मुद्रिता अमुद्रिताश्च समुपलभ्यन्ते ।

अस्य दर्शनस्य प्रचारः **गुर्जरे, मधुरायां, दक्षिणभारते** चाविच्छिन्नमासीदित्यत्र नास्ति सन्देहः । ज्ञायते चास्यास्तित्वं ईसवीयद्वितीयशतकादारभ्य चतुर्दशशतकपर्यन्तं आसीत् इति । **लकुलीशपाशुपतस्य** प्रभावः तत्प्रभेदानां **कालामुखादी**नामुपरि महानभूत् ।

## लकुलीशपाशुपतस्वीकृताः पञ्च पदार्थाः

यद्यपि **लकुलीशपाशुपत**प्रतिपादिताः **पति-पशु-योग-विधि-दुःखान्तरूपाः पञ्च पदार्थाः द्वैतपाशुपतेऽपि** परिगणिताः, तथापि तद्वाच्येषु महान् भेदो दृश्यते ।

१) **पतिः**– कारणापरपर्यायः । पतिः असद्भिन्नसत्स्वरूपः, आद्यः, अनन्तः, नित्यश्च । परमस्य नित्यत्वं मोक्षसम्बन्धिनित्यत्वात् भिन्नम् । **यतोऽस्मिन्नये** नित्यत्वं द्विविधम्– **अनाद्यनन्तम् साद्यनन्तञ्च** । तत्र पत्युर्नित्यत्वं अनाद्यनन्तम् । मोक्षस्य नित्यत्वं साद्यनन्तञ्च ।

पतिरयं अकारणकं कारणम् । स च असंसारी सद्योजातादि पञ्चब्रह्ममन्त्रवाच्यः ; **विद्याकला-पशुरूपस्य** त्रिविधस्यापि कार्यस्य कारणम् ; समस्तस्यापि भुवनजातस्य समवायि-कारणं, निमित्तकारणञ्च । सर्वोऽपि भवः तस्मात् बीजादुद्भवतीति **'भवोद्भवः'**। स्थितिध्वंसानुग्रहरूपक्रीडाकर्तृत्वात् **क्रीडाशीलो** देवः , **सिद्ध-साधक-पशुभ्यः** परत्वात् **ज्येष्ठः**, अकृतकैश्वर्यवत्वात् **श्रेष्ठः**, पशुषु अधर्मभयोत्पादकत्वात् **रुद्रः**, सर्वस्यापि चराचरस्य जगतः कलनात् **कालः**, धर्मज्ञानैश्वर्यादिबलवृत्तिनिरोधकत्वात् **बलप्रमथनः**, **सर्वभूतदमनः, निष्कलः, अमनः** इत्यादिशब्दैः सद्योजातादिमन्त्रेषु तदनुसारिषु

**पाशुपततन्त्रेषु** निरूपितरूपः **प्रथमः पदार्थः पति** शब्दवाच्यः। पतिरेकोऽपि अनेक-गुणत्वात् **घोर-अघोर-घोरतरा**दिरूपत्वाच्चानेकोऽपि पातकरसस्यैवैकः इति।

२. **कार्यं पशुर्वा** - अयं द्वितीयो मुख्यः पदार्थः कार्यं पशुर्वा कथ्यते। अस्मिन् दर्शने कार्यशब्दार्थः दर्शनान्तरस्वीकृतेभ्य एतच्छब्दार्थेभ्योऽतीव भिन्नः। कार्यं न प्रकृतिविरुद्धविकृतिस्वरूपं साङ्ख्यनय इव। यत एतन्नये न केवलं तत्सर्वं यत्साङ्ख्यैः विकृतिरूपमभ्युपगम्यते; अपि तु प्रकृतिविकृत्युभयविलक्षणः। साङ्ख्यसम्मतः पुरुषोऽपि कार्यान्तर्गत एव।

अत्र **पशुः पतिं** सार्थकयति। **पतिः** पालकः। न चासति पाल्ये पति-शब्दस्य पालकापरपर्यायस्य सम्भवति सार्थक्यम्। कार्यशब्दवाच्यद्वितीयमुख्यपदार्था-न्तर्गतास्त्रयोऽवान्तरपदार्थाः– अ) पशुगुणस्वरूपा **विद्या,** आ) **जडतत्त्व**(MATTER) रूपा **कला,** इ) पतिमित**प्रमातृ**स्वरूपः पशुरिति।

**लकुलीशपाशुपत**दर्शने जड-चेतनयोः पतिशक्तौ सूक्ष्मरूपेण सतोरपि पारस्परिकं भेदं मनुते। नापि कार्यजातं सर्वं भ्रान्तिस्वरूपं **यथाऽद्वैतवेदान्त**दर्शने, यतो **लकु-लीश**दर्शनं **नाऽद्वयवादः,** अपि तु **द्वैताद्वैतवादः**। इदं परतत्त्वं नैकरूपं अपि तु एका-नेकरूपं प्रतिपादयति। एवं चैतन्नये बहुत्वमेकस्मिन् परतत्त्वेऽन्तर्गतं नभसीव ताराः। नापि कार्यमुत्पत्तेः प्रागसद्रूपमेवं चानित्यं यथा **न्याय-वैशेषिक**सिद्धान्ते। एतन्नये पदार्थरूपं कार्यं नित्यं सद्रूपञ्च।

## कार्य-कारणयोः सम्बन्धः

दर्शनेऽस्मिन् कार्य-कारणे सहैव वर्तेते; परं परस्परतः पृथक् सत्तां भजेते, स्वरूपभेदात्। यद्यप्युभे अप्युक्तप्रकारेण व्यापके। यतः कार्याभावे कारणमिति वक्तुं न युक्तिशादसङ्गतम्। नापि पाल्याभावे पतिः पतिरिति। कारणे कार्यस्य भूमाविव बीजस्य पृथक् स्थितिः। कारणं स्वतन्त्रं कार्यं चास्वतन्त्रम्। पूर्वः पतिः, अपरः पशुः। पूर्वः चिद्रूपः अपरः चिदचिदुभयरूपः। अस्मिन् दर्शने **विद्या-कला-पशु-**रूपं त्रिकं कार्यं पत्यामवतिष्ठते।

१) **विद्या–** कार्यावान्तरतत्त्वेषु विद्या प्रथमा। **इयं पशुगुणरूपा। विद्या** ज्ञानमेव। **ज्ञानं** आगमरहस्यार्थद्योतकं; मलानां तदपनयमोपायानाञ्च तात्त्विकस्वरूपाणि

वेदयति। मलापगमे सति लाभान्तरं प्रति नयति। इयं विद्या [1] मिथ्याज्ञान-विरोधिनी।

**इत्थं विद्या पशोरु**पाधित्वेन विशेषणत्वेन च वर्ण्यते। इयं प्राधान्येन (अ) **बोधस्वभावा** (आ) **अबोधस्वभावा** चेति **द्विविधा। बोधस्वभावा** (क) **विवेकप्रवृत्तिः** (ख) **अविवेक(सामान्य)प्रवृत्तिरिति** द्विधा। (आ) **अबोधस्वभावा** तु (च) **धर्मरूपा** (छ) **अधर्मरूपा** (ज) **संस्काररूपा** चेति त्रिधा।

**इमे** विद्याविभागाः **विभिन्नासु परिस्थितिषु प्रतिक्षिप्तस्य** पशोर्विभिन्नानि **विद्या-रूप-गुण-कर्माणि** द्योतयन्ति। धार्मिकपरिस्थितौ **गुरूपदेशं भक्तिश्रद्धाध्यानपूर्वकं** शृण्वतो **साधकस्य** परिस्फुरन्ती विवेकप्रवृत्तिरित्युच्यते।

**चित्स्वरूपा विद्या** सर्वदा स्वप्रकाशा। परप्रकाशकत्वं- चास्याः कादाचित्कम्। यदेमं विषयं प्रकाशयति तदा बोधस्वभावेत्युच्यते। विषयमप्रकाशयन्ती स्वप्रकाश-मात्रा चेयं **अबोधस्वभावा**। पुरुषः स्वप्रकाशौ **धर्माऽधर्मौ** प्रकाशान्तरनिरपेक्षं स्वात्मानमिव वेत्ति।

**अबोधस्वभावविद्यायास्तृतीयो** विभागः **संस्कार**शब्दवाच्यः। लकुलीशज्ञान-मीमांसा इममाश्रित्य प्रवर्तते।

**बोधस्वभावविद्यायाः** विवेकप्रवृत्तिरूपो विभागः प्राग्विवेचितः। इदानीं सामान्य-प्रवृत्यपरपर्याय-**अविवेकप्रवृत्तिरूपो द्वितीयो** विभागः विचार्यते। अत्र प्रत्यक्षज्ञानस्य साधनं चित्तमित्युच्यते[2]। परन्तु **चित्तं** नान्तःकरणेष्वेकं यथा वेदान्तिनये। इदं पुरुष-गुणभूतायाः बोधस्वरूपविद्यायाः व्यापाररूपम्। **व्यापारश्च** स्वप्रकाशायाः परप्रकाशि-कायाश्च विद्यायाः परप्रकाशनाय प्रकाशप्रसररूपः। अयं विषयं प्रदीपवत् प्रकाश-यति। एवं विषये प्रकाशितेऽन्तःकरण-बहिष्करणेषु यथायथं व्यापृतेषु **प्रत्यक्षज्ञानं** जायते।

**त्रीणि प्रमाणानि– इह प्रत्यक्षानुमानागमाख्यानि** त्रीण्येव प्रमाणानि। **अर्था-पत्ति-सम्भव-ऐतिह्य-अनुपलब्धिरूपाणि** दर्शनान्तरस्वीकृतानि त्रिष्वेवान्तर्भवन्ति।

---

[1] **विद्यास्वरूपं– ग. का. पृ. ९ द्रष्टव्यम्।** [2] **बोधस्वरूपविद्याविचारः– ग.का. पृ. १० द्रष्टव्यः।**

(२) **कला**— कार्याख्यप्रधानतत्वान्तर्गतं द्वितीयं तत्त्वं **कला**। इयं जडा। अस्याः साङ्ख्याभ्युपगत-प्रधानापरपर्यायेण प्रकृतितत्त्वेन **महत्साम्यम्**। एतदन्तर्गतानि **त्रयोविंशत्तत्त्वानि** साङ्ख्यसाधारणानि। इयं परिमितप्रमातुर्मानसशरीरोपाधिः (Psychophysical Limitation) स्वयमचेतनापि चेतनाश्रिता।

इयञ्च **कला करण-कार्यरूपेण द्विविधा**। कार्यरूपायां कलायां **पृथिव्यादि-पञ्चभूतानि गन्धादयश्च पञ्चगुणाः** आविर्भवन्ति। **करणे** च **पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि त्रीण्यन्तःकरणानि** चान्तर्भवन्ति।

(३) **पशुः— चेतनः प्रमाता पशुः**। अयं कार्यान्तर्गतः तृतीयोऽवान्तरपदार्थः। अयं कार्यान्तः परिगण्यते, यतोऽस्य विशिष्टा सत्तेश्वरकृता। **सिद्धेश्वरवर्ज्यं** सर्वोऽपि **चेतनः** [1]**प्रमाता पशुः** पाशितत्त्वादस्वातन्त्र्यात् कारणशक्तिनिरोधात् बाह्यविषयाश्रितत्वात्, व्यापकत्वेऽपि पाञ्चभौतिकशरीरेण स्वातात्म्यं प्राप्नोति। अनादिपाशबद्धोऽयं **कला**-न्तर्गतत्रयोविंशतितत्त्वावच्छिन्नत्वात् परिमितः। **पशुः पतिवत्** सर्वव्यापकोऽपि किञ्चि-ज्ज्ञत्वात् किञ्चित्कर्तृकत्वाच्च सर्वज्ञात् सर्वशक्तिमतः **पत्युर्भिन्नः**। परमयं भेदः पशोः सांसारिकावस्थायामेव; **सायुज्यरूपमोक्षस्य** माहैश्वर्यावाप्तिरूपत्वान्मुक्तः सदाशिव एवेति किञ्चिज्ज्ञत्व-किञ्चित्कर्तृकत्वनिष्ठो भेदो मोक्षे व्यपगच्छत्येव।

**पशुर्द्विविधः**—

अ) **साञ्जनः**— शरीरेन्द्रियादिसम्बन्धी।

आ) **निरञ्जनः**— शरीरेन्द्रियादिसम्बन्धरहितः।

**निरञ्जनोऽपि द्विविधः**—

क) **संहृतः**— प्रळयकालभावी पशुः।

ख) **कैवल्यगतः**— पुरुषप्रकृत्योः पारस्परिकविविक्तत्वानुभवात् प्रकृति-वियुक्तः पशुः

ग) **निष्ठायोगयुक्तः**— शिवसायुज्यप्राप्त्या सङ्क्रान्तसर्वज्ञत्वसर्वकर्तृत्व-शक्तिः।

---

[1] पशोः प्रमातृत्वविचारः— पा सू. पु. ५.

## मलस्वरूपः

पञ्चमलाः–

[1]मलः– मिथ्याज्ञानं अधर्मः सक्तिहेतुः च्युतिः पशुत्वमूलं इति पञ्चविधः।

च) **मिथ्याज्ञानम्**– संशयविपर्ययादिभेदभिन्नं प्रमाणाभासजं ज्ञानं स्वबीजेन सह **मिथ्याज्ञान**मित्युच्यते। कामक्रोधादयो अन्तश्शत्रवः अत्रान्तर्भवन्ति।

छ) **अधर्मः**– वर्ज्यकर्मानुष्ठानं स्वविकारेण तत्फलसञ्चयरूपेण सहितं **अधर्मः**।

ज) **सक्तिहेतुः**– शास्त्रान्तरविहितकर्मानुष्ठानजन्येन सङ्करेण धर्मेण सहिता विषयासक्तिः **सक्तिहेतुः**।

झ) **च्युतिः**– ध्यातृचित्तस्य ध्यानाविषयात् रुद्रतत्त्वादीपच्च्यवनस्य विषयं प्रति किञ्चिदौन्मुख्यमात्रस्य न तु विषयप्राप्तेः कारणम्।

ञ) **पशुत्वमूलम्**– येन मलेन युक्तः पशुः पत्युर्विभिन्नः, सर्वेषु च मलेषु मुख्यतमः सः **पशुत्वमूलं** इत्युच्यते।

## मलक्षपणोपायाः लाभोपायाश्च

[2]**वास-चर्या-जपध्यान-सदारुद्रस्मृति-प्रसादरूपाः** पूर्वोक्तपञ्चप्रकारलाभोपायाः अथवा मलक्षपणोपायाः इति निर्दिष्टाः।

1) **वासः**– वासशब्दोऽस्मिन् दर्शनेऽतीव पारिभाषिकः। अयं च गुरुणा सकृदुच्चरितस्य वाक्यस्य सम्पूर्णार्थग्रहणसामर्थ्यं; गृहीतस्यार्थस्य चिरकालव्यवधानेऽपि स्मरणसामर्थ्यं, आचार्यदर्शितैरुक्तानामर्थानां युक्तायुक्तप्रविभागेन यथायथं स्वीकार-त्यागसामर्थ्यं

---

[1] मलविचारः– ग. का २२ द्रष्टव्यः।

[2] वासश्चर्या जपो ध्यानं सदारुद्रस्मृतिस्तथा।
प्रसादश्चैव लाभानामुपायाः पञ्च निश्चिताः॥ (ग. का. पृ. ७)

श्रुतस्य अर्थस्य प्रतिपादने तदनुकूलाचरणे च सामर्थ्यं मिथ्याज्ञाननिवृत्तिपूर्वकविद्यामिव्यक्तिकरणे गुरुसन्तोषण-गुरुपरिचर्यायां गुरुवचनानुपालने अतियत्नं च अभिधत्ते ।

2) **चर्या**– चर्यायाः दानं, **यागः**, **तापः**, **इति त्रीण्यङ्गानि** ।

क) दशभिर्नमस्कारैः परमेश्वरायात्मसमर्पणं **दानम्** ।

ख) यथाशासनं भस्मस्नानादिक्रियाणां करणं **यागः** ।

ग) विध्यनुष्ठानपरस्य अप्रतीकारपुरस्सरमाध्यात्मिकाधिभौतिकाधिदैविकत्रिविधदुःखसहिष्णुत्वं **तापः** ।

त्र्यङ्गाऽपि **चर्या पुनर्द्विविधा वृत्तं द्वाराणि चेति** ।

अ) दैनन्दिनचर्यारूपं वृत्तं पञ्चप्रकारम्– **भस्मस्नानं**, **भस्मशयनं**, मन्दिरेऽभिनयद्वारा शिवतादात्म्यापत्तिरूपः **उपहारः**, **चित्तैकाग्र्यरूपो जपः**, देवस्थानस्थितमूर्तिप्रदक्षिणा इति ।

आ) द्वाराणि तु– **क्राथन-स्पन्दन-मण्टन-शृङ्गारण-अपितत्करण-अपितद्भाषण**रूपाणि अनेकविधानि । तानि **योगविभागे** द्रष्टव्यानि ।

3) [1]**जपध्यानम्**– चर्या शारीरकक्रिया । **जपध्यानं** मानसिकक्रिया । अतः अनयोः अतीव घनिष्ठः सम्बन्धः । मन्त्रावर्तनं **जपः** । स द्विविधः **प्रत्याहारफलः समाधिफलश्चेति** । **प्रत्याहारोऽपि** द्विविधः **अपरः**, **परश्चेति** । तत्रेच्छयाऽन्तःकरणस्य बाह्यविषयेभ्यः प्रत्याहरणपूर्वकं ध्येये क्षणं निश्चलीकारो **अपरः प्रत्याहारः** । यदा तु बाह्यविषयेभ्यो ध्येयेऽवस्थापयितुं सततोद्युक्तस्य साधकस्य स प्रत्याहारजपवशात् निर्मलं चेतः यदा प्रयत्ननिरपेक्षमेव ब्रह्मणि अलातचक्रवदवतिष्ठते तदा परः प्रत्याहारः ।

रुद्रतत्त्वे सदृशचिन्ताप्रवाहो ध्यानम् । **तज्जपपूर्वकं धारणपूर्वकञ्च** । जपपूर्वकं ध्यानं **सविषयकम्** । संहारावस्थायां मूर्च्छावस्थायां वा आपतितस्य प्रमातुश्चित्तस्य

---

[1] जपध्यानादिविचारः– ग. टी.– पृ. २० द्रष्टव्यः ।

निरालम्बनाविषयसंसर्गशून्यावस्था **धारणा** इत्युच्यते । सर्वमेतत् प्रत्याहारफलम् । समाधिफलञ्चात्मस्थितिरूपम् ।

4) **सदा रुद्रस्मृतिः**– अविच्छेदेन रुद्रस्मरणम् । इदं चेतोविषयान्तरगमनाद्रुणद्धि ।

5) **प्रसादः**– पत्युः साधकाय सर्वज्ञत्व-सर्वत्कर्तृत्वादीन् स्वगुणाम् दातुमिच्छा **प्रसादः** ।

**पञ्चदेशाः**– यत्र मुमुक्षुणा क्रमभाविनीषु पञ्चसु स्थितिषु क्रमशो वस्तव्यं ते देशा अपि **पञ्च** । तानि च– **शिवमन्दिरं, शिवभक्ताकीर्णं स्थानं, गुहा, श्मशानं रुद्रः इति** ।

**पञ्चावस्थाः**– यासु पूर्वोक्तदेशेषु मुमुक्षुणा क्रमेण भाव्यं ता अवस्था अपि **पञ्च** । ताश्च– **व्यक्ता, अव्यक्ता, जयः, छेदः, निष्ठा इति** ॥

३) **योगः**– तृतीयं मुख्यं तत्वं **योगः** । **लकुलीशदर्शने** योगशब्दः **पातञ्जलदर्शन** इव न चित्तवृत्तिनिरोधार्थ एव प्रयुज्यते, अपि तु प्राधान्येनात्मेश्वरसंयोगार्थे [1]**"आत्मेश्वरसंयोगो योगः"** । [2]**"चित्तद्वारेणेश्वरसम्बन्धः पुरुषस्य योगः"** इति । एवञ्च **पातञ्जलदर्शने योग** उपायमात्रम् । इह तु योगः उपेयः । परन्तु अयं शब्दः क्वचनोपायार्थेऽपि प्रयुज्यतेऽस्मिन् दर्शने ।

आत्मेश्वरसंयोगरूपो योगः परिच्छिन्नप्रमातृक्रियामात्रेण न जायते, यथा श्येनस्य स्थाणुना । अयं तु उभयकर्मजः ; यथा युद्धप्रवृत्तयोर्मेषयोः । अतो योग ईश्वरानुग्रहं विना न शक्यते लब्धुमिति **लकुलीशसिद्धान्तः** ।

मतेऽस्मिन् जीवात्मा विभुः ; एवञ्च सर्वदा ईश्वरसंयोगः स्वतः सिद्धः ; तथापि अनादिपशुत्वमलजनितात् ज्ञानक्रियाशक्त्योः परिच्छेदादस्य वियोग ईश्वरात् । अतो योगो मलध्वंसमपेक्षते । स च पाशुपतशास्त्रोक्तविध्यनुष्ठानजन्यः ।

**स च योगः क्रियालक्षण-क्रियोपरमलक्षणश्चेति द्विविधः** ।

अतत्र प्रथमः **क्रियालक्षणो** योगः शारीरिकक्रियाप्रधानया मानसक्रियया प्राप्यः ;

---

[1] पा. सू. टी– पु. २४ । [2] ग क. र. पु १४ ।

अत एव क्रियालक्षण इत्युच्यते । **लकुलीशपाशुपतदर्शनं आङ्गिक-वाचिक-आहार्य**-सात्त्विकरूपांश्चतुरोऽभिनयान् **नृत्यं गीतञ्च शिवसायुज्योपायत्वेन** स्वीकरोति । एवञ्च नाटकीयकार्यस्य **आरम्भ-यत्न-प्राप्त्याशा-नियताप्तिफलागमरूप**पञ्चावस्थावद्योगस्यापि पञ्चावस्थां मनुते ।

**प्रथमावस्था**– पाशुपतविध्यनुष्ठानात् **काम-क्रोध-लोभ-मोहादि**कालुष्यविमुक्ते साधके तत्त्वज्ञानमुदेति ; तदा स्वीयकालुष्यविमुक्तत्वं परीक्ष्य **"अनेन [1]विधिन रुद्रसमीपं** गत्वा युक्तामवस्थां प्राप्तुं दरिद्रपुरुषस्**नातमलदिग्धाङ्गो रूढनख-श्मश्रु-रोम-धारी सर्वसंस्कार**-वर्जितो **व्युच्छिन्नवर्णाश्रमचिह्नो** नगरं प्रविश्य यत्र लौकिकानां समूहः तत्र् **हस्त्यश्वरथपदातीनां स्थानं** वर्जयित्वा **यस्मिन्** जनदृष्टिनिपातो भवेत्, तस्मिन् **स्थाने** उपविश्य सौषुप्ताभिनयरूपं **क्राथनं,** वायुसंसृष्टत्वाभिनयरूपं **स्पन्दनं,** उपहतपादेन्द्रियत्वाभिनयरूपं **मण्टनं,** रूपयौवनसम्पन्नां स्त्रियं वीक्ष्य कामित्वाभिनयरूपं **श्रृङ्गारणं,** शुच्यशुच्योः कार्याकार्ययोश्च विभागानभिज्ञत्वाभिनयरूपं **अपितत्करणं,** पुनरुक्तव्याहतादिभाषणेन असम्यग्वाद्याभिनयनरूपं **अपितद्भाषणं** तथा कुर्यात्; येनायं परिभवं च गच्छेत् । अयं विधिः न केवलं सत्यपि परिभवे मनःकालुष्याभावपरीक्षणार्थम्, अपि तु परिभवितॄणां **इष्टापूर्त**जन्यं सकलमपि सुकृतफलमादातुम् । एतत्समर्थयितुं लकुलीशः पाशुपतसूत्रे [2]**"यदिन्द्रोऽसुराणां पुण्यफलमादातुं स्वदुष्कृत-फलञ्च तेभ्यो दातुं क्राथनस्पन्दनादिरूपं पूर्वोक्तं पाशुपतमाचरत्"** इत्युदाहरति ।

**द्वितीयावस्था**– अस्यामवस्थायां साधकेन **"वामदेवाय नमः"** इति मन्त्रो जप्यः । अस्यामवस्थायां साधकः पत्या सह समीपाभिधं **योगं** प्राप्नोति । अयमेव पूर्वोक्त-शारीरकक्रियासहकृतमानसक्रियाप्राप्यः प्रथमो योगः **क्रियालक्षण** इति ।

आ) **क्रियोपरमलक्षणो द्वितीयो योगः**– अयं नापेक्षते कामपि शारीरिकीं क्रियाम् । अयं केवलमनोनियोगसाध्यः । अन्यास्तिस्रोऽवस्था एतदन्तर्गताः स्वीक्रियन्ते ।

**तृतीयावस्था**– सांसारिक-सर्वपदार्थविरक्तस्य साधकस्य गुहां गत्वा **"अघोरेभ्यः"** इति मन्त्रोक्तशिवरूपध्यानादियमारभ्यते । अस्यामवस्थायां ध्यानदौर्बल्यात् ध्येयं गतमपि

---

[1] पा. सू- १०६ । अत्र विधिः पूर्वोक्तचर्याविभागसूचितद्वारोक्ताः क्राथनादयः इति मन्तव्यम् ।

[2] पाशु सू- १०१-१०३ ।

साधकचेतस्ततः प्रत्यावर्तते, परन्तु विषयान्तरमगत्वा ध्येयमेव प्रत्यागच्छति। अतो-विषयान्तरसम्पर्करहित-ध्येयमात्रविषयकगमनप्रत्यागमनकारि साधकचेतोऽविच्छेदेन ब्रह्मावस्थितं भाति यथा आलाते अतित्वरया भ्रामिते अविच्छिन्नमग्निचक्रं भाति।

**चतुर्थ्यवस्था**– श्मशाने वसतः साधकस्य धारणपूर्वकं '**तत्पुरुष**'मन्त्रोपलक्षित-ब्रह्मध्यानाज्जायते। अस्यां ध्यानविषयो ध्यातृबाह्यतया न भाति; अपि तु ध्यात्रैक्येन यतः संसारावस्थायां मूर्च्छावस्थायां वाऽपतितस्य प्रमातुश्चितस्य निरालम्बनाविषयसंसर्गशून्या दशा धारणेत्युच्यते। [1]"**निरालम्बनं चित्तममूढस्य धारणम्**"। अस्यामवस्थायां यतिः पात्रगतं महिषवराहादीनां मांसमपि भुङ्क्ते। तदुक्तम्– [2]"**मांसमदूष्यम्**" इति।

**पञ्चमी अन्त्यावस्था**– इयमवस्था "**ईशानः सर्वविद्यानाम्**" इति मन्त्रोपलक्षिते ब्रह्मणि समाधिना जन्यते। अयं योगः सायुज्याभिधः। "**लभते रुद्रसायुज्यम्**" सायुज्ययोगे सर्वज्ञत्वादिपतिशक्तयः पशुं सङ्क्रामन्ति। इयमवस्था शरीरत्यागानन्तरं जायते। अस्याः स्थितेः साधकत्वेनात्र यम-नियमासनादिरूपाष्टाङ्गयोगोऽपि एषां सम्मत एव। अहिंसा ब्रह्मचर्यादयोऽपि **विशुद्धमुनिकृतयमप्रकरणे** प्रोक्ताः।

४) **विधिः**– चतुर्थो मुख्यः पदार्थः। स च धर्मार्थसाधकः व्यापारः। स च **प्रधानो गौणश्चेति** द्विविधः। अव्यवधानेन धर्महेतुर्यो विधिः स **प्रधानः**। चर्यानुग्राहको विधिः **गौणः**। कलुषक्षपणार्थमनुष्ठितं **उपस्पर्शन-प्राणायाम-जपरूपत्रिकं** चर्यानुग्राहकत्वात् गुणभूतविध्यन्तर्भूतम्। आगमाऽविरोधिन्योऽन्नार्जनोपायरूपा **भैक्ष-उत्सृष्ट-यथालब्धसंज्ञकास्तिस्रो** वृत्तयोऽप्यत्रैवान्तर्भवन्ति।

तत्र **प्रथमावस्थस्य** भैक्षमेव वृत्तिः। **द्वितीयतृतीयावस्थयोरपि** तदेव वृत्तिः। परमेतावानत्र विशेषः। तृतीयावस्थः परमयोगित्वात् भैक्षं भुञ्जन् प्रायश्चित्तनिवेदन-पञ्च-ब्रह्मजपानुस्नानादिकं न करोति। चतुर्थ्यवस्थायां यथालब्धं वृत्तिं आचरते। पञ्चम्य-वस्थस्य शरीराभावात् वृत्त्यनुपपत्तिः।

५) **दुःखान्तः**– सर्वेषां तापत्रयात्मिकानां दुःखानामात्यन्तिकः प्रध्वंसः **पञ्चमोन्तिमः** पदार्थः। नायं **ज्ञानवैराग्यलभ्यः**। अपि तु ईश्वरानुग्रहेणैव। स च **अनात्मकः सात्मकश्चेति** द्विविधः। अनात्मकः केवलदुःखान्तस्वरूपः। अयमेव न्यायवैशेषिकाभ्युप-

---

[1] ग. का पृ- २०। [2] पा. सू. पृ. ११९। [3] पा. सू. १३९।

गतो मोक्षः। सात्मको दुःखान्तो न केवलमाधिभौतिकादिदुःखानामात्यन्तिको विनाशः ; अपि तु सर्वज्ञत्वसर्वकर्तृत्वप्राप्तिरपि।

## सिद्धः

**सिद्धः** सर्वज्ञः सर्वकर्ता च। अयं स्वतन्त्रः ; इच्छयैव सर्वं सृजतीति कामरूपी। सर्वेषां सृष्टानां संहरणे शक्तः। प्राप्तसायुज्यस्य आत्मा युक्त इत्युच्यते। पतिवदात्मापि विभुः। तथापि सः सञ्चारदशायां विषयं प्रति धावति। अततीत्यात्मा ; आपूर्य कार्यकारणं विषयांश्च नयतीति **आत्मा** इति।

## लकुलीशपाशुपतदर्शनतदितरदर्शनेभ्यो भेदः

१) **मोक्षः** अस्मिन्नये नैयायिकमते इव न दुःखान्तरूपमात्रः ; अपि तु सर्वज्ञत्वसर्वकर्तृत्वाधिगमरूप-पारमैश्वर्यावाप्तिरूपः।

२) कार्यमेतन्नये **कारणे** सदेवोत्पद्यते ; नाऽसदन्यथा. **वैशेषिकनये** इदं **वैशेषिका**भ्युपगताऽसत्कार्यवादाद्भिन्नं **सत्कार्यवादमवलम्बते**।

३) ईश्वरः एतन्नये सर्जने स्वतन्त्रः न तु **न्यायवैशेषिकनय** इव परमाणुकर्मपरतन्त्रः।

४) अन्यत्र विधीयमानो विधिः अनुष्ठातॄन् स्वर्गं नयति ; यस्मात् विध्यनुष्ठानजन्ये पुण्ये क्षयं गते सति भूयो मृत्युलोकं परावर्तते जीवः। **लकुलीशपाशुपते** परं विधिः शिवसामीप्यं नयति न भूयः परिवर्तिसंसारागमनम्।

५) **इदं रामानुजानन्दतीर्थादिभिः** स्वीकृतं **मोक्षस्य** दासत्वरूपत्वं निराकरोति ; यतः सर्वशक्तिमतोऽपि **दास्यं** दुःखरूपमेव।

६) द्वैतपाशुपतदर्शने पत्युः सर्जने कर्मपरतन्त्रत्वं ; अत्र तु स्वातन्त्र्यम्।

७) एतन्नये पत्युः सकाशात् पशुं प्रति सर्वज्ञत्व-सर्वकर्तृत्वशक्ती सङ्क्रामतः। ते पशौ न **स्वाभाविक्यौ**। **द्वैतपाशुपते** तु इमे पशौ स्वाभाविक्यौ।

८) पाशुपतदर्शने "कर्मसापेक्षः पतिः जगत्कारणम्; इह तु कर्मादि-निरपेक्षस्तु स्वेच्छाचारी; यतो ह्ययं ततः कारणतः शास्त्रे सर्वकारणकारणम्" इति।

## लकुलीशभेदाभेदवैशिष्ट्यम् इतरे भेदाभेदवादिनो आचार्याश्च

**भेदाभेदवादो** न केवलं **शैवागम**परम्परायां अपि तु **वैदिकपरम्परायां** अप्युपलभ्यते। **वैदिकभेदाभेदवादिनोः "आश्मरथ्य" "औडुलोम्योर्मतद्वययोः" बादरायणेन स्वीये ब्रह्मसूत्रे** उल्लेखः कृत एव। इमौ भेदाभेदवादौ जीवस्य ब्रह्मणः पृथक् सत्तां एकस्यामवस्थायां; अपरस्यां च तयौरैक्यं स्वीकृतवन्तौ। **आश्मरथ्यमते** कारणरूपेण तयोरैक्यं कार्यरूपेण च भेदः स्वीकृतः। उक्तञ्च **शाङ्करभाष्ये**– "**आश्मरथ्यस्य** तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्; तथापि [1]"**प्रतिज्ञासिद्धेः**" इति सापेक्षत्वाभिधानात् **कार्यकारणभावः** कियानप्यभिप्रेत इति गम्यते" इति।

यथा चोक्तं **वाचस्पतिमिश्रेण**– "**प्रतिज्ञासिद्धेः**" इति सूत्रटीकायां "यथा हि वह्नेर्विकाराः व्युच्चरन्तो विस्फुलिङ्गाः न वह्नेरत्यन्तं भिद्यन्ते, तद्रूपनिरूपणात्; नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्यभावप्रसङ्गात्; तथा जीवात्मनोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्तं भिद्यन्ते, चिद्रूपत्वाभावप्रसङ्गात् नापि ततोऽत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्यभावप्रसङ्गात्; सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च। तस्मात् कथं चिद्भेदो जीवात्मनामभेदश्च" इति।

[2]**श्रीपतिपण्डिताराध्यचरणैस्तु स्वीये श्रीकरभाष्ये**– "**य आत्मनि तिष्ठन्**" इत्यादौ विज्ञानात्मनि परमात्मावस्थानव्यपदेशाज्जीवब्रह्मणोः भेदः सिद्ध इति मध्यवाक्यप्रमाणमादाय आश्मरथ्यो मन्यते; **तत्त्वमस्याद्यभेदश्रुतिविरोधं** सादृश्येन वारयति। **औडुलोमिस्तु "नेह नानास्ति किञ्चन"** इत्यादिवाक्यप्रमाणमादाय **रज्जुसर्पवत् अद्वैतब्रह्मण्यविरोधतया द्वैतप्रपञ्चभानमुपदिशति। काशकृत्स्नस्तु** सर्ववेदान्तपूर्वापरमध्यपरामर्शविचारबुध्या षड्विधलिङ्गतात्पर्येण भेदाभेदमेव मनुते। एतदेव मुख्यवेदान्तिमतमिति वेदितव्यम्। एवं जीवब्रह्मणोरविरुद्धतया भेदाभेदः प्रतिपादितः।

---

[1] ब्र सू शा भा.– पृ.– ३३३. [2] श्रीकरभाष्यम्– (१.४.६-२२ पृ. ३५६)

सुदर्शनसूरिकृतश्रीभाष्यटीकायां श्रुतप्रकाशिकायां च– आश्मरथ्यस्य भेदाभेदवादः आचार्यश्रीरामानुजगुरुचरणैः यादवप्रकाशैरप्यङ्गीकृत इति प्रतिपादितम् ।

औडुलोमिस्तु संसारदशायामनेके जीवाः एकात्मकात् ब्रह्मणो नितान्तं भिन्नाः, परं मुक्तिदशायां जीवब्रह्मणोरभेद इति प्रतिपादितवान् । उक्तञ्च शाङ्करभाष्ये– [1]औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते । एवमौडुलोमिन नदीनां समुद्रादिव, संसारदशायां जीवानां ब्रह्मणः पृथक् सत्तां स्वीकृत्य भेदं, तथा समुद्रपतितानां तासां समुद्रैक्यमिव मुक्तौ जीवब्रह्मैक्यमभ्युपगत्य भेदाभेदमतं समर्थितम् ।

काशकृत्स्नो भेदाभेदवाद्यभेदवादी वाऽसीदित्यत्र मतभेदः । शाङ्करमतानुसारं सोऽभेदवादी । परन्तु निम्बार्कशिष्यः श्रीनिवासाचार्यः स्वीयवेदान्तकौस्तुभे "अवस्थितेरिति काशकृत्स्नः" इति सूत्रव्याख्यायां काशकृत्स्नमपि भेदाभेदवादिनं मनुते । "तदेवं मुनित्रयमतद्वारा प्रसङ्गात् भेदाभेदप्रकारो भगवता दर्शितः" इति ।

भर्तृप्रपञ्चः शङ्करादपि पूर्वः । तेन भेदाभेदवादः कार्यकारणरूप-अवस्थाभेदमाश्रित्य समुद्रतरङ्गन्यायेन समर्थितः बृहदारण्यकोपनिषट्टीकायाम् ।

[2]भास्करः शङ्कराचार्यात् परभावी । तेन स्वीयब्रह्मसूत्रटीकायां (भास्करभाष्ये) भेदाभेदवाद एव आश्रितः । अयमपि कार्यकारणरूपावस्थाभेदमवलम्ब्य ब्रह्मणो भेदाभेदरूपत्वं समर्थयति– सुवर्णकुण्डलादिन्यायेन ।

रामानुजस्य गुरुः यादवप्रकाशः । सः ब्रह्मसूत्रटीकायां भगवद्गीताटीकायाञ्च भेदाभेदमेव साधितवान् । रामानुजेन वेदार्थसंग्रहे, वेदान्तदेशिकेन परमतभङ्गे, व्यासतीर्थेन च तात्पर्यचन्द्रिकायां समुल्लिखितमेतन्मतम् ।

क्रियासारकर्ता [3]श्रीमन्नीलकण्ठशिवाचार्यः । सोऽपि भेदाभेदमेव समर्थयति–

[4]न जीवब्रह्मणोरैक्यं सूत्रस्वरसतः स्फुरेत् ।
इति व्याचक्षते शक्तिविशिष्टं विषयस्त्विति ॥

---

[1] ब्र. सू. शां भा– पु. ३३३. [2] भास्कराचार्यस्य कालः– क्रि. श. ९००. [3] नीलकण्ठशिवाचार्यस्य कालः क्रि. श. १४००. [4] क्रियासारे– उ. १. श्लो– ९२-९५.

यथा घट इति ज्ञाने घटत्वं स्याद्विशेषणम् ।
तथा ब्रह्मणि वैशिष्ट्यं शक्तिरित्यभिधार्यताम् ॥

अग्निस्फुलिङ्गयोर्नास्ति यथा भेदः स्वरूपतः ।
अग्नित्वेन कणत्वेन भेदोऽपि स्फुरति क्वचित् ॥

यथाहिकुण्डलमिति भेदाभेदौ तथात्र च ।
तस्मात् शक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटम् ॥

एवं [1]स्वप्रभानन्दशिवाचार्यस्य शिवाद्वैतमञ्जर्यां [2]श्रीमन्मरितोण्टदाचार्याणां वीरशैवानन्दचन्द्रिकायां तथैव [3]उमचिगी शङ्करशास्त्रिणां ब्रह्मसूत्रवृत्तौ च भेदाभेदः सपरिकरं समर्थितः ।

**निम्बार्कमते भेदाभेदवादः**– एकादशशतकभवेन **निम्बार्केण** प्रचालिते कृष्णोपासकसम्प्रदायेऽपि अयं भेदाभेदः सजीवः, सादरमनुस्त्रियते चाद्यपि । **निम्बार्को रामानुजीयं चिदचिदीश्वररूपं पदार्थत्रयं** स्वीकरोति । चिद्रूपो जीवो ज्ञानस्वरूपः, प्रज्ञानमयः प्रज्ञानधनः स्वयंज्योतिः । ज्ञानमयोऽपि ज्ञानाश्रयो ज्ञाता, यथा प्रकाशस्वरूपोऽपि सूर्यः प्रकाशाश्रयः । जीवस्य स्वरूपभूतगुणभूतज्ञाने ज्ञानरूपेण परस्पराऽभिन्नेऽपि धर्म-धर्मिभावेन परस्परतो भिन्ने । भोगस्य मोक्षस्य च प्राप्तौ जीवः ईश्वरपरतन्त्रो न तु स्वतन्त्रः । एवञ्च ज्ञानमयत्वेन जीवस्येश्वराभेदेऽपि नियम्यतया ईश्वरात् भेद इति **निम्बार्को** जीवस्वरूपप्रतिपादने **भेदाभेद**मवलम्बते । **बद्धावस्थायां** सर्वव्यापकादप्रच्युतस्वभावात् सर्वज्ञात् ब्रह्मणोऽणुरल्पज्ञो जीवोभिन्नोऽपि वृक्षात् पत्रमिव दीपात् प्रभेव प्राणादिन्द्रियशक्तिरिव न पृथक्स्थितिरित्यभिन्नः । एवं मोक्षेऽपि भगवत्प्रसादान्मायाकृतधर्मभूतज्ञानसङ्कोचापगमात् स्वस्वरूपलाभेऽपि व्यक्तित्वानपगमात् ईश्वरात् भिन्नोऽभिन्नश्च जीव इति भोगमोक्षावुभावपि भेदाभेदवादाश्रितौ ।

## चैतन्यमतेऽचिन्त्यभेदाभेदवादः

[4]**चैतन्यदेवस्थापितो अचिन्त्यभेदाभेदवादः** अद्यापि जागर्ति । एतन्नये विज्ञानानन्दविग्रहो भगवान् सत्यकामत्व-सत्यसङ्कल्पत्व-सर्वज्ञत्वाद्यनन्तापरिमितगुणवान् । गुणगुणिनोर्न वास्तवो

---

[1] स्वप्रभानन्दशिवाचार्याणां कालः– कि. श. १२००. [2] श्रीमन्मरितोण्ठदार्याणां कालः– क्रि. श. १७००. [3] उमचिगी शङ्करशास्त्रिणां कालः–क्रि.श. १९००-३६. [4] चैतन्यदेवकालः– क्रि.श. १५००

भेदोऽत एव सत्यकामत्वादिगुणा न भगवतोऽभिन्नाः। विग्रहोऽपि भगवतोऽभिन्नो नित्योऽप्राकृतश्च। एवञ्च विग्रहो गुणाश्च भगवदभिन्नाः। अयमेव भगवान् ब्रह्म इत्युच्यते। रामानुजमत इवास्मिन् मते ब्रह्मणि स्वगतभेदो नाभ्युपगम्यते; अपि तु शाङ्करवेदान्त इव स्वगतस्यापि भेदस्याभावः स्थाप्यते। तथाप्यचिन्त्यापरिमेयशक्त्या, यो 'विशेष' इति परिभाष्यते; नानात्मकतया भासमानोऽप्येकात्मक एवावतिष्ठते।

मतेऽस्मिन् भगवतः तिस्रः शक्तयो मुख्याः। स्वरूपशक्तिः, तटस्थ(जीव) शक्तिः; मायाशक्तिश्च। तत्र स्वरूपशक्तिः अन्तरङ्गेत्युच्यते। तटस्थशक्तिः परिच्छिन्न-स्वभावाणुत्वविशिष्टजीवाविर्भावकारणम्। मायाशक्तिश्च प्राकृतजगतः। स्वरूपशक्त्या भगवान् जगतो निमित्तकारणम्। माया-जीवशक्तिभ्यां चोपादानकारणम्। अतो भगवान-भिन्ननिमित्तोपादानकारणम्। अस्मिन् मते जगत्सत्यं, सत्यसङ्कल्पस्य भगवतो बहिरङ्गस्व-मायाजीवशक्तिविलासरूपत्वात्। प्रलयेऽपि जगत्सूक्ष्मरूपेण भगवत्यवतिष्ठते। अचिन्त्य-शक्त्या जगन्नैकान्ततो भगवतोऽभिन्नं नापि भिन्नं प्रतीयते। अतः चैतन्यमते अचिन्त्य-भेदाभेदवादः अभ्युपगतः।

## लकुलीशपाशुपताभ्युपगमाः

१. दर्शनमिदं सत्कार्यवादमवलम्बते। एतन्नये कार्यं विद्या-कला-पशुरूपं नित्यम्।

२. आत्मानात्मनोः, कार्यकारणयोः, जडचेतनयोः भेदस्तात्त्विकः।

३. पत्युस्तत्त्वतोभिन्नस्यापि कार्यजातस्य विद्याकलारूपस्य न स्वतन्त्रा पत्युर्बहि-स्सत्ता; किन्तु पत्यधीनत्वमस्वतन्त्रत्वञ्च।

४. जगतः पतिरभिन्ननिमित्तोपादानकारणम्। स हि भवोद्भवः।

५. परतत्त्वं नैकरूपं, अपित्वनेकरूपम्। बहुत्वमेकस्मिन् परतत्त्वे अन्तर्गतं नभसीव ताराः।

६. जीवात्मा विभुः, तथापि मलपरिपाकात् परिच्छिन्नः। तदपगमे स्वयं शिवः।

७. परतत्त्वं सगुणं, पत्युः शक्तिर्गुणो धर्म इति वोच्यते।

८. विद्या-काल-पशुसंज्ञकार्यंत्रयविस्थकोऽनादतिरोभावनानुग्रहा पत्युर्देवस्य क्रीडा-मात्रम् । इत्यादि ।

## लाकुलीशपाशुपतप्रभेदः कालामुखशैवः

**लकुळपाशुपता**नन्तरं दक्षिणभारते प्रसृतेषु शैवपन्थेषु कालामुखशैवः प्रमुखः । कालामुखानां प्रस्तावः न **शाङ्करभाष्ये** दृश्यते । तत्र **"चत्वारो माहेश्वराः- शैवाः, पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्च"** इति चतुर्णां शैवप्रभेदानां निर्देशः कृतः । **हरिभद्रसूरिस्तु** स्वकीये **षड्दर्शनसमुच्चये-**

**शैवाः पाशुपताश्चैव महाव्रतधरास्तथा ।**
**तुर्याः कालामुखा मुख्याः भेद एते तपस्विनाम् ॥** इति ।

चतुर्षु शैवप्रभेदेषु कालामुखान् निर्दिशति । **श्रीरामानुजस्य श्रीभाष्ये- "इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्यादनादरणीयत्वमुच्यते । तन्मतानुसारिणः चतुर्विधाः । [1]कापालाः, कालामुखाः, पाशुपताः, शैवाश्चेति"** उक्त्वा "सर्वे च ते वेदविरुद्धां तत्त्वप्रक्रियां ऐहिकामुष्मिकनिःश्रेयससाधनकल्पनाश्च कल्पयन्ति । निमित्तोपादानयोर्भेदः, निमित्तकारणत्वं च पशुपतिमाचक्षते" इति कालामुखानां निर्देशः कृतः । तेन कालामुखपन्थाः क्रिस्तादनन्तरं अष्टमे शतके विरलप्रचारेऽपि रामानुजानां समये (क्रि. श. मार्कीं १०००) सुप्रथित इति ज्ञातुं शक्यते ।

यद्यपि **कालामुखशैवस्य लाकुळशैवमिति** नामान्तरं तथापि अस्य पथः **लकुलीशपाशुपतात्** महान् भेदः । **कालामुखे लकुलीशपाशुपतसूत्रोक्तानां** विधीनां, **वेदविरुद्धक्राथन-मण्टन-शृङ्गारण-अपितत्कथन-अपितद्भाषणादि** आचाराणां च अदर्शनात् । **तथैव कपालपात्र-भोजन-शवभस्मस्नान-तत्प्राशन-लगुडधारण-सुराकुम्भस्थापनादिआचाराः** कालामुखेषु न कुत्रापि उपवर्णिताः । अयं पन्थाः क्रिस्तादनन्तरं सप्तमशतकादारभ्य चतुर्दशशतकपर्यन्तं दक्षिणभारते विशेषतः कर्णाटकान्ध्रयोः परं औन्नत्यमभजत ।

---

[1] ब्र. सू. २-२-३५.

## कालामुखपथस्य उदयः तत्प्रगतिश्च

कालामुखमधिकृत्य न किमपि परिष्कृतं साहित्यं **समुपलभ्यते। शिलाशासनेषु** उल्लिखितानां अंशानां प्रामाण्यमवलम्ब्य अयं पन्थाः **आन्ध्र-कर्णाटकयोस्तत्रतत्र** प्रमुखतामभजत इत्यवगम्यते। क्रिस्तादनन्तरं सप्तमशतके **बाणवंशीयया रत्नावली**नाम्न्या कयाचित् राजमाला दत्तायां दानप्रशस्तौ कालामुखमुनेः **"कालशक्तेः"**, तच्छिष्यस्य [1]**"ईश्वरदेवस्य"** च उल्लेखो दृश्यते।

विजापुरजिल्लान्तर्गतेषु **महाकूट-पट्टदकल्लुप्रभृतिषु** स्थलेषु स्थितेषु देवालयेषु कालामुखमुनीनां **अनेका मूर्तयः** परिदृश्यन्ते। एताः मूर्तयः **क्रि. श.** सप्तमाष्टमशतकीया इति संशोधकैरभ्यूह्यन्ते। अतःपरमयं पन्थाः राज्ञां प्रजानां च हृदयेषु विशिष्टं स्थानमलभत।

तुमकूरुजिल्लान्तर्गते **हेमावती**[2]शिलालेखने **"चुळकमुनि"** नामकः **कालामुखमुनिः** लकुलीशस्यापरावतार इति उपवर्णितः। प्रायस्तदानीन्तने काले **तान्दिक्कोण्ड** [3]**"ताम्रशासने" "लकशिपुः" "प्रभूतराशिः"** इत्यादीनां **काळामुखमुनीनां** उल्लेखाः परिदृश्यन्ते।

शासनोल्लिखितानां कालामुखगुरूणां चारित्र्यावलोकनेन तैः कृतं स्थावरलिङ्गानां स्थापनं, देवालयमठादीनां च निर्माणं, तत्र समयाचार्यनियमनादिकं च ज्ञायते। क्रि. श. १००२ वर्षोल्लिखिते[4]गदग्-शासने **बेळवलनामकाग्रहारस्थितस्य स्वयम्भुदेवालयस्य** आचार्येभ्यः धारापूर्वकं दत्तमिति **सूचितम्**।

तत्रस्थे शासनान्तरे-**स्वयम्भुत्रिकूटेश्वरदेवालयाधिपानां** समयाचार्याणां **क्रियाशक्तिपण्डिताचार्याणां** पादौ प्रक्षाळ्य दत्तिर्दत्तेति तदालयगत(क्रि. श. ११०२) [5]शासनेन

---

[1] ईश्वरदेवस्य कालः– क्रि. श ६४०, Karnatak through the Ages ग्रन्थे १७५ तमे पृष्टे द्रष्टव्योऽयमंशः। [2] Sira No. 28 of 943 A.D.,E.C. Vol. XII द्रष्टव्योऽयमंशः। [3] No 35 of 958 A.D., E.L. vol. xxiii. द्रष्टव्यः। [4] ಬೆಳ್ವಲನಾಡೊಳಗಣ ಅಗ್ರಹಾರ ಕರ್ದುಗಿನ ಸ್ವಯಂಭುದೇವರ ದೇಗುಲದ ಪೂಲಿಸು ಪಂಡಿತರ ವಿದ್ಯಾಶಿಷ್ಯರ್ ಕೋಪಿನ ವಖ್ಖಾಣಜೀಯರ ಶಿಷ್ಯರಪ್ಪ ವಖ್ಖಾಣಜೀಯರ್ಗೆ ಧಾರಾಪೂರ್ವಕಂ ವಿದ್ಯಾದಾನವಾಗೆ. [5] Bombay Karnatak Inscriptions vol. I part द्रष्टव्यम्।

बोध्यते। **धारवाड**जिल्लान्तर्गते लक्ष्मेश्वरस्य पुरतः स्थिते एकस्मिन् [1]शासने **पुलिगेरे** नगरस्य **सोमनाथ**देवालयस्य स्थानाचार्याणां **'देवसोमव्रति'-'महेन्द्रसोमव्रति'-'ज्ञानसोमव्रति'**प्रभृतीनां पादान् प्रक्षाल्य वृत्तीनां प्रदानोल्लेखाः दृश्यन्ते।

**विजयनगर**साम्राज्योदयस्य शैवधर्मगुरूणां "क्रियाशक्ति पण्डिताचार्याणां" प्रेरकशक्तिः महत्यासीत् इत्येतत् सर्वश्रुतम्। तेषामाचार्याणां मध्ये **काशीविलासक्रियाशक्ति-चन्द्रभूषणक्रियाशक्ति**प्रभृतीनां [2]शिलाशासनानि "**निडुमामिडि**" श्रीशैलपण्डिताराध्य-**पीठे**ऽद्यापि परिलसन्ति।

**किञ्च– ओरङ्गल्** राजास्थानभाजः राजगुरोः **मल्कापुर**शासनोल्लिखितस्य "**वीरशैव-शतैर्वृतस्य**" **विश्वेश्वरशम्भोः** प्रभावः सुप्रसिद्धः।

**कालामुखानां** केन्द्रेषु **श्रीशैल-हूली-बल्लिगावे-पम्पा**दिक्षेत्राणि प्रसिद्धानि। तत्र **बल्लिगावे** (Shivamogga Dist) ग्रामस्य "**केदारेश्वरदेवालयस्य**" "**कोडीमठस्य**" प्रख्यातिः तत्रस्थे शिलालेखे उल्लिखिता। क्रि. श. एकादशशतकारंभे "**केदारशक्ति-**मुनिरित्याख्यातः **कालामुखमुनिस्तं** निर्ममे। तच्छिष्यपरम्परायां मठाधीश्वराणां मध्ये बहवो विद्वांसः, **नैष्ठिकब्रह्मचारिणः तपोनिष्ठाः** कर्तृत्वशालिनः आसन्। एते च न केवलं **शैवधर्मा**चारप्रचारकाः किन्तु विद्यार्थिनां धार्मिकस्य व्यावहारिकस्य च शिक्षण-प्रदायकं **विद्यापीठं, अतिथिगृहं, वैद्यकीयां** च **व्यवस्थां** विधाय विख्याताः" इति [3]तच्छिलालेखे एव उल्लिखितः।

एवं तदानीं **कर्णाटकस्य** प्रमुखस्थानेषु **बन्दळिके, अरसीकेरे, हळेबीडु, इङ्गळेश्वर, बागेवाडी, विजयपुर, मुत्तगे, हूलि,** प्रभृतिषु निर्मिताः **कालामुखसम्प्रदाय-शिवालयाः मठाश्च** अद्यापि विलसन्ति। तत्र **सोरबा** तालूक (Shivamogg Dist) "**कुप्पटूरु**" ग्रामस्थे शिवालयशासने अनन्तकोटि **भुवनेशदेवालयस्य** अधिपतिः **सर्वेश्वरशक्तिदेवः** इति विख्यातः कालामुखमुनिः। स च न केवलं राजगुरुः अपि तु तस्याधिपत्ये सप्तसप्ततिसङ्ख्याकाः शिवालयाः आसन्निति [4]उल्लिखितम्।

---

[1] Three Inscriptions of Puligere. E. P. Ind. vol. xvi p. p. 48. द्रष्टव्यः।
[2] Ananthapur Dist. Penugonda Taluk Nidumamidi Mutt आन्ध्रप्रदेशान्तर्गतः [3] S.K. 102 of 1162 A.D., E.C. vol. vii. द्रष्टव्यः। [4] M. G. 1930 vol. p. II. 11 P. 796-97.

## कालामुखसम्प्रदायमूलम्

तथा च कालामुखमार्गस्य किं मूलमित्याकाङ्क्षायां एवं वक्तव्यम्– कालामुखसंप्रदायस्य विषये पाल्कुरिके सोमनाथकृते गणसहस्रे अभिवर्णितेषु अष्टाविंशतियोगाचार्येषु पठितो लकुलीशः अस्य प्रवर्तकः इति। योगाचार्यास्तु स्वयम्भुलिङ्गानीव स्वयम्भवाः वायवीयसंहितायां योगाचार्याणां अवतारवर्णनं कृतं यथा–

[1]ममावताराणि शुभे योगाचार्यच्छलेन तु।
युगान्तरेषु सन्ति आर्ये सन्ततिश्च सहस्रशः॥ इति।

पाशुपतस्यास्य अस्तित्वं [2]महाभारते श्रूयते। शैवागमेषु शैवपुराणेषु च श्रौतपाशुपतत्वेन स्वीकृतोऽयं पन्थाः। अयं च पन्थाः रामानुजादिभिरुक्तदिशा न वेदविरुद्धाचारादियुक्तः तत्र लकुलीशपाशुपतस्य कालामुखस्य च अन्तरमविज्ञाय तथोक्तमित्येव वक्तव्यम्– यतः कालामुखं श्रौतं वेदसम्मतं चेति वक्ष्यते। तान्दिगोण्डशिलालेखे कृतं लकुलीशस्य वर्णनं तस्य वैदिकत्वं स्थापयति। तत्पाठः एवं वर्तते–

श्रीमत्त्रैलोक्यवन्द्यस्य लकुलीशस्य शासनम्।
जयत्वनुगतात्मेष्टदृष्टादृष्टफलप्रदम्॥
यो धर्मालिनटीं शास्ति वेददण्डधरो नटः।
तच्छासनं जयत्येतत्त्रिलोकीमङ्गलप्रदम्॥

अत्र वर्णितस्य लकुलीशस्य "वेददण्डधरः" इति विशेषणदर्शनात्। अस्य लकुलीशसंप्रदायस्य श्रौतत्वं सुस्पष्टम्।

यद्यपि पूर्वोक्ते लकुलीशपाशुपतेऽपि वेदोक्तानां सद्योजातादिपञ्चब्रह्ममन्त्राणां प्रामाण्यमङ्गीकृतं तथापि तत्रस्थाः क्राथन-मण्टनादिवेदविरुद्धाचाराननुलक्ष्यैव तन्मतं शङ्करादिभिर्निराकृतम्। अत्र तु वैदिकशिवागमोक्ताः ज्ञान-क्रिया-चर्या-योगपादेषु प्रति-

---

[1] वा. सं. उत्तरभागे– ११-२६. [2] शान्तिपर्व– अ. ३४९, श्लो– ६४.

पादिताः धर्माचाराः अनुष्ठीयन्ते इति सुस्पष्टमेतत्। लाकुलागमशास्त्रं शिवमुखोद्भूतं धर्मशास्त्रम्। शिलाशासनेषु तत्र तत्र प्रयुक्ताः "परमागमवेदि" प्रभृतयः शब्दाः अस्य पथः वैदिकत्वं समर्थयन्ति।

## कालामुखशैवमार्गे लिङ्गधारणम्।

क्रि.श. द्वादशशताब्दात् पूर्वं कालामुखेषु लिङ्गधारणमासीदिति शासनेषु दृश्यते। शासनेषु 'लिङ्गि'पदेन लिङ्गधारिणः निर्दिष्टाः। – क्रि.श. १०७४ बळ्ळिगावे ९४ तमे शासने क्रि.श. ११९३ तमस्य बेळगां ९९-तमे शासने च – "विप्र-गो-स्त्री-बाल-लिङ्गि-घातुकानां यो दोषः तदेतच्छासनोक्तधर्मघातुकाः लभन्ते" इति लिङ्गधारिणां प्रस्तावः तेषां तत्काले अस्तित्वं सूचयति। एतेन कालामुखाः शिवलिङ्गधारणं विधाय शिवपूजा-शिवज्ञान-शिवयोगादिना श्रोत्रियब्रह्मनिष्ठास्सन्तः राजपूजितचरणारविन्दा आसन्। द्वादश-शतकानन्तरमयं पन्थाः क्रमशो वीरशैवे विलीनमभूत् इति [1]विदुषामाशयः।

## लकुलीशपाशुपतात् कालामुखपाशुपतस्य प्रमुखा भेदाः।

| कालामुखपाशुपतम् | लकुलीशपाशुपतम्। |
|---|---|
| १) कालामुखं श्रौतम्। अस्य प्रवर्तकः वायवीयपुराणोक्तेषु स्वयम्भुयोगाचार्येषूक्तो लकुलीशः। | लकुलीशपाशुपतं अश्रौतम्। यद्यप्यत्र पञ्च ब्रह्ममन्त्राणामुपयोगस्तथापि वेदविरुद्धा-चाराणां सत्वादश्रौतम्। अस्य पथः प्रवर्तको लकुलीशः कारबान् (गुजरात्) श्मशानगते मृतदेहे जन्म लेभे। |
| २) श्रौतकालामुखमार्गस्य कार्यक्षेत्रं श्रीशैलं तत्परिसरश्च। | लकुलीशपाशुपतस्य कार्यक्षेत्रं मध्यभारतम्। |
| ३) श्रौतकाळामुखसम्प्रदायस्य श्रुति-आगम-शैवपुराणानि प्रमाणानि। | अश्रौतस्य लाकुलसम्प्रदायस्य लकुलीशविर-चितानि पाशुपतसूत्राणि तट्टीकादीनि प्रमाणानि। |

---

[1] कन्नडनाडिन चरित्रे– पृ. २०४. डा॥ एस्. सि. नन्दीमठः, एम्.ए.पि.एच्.डि., कन्नड-साहित्यपरिषत् प्रकाशनं, बेङ्गळूरु १९४४.

| | |
|---|---|
| ४) कालामुखं क्रि.श. सप्तमशतकादारभ्य चतुर्दशशतकपर्यन्तं प्रख्यातम् । ततः परं वीरशैवे विलीनमभवत् । | क्रि.श. २०० शतके अस्योगमः। बौद्ध-धर्मपराजयोऽस्य साधनम् । चिन्त्याम-कायारोहणमाहात्म्य-कूर्म-पुराणेषु अस्य प्रस्तावो दृश्यते । |
| ५) मुनयोऽस्य सात्विकाः, परोपकारिणः, जनोपयोगिमहाविद्यालय-वैद्यालय-अन्नसत्रादीन् निर्माप्य लोकोपकारिणो बभूवुः । | अत्रस्था यतयः वामाचारिणः, कापालिका इव घोरकर्मिणः । एषु विद्यमानैः पाशु-पतसूत्रोक्ताः क्रन्थन-स्पन्दनादिनीतिबाह्या-चारैः एते रामानुजादिभिराचार्यैः तिरस्कृताः। |

## दक्षिणदेशीयं स्वतन्त्रशिवाद्वैतदर्शनम्

स्कन्द-नन्दिपरम्पराप्रवर्तितं **शैवदर्शनं** भारतस्य दक्षिणदिग्भागे **तिरुवाडुतुरै, धर्मपुरं, आदित्यपुरं** इति **द्रविडदेशे** प्रथितेषु शैवमठेषु परम्पराप्राप्तमिति संश्रूयते ।

दर्शनमिदं कामिकादिशैवागममूलकं शिवादिपृथिव्यन्तष ्त्रिंशत्तत्त्वबोधकं तत्त्वशोधनतः पुरुषस्य शिवानन्यत्वबोधनेन शिवस्वरूपत्वप्रापकं जगत्कारणत्वादौ क्वचित् क्वचित् स्वतन्त्र-शैवदर्शनात् प्रभिन्नक्रमं उपपादयति ।

## स्कन्द-नन्दिसम्प्रदाययोः गुरुपरम्परा

अस्य सम्प्रदायस्य **स्कन्द-नन्दिनावाचार्यौ** प्रवर्तकौ च। तयोरुपदेष्टा साक्षात् **परमेश्वर** एव। तौ च शिवाज्ञया लोके देशिकपरम्परां - प्रवर्तयामासतुः । तेन **स्कन्दपरम्परा नन्दिपरम्परा** चेति परम्पराद्वयं लोके विश्रुतम् ।

| स्कन्दपरम्परपरा | नन्दिपरम्परा |
|---|---|
| १) स्कन्दः । | १) श्रीनन्दिः । |
| २) वामदेवः । | २) सनत्कुमारः । |
| ३) नीलकण्ठशिवाचार्यः । | ३) सत्यज्ञानदर्शी । |

| | |
|---|---|
| ४) विश्वेश्वरशिवाचार्यः । | ४) परञ्ज्योतिमुनिः । |
| ५) सदाशिवाचार्यः । | ५) मेयूकण्डदेवः । |
| ६) सदाशिवमार्गप्रकाशकः । | |
| ७) शिवकेलुन्दुशिवाचार्यः । | |
| ८) शिवाग्रयोगीन्द्रज्ञानशिवाचार्यः । | |
| (क्रि.श.१६५०)इयं परम्परा अर्कवने (आदित्यपुरे) मठे सन्दृश्यते । | इयं परंपरा तिरुवाडुतुरै, धर्मपुरीत्यादिषु मठेषु विश्रुता । |

अस्य सम्प्रदायस्य प्रतिपादकाः अष्टाविंशत्यागमाः । शिवाग्रयोगिना शैवागम-मूलत्वेन विरचिता इमे ग्रन्थाः–

१) शैवपरिभाषा ।

२) क्रियादीपिका ।

३) शैवसंन्यासपद्धतिः ।

४) शिवज्ञानबोधीयलघुटीका ।

५) शिवज्ञानबोधीयशिवाग्रभाष्यम् ।

६) सर्वज्ञानोत्तरागमस्य द्राविडभाषापरिवर्तनम् ।

७) देवीकालोत्तरागमस्य ,, ,,

८) श्रुतिसूक्तिमालिकायाः हरदत्ताचार्यकृतायाः ,, ,,

९) शिवसिद्धान्तपरिभाषा श्रीसूर्यभट्टविरचितः ।

## सिद्धान्तस्वरूपम्

सिद्धान्तेऽस्मिन् स्कन्द-सन्तानादिमुनिवामदेवानुरोधेन रौरवागमोक्तरीत्या पति-पशु-पाशभेदेन पदार्थत्रैविध्यमभ्युपगम्य स्वमतं प्रतिपादितम् ।

**पतिः**— अयञ्च गुणत्रयाधिष्ठितानां **ब्रह्म-विष्णु-रुद्राणां** कारणात्मकः **स्थूल-सूक्ष्म-शून्यरूपरहितो** निर्मल-निरतिशय-स्वप्रकाशज्ञानानन्दात्मको, गुण-नाम-क्रियारहितोऽपि योगवृत्त्या सर्वशब्दवाच्यो भवति। जगत्**सृष्टि-स्थिति-संहार-तिरोधानानुग्रहकारि**त्वं **चास्य तटस्थं** लक्षणम्। अयं उपादाननिलीनसमस्तकार्यजननशक्तिमात्रयुक्ततया **शक्त** इति, कार्यजननाभिमुखशक्तियुक्ततया **उद्युक्त** इति, जनितकार्यशक्तियुक्ततया **प्रवृत्त**श्चेति त्रिविधः।

**इयञ्च** शक्तिरेकैव कार्यानुकूलादृष्टादिपरामर्शिनी, ज्ञानं, एवं भवत्वित्याकारिका इच्छा, तत्कार्यजननी कृतिरिति ज्ञानेच्छाकृतिस्वभावा। इयमेव मूर्धादिभावकल्पनया मननत्राणयोगेन च **मन्त्र-पद-वाच्य-शिवशरीर**मिति शैवसिद्धान्तः। **शक्ति-शक्तिमतो-रभेदन्यायेनास्याः** शिवस्वरूपायाः न मुख्यं शरीरत्वम्।

**अयञ्चेश्वरः** सकलनिष्कलस्वरूपो **नवविधः**। सूर्यस्येव सन्निधिरूपसङ्कल्पमात्रेण कर्तृत्वस्वीकारात् न निरूपाधिकस्याविकारित्वप्रसङ्गः। सूर्योऽप्यविकार्येव कमलोत्पल-नवनीत-पङ्कानां विकास-मुकुलीभाव, द्रवीकरण-शोषणरूपकार्येषु सन्निधिमात्रेण कर्ता सन् परिदृश्यते।

**पशुः**— पशुरपि **चिद्रूपः**। पत्युरनन्योऽस्वतन्त्रो **देहेन्द्रियादिव्यतिरिक्तोऽनेको** विभुरनादिमलावृतः **कर्ता** च। अत्र देहेन्द्रिय-प्राणमनसां आत्मत्वासम्भवप्रतिपादनपूर्वकं आत्मनः **क्षणिकविज्ञान**स्वरूपत्वं, **आत्मनोऽणुपरिमाणवादं तत्तद्देहानुरूपपरिमाण**वादं च युक्त्यैव **निराकृत्य** आत्मनो **विभुत्वं** समर्थितम्। अत्र आत्मनो विभुत्वं **लकुलीश-पाशुपतात्** स्वीकृतम्।

**पाशः**— अत्र शिवानन्दाभिव्यक्तिविरोधितया **पाश**स्वरूपमभिहितम्। **पाशोऽयं आणव-तिरोधायकशक्ति-बिन्दु-माया-कर्म**रूपेण पञ्चधा विभज्य, तत्र षट्त्रिंशत्तत्त्वस्वरूपं च प्रायेण **सिद्धान्तशैव**दर्शनोक्तदिशा निरूपितमिति सङ्गृह्यते।

**मोक्षः**— एवं आणवादिकर्मान्तस्य पाशपञ्चकस्य **शिवदीक्षया** क्षये सति **साधकेन** शिवानन्दाभिव्यक्तिलक्षणा **मुक्तिरनुभूयते**। तत्र यः **साधकः** स्वकर्मसाम्य-मलपरिपाकाभ्यां युज्यते सः स्वनिपतितपरमेश्वरशक्तिः विषयेभ्यो विरज्यते। **विरक्तश्च गुरुकुलमुपसृतः गुरोः** अनुग्रहेण **समयदीक्षां** स्वीकरोति। ततः समयिधर्मानुष्ठानेन श्रद्धालुर्भूत्वा, गुरोः सकाशात् **आगमाध्ययनशिवपूजाद्यधिकारभूतां विशेषदीक्षां** लभते। ततो गुरोः

सकलसञ्चितकर्मनिबर्हिणीं **निर्वाणदीक्षां** प्रतिपद्य आणव-मायीयमलविमुक्तोऽपि प्रारब्धकर्मणा देहबन्धमनुभवन् निष्पन्नतत्त्वज्ञानतया कदाचिदनुतिष्ठति, कदाचित्परित्यजति, कदाचिन्निषिद्धमनुतिष्ठति, तथापि न तैर्लिप्यते। एवं प्रारब्धफलं सुखं दुःखं वा अनुभवन् प्रारब्धभोगान्ते मलकर्मोभयाभावात् मायाया अपि देहादिद्वाराऽबन्धकतयैकीभूतपत्या **अलौकिकमद्भुतमवाग्गोचरमखण्डाकारं सच्चिदात्मकं शिवानन्दं** लभते। इयमेव **मुक्त्यवस्था**।

१३

# अथ शैवविशिष्टाद्वैतदर्शनम्

**शैवविशिष्टाद्वैत**प्रवर्तकः **श्रीकण्ठशिवाचार्यः**। स च ब्रह्ममीमांसाभिधाने **ब्रह्मसूत्रभाष्ये** सिद्धान्तमिदं स्थापयामास। अस्य कालः क्रि. श. दशमशतकात् पूर्वः, यतः क्रि. श. दशमशताब्दीय इति निश्चितो **रामानुजः** स्वकीयश्रीभाष्ये **श्रीकण्ठोक्तां** फक्किकामनुसरति। अन्यच्च– एकादशशतकीयत्वेन निर्णीते **श्रीकरभाष्ये श्रीकण्ठस्य विशिष्टाद्वैतं** पूर्वपक्षत्वेन अनूदितम्। एतेन **श्रीकण्ठस्य** कालः क्रि. श. दशमशतकात् पूर्व इत्यत्र न कोऽपि सन्देहः।

**अयमाचार्यः भेदाभेदवादं** सम्यक् जानाति स्म, यतः सः स्वकीये **भाष्ये भेदाभेदकल्पनं विशिष्टाद्वैतं साधयामः"** इति प्रतिजानाति।

"न च **भेदाभेदवादिनः**, वस्तुविरोधात्। किन्तु शरीरशरीरिणोरिव गुणगुणिनोरिव च [1]"**विशिष्टाद्वैतवादिनः"** इति च। "भेदाभेदवादिनये ब्रह्मकारेणाद्वैतं भोक्तृभोग्याकारेण द्वैतमित्याकारभेदेन विरोधाभाव इति प्रागेवावेदितम्। इदमेव मतं **आश्मरथ्येन, भर्तृप्रपञ्चेन भास्करेण** च **कारणरूपतया अभेदः कार्यरूपतया भेदः"** इति पर्यायेणाङ्गीकृतम्।

**श्रीकण्ठस्य वक्ष्यमाणाभ्युपगमाः लकुलीशसिद्धान्तसाधारणाः**

१) पत्यपरपर्यायं **ब्रह्म** सगुणम्। शक्तिस्तु तस्य गुणो धर्मो वा। उक्तञ्च– [2]"**यदेतत् पत्युः पतित्वं शक्तिः सामर्थ्यमैश्वर्यं स्वगुणः सद्भावः सतत्त्वं तत्त्वधर्मः तत् आसनं अतो अव्ययोऽमृतो भगवान् कामतः स्वशक्तिस्थं कार्यं स्वशक्त्याध्यास्ते**"।

[1] श्रीकण्ठ भा. २-२-२-१. [2] पा. सू. पृ. ५९

२) सत्कार्यवादः– श्रीकण्ठः अष्टाविंशत्यागमप्रामाण्यं पति-पशु-पाशरूप-तत्त्वत्रयञ्च सिद्धान्तशैववत् स्वीकरोति। परन्तु चेतनाचेतनरूपस्य चिदचिदपरपर्यायस्य लकुलीशमते कार्यान्तर्गणितस्य जीव-जगद्द्वयस्य पत्युर्बहिः स्वतन्त्रां सत्तां न स्वीकरोति, अपि तु लाकुलीशभेदाभेदवत् पशुशक्तिस्थत्वम्। एवञ्च हार्य-धार्य-कार्यतया पत्या सह समप्राधान्यं निरस्य चिदचितोः पतिं प्रति गौण्यं स्वीकरोति। शरीरस्येव शरीरिणं प्रति। उक्तञ्च– [1]"कार्यस्य रुद्रे हार्य-धार्य-कार्यख्यापनार्थम्" इति।

३) कार्यकारणयोरपृथक्सिद्धत्वम्– श्रीकण्ठमते कार्य-कारणयोः न पृथक्सिद्धिः।

एवञ्च ब्रह्मणः अपृथक्सिद्धजन्मस्थितिप्रवृत्तिकत्वादस्य जगतस्तद्व्यतिरिक्तता नास्ति। इदं लकुलीशमतानुसार्येव। उक्तञ्च राशीकरेण– [2]"पालको नित्यः; पालकनित्यत्वाच्च पाल्यमपि नित्यम्। कस्मात्? न ह्यस्ति पाल्ये पालक इत्येव। सति नित्यत्वे तान्येव पश्वादीनि संयोजयति। मृल्लोहमयप्राकारादिवत्, दृष्टान्तात्। वृत्तिलाभश्चोत्पत्तिः" इत्युच्यते।

४) अन्तर्गणिकभेदः– गणः– समूहः, अन्तर्विद्यमानो गणः अन्तर्गणः, अन्तर्गणे विद्यते इत्यन्तर्गणिकः। अन्तर्गणिकश्चासौ भेदोऽन्तर्गणिकभेदः। अन्तः- पूर्वकात् गणशब्दात् [3]ठन् प्रत्यये अन्तर्गणिक इति निष्पद्यते। एवं चान्तर्गणिको भेदः शिवान्तर्गतपशु-पाशरूपगणनिष्ठः। स च श्रीकण्ठेन स्वीक्रियते। उक्तञ्च श्रीकण्ठभाष्यटीकायां अप्पय्यदीक्षितेन–

[4]"भेदाभेदपक्षस्य पृथक् भावरूपात्यन्तभेदपक्षस्य मुख्याभेदरूपात्यन्ताभेदपक्षस्याऽन्तराऽनिर्धार्यत्वपक्षस्य च प्रमाणविरुद्धत्वात् लौकिक-वैदिकसकलप्रमाणसिद्धान्तान्तर्गणिकभेदाऽप्रतिक्षेपकमपृथक्भावेनानन्यरूपं विशिष्टाद्वैतमभेदश्रुतीनामर्थ इत्येव सूत्रकारस्याभिप्रायः" इति।

अयमन्तर्गणिकभेदः श्रीभाष्ये स्वगतभेदनाम्ना स्वीकृतः।

---

[1] पा. सू. पृ. ६४. [2] पा सू. पृ. ६०. [3] "अत इनिठनौ"। पा. अष्टा- अ. ५-२-११५
[4] श्रीकण्ठ भाष्यटीका- ३१

## श्रीकण्ठस्योपरि द्वैतसिद्धान्तप्रभावः

शैवाद्वैतसिद्धान्तस्यापि प्रभावः श्रीकण्ठे दृश्यते। स च द्वैतपाशुपतात् न केवलं पति-पशु-पाशसंज्ञिकं पदार्थत्रयमादत्ते, अपि तु जीवस्याणुत्वं, मोक्षस्य शिव-साम्यरूपत्वं, मोक्षे सर्वज्ञत्व-सर्वकर्तृत्वयोः अभिव्यक्तिवादश्च।

एतेन सुस्पष्टमेतत् यत् सृष्टौ स्थूलरूपतया प्रलये च सूक्ष्मरूपतया पत्यन्तर्गतयोः हार्य-धार्य-कार्यतया अस्वतन्त्रयोरत एव गौणयोः पत्यविनाभूतयोः पत्यपृथक्सिद्धयोः परस्परभिन्नयोः जडचेतनयोः पत्यविनाभूतायाः शक्तेश्च विशेषणत्वमात्रकथनं लकुलीशभेदाभेदवादात् श्रीकण्ठविशिष्टाद्वैतं विशेषयति। एतत्सर्वं रामानुजीयविशिष्टाद्वैतेऽपि समानम्।

## रामानुजीयविशिष्टाद्वैतस्योपरि श्रीकण्ठस्य प्रभावः

**विशिष्टाद्वैतस्वरूपम्—** यादवप्रकाशः रामानुजाचार्यस्य गुरुः। यद्यपि तदभ्युदगतं चिदचिदीश्वरकारणं ब्रह्म न मनुते रामानुजः। तथापि चित्-अचित्-ईश्वररूपं त्रिकं स्वीकरोति। अत्र ब्रह्म नेश्वरात् पृथक्। ईश्वर एव परमकारणं परमद्रव्यं च। सत्कार्यवादानुरीत्या सर्वं कार्यं कारणे सूक्ष्मरूपेण सत्; अवस्थान्तरापत्तिरेव परिणामः; कार्यतापि अवस्थान्तरापत्तिरेव; स्वगतभेदः अपृथक्सिद्धसम्बन्धः; इत्यादिकमेव रामानुज-विशिष्टाद्वैतस्य विशेषलक्षणम्।

१) **ईश्वरः—** सर्वोऽप्यनुभवः सगुण-सविशेषवस्तुविषयकः; सर्वाण्यपि प्रमाणानि सविशेषविषयकाणि। निर्विशेषवस्तुनि न किमपि प्रमाणमस्ति। निर्विकल्पकप्रत्यक्षे सविशेषमेव वस्तु प्रतीयते। उक्तञ्च उत्पलदेवेनापि—

साक्षात्कारक्षणेऽप्यस्ति विमर्शः कथमन्यथा।
धावनाद्युपपद्येत अनुसन्धानवर्जितम्॥ इति।

एवञ्चेश्वरः प्राकृतगुणरहितः, निखिलहेयप्रत्यनीककल्याणगुणाकरः, अनन्त-ज्ञानानन्दस्वरूपः, स्वेच्छया सकलजगत्सृष्टि-संहारकर्ता, सकल-सजातीय-विजातीय-भेदशून्योऽपि स्वगतभेदवान्, अपृथक्सिद्धिसम्बन्धसम्बद्धयोः स्वशरीरभूतयोश्चिदचितोः परस्परतः सर्वथा भिन्नत्वात्।

२) **अपृथक्सिद्धसम्बन्धः**– **रामानुजीयविशिष्टाद्वैत**सिद्धान्तस्य आधारभूतः **अपृथक्सिद्धसम्बन्ध**कल्पनैव। सोऽत्र विशदीक्रियते– अस्मिन् **सिद्धान्ते** शरीररूपा चित् कदाचिदपि शरीरात् पृथक् न भवति ; **संसारावस्थायां** **स्थूलशरीरेणैव** **प्रलये** सूक्ष्मशरीरेण तथा **मोक्षेऽपि** शुद्धसत्त्वशरीरेण चितः सम्बन्धस्य स्वीकारात्। शरीरं शरीरिणा धार्यते, नियम्यते, स्वोपभोगार्थं कार्ये प्रवर्त्यते च। अतः शरीरस्य शरीरिणेव चिदचितोरीश्वरेण सहाभ्युपगम्यते सम्बन्धः। यत ईश्वरः शरीरीव शरीरं चिदचितौ धारयति नियमयति प्रेरयति च। अयञ्च सम्बन्धः **अपृथक्सिद्ध** इत्युच्यते।

नास्ति पृथक्सिद्धिर्ययोर्येषां वा, तयोस्तेषां वा सम्बन्धः **अपृक्सिद्धिसम्बन्धः**। ईश्वरः कदाचिदपि चिदचिद्भ्यां पृथक् न भवति ; नापि चिदचितावीश्वरात्। अयं सम्बन्धो **न्यायवैशेषिका**भ्युपगतात् **समवायसम्बन्धात्** भिन्नः।

**समवायो** नित्यसम्बन्धोऽयुतसिद्धवृत्तिः ; यथा गुणगुणिनोः ; यतो गुणः सर्वदा गुणिसम्बद्ध एव भवति। गुणी च गुणसम्बन्धं विना गुणी एव न वक्तुं शक्यते। परन्तु **न्यायवैशेषिक**सिद्धान्त उत्पद्यमानं द्रव्यं प्रथमक्षणे निर्गुणं निष्क्रियञ्च भवतीत्यतः कथञ्चित् कदाचिदीश्वरस्यापि निर्गुणत्वं सम्भाव्येत। अत ईश्वरस्य चिदचिद्भ्यां सह न समवायसंबन्धः स्वीक्रियते।

तथा चैकस्यापि गुणस्य भिन्नैर्गुणिभिः सम्बन्धो भवति, नीलाख्यो गुणो न केवलं नील उत्पल एव भवति, अपि तु वस्त्वन्तरे घटादावपि। अतो गुणिन ईश्वरस्य चिदचिद्भ्यां न भवति कदाचिदपि विच्छेदः ; नापि चिदचितावीश्वराद्बहिःस्थेन केनाप्यपरेण कदाचिदपि सम्बद्धे भवतः ; बाह्यस्य कस्याप्यभावादिति साधयितुं अपृथक्सिद्धसम्बन्धः स्वीक्रियते।

३) **विशेषणविशेष्यस्वरूपम्**– **विशेषणं** नाम अपृथक्सिद्धिसम्बन्धसम्बद्धेषु यन्नियमेन आधेयं नियम्यं नियोज्यञ्च भवति तद् गौणम् ; अत एव तद्विशेषणमित्युच्यते। आधारो नियामको नियोजकश्च मुख्यो भवतीति विशेष्यं इत्युच्यते। चिदचिदीश्वरेषु ईश्वरस्य नियामकत्वात् प्राधान्यं विशेष्यत्वञ्च। चिदचितोस्तु नियम्यत्वाद्गौणत्वं विशेषणत्वञ्च। एवं विशेष्यभूतस्येश्वरस्य चिदचितौ विशेषणभूते।

४) अद्वैतम्– विशिष्टाद्वैतिनः "एकत्वं च पृथक्सिद्धिः" इति वदन्ति। अतः चिदचिदीश्वराणां अपृथक्सिद्धिसम्बन्धसम्बद्धत्वात् विशिष्टस्येश्वरस्याद्वैततां एकत्वम् भेदं वा अत्र अङ्गीक्रियते। विज्ञानवादिनां सहोपलम्भनियमात् नील-नीलधियोरिव, शरीरस्य शरीरिणेव, विशेषणस्य विशेष्येणेव, अंशानामंशिनेव, चिदचितोरीश्वरेण सह अपृथक्सिद्धसम्बन्धस्वीकारात् अपृथक्सिद्धयोरैकत्वस्वीकारात् रामानुजीयसिद्धान्तोऽपि विशिष्टाद्वैतमित्युच्यते। यथा वा शिवपारम्यमधिकृत्य श्रीकण्ठस्य सिद्धान्तं शैवविशिष्टाद्वैतं तथैव विष्णुपारम्यप्रतिपादकं रामानुजीयं सिद्धान्तं वैष्णवविशिष्टाद्वैतं इत्युच्यते।

५) स्वगतभेदः– चित्-अचितौ जगत्-जीवौ नित्यौ; परस्परतो भिन्नौ च। परन्तु तयोर्भेदः तयोः साधारणाधारभूतेश्वरान्तर्गतः। तयोः स्वतन्त्रेश्वरात् न बहिः सत्ता। ईश्वर एव ते परस्परतो भिन्नतयाऽवतिष्ठेते। अतो भेदोऽपि ईश्वरान्तर्गत एव। अयमेव भेदः स्वगतभेदः। एवं ईश्वरः सजातीयविजातीयभेदरहितोऽपि न स्वगतभेदरहितः।

इमौ जगज्जीवौ ईश्वरे अवस्थाद्वयेनावतिष्ठेते; स्थूलावस्थया सूक्ष्मावस्थया च। सृष्टौ तयोः स्थूलावस्थया स्थितिः। अतः स्थूलचिदचिच्छरीरः, तद्विशिष्टो वा ईश्वरः कार्यावस्थं ब्रह्म; प्रलये तयोः सूक्ष्मतया स्थितिः; अतः सूक्ष्मचिदचिद्विशिष्ट ईश्वरः कारणावस्थं ब्रह्मेत्यभिधीयते। एवं चेश्वरः न कदाचिदपि विशेषशून्यः। अतः ब्रह्मण. सर्वदा सविशेषत्वस्वीकारात् अयं विशिष्टाद्वैतसिद्धान्त इत्युच्यते।

### शैवविशिष्टाद्वैत-वैष्णवविशिष्टाद्वैतयोः साम्यम्

श्रीकण्ठः लकुलीशद्वैताद्वैतवादमनुसृत्य ब्रह्मणः सगुणत्वं, सत्कार्यवादं, कार्यकारणयोरपृथक्सिद्धत्वं, अन्तर्गणिकभेदं, पशु-पत्योः कार्य-कारणयोर्वा गुण-प्रधानभावं स्वीकृत्य गौणयोः पत्यविनाभूतयोः पत्यपृथक्सिद्धयोः, परस्परभिन्नयोः जडचेतनयोः पशु-पाशनाम्नोः; पत्यविनाभूतायाश्च शक्तेर्गुणरूपत्वमनुक्त्वा गुणं विशेषणं भवतीति मत्वा विशेषणरूपत्वमभ्युपगत्य शैवविशिष्टाद्वैतं स्थापितवान्। अतो लकुलीशद्वैताद्वैतात् चिदचितोः पशु-पाशयोः ईश्वरापरपर्यायेण पत्या सह सम्बन्धविषये नास्ति कश्चन भेदः।

रामानुजविशिष्टाद्वैतविषयेऽपि इदं अस्तीति; यतस्तन्मते श्रीकण्ठवत् सत्कार्यवादं, कार्यरूपयोः चिदचितोः ईश्वरेण अपृथक्सिद्धसम्बन्धस्वीकृत्या अपृथक्सिद्धत्वं, ईश्वरे

,स्वगतभेद' इति नामान्तरेण **अन्तर्गणिकभेदं,** चिदचितोः ईश्वरापेक्षया **गौणत्वात्तयोः** ईश्वरविशेषणत्वं च स्वीकरोति ।

१३

# अथ शैवविशेषाद्वैताभिधं शक्तिविशिष्टाद्वैतदर्शनम्

"**दर्शनस्यास्य** प्रतिपादकः **श्रीपतिपण्डिताराध्यभगवत्पादाचार्यः** । अशेषशास्त्र-शेमुषीधुरन्धरेण आचार्यपुङ्गवेन प्रणीतं ब्रह्ममीमांसासूत्रव्याख्याप्रायं **श्रीकरभाष्यं** शिवधर्म-सिद्धान्तस्थापकेषु ग्रन्थरत्नेषु मूर्धानमभिरोहतीति विदुषामाशयः" ।

**श्रीकरभाष्यप्रणयने मूलं अगस्त्यवृत्तिः इति भाष्यारम्भगतया–**

**अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं शुभाम् ।**
**सूत्रवृत्तिं समालोक्य कृतं भाष्यं शिवङ्करम् ॥**

इति कारिकयाऽवगम्यते । उत्तरत्रापि [1]**अगस्त्यमुनिसार्वभौमेन** कृत "**लघुसूत्रवृत्तौ**" "**लिङ्गे सुषुप्तिरित्यादि बहुश्रुतिषु**" इत्यादिना समर्थ्यते च । "**मुनिचन्द्रवृत्ति**" रित्यपि नामान्तरमस्याः[2] । वृत्तिरियमद्यनोपलभ्यते यद्यपि तथापि अस्या **वृत्तेरुल्लेखः** श्रीहयवदनराव् विरचिते श्रीकरभाष्योपोद्घाते दृश्यते । **उक्तञ्च तत्र**– "Kandūkur Bālasūrya Prasādaraw of Devidi House, Vizagapatam, possesses two palmyra-leaf copies of this work and one copy on ordinary paper with the *Sūtra-Vritti*"[3] इति । **श्रीकरभाष्ये** सामान्यतो **निगमागमोपनिषत्पुराणेतिहासप्रमाणानां शिवधर्मग्रन्थानां** अद्याऽलभ्यप्रायाणामपि यदुल्लेखः तदस्य भाष्यस्याऽस्यान्ते अनुबन्धे सूचितः । एतेन अस्य भाष्यकारस्य बहुश्रुतत्वं स्वसमयनिष्णातत्वं चाऽभिव्यज्यते ।

---

[1] श्रीकरभाष्यं (अ. ४ पा. ३ अधि ४, सू. ४).

[2] मुनिचन्द्रवृत्तिः कुम्भकोणे लभ्यते इति प्रतीतिः, डा॥ ज च. नि. कृत'मणिमुकुर'पीठिकायां पृ. ६७. तमे सूचितम् ।

[3] Introduction to the SRĪKARA BHĀSHYA- Edited by C. Hayavadana Rao, Vol. I P. 3. 1936.

यद्यपि **श्रीमद्रेणुकादय** अचार्याः शिवागमप्रसिद्धा प्रस्थानत्रयमधिकृत्यैव भाष्याणि विरचय्य वीरशैवसिद्धान्तं स्थापयामासुरिति भाष्येऽस्मिन् तत्र तत्र उल्लिखितम् । उक्तञ्च– [1]"**सकल शाखाध्येतृभिः वेमाराध्य-उद्भट-राध्य-मरुल सिद्ध-रेवणसिद्धाराध्यादिभिर्**महात्मभिः **कृताद्वेदान्तभाष्यादिग्रन्थात्**" इत्यादिना । अथापि तानि भाष्याणि नाद्यावधि उपलभ्यन्ते ।

**भट्टभास्करस्य श्रीकण्ठाचार्यस्य** च **सूत्रभाष्यप्रभावः, श्रीभाष्यपङ्क्तयश्च श्रीकरभाष्ये** तत्र तत्र यद्यपि परिदृश्यन्ते; तथापि स्वतन्त्र एवायं श्रीपतेः स्थापनामार्गः, यदत्र तत् गम्भीरतरं विज्ञायते । किञ्चास्मिन् भाष्ये **वीरशैवसिद्धान्त**प्रतिपादकस्य **नीलकण्ठभाष्यस्यो**ल्लेखनमनेकशो यद्यपि दृश्यते, न तदप्यधुना दृक्पथमायाति ।

पूर्वोक्तदिशा **आनन्दगिरि**विरचिते **"शङ्करविजये"** [2]**"शिरोलिङ्गधारी जङ्गमपुङ्गव"** इति, **माधवाचार्यकृते "शङ्करदिग्विजये" "शिवसूत्र-ब्रह्मसूत्रभाष्यकर्ता"** इति वर्णितो **नीलकण्ठशिवाचार्य** एव पूर्वोक्त**"नीलकण्ठभाष्य"**कर्तेति विद्वद्भिराद्रियते । **वीरशैवसाहित्ये** तु **नीलकण्ठाऽभिधौ द्वौ आचार्यौ** दृश्येते । तत्राऽद्यस्य **नीलकण्ठशिवाचार्यस्य** आद्येन **आचार्यशङ्करेण** साकं शास्त्रार्थः सम्पन्न इति शङ्करदिग्विजयस्य पञ्चदशसर्गतोऽवगम्यते । उक्तञ्च—

[3]**इति युक्तिशतैः स नीलकण्ठः कपिरक्षोभयदद्वितीयपक्षम् ।**
**निगमान्तवचः प्रकाशयमानं कलभः पद्मवनं यथा प्रफुल्लम् ॥**

इति । एतेनेदमवगम्यते यत् **श्रीनीलकण्ठशिवाचार्यः आद्यस्य श्रीशङ्करस्य** समकालीन इति । एतन्नीलकण्ठभाष्यार्थस्य **सुलभग्रहणार्थं** [4]**अपरो नीलकण्ठः** सरलया गैर्वाण्या गिरा **कारिकाश्च**कार । सैव **क्रियासारनाम्ना** वरीवर्ति । उक्तञ्च तत्रैव–

"**नीलकण्ठशिवाचार्यनाम्ना भाष्यमचीकरत् ।**
**विशिष्टाद्वैतसिद्धान्तप्रतिपादनमुत्तमम् ॥ ३२ ॥**

---

[1] श्रीकरभाष्ये अध्याय. ३. पा. ३ अधि. १, सू ३ द्रष्टव्यः । [2] शङ्करविजये पृ ३७ द्रष्टव्यः ।
[3] शङ्करदिग्विजये स १५, श्लो ४९. [4] क्रियासारकर्तुः अपरनीलकण्ठशिवाचार्यस्य कालः– क्रि. श. १४००

मयाऽपि तस्य तात्पर्यं श्रोतॄणां सुखबुद्धये ।
कारिकारूपतः सर्वं क्रमेणैव निबध्यते ॥ ३३ ॥ इति ।

तमिमं नीलकण्ठशिवाचार्यं [1]"नीलकण्ठभगवत्पाद" इति सगौरवं संस्तुत्य श्रीपतिना [2]"नीलकण्ठभाष्ये" इति तत्कृतभाष्यस्यापि प्रामाण्यमङ्गीकृतम् ।

अन्यच्च श्रीकरभाष्ये जिज्ञासाधिकरणे विषयवाक्यत्वेन स्वीकृतो "[3]यश्छन्दसामृषभो विश्वरूपः........ अमृतस्य देवधारणो भूयासम्" इति लिङ्गधारणप्रतिपादको मन्त्र एव नीलकण्ठभाष्यकारिकारूपे, क्रियासारेऽपि–

[4]"तत्रामृतस्य"वाक्योक्तलिङ्गधारणवैभवे ।
लिङ्गाङ्गसामरस्ये च फलं मोक्षं प्रचक्षते ॥

इति लिङ्गधारणप्रतिपादकत्वेन उद्धृतः । एवमादिभिर्बहुभिरुदाहरणैः श्रीकरभाष्यस्य नीलकण्ठभाष्यानुसारित्वं सम्यगवगम्यते ।

केचित्तु शैवविशिष्टाद्वैतप्रतिपादकं श्रीकण्ठभाष्यमेव नीलकण्ठभाष्यं इति साधयन्ति । नैतद्विचारसहम् । निराकृतश्चास्माभिः सोपपत्तिकं [5]"श्रीशैलपीठदर्शनाख्ये भाषासम्पुटे ।

किञ्च– श्रीकण्ठभाष्ये वीरशैवीयानां आचार्याणां, ग्रन्थानां लिङ्गधारण-षट्स्थलाष्टावरणादीनाञ्च लेशतोऽप्युल्लेखनाभावात् श्रीकण्ठभाष्यं न तल्लिङ्गधारिशक्तिविशिष्टाद्वैतवादिवीरशैवभाष्यं भवितुमर्हति । श्रीकरभाष्ये तु श्रीरेणुकादिप्राचीनाचार्यविरचितानां भाष्याणामवलम्बनं, शिवागमोक्तधर्मस्थापनं च वैशद्येनोपलभ्यते । परम्पराभिमतत्वात् अष्टावरण-पञ्चाचार-षट्स्थलादिविशिष्टतत्त्वप्रतिपादनस्य बहुधा दृष्टत्वात् आन्तर-बाह्यप्रमाणबाहुल्याच्च श्रीकरभाष्यमेव नीलकण्ठभाष्यादनन्तरं वीरशैवसिद्धान्तस्थापनाढ्यमिति निर्णीयते ।

---

[1] श्रीकरभाष्ये– १-१-७-२१. पृ. १४५. द्रष्टव्य । [2] नीलकण्ठभाष्ये– २-२-९-४३ द्रष्टव्यः । [3] तैत्तिरीयशिक्षायां ४-पृ. ११ द्रष्टव्यः । [4] क्रियासरे– उ १–५ तमोऽयं श्लोकः । [5] श्रीशैल पीठदर्शने पृ. १४०–१४२ विवृतोऽयमंशः– ಶ್ರೀಶೈಲಪೀಠದರ್ಶನ (ಬೆಳ್ಳಿಹಬ್ಬದ ಸ್ಮರಣಸಂಪುಟ– 1967, 49 ಹ. ಬ. ಸಮಾಜ ರಸ್ತೆ, ಬಸವನಗುಡಿ, ಬೆಂಗಳೂರು).

## भाष्यकारस्य कालो देशश्च

श्रीपतिपण्डिताराध्यस्य कालविषये बहुधा विचिकित्सा सञ्जाता। तत्र समाधेयांशः संक्षिप्यात्र निरूप्यते। [1]श्रीकरभाष्यस्य जन्माद्यधिकरणावसाने भट्टभास्करस्य, प्रथमाध्यायप्रथमपादे २१ सूत्रभाष्ये नीलकण्ठभगवत्पादस्य, द्वितीयाध्यायप्रथमपादे २२ सूत्रभाष्ये श्रीकण्ठशिवाराध्यस्य द्वितीयाध्यायद्वितीयपादे ४२ सूत्रभाष्ये रामानुजस्य च नामग्रहणात् अयं श्रीपतिः श्रीनीलकण्ठ-भट्टभास्कर-श्रीकण्ठ-रामानुजादिभ्यः अर्वाचीन' इति निश्शङ्कं निर्णीयते। भट्टभास्करादीनां आचार्याणां कालनिर्णयमधिकृत्य विदुषामाशयोऽयम्–

"भट्टभास्करस्तु क्रि.श. ९०० शताब्दीय इति राद्धान्तः। उक्तञ्च डा॥ एस्. राधाकृष्णमहोदयेन "[2]ब्रह्मसूत्रभाष्यप्रणेता भास्करः क्रि.श.९०० अब्दे आसीत्; यतोऽस्य मतं क्रि.श. ९८० अब्दीये कुसुमाञ्जलिकारेण उदयनाचार्येण विमर्शितम्।' इति विलिखितम्।

श्रीकण्ठाचार्योऽपि क्रि.श. १०६४ अब्देऽवर्तत; इति निश्चीयते; यतः अघोरशिवाचार्य(क्रि.श.११५४)कृते महोत्सवविधौ श्रीकण्ठस्य स्वप्रपितामहत्वकथनाच्च। श्री एस्.एस्. सूर्यनारायणशास्त्रिविरचिते "शिवाद्वैत आफ् श्रीकण्ठ" (Shivadwaia of Sreekantha) नाम्नि ग्रन्थे तथैव प्रतिपादितम्।

[3]रामानुजाचार्यस्तु क्रि.श.१०१७ अब्दे बभूवेति सर्वश्रुतम्। अतोऽयं श्रीपतिः नीलकण्ठ-भास्कर-श्रीकण्ठ-रामानुजादिभ्यः अनन्तरमेव श्रीकरभाष्यं जग्रन्थेति निश्चप्रचम्।

प्रायो वीरशैवग्रन्थेषु "श्रीपतिपण्डित-मञ्चनपण्डित-मल्लिकार्जुनपण्डिताः" इति पण्डितत्रयप्रशंसा श्रूयते। क्रि. श. ११९५ तमाब्दीयः पाल्कुरिकि सोमनाथकविः स्वकीय-आन्ध्रपण्डिताराध्यचरितस्य दीक्षाप्रकरणारम्भे–

---

[1] श्रीकरभाष्यप्रथमसम्पुटे चैतस्मिन् पृ. ६७, १४५, ४०० भट्टभास्कर-नीलकण्ठ श्रीकण्ठ-शिवाराध्य-रामानुजानां नामनिर्देशः दृश्यते। [2] Indian Philosophy vol. II p. 670. by Dr. S. Radhakrishn; [3] श्रीकरभाष्यचतुस्सूत्री (पीठिका पृ ५) पं. चिदिरेमठीयवीरभद्रशर्मसम्पादितम्। (१९५६).

"[1]तज्ज्ञेता शिवसद्भक्तिजनिकर्तेति भूजनैः ।
पूज्यमानः प्रसिद्धोऽभूत्पुरा श्रीपतिपण्डितः ॥ ७६ ॥

इत्यादिना पण्डितत्रयं संस्मरति । **मल्लिकार्जुनपण्डितस्तु** पाल्कुरिकि सोमनाथात् पूर्व तमेऽब्दे आसीदीति कर्णाटकान्ध्रचारित्रज्ञैः निर्णीतम् । स्वयं **मल्लिकार्जुनपंडितोऽपि "शिवतत्त्वसारमु"** नामके [2]**स्वकीय आन्ध्रपद्यप्रबन्धे श्रीपतिपंडितस्य** अग्निस्तम्भनमहिमानं पण्डितप्रकाण्डस्य तस्य शास्त्रार्थपाटवं च प्रशंसति । [3]कथामिमां पाल्कुरिकि **सोमनाथोऽपि** ग्रथयामास । ऐतिह्यमिदं **गुब्बि मल्लणार्यकृते 'भावचिन्तारत्ने' "काशीनाथुनि वीराराध्यकृते "धर्मगुप्ताभ्युदये"** च प्रस्तूयते ।

**किञ्च– श्रीपतिपण्डितः अनन्तपालस्य राजस्थाने** शिवभक्तप्राशस्त्यं स्थापयामासेति **पा. सोमनाथकृत**बसवपुराणोक्तिः कमपि प्राचीनमितिहासं स्मारयति । **अनन्तपालो** नाम कश्चन राजा [4]**चालुक्यत्रिभुवनमल्लदेवसामन्तः सन् विजयवाटिका** (Bezwada)–**गुण्टूरु-कर्नूल्** आदिमण्डलमंडितं आन्ध्रदेशं, **बनवास्यादिकर्णाटकप्रदेशं** च क्रि. एकादशतमे शताब्दे पालयामासेति [5]शिलाशासनेषूपलभ्यते ।

श्रीपतिपण्डिताराध्यनिवासः

**श्रीपतिपण्डितभगवत्पादाचार्यस्य** निवासः **विजयवाटिका** नगर एवासीदिति तत्रस्थाच्छिलाशासनादवगम्यते । विजयवाडनगरस्थिते **श्रीमल्लेश्वरदेवायतने पल्लकेतराज**विलिखितस्य [6]शिलाशासनस्यास्य सार एवं संगृह्यते–

---

[1] श्री गुरुराजकविकृतात् आन्ध्रभाषामयमल्लिकार्जुनपण्डिताराध्यचरितात् परिवर्तिता कृतिः ।

[2] ఒక్కడె దైవము శివుఁడని, యొక్కము సేయుటకు మాడిచె నిప్పులు మీఁదన్ ।
నృక్కగ శ్రీపతి పండితుం, డక్కజముగ విజయవాడ నలజడిమి, శివా ॥
(శివతత్త్వసారము ౪౦౬)

[3] आन्ध्रबसवपुराणस्य सप्तमाश्वासे द्रष्टव्योऽयमंशः ।

[4] चालुक्यत्रिभुवनमल्लदेवस्य राज्यशासनकालः – क्रि. श. ११ शतके (१०७२)

[5] i) Inscriptions of Madras Presidency vol. II No. 305 गुंटूरु शासनम् ।
ii) South Indian Inscriptions of Govt. of India vol. IV p. 489. शासनम् ।
iii) Epigraphia Carnatica vol. VII शिकारिपुर No. 13, 98, 99, 131, 149 शासनानि

[6] Inscription M. E. R. No. 536

**शासनसारः**– अत्रस्थमल्लेश्वरस्य **मिने** पूर्वमगस्त्येन **जयेशान** नाम कृतम्। तदनु **अर्जुनेन** कृतमल्लयुद्धत्वात् **मल्लेश्वर** इत्यभिधा समागता। ततो विजयवाडनगरे ५१४ तमे शालिवाहनशके (क्रि. श. ५९२) **माधववर्मा** राजा बभूव। यः खलु **तिन्त्रिणीपल्लवोपजीविन्याः पुत्रस्य** प्राणापहर्त्रे **स्वपुत्रायापि मरणदण्डनं** विधाय आत्मनो **न्यायपक्षपातित्वं** प्रकटयामास। तदा **मल्लेश्वरः** धर्मस्वरूपममुं **माधववर्माणं** स्वदर्शनानुग्रहेण, **मृतयोः प्राणप्रदानेन** च धन्यतमं चकार। तदनन्तरं **श्रीपति-पण्डिताराध्यो** वीरमाहेश्वरः "**देवर्षिभ्योऽपि शिवभक्ता एवाधिकाः**" इति स्वप्रतिज्ञा-**सिद्धये चीनाम्बरेऽग्निं सङ्गृह्य शमी**शाखायां **बबन्ध**। ततो **मल्लेश्वरः** प्रत्यक्षोऽभवत्। **एवंविधेनैव, मल्लेश्वर**माराध्य **प्राचीनास्सर्वे नृपाला** रेजिरे। तदनन्तरं **भारद्वाजगोत्रः, काञ्चीपुरेश्वरस्य पल्लववंशीयमहाराजस्य** पादसेवकः, **वेङ्गीचालुक्य**सामन्तः, **इक्कुनूल्लदेश** (ग्राम ?) परिपालकः, **बेजवाडमल्लेश्वर**पादाराधकः **काटि**वंशोद्भवः, **पल्लकेत**भूपाल.... (**श्रीमल्लेश्वरस्य नित्यपूजाभोगार्थं** परिहृतसर्वकरग्रहां **भूमिं समर्पयामास ?** इति। अस्य शासनस्य मूलपाठः पञ्चम-षष्ठतमयोरनुबन्धयोः द्रष्टव्यः।

[1]"अनेन **शासनवृत्तान्तेन श्रीपतिपण्डितस्य अग्निस्तम्भन**महिमा **विजयवाटि-कायामेव** संवृत्तेति पर्यवस्यति। **श्रीपतिः पल्लकेतात्** प्राचीनः। शासनान्तिम-भागस्य खण्डितत्वात् शासनलेखनकालो न ज्ञायते यद्यपि तथापि लिपिशास्त्रमर्यादया, **चालुक्य**शासनानां क्रि. श. १२ तमशताब्दानन्तरं अदर्शनाच्च शासनमिदमपि द्वादश-शताब्दीयमिति सम्भाव्यते। अतो **मल्लिकार्जुनपण्डिताराध्य-पाल्कुरिकिसोमनाथ-पल्लकेतराजादिभिः** संस्मृतः **श्रीपतिपण्डितः** तेभ्यः प्राचीन इति पूर्वोदाहृतप्रमाणैः क्रि. श. १०७० तमाब्दनिकटस्थ इति च निर्धार्यते।"

सर्वमिमं प्रमाणसमवायं समालोच्यैव श्री [2]**टि. एस्. नारायणशास्त्रिमहोदयः "ब्रह्म-सूत्रभाष्यकर्तॄणां** मध्ये [3]शङ्कर-रामानुज-मध्वानां च कालं निश्चित्य लेखं प्रकाशयामास।

---

[1] श्रीकरभाष्यं चतुस्सूत्री वाराणसी प्रकाशनम् पृ ९.

[2] The Indian Review vol. 16 May 1915 No. 5 श्रीकरभाष्यचतुस्सूत्री (वाराणसी-प्रकाशनम्) १९३६ "वास्तविके" ६ ७ पृ.।

[3] शङ्कर-रामानुज-श्रीपतीनां मध्वाचार्याणां च कालः– क्रमशः क्रि.श. ८००, १०१७, १०७२, ११९९

## श्रीकरभाष्यरचनाकालविषये सन्देहनिरसनम् ।

अत्र वेङ्गलूरुनगरनिवासिना मध्वमतानुयायिना दि॥ हयवदनरायमहोदयेन [1]सम्पाद्य प्रकटिते श्रीकरभाष्ये एकत्र [2]"मध्वद्वैतक्षपणकतार्किकादयः" इति । अन्यत्र "मध्वादिकेवलभेदवादिनां इति, अपरत्र "भागवतपाञ्चरात्रमध्वादिवैष्णवमतेषु इति, "मध्व"पदसमावेशो दृश्यते । परन्तु श्रीकरभाष्यमातृकारूपेषु लिखितपुस्तकेषु च न कुत्रापि मध्वपदमिदं दृश्यते । अन्यच्च– "श्रीहयवदनराव्महोदयाय भाष्यस्यास्य सम्पादनावसरे लिखितरूपमूलमातृकाः प्रदत्तवन्तः देवडी जमीनुदार् महोदया अपि मूलमातृकामवलोक्य तत्र न कुत्रापि मध्वशब्दोऽस्तीति मह्यमलिखन्" इति डा॥ [3]चिलकूरि नारायणराव् महोदयेन स्पष्टीकृतम् । एतेन "मध्व"शब्दमिममवलम्ब्य [4]मध्वाचार्यकालात् श्रीपतेः अर्वाचीनत्वं आरोपयितुं प्रयत्नः कृत इति ज्ञायते ।

अन्यच्च– "[5]मध्वद्वैतक्षपणके"ति वाक्ये मध्वशब्दं विनापि 'द्वैतक्षपणके' त्यादिवाक्यस्य स्वरसतः समन्वयो भवति । "भागवत-पाञ्चरात्र-मध्वादि" इत्यत्रापि मध्वशब्दः अप्रकृतः यतो 'मध्वत्वं' भागवत-पाञ्चरात्रादिवत् न मतवाचकम् । अतः अत्र मध्वशब्दः प्रक्षिप्तः । –

अपरश्च– शङ्कर-रामानुजभाष्यवाक्यानि यथा श्रीकरभाष्ये यथामूलं दृश्यन्ते, न तथा मध्वभाष्यवाक्यमेकमपि अत्र लभ्यते । यद्यपि भाष्येऽस्मिन् द्वैतमतनिरासो विद्यते, तथापि न तन्मध्वाचार्योक्तम्; किन्तु प्राचीनद्वैतमित्यवगन्तव्यम् ।"

## श्रीकरभाष्यस्य श्रीपतिकर्तृकत्वे आक्षेपद्वयम् तन्निरसनं च

तत्राद्यस्य कर्ता डा॥ एस्. श्रीकण्ठशास्त्रिमहोदयः । तेन "श्रीकरभाष्यस्य [6]कालनिर्णयाख्ये (The date of Śrīkara Bhāṣya) आङ्ग्लप्रबन्धे एवमुक्तं– "अतः प्रकृतं

---

[1] १९३६ तमे मुद्रित ज. कोशे तदानींतनतमे ग. A. हस्तलिखिते कोशे च (१९२३) द्रष्टव्यः । [2] मध्वपदसमावेशः श्रीकरभाष्ये विविधस्थलेषु दृश्यते यथा– २-३-१२-१८ तथा २-३-१५-४० तथैव २-२-८-४१ [3] श्रीमल्लिकार्जुनपण्डिताराध्यचरितोपोद्घातः (डा॥ चि. नारायणराव् सम्पादितः) पृ. ३०. १९३९. [4] मध्वाचार्यकालः– १११९. [5] श्रीकरभाष्यचतुस्सूत्री, वाराणसी प्रकाशनम् (१९५६ ई.) पृ. १० वास्तविकम् [6] Reprint from the Annals of the Bhandarkar Oriental Research Institute vol. XIX. part II. P. 147-160. Pub. 1938.

भाष्यं प्रायः मूलश्रीकरभाष्यं न भवेत्; न च क्रि. श. १२०० शताब्दीयेन श्रीपति-नाऽपि रचितं स्यात्। किन्तु केनापि अज्ञातकर्तृणा क्रि.श. १३०० शतकस्यान्त्यपादे स्थितेन श्रीपत्यङ्कितं पुरातनं भाष्यं परिष्कृत्य द्वैतिनामाक्षेपा निराकृताः" इति।

आक्षेपस्यास्य उत्तरं तैरेव ततः षोडशवर्षेभ्योऽनन्तरं सम्यग्विमृश्य तद्रचिते "[1]भारतीयसंस्कृत्याख्ये" ग्रन्थे कर्णाटकभाषायां एवं विलिखितम्- "श्रीपतिपण्डितः श्रीकरभाष्ये (अथ शब्दव्याख्यानावसरे) वीरशैवमततत्त्वानि सङ्क्षेपतो न्यरूपयत्- 'तान्त्रिक-तप्तलिङ्ग-डमरु-शङ्ख-चक्राङ्कननिषेधपूर्वक-श्रौतभस्म-रुद्राक्षधारणपूर्वक .... निगमागमोभयवेदान्त-प्रतिपादितभक्ति-क्रिया-ज्ञानकाण्डत्रयविहितस्थूल-सूक्ष्म-चित्-अचित्प्रपञ्चप्रकाशकपरस्थल-परशिवसाक्षात्कारकारण-बहुजन्मकृत-शिवार्पित-यजन-याजन-तपोध्यानाद्यनेकपुण्यापूर्वफलकशरीरत्रयगतमलत्रयविध्वंसककारुण्यकल्याणकैवल्यविभूतित्रयप्रदायकअष्टावरण-पञ्चाचार-सद्गुरुकरुणा-कटाक्षलब्ध-शक्तिपाताद्यवच्छिन्न-परशिवेष्टलिङ्गधारणात्मक-पाशुपत-दीक्षाऽनन्तर्यं' इति अथ शब्दार्थो निर्णीयते" इति।

[2]मैसूरुविश्वविद्यालयाश्रये प्रकाशिते विश्वकोशेऽपि- "वीरशैवमतं रेवणसिद्ध-मरुलसिद्ध-पण्डिताराध्य-एकोराम-विश्वाराध्याख्यपञ्चाचार्यैः संस्थापितमिति वीरशैव-ग्रन्थेषु निरूपितम्। श्रीपतिः ब्रह्मसूत्राणामुपरि शिवपरतया भाष्यं विलिख्य वीरशैवमत-सिद्धान्तं प्रख्यापयामास।

डा॥ चिलुकूरि नारायणराव् महोदयस्तु "[3]श्रीकरभाष्यं श्रीपतिपंडितकर्तृकमित्यवैमि; श्रीपतिपंडितोऽपि क्रि. श. द्वादशशताब्दान्नार्वाचीनः" इत्युद्घोषयामास।

विमर्शाग्रेसरबिरुदाङ्कितो लिं॥ बण्डारु तम्मय्यमहोदयस्तु [4]श्रीपतिपंडितस्य कालं क्रि.श. १०७२ इति उररीकृत्य श्रीकरभाष्यं श्रीपतिपंडितकर्तृकमेवेति अभिप्रैति। एवं श्रीकर-

---

[1] भारतीयसंस्कृतिः (डा॥ एस् श्रीकण्ठशास्त्रिविरचिता) मैसूरु विश्वविद्यालयप्रकाशनम् १९५४, पृ. १३६. [2] कन्नड विश्वकोशः (पृ ११७-चतुर्थसम्पुटम्) मै. विश्वविद्यालयप्रकाशनम्. १९७२ [3] मल्लिकार्जुनपण्डिताराध्यचरितस्योपोद्घाते (पृ. ३१-३२) आन्ध्रग्रन्थे। [4] "पाल्कुरिकि सोमनाथकवि" (आन्ध्रप्रबन्धे) पृ. १२४ (१९४८) शिवधर्मग्रन्थमाला, सिकिंद्राबाद्।

भाष्ये क्रि.श. १०१७-११२० तमाब्दस्य **रामानुजीय** श्रीभाष्यखण्डनस्य विद्यमानत्वात्, क्रि. श. द्वादशशताब्दीयानां **बसवादिशिवशरणानां** तत्प्रतिपादितपरिष्कृतप्रगतिपरवीरशैव-सामाजिकाचारविचारादीनां च तत्रादर्शनात् **श्रीपतिः** बसवावतारात् पूर्वमेव श्रीकरभाष्यं **व्यरचयदिति** अस्माकमाशयः।

**द्वितीयस्तु आक्षेपः** पुनराक्षेपचतुष्कमुत्थापयति! (क) तत्र प्रथमेन– शासनोक्तः **श्रीपतिः**– "[1]**अन्त्यजोऽपि शिवभक्तः देवर्षिभ्योऽपि अधिकः**" इति सिद्धान्तयितुमेव **अग्निस्तम्भनमहिमानं** प्रदर्शयामास; **तत्पुत्रस्तु "गोकर्ण"**ख्यः पञ्चमं (अन्त्यजं) द्विजं चकार; प्रस्तुते [2]**श्रीकरभाष्ये तु "ब्रह्म-क्षत्रिय-वैश्यानां** उपनयसंस्कार विशिष्टत्वात् **ब्रह्मविद्याधिकारः,** न **शूद्राणामिति शूद्राणां श्रुतिस्मृतिपुराणेतिहास-** सिद्धानामपि **ब्रह्मविद्याधिकारस्य निषिद्धत्वात्** किमन्येषां वक्तव्यम्" "[3]न शूद्रस्य ब्रह्मविद्याधिकारः" इति कथनात्; इति; प्रतिपादनात् (ख) **द्वितीयाक्षेपतः–** भाष्ये तत्र तत्र "तान्त्रिककृतप्तलिङ्ग-शूल-डमरु-शंखां-चक्रकनिषेधपूर्वक-श्रौत-**शिखा-सूत्र**-भस्म-रुद्राक्ष- लिङ्ग-धारणस्वीकारात्, "[4]**हरिकेशायोपवीतिने**" "**रुद्रशिखा**" इत्यादौ भस्मरुद्राक्षादि-वच्छिवस्यैव **शिखासूत्रधारणश्रवणा**च्छिवलांछन" मित्यादिवर्णनात्–

> [5]"**मुखे मन्त्रो हृदि ध्यानं मस्तके लिङ्गधारणम्।**
> **शिखा सूत्रं तथा भस्म इति ब्राह्मणलक्षम्॥**" इति

**गौतमस्मृतेः** इति [6]**वीर**शैवलक्षणकथनावसरे निदर्शितत्वात्; (ग) [7]**तृतीयाक्षेपतः–** एकादशीप्राशस्त्यस्य कथनात्; (घ) [8]तुरीयाक्षेपतस्तु गायत्रीवैशिष्ट्यस्य वर्णनाच्च प्रस्तुतं **श्रीकरभाष्यं** न शासनोक्तश्रीपतिकर्तृकं **इति।**

---

[1] मल्लिकार्जुनपण्डिताराध्यचरितोपोद्घातः पृ. ६८. [2] श्रीकरभाष्ये १-२-१, पृ. १९६. [3] श्रीकर भाष्ये १-३-९-३४; पृ. ३१९. [4] तै. सं. ४-५-२. [5] श्रीकरभाष्यं– १-२-१-४. पृ. २०१ [6] श्रीकरभाष्य १-२-१-४ पृ. २०९. [7] श्रीकरभाष्य १-१-३-३. पृ. ७८ [8] ब्र. सू. १-१-२६. पृ. १६०

**सत्यम्**– "**शूद्रस्य न ब्रह्मविद्याधिकारः** इत्यादिविचारः न **वीरशैवसिद्धान्त-सम्मतः** ; यतो **निराकृतोऽस्माभिः** [1]**अपशूद्राधिकरण मधिकृत्य**ोक्तयो संस्कृत-कर्णाटक प्रबन्धेयोः ।

**समर्थितश्च– उमचिगी** शङ्करशास्त्रिमहोदयैः **ब्रह्मसूत्रवृत्तिकारैरपि "अपशूद्राधि-करण"**व्याख्यानावसरे–

"ननु अस्मिन्नधिकरणे (क्रियासारस्य) **कारिकाटीकाकारेण, निर्वाणमन्त्रिणा श्रीकर-भाष्यकारेण श्रीपतिपण्डितेन** च शूद्रादीनां संस्काराभावस्य दर्शितत्वात् शिवदीक्षाऽऽ-सम्पन्नत्वात् तदभिप्रायानुसारेणौचित्यात् किं तदभिप्रायविरुद्धव्याख्यानेनेति" इत्याशङ्कायाः वीरशैवसिद्धान्तसम्मतं स्पष्टमुत्तरं तत्रैवोक्तम् **यथा– "निर्वाणमन्त्रिणा** कारिकाकारतात्पर्य-गन्धलेशस्यापि अज्ञातत्वात् **क्रियासारस्य** साकल्येनाऽविचारितत्वात् मायावादिभिरिव शूद्रादिसंस्कारानर्हत्वं दर्शितम् । **श्रीकरभाष्याकारेणापि** पूर्वापरसूत्रपर्यालोचनाऽभावादेव दर्शितमिति मद्व्याख्यानपरिशीलनचतुरैः ज्ञायत एव" इति ।

एवं [2]उत्तरत्र **प्रमिताधिकरणेऽपि "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इति** सूत्रेण मनुष्यमात्रस्य ब्रह्मविद्यायामधिकारस्य सूत्रकाराभिप्रेतत्वेऽपि केषांचिदधिकारः केषां-चिन्नेति कथनं रागद्वेषप्रयुक्तमिति वक्तुं शक्यते" इति ।

### यथाक्रमं तदाक्षेपसमाधानानि

(क) वस्तुतस्तु– अस्मिन् विषये न किञ्चिदपराद्धं सर्वज्ञशिखामणिना आचार्यपुङ्गवेन **श्रीपतिपण्डितभगवत्पादाचार्येण** । आक्षेपस्तु तत्कृतभाष्यस्यापि साकल्येनानवलोकनपरिणामः इत्येव वक्तुं शक्यते ; यतो भाष्यकारेण अपशूद्राधिकरणे शूद्राणां न ब्रह्मविद्याधिकार इति यत् सूचितं न तन्मायावादिभिरिव; किन्तु सनातनवैदिकसम्प्रदायमनुसृत्य । तत्र प्रयुक्तं शूद्रपदं अधिकृत्य "**वेदाधिकारनिर्णयप्रकरणे, अपशूद्राधिकरणसमीक्षावसरे** च

---

[1] 'चन्द्रिका' श्रीमन्महाराजसंस्कृतमहाविद्यालयवार्षिकसंचिका (१९६७ पृ. १४) "प्रबुद्ध-कर्णाटकम्" (मैसूरु विश्वविद्यालयस्य कर्णाटक त्रैमासिकी १५१-१६१- (प्लवङ्ग सं॥ आश्वयुज) सं. ४९. संचिका.२. १९३-१९६७. [2] श्रीकरभाष्यम् पृ. ३०४.

सम्यक् विचारितमेव । अतस्तत्रोक्तदिशा "......पाठकाधमत्वलक्षणलक्षितत्वविशिष्टाज्ञत्व-मूर्खत्वादियुक्तत्वमेव [1]**शूद्रपदप्रवृत्तिनिमित्तत्वम्"** इति सिद्धम् । तेन तादृशाय पुरुषाय वेदस्य ब्रह्मविद्याया वा बोधनेन उपदेशेन वा न किमपि प्रयोजनम्; प्रत्युत आनर्थक्यमपि संभवतीति **पाणिन्यादिभिर्महर्षिभिरुद्घोषितत्वस्य पूर्वमेव** निवेदितत्वात् न तत्र भाष्यकारः अपराध्यति ।

अन्यच तत्रैव **श्रीकरभाष्ये "[2]प्रमिताधिकरणे "हृद्यपेक्षया तु मनुष्याधिकारत्वात्"** इति सूत्रभाष्ये इतरभाष्यसाधारण्येन "त्रयाणामेव अग्निसम्बन्धश्रवणात् त्रयाणामेव वर्णानां ब्रह्मविद्याधिकारः इति निर्दिश्य, उत्तरत्र किञ्चेत्यादिना— **"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" "अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तो वैदिके कर्मण्यधिकारी"** इति श्रुति-सूत्रनिर्दिष्टशक्तत्वार्थित्वाद्युपनयनादिशास्त्रस्य मनुष्यनियताधिकारलक्षणविषयत्वात् । **"यं त्वं मनुष्याय हिततमं मन्यसे"** इत्यादौ मनुष्याणामेव हिततमत्वोपदेशात् तिर्यगादावर्थित्वादिधर्माणामसम्भवात् शरीरातिशयेन मनुष्याणामेवाङ्गुष्ठमात्रहृदयपुण्डरीकसम्भवाच्च तेषामेव ब्रह्मविद्याधिकारित्वम् । तस्मादुपासनाशास्त्रविधेः मनुष्यहृदयं यत्परिमाणं तदवच्छिन्नस्वरूपं परमकारुणिकः परशिवः प्राप्नोति" इत्युक्तम् ।

तत्र शक्तत्वार्थित्वाद्युपनयनादिशास्त्रस्य मनुष्याणामेव विहितत्वात्, तद्विज्ञानार्थमेव गुरुसमीपाभिगमनस्य युक्तत्वात्, शिष्यवत्सलेन गुरुणा मनुष्याणामेव निःश्रेयसरूपशिवदीक्षायाः हिततमत्वेन अभिकांक्षणीयत्वात्, शरीरातिशयेन मनुष्याणामेव अङ्गुष्ठमात्रहृदयपुण्डरीक-सम्भवात् अङ्गुष्ठमात्रहृदयपुण्डरीकस्यैव लिङ्गरूपत्वेन श्रुतौ वर्णनात् तदवच्छिन्नस्वरूपं परम-कारुणिकः परमशिवः शिष्यं इष्टादिलिङ्गरूपेण प्राप्नोतीति कथनाच्च ब्रह्मधारणस्य ब्रह्म-विद्याधिकारित्वस्य च मनुष्यमात्रस्यैवेति सिद्धम् । समर्थितञ्च मनुष्यहृदयपुण्डरीकस्य लिङ्गरूपत्वं **अप्पय्यदीक्षितेनापि स्वीय पञ्चरत्नस्तुतौ—**

---

[1] श्रीकरभाष्य पृ. २३ (शूद्रपदनिर्वचनावसरे). [2] श्रीकरभाष्यं— १.३.७.२५. एतद्ग्रन्थस्य पृ. ३०५.

"[1]अत एव ब्रह्ममीमांसायां अपरिच्छिन्नस्य परब्रह्मणः कथमङ्गुष्ठमात्रत्व-मित्याशङ्क्य "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" इति सूत्रेण मनुष्यहृदयाब्ज-कोशानामङ्गुष्ठपरिमाणत्वोक्तिः मनुष्याधिकारत्वाच्छास्त्रस्येति तत्समर्थनं कृतम् । हृदयाब्ज-कोशान्तरवकाशलब्धाङ्गुष्ठपरिमाणस्य लिङ्गाकारत्वमस्तीति तस्य लिङ्गरूपत्व सिद्धिः" इति ।

किञ्च— वीरशैवसम्प्रदायरीत्या तु शक्तिपाताद्यवच्छिन्नश्रीगुरुकरुणाकटाक्षलब्धलिङ्ग-धारणात्मकशिवदीक्षासम्पन्नास्सर्वे मानवाः जातिवर्णाश्रम-लिङ्गभेदं विनैव ब्रह्मविद्याधि-कारिण इति उत्तरत्र भाष्ये सम्यगुपपादितं भाष्यकारेण । उक्तञ्च [2]विधुराधि-करणे—

"दैवात्पुराकृतप्रारब्धवशेन पत्नीवियोगे सति अन्तरा ब्रह्मचर्य-यत्याश्रमयोर्मध्ये विद्य-मानानामनाश्रमिणां स्नातकविधुराणामपि शिवस्य परब्रह्मणः ध्यान-धारण-पूजा-नमस्कार-श्रवण-मननात्मकब्रह्मविद्यायामधिकारस्सम्भवति । कुतः? "तद्दृष्टेः" मनु-शौनकादि-स्मृति-पुराणेष्वपि तेषां तदधिकारोऽस्तीति सर्वेषामाश्रमिणां ब्रह्मविद्याधिकारोऽस्ति । "…. दृश्यते हि रैक्व-भीष्म-संवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वं न चाश्रमधर्मैरेव विद्यानुग्रह इति वक्तुं शक्यम् । "यज्ञेन दानेन तपसा नाशकेन" इति दानादीना-माश्रमेष्वनैकान्तिकानामप्यनुग्राहकत्वश्रवणात् …. तथा अनाश्रमिणामपि ब्रह्मविद्यादर्शनात् आश्रमनियतैः जपोपवासदेवताराधनादिभिः विद्यानुग्रहः शक्यते कर्तुम्" ।

एवं तस्मिन्नेवाधिकरणे "अतस्त्वितरज्यायो लिङ्गाच्च" ॥ ३९ ॥ इति सूत्रभाष्ये— "यतः अमृतस्य देवधारणो भूयासं", "शरीरं मे विचर्षणं" इत्यादि । "इतर-वत्" चतुराश्रमधर्मातिरिक्ताश्रमानाश्रमसाधारणलिङ्गधारणवत् "अतः" आश्रमानाश्रम-साधारण्येन सर्वेषां मुमुक्षूणां ब्रह्मविद्याधिकारः ज्यायः श्रेष्ठः ; कस्मात्? लिङ्गात् ; 'निधनपतये नमः' इत्यारभ्य लिङ्गस्य सर्वात्मकत्वमुक्त्वा, 'एतत्सोमस्य सूर्यस्य' इति श्रुतौ लिङ्गरूपस्य परब्रह्मणः पवित्रत्वकथनात् आश्रमिणामनाश्रमिणामपि तद्विद्याधि-कारमनवद्यम्" इत्युक्तम् ।

---

[1] पञ्चरत्नस्तुतिः पृ. १३. [2] ब्र सू. ३-४-१०-३६.

अत्र "**आश्रम**"पदेन वर्णोऽपि लक्ष्यते । तेन **प्राकृतवर्णा**श्रमोचितोपनयन-संस्कारिणो **द्विजाः** लक्ष्यन्ते । **अनाश्रमपदेन** "दैवात्पुराकृतप्रारब्धवशेन पत्नीवियोगे सति अन्तरा, ब्रह्मचर्य-यत्याश्रमयोर्मध्ये विद्यमानस्नातकविधुरा **रैक्व-भीष्म-संवर्ता**दयश्च लक्ष्यन्ते । तथा "**अतस्त्वितरज्यायो लिङ्गाच्चेति** सूत्रभाष्यगत **चतुराश्रमधर्मातिरिक्ता-श्रमानाश्रम**साधारणोऽस्मानपूर्वक-आश्रमानाश्रमसाधारण्येन सर्वेषां मुमुक्षूणां ब्रह्मविद्याधिकारः" इत्यनेन **अप्राकृत-अत्याश्रमत्वस्य** कथनात् पूर्वोक्तदिशा शक्तिपाताद्यवच्छिन्नश्रीगुरुकरुणा-कटाक्षरुद्रलिङ्गधारणात्मकमहापाशुपतदीक्षादीक्षितास्सर्वे **मानवाः ब्रह्मविद्याधिकारिण** इति कण्ठरवेणैवोद्घोषितम् ।

एवं उत्तरत्रापि [1]"**मौनाधिकरणे**" **पूर्वपाशुपत-महापाशुपतयोः** वैशिष्ट्यं निर्दिश्य अत्याश्रमस्वरूपमेवमभिहितम्– "....**तस्मात्** द्वादशाब्दपरिमितपाशुपतव्रतस्य स्वाभीष्टकाम्यफलहेतुत्वम् ; यावज्जीव(महा)पाशुपतव्रतस्य **हि** पाशनिवृत्तिपूर्वकशिवत्वप्राप्ति-रूपनित्यफलकमिति निश्चीयते ।

**अत्याश्रमी निराभारष्षट्स्थली जङ्गमश्चरः ।**
**शिवयोगयतिर्वीरो नान्येषु न कदाचन ॥**

**इति** वीरागमे दर्शनात् अत्याश्रमशब्दस्य शैवदीक्षावच्छिन्नचतुर्विधाश्रमपरसाधारण्येऽपि त्यक्तै-षणात्रयनिराभारवीरशैवे रूढः...." ब्रह्मविद्याधिकारत्वं सर्वाश्रमिणां युक्तम् ।"

अत्र **अत्याश्रमिणो वीरशैवा** इति सिद्धम् । अत्याश्रमे स्थितानां सर्वेषां मानवानां ब्रह्मविद्याधिकारं प्रसाध्य इतरभाष्यवैलक्षण्येन व्याख्यातॄणामाचार्यपादानां परमौदार्यं कथं वा विस्मर्तुं शक्यते विचारशीलैः ! अत एवोक्तं [2]**मुक्तिफलाधिकरणे**–

"**भल्लाण- चिरुतोण्ड-चारमन-वेमारब्ध्योद्भटाराध्यादीनां** शरीरेण, राज्येन परिवारेण ग्रामेण शिवलोकप्राप्तिर्दर्शिता" । अत्र ब्रह्मप्राप्तौ वर्णाश्रमादीनां कथं परि-गणनं कर्तुं शक्येत ? अन्यच्च सर्वमिदं **शिवभक्त्याः** महिमा इति तत्रैव सवर्णितञ्च ।

---

[1] ब. सू. ३-४-१. [2] ३-४-१७-५२.

देव-मनुष्याणामपि शरीरभेद-लोकभेद-महिमभेददर्शनेऽपि भक्तिप्राधान्ये [1]सर्वेषां मुक्तिस्समानमेवेति सिद्धम् ।"

अत एवैतैः आचार्यपादैः शिवभक्तानां श्रैष्ठ्यं प्रकाशयितुं अग्निस्तम्भनादिमहिमानं अनन्तपालराजास्थाने प्रदर्शितमिति शिलाशासनादिषु प्रदर्शितमद्यापि सुप्रसिद्धम् ।

ख) शिखासूत्रधारणविषये तु एवमभिधीयते— बसवपूर्वयुगे तावत् केषाञ्चित् वीरशैवानां इष्टलिङ्गेनसाकं शिखा-सूत्रधारणस्य न तादृशविरोधो दृश्यते ; यथा बसवावतारानन्तरकाले इति सामान्यतो ज्ञायते । वीरशैवसिद्धान्तस्य, तदाचारविचाराणां च प्रगतिपरत्वात् तदा सर्वे विचारपरा जनाः वीरशैवदीक्षामङ्गीचक्रुः । तेषु ज्ञानिनां सुसंस्कृतानां ब्राह्मणानामेव प्राधान्यमासीत् । तदानीमान्ध्र-कर्णाटकादिप्रान्तेषु राजगुरुस्थाने विराजमानेषु काळामुखेषु च लिङ्गधारणमासीदिति पूर्वमेवावेदितम् । तेषु आराध्यब्राह्मणाभिधेयः कश्चन ब्राह्मणसम्प्रदायः प्रमुखः । श्रीपतिपंडित-मञ्चनपंडित-मल्लिकार्जुनपंडिताराध्यास्तत्र मुख्या इति इतिहासादधिगम्यते । उक्तञ्च

[2]"ब्राह्मणा वीरशैवस्था शिखायज्ञोपवीतिनः ।
लिङ्ग-रुद्राक्ष-भस्माङ्का ब्रह्मकर्मसमन्विताः ॥" इति ।

एतेन वीरशैवदीक्षासम्पन्नेषु तेषु वीरशैवेषु इष्टलिङ्गेन साकं शिखासूत्रधारणादिकमप्यासीदिति सिध्यति । पूर्वोदाहृतायां गौतमस्मृतौ मस्तकाधिष्ठित-इष्टलिङ्गेन साकं यथा शिखासूत्रमभिवर्णितं तथा तत्रैव उत्तरत्रोदाहृते ब्राह्मणलक्षणकथनात्मके गौतमस्मृतिवाक्ये—

"[3]मुखे मन्त्रो हृदि ध्यानं मस्तके लिङ्गधारणम् ।
रुद्राक्षं च तथा भस्म ह्येतद्ब्राह्मणलक्षणम् ॥"

इति शिखासूत्रविमुक्तमपि मस्तकाधिष्ठितं लिङ्गधारणं निरूपितम् ।

एतेन— क्रि. श. एकादशशतके केषुचित् वीरशैवेषु शिखासूत्रविशिष्टत्वं, तदितरेषु वीरशैवेषु तद्रहिताचारश्च आसीदिति सुस्पष्टम् । अत एवोक्त सिद्धान्तशिखामणौ रेणुकाचार्यैरपि—

---

[1] ब्र. सू. ३-३-२०-४५. [2] उमचिगी शंकरशास्त्रिकृतमुण्डकभाष्ये पृ. १६६. [3] श्रीकरभाष्ये १२१६ पृ. २०९.

[1]"विशुद्धाः प्राकृताश्चेति द्विविधा मानुषाः स्मृताः ।
शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः ॥ इति ।

वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता ।
एका शिवेन निर्दिष्टा ब्रह्मणा कथिता परा ॥ ३५ ॥

शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषेविणाम् ।
शिवसंस्कारहीनानां धर्मः पैतामहः स्मृतः ॥ ३६ ॥

शिवसंस्कारयुक्तेषु जातिभेदो न विद्यते ।
काष्ठेषु वह्निदग्धेषु यथा रूपं न विद्यते ॥ ३७ ॥

तस्मात् सर्वप्रयत्नेन शिवसंस्कारसंयुतः ।
जातिभेदं न कुर्वीत शिवभक्ते कदाचन ॥ ३८ ॥ इति ।

अत्रोक्तदिशा तदा वीरशैवेषु अतिवर्णाश्रमिणो "**सहजवीरशैवा**" इति इतरे तु "**आगन्तुकवीरशैवा**" इति द्वैविध्यं आसीत् ।

### आगन्तुक-सहजवीरशैवत्वनिर्णयः

ये तु पारम्पर्येण वीरनन्द्यादि-अप्राकृतप्रमथगोत्रप्रवरस्य गुरोः सकाशात् शिवदीक्षां लब्ध्वा तदुक्त-अष्टावरण-पञ्चाचार-षट्स्थलमार्गेण प्रवर्तन्ते ; ते **सहजवीरशैवा** इत्युच्यन्ते । यथा– पाल्कुरिकि [2]सोमनाथः स्वात्मानं भृङ्गिरिटिगोत्रजातं मनुते । उक्तञ्च तदीये आन्ध्रभाषामये अनुभवसारे–

"भृङ्गिरिटि गोत्रुडनु गुरु-
लिङ्गतनूजुण्ड शिवकुलीनुड दुर्व्या-

---

[1] सि. शि. प. १० श्लो– ३५-३८. [2] "पाल्कुरिकि सोमनाथकविः" बण्डारु तम्मय्य विरचितः पु. २५-२६.

सङ्गषिवर्ज्यचरितुड
जङ्गमलिङ्गप्रसादसम्प्राणुण्डन् ।। इति ।

सद्रचितबसवपुराणेऽपि– "भृङ्गिरिटिगोत्रसंम्भवः" इत्यादि ।

[1]आराध्यब्राह्मणास्तु लिङ्गयज्ञोपवीतिनः । तन्निर्वचनन्तु– लिङ्गं च यज्ञोपवीतं च यस्य सः लिङ्गयज्ञोपवीती इति । अत्र ब्रह्मकर्माधिकारार्थं तन्तुमयं यज्ञोपवीतधारणं ; मुक्त्यर्थं लिङ्गधारणमिति ते समर्थयन्ति । यथा श्रीपत्यादयो आचार्याः पूर्वाश्रमे । एते च विवृत्तलज्जाःपुनः श्रीरेणुकाद्याचार्यप्रवरेभ्य आचार्येभ्यः शिवदीक्षां लब्ध्वापि लिङ्गयज्ञोपवीतिनोऽभवन् । तन्मते तु लिङ्गमेव यज्ञोपवीतं येषां ते लिङ्गयज्ञोपवीतिनः इति निर्वचनं श्रूयते । समर्थ्यते च लिङ्गस्य यज्ञोपवीतसंज्ञा– "नारायणस्य शिवलिङ्गशक्तिपीठत्वं" पुराणेषु प्रसिद्धम्; "यज्ञो वै विष्णु"रिति श्रुतेर्यज्ञस्य विष्णुनाम्नः पीठस्य उप– सामीप्येन विशेषेण इतं लिङ्गं यज्ञोपवीतमित्यर्थः; उत यज्ञ इति पूजा; तस्मात्पूज्योपवीतमित्यर्थः ।। १६८ ।।

प्रकृते श्रीपतिपण्डिताराध्यादयः पूर्वाश्रमे ऋषिगोत्रसञ्जाताः कर्मठब्राह्मणधर्मानुयायिन आसन् तेषु श्रीपतिः पूर्वं कौशिकगोत्रीय इति ज्ञायते। उक्तञ्च श्रीपतिपण्डिताराध्यवंशसमुद्भवेन वीरणामात्येन स्वीये "पद्माभिरामविलासे"–

"....कविताधुरीण कौशिकगोत्रपवित्रश्रीपतिपंडिताराध्यवंशपयःपयोराशिराकासुधाकरायमानशम्भुलिङ्गाराध्यपौत्रवीराराध्य........" इति ।

एवं मल्लनपंडितोऽपि पूर्वं अत्रिगोत्रीयः; उक्तञ्च काशीकाण्डचन्नवीरकृते "[2]काशकृत्स्नशब्दधातुकलापे"– "श्रीयागण्टि शम्भुलिङ्गप्रसादिना तित्तिरियजुश्शाखाध्ययनस्य वामदेवमुखोद्भूतस्य गजकर्णपुत्रस्य अत्रिगोत्रस्य वीरमाहेश्वरसूत्रस्य शिवलेङ्कमल्लनपण्डिताराध्यप्रवरस्य........" इति ।

---

[1] वेदान्तसारवीरशैवचिन्तामणिः– प्र. ७. १६८ (सोलापुरवारदप्रकाशनम् १९०८). [2] डेक्कन् कालेज पूना; प्रकाशनम्– डा ।। ए. एन्. नरसिंहय्यरसम्पादितम् ।

उद्भटाराध्यस्तु–

[1]"जातः शिवांशेन सदुद्भटाख्यो
धर्मार्थकामामृतदानदक्षः ।
तदुद्भटाराध्यगुरुं महेशो
मुदा भरद्वाजमुनीन्द्रचन्द्रात् ॥
प्रकारयामास महाप्रमोदात्
जातादिकान्याजुषवेदसिद्धान् ।"

इत्यादिना "उद्भटाराध्यः पूर्वं भरद्वाजमुनीन्द्रेण जातकर्मादिकं लब्ध्वा ततः शिवदीक्षां वेदोक्तविधिप्रसिद्धां लेभे"; इत्यनेन श्रीपत्यादयो ह्याचार्याः वीरशैवस्य आगन्तुका इति सुस्पष्टमेव । उक्तदिशा मल्लिकार्जुनपंडिताराध्यस्तु स्वकीय बसवस्तुतौ–

"भक्तिमीदि वलपु ब्राह्मम्बुतो बोत्तुवायलेनु बसवलिङ्ग" ॥

इत्यत्र "हे बसवेश्वर, यद्यप्यहं भवदीयभक्तिपरवशः, तथापि नाहमिदानीमपि ब्राह्मणाभिमाननिर्मुक्तः" इति प्रार्थयति ।

आस्तां तावत् बसवात् पूर्वसमकालीनानां श्रीपत्यादिपण्डितोत्तमानां विचारः ; किन्तु स्वयं बसवेश्वरोऽपि पूर्वाश्रमे ब्राह्मणोचितं उपनयनसंस्कारं लब्ध्वा ततः कर्मलतारूपं तं यज्ञोपवीतं तत्याजेति महाकविशेखरेण हरिहरेण वर्णितं "बसवराजदेवरगळे" इति प्रथिते महाकाव्ये ।

स्वयं [2]हरिहरस्तु जात्या ब्राह्मणः । तस्य मातापितरौ शर्वाणी महादेवौ । सोऽपि ब्राह्मणसहजं उपनयनं तिरस्कृत्य पम्पाक्षेत्रनिवासिना सहजवीरशैवाचार्येण शङ्कराभिधानेन शिवदीक्षां लेभे ।

---

[1] "भैरवाराध्यवंशावली"– श्रीकरकाव्यं- (प्रथमपादः) आन्ध्राक्षरमयम् । शिकिन्द्राबाद् तिरुमलवीथीस्थ लक्ष्मीविलास मुद्राक्षरशाला-मुद्रितप्रकाशनम्- १८९३. [2] हरिहरकविकृतं "गिरिजाकल्याणं" काव्यप्रस्तावना– डा॥ एस्. सि. नन्दीमठसम्पादितम् । १९६८ धारवाड् ।

[1]हरिहरमाहाकवेः जामाता महाकविः **राघवाङ्कः**। स च शिरोलिङ्गधारी, शिखा यज्ञोपवीताभ्यां समन्वितः साक्षात् शिव इव गुरु (हरिहरकविः) समीपं आजगाम; इत्यभिवर्णितः।

अनयोः उभयोः कविवरयोः समकालीनस्य **होय्सळवंशीयस्य नरसिंहवल्लाळाख्यस्य राज्ञः** आस्थाने प्रधानामात्यपदवीमारूढः वीरशैवाचार्यः **केरेय पद्मरसोऽपि "यज्ञसूत्रेण साकं शक्तित्रयरूपगुणत्रययुतः"** इति श्लेषमर्यादयाभिवर्णितः।[2]

## श्रीपतेः गुरुपरम्परा

**श्रीकरभाष्यप्रारम्भे** शङ्करतत्त्वविदां मध्ये **सदाशिव-शक्तिधर-सुकेश-चण्डीश्वर-भृङ्गिरिटि-शिलाद-कुम्भोद्भव-वामदेवादीनां** पङ्क्तौ **रेवणासिद्धगुरुः** संस्तुतः।

अत्र संस्तुतेषु **शक्तिधरादयः** कैलासाधिष्ठिताः प्रमथपुङ्गवाः; **कुम्भोद्भवस्तु** प्रसिद्धः **अगस्त्यः**, यश्च **आदिरेणुकेन** आचार्येण शिवसिद्धान्तं उपदेशमुखेन स्वीचकारेति **सिद्धान्तशिखामणौ** श्रूयते। **वामदेवस्तु** महर्षिः। **रेवणसिद्धस्तु** ऐतिहासिकः आचार्यः; यश्च क्रि. श. १०–११ शतकयोः **कर्णाटक-आन्ध्र-द्राविड-महाराष्ट्रप्रान्तेषु** शिवधर्मं बोधयामास।

अत्र शिवाचारविचारदीक्षा स्वशिष्यसंरक्षण-पूर्णपक्ष-दुर्वारकामादिविदारदक्षत्वेनाभिवर्णितो **रेवणः** कल्पवृक्षत्वेनोपमितः।

**तस्य** रेवणसिद्धस्य साक्षात् शिष्योः **मरुलसिद्धः**; यतोऽयं **मरुलसिद्धः रेवणदेशिकेन्द्रात् धृतषड्लिङ्गवधानोज्ज्वल**"त्वेनाभिवर्णितः। अनेनायं **मरुलसिद्धोऽपि न वीरशैवाचार्यपञ्चकोक्तमरुळाराध्यभगवत्पाद** इति निश्चीयते। परशिवपञ्चमुखोद्भूतास्तु **पञ्चाचार्याः** स्वतन्त्राः, स्वयं परशिवस्वरूपा एव। **अन्तिमोप्येकोरामः न हिमवत्केदारपीठाधिपतित्वेनाभिवर्णित एकोरामशिवाचार्यः**। यतोऽत्र तत्प्रतिपादकविशेषणानां नामापि न श्रूयते।

---

[1] "ಮಿಸುಪ ಜಡೆಮುಡಿಯಿಂದೆ ಷಟ್ಸ್ಥಲದಿ ಶಿರದೊಳೆಸೆವ ಶಿವಲಿಂಗದಿಂ.... ಯಜ್ಞ ಸೂತ್ರದಿಂ ರಂಜಿಸುತೆರಡಸೆಯು ಶಿವನಂತೆ राघवांकचरितम्– सम्पादनेय सिद्धनंजविरचितम्।

[2] "ಉರಯಜ್ಞ ಸೂತ್ರವುಂ ಶಕ್ತಿತ್ರಯೋರುಗುಣಯುತಸೂತ್ರದೊಡನೆ ಕೂಡಿ" (पद्मराजपुराणम्–पद्मणांककविविरचितम् सं. ७. प. १६).

अत्राभिवर्णितः **एकोरामोऽपि** ऐतिहासिकः **श्रीपतेः** साक्षात् **गुरुः**। **रेवण-सिद्ध-मरुलसिद्ध-एकोरामादि**आचार्यत्रयं [1]**आदय्यो** नाम शिवशरणः स्वकीये **एकस्मिन् वचने** संस्मरति। अयं च द्वापराचार्यत्वेनाभिवर्णितस्य **मरुलसिद्धस्य** समकालीन **इति** अभ्यूह्यते; यतोऽयं **मरुलसिद्धादनन्तरं** संस्तुतः।

अयं चाचार्यः "**वेदान्तशास्त्रोभयगतविलसच्छैवसंस्थापनाढ्यः, पूर्वाचार्यप्रसिद्धः देशिकेन्द्रश्चासीत्**" इत्यादिना अस्याचार्यस्य पाण्डित्यादिकं सम्यक् सूचितम्। अयमेव पूर्वोक्त**श्रीशैलपण्डिताराध्य**चरितोक्तः वादजितस्य **श्रीपतेः शिवदीक्षाप्रदायक- "देशिकेन्द्रः"** स्यादिति च **अनुपदमेव स्फुटं** भवति।

आगमोक्तास्तु **रेणुकादयः** अत्यन्तप्राचीनाः। तेषां कालः अगस्त्यादीनां मुनीन्द्राणां च काल इति सुस्पष्टः। तेषां च पवित्रनामानि **पाल्कुरिकि सोमनाथविरचितायां "गणसहस्र"स्तुतौ** निर्दिष्टानि।

## श्रीपतिपण्डिताराध्यस्य शिवदीक्षाप्रसङ्गः

एवंविधस्य पण्डिताग्रेसरस्य सकलशास्त्रनिष्णातस्य **श्रीपतिपण्डिताराध्यस्य** शिव-दीक्षाप्रसङ्गमधिकृत्य **एवं श्रूयते पुल्लकविविरचिते श्रीशैलपण्डिताराध्यचारित्रे**- "वीर शैवाचार्यपञ्चकेष्वेकतमः **श्रीशैलसूर्यसिंहासनेऽधिष्ठितो जगद्गुरु पण्डिताराध्यान्वयः** [2]**श्रीविरूपाक्षदेशिकेन्द्रः** (१०५०) कदाचिद्वाराणसीमाजगाम। तत्र भगवतो **विश्वेश्वरस्यालये वीरशैवसिद्धान्तप्राशस्त्यमधिकृत्य आचार्यपुङ्गवस्य** तत्रस्थैः भूसुरोत्तमैस्सार्धं शास्त्रार्थः समजनि। तत्सन्दर्भः कविना साकूतमभिवर्णितः। [3]तत्र निर्जितः **श्रीपतिपण्डितः** पण्डिताग्रगण्यः आचार्यचरणयोः प्रणिपत्य शिवदीक्षां ययाचेति।

---

[1] "ರೇವಣಸಿದ್ಧಯ್ಯದೇವರ ನಿಷ್ಠೆ . . . ಮರುಳಸಿದ್ಧಯ್ಯದೇವರ. . .ನಿಷ್ಠೆ, ಏಕೋರಾಮಯ್ಯಗಳ ಆಚಾರನಿಷ್ಠೆ "—(आदय्यवचनानि-३९)

[3] ಕ್ಷಿತಿಸುರುಲಿವ್ವಿಧಂಬುನ ವಚಿಂಚಿ ಚುಮುಂಡಗ ವಾರಿಲೋನ ಶ್ರೀ
ಪತಿಯನು ಪಂಡಿತೋತ್ತಮುಡಭಂಗುರವೇದಪುರಾಣಶಾಸ್ತ್ರಸಂ।
ಗತುಲ ಪ್ರವೀಣುಡಬ್ಜಭವಕಲ್ಪುಡನಲ್ಪಕಳಾವಿಚಕ್ಷಣುಂ
ಡತುಲಿತವಿಶ್ವನಾಥಚರಣಾಂಬುಜಭಕ್ತಿದನರ್ಚಯುಂಡಗನ್ ॥ (ಆಶ್ವಾಸ ೧—೨೧೧)

स्वदीक्षागुरुं आचार्यमिमं श्रीकरभाष्यारम्भे "एकोरामाख्यसिद्धः" "एकोराम-यतीन्द्रशेखरशिवाचार्यः" "देशिकेन्द्रः" इत्यादिभिर्विशेषणैः बहुधा वर्णयति भाष्यकारः।

अत्र भाष्यकारस्य आचार्यपदेऽभिवर्णितः एकोरामोऽपि भाष्योक्तदिशा–

"[1] सर्वभूतहितः शान्तः त्रिदण्डी सकमण्डलुः।
एकोरामः परिव्रज्य भिक्षार्थं ग्राममाविशेत्॥"

तद्देशिकेन्द्रस्सर्वभूतत्वादिगुणोपेतः परिव्रज्य [2]"एकोराम" इति अन्वर्थकं नाम अभजत्। एतादृशश्रोत्रियब्रह्मनिष्ठत्वादिलक्षणलक्षितो गुरुः विरूपाक्षदेशिकेन्द्रः "श्रमदण्डशिखोपवीत विलसत्कन्थाजिनालङ्कृतः" इति शिखोवीतयुतत्वेनापि वर्ण्यते। तच्च न बाह्यतन्तुरूपोपवीतं न केशमयशिखेति विज्ञेयम्। उक्तञ्च ब्रह्मोपनिषदि–

"बहिस्सूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः।
ब्रह्मभावमिदं सूत्रं धारयेद्यस्सचेतनः॥ १४॥

धारणात्तस्य सूत्रस्य नोच्छिष्टं नाशुचिर्भवेत्।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम्॥ १५॥

---

[1] श्रीकरभाष्यं ३.४.२ १८.

[2] एकोरामशब्दस्य व्युत्पत्तिरत्र द्विधा कर्तुं शक्यते–

१) एकश्चासौ उश्च (शम्भुः) एकोः, तत्र रमत इति एकोरामः। एकस्मिन्नेव शम्भौ रमत इत्यर्थः।

२) रमन्ते योगिनः अस्मिन्निति रामः, एकोः रामः यस्य सः एकोरामः। एक एव शम्भुः यस्य रमणाधिकरणमित्यर्थः। एकोः शब्दः ओकारान्तः गोशब्दवत्। ईदृग्विधा व्युत्पत्तिः [3]श्रीकण्ठभाष्येऽपि कृता– "आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनन्दं"– इत्यत्र प्राणारामं– प्राणाः सकलकलाधारभूता चिदम्बरप्रकृतिरुच्यते। स्वरूपभूतायां तस्यामारामो यस्य सः" तत्प्राणारामम्। मन आनन्दं– मनस्येवानन्दो यस्य सः, न बाह्यकरणे तन्मन आनन्दम्।

[3] श्रीकण्ठ भा. अधि १.

ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥ १६ ॥

ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥
स शिखीत्युच्यते विद्वानेतरे केशधारिणः ॥ १७ ॥

इत्यादिवचनप्रामाण्यात् विशेषवीरशैवो बहिस्सूत्रं त्यक्त्वा "ब्रह्मभावमिदं सूत्रं लिङ्गं धारयेदित्यर्थः" इत्यादिना एकोरामशिवाचार्यस्य ब्रह्मभावोपपन्नत्वं सूच्यते । उक्तञ्च–

तत्रैव–

"कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तैश्च धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥ १९ ॥ इति ।

अस्यार्थः– वैदिके– वेदागमोक्ते, कर्मणि सुफले व्यापारे ये– मर्त्याश्च शक्तिपातेन पवित्रान्तःकरणाः ब्राह्मणादयः– आदिशब्देन ब्राह्मण-क्षत्रिय-वैश्य-शूद्रादय इत्यर्थः । ते– सर्वे अधिकृताः, शिवदीक्षायाः अधिकारिणः सन्तो वर्तन्ते । तैः वीरशैवैः धार्यं इदं सूत्रं इष्टलिङ्गं– क्रियाङ्गं– षोडशोपचारादिक्रियाङ्गं, तत्– चिन्तितमित्यर्थः ॥ २० ॥ उक्तञ्च गारुडपुराणे उपरिभागे–

उक्तञ्च–

[1]वंशावलिप्रयातानां लिङ्गधारणशालिनाम् ।
ज्ञानिनां शिवभक्तानां शूद्रत्वं नैव विद्यते ॥ २१ ॥

नमके चमके पञ्चब्रह्ममन्त्रादिवैदिके ।
तेषामेवाधिकारोऽस्ति शिवदीक्षाप्रभावतः ॥ २२ ॥

---

[1] वेदान्तसार- वीरशैवचिन्तामणिः प्र. ८. पृ. २०४, २०५.

## गोत्र-सूत्रशब्दार्थनिर्णयः वीरशैवसम्प्रदायश्च

**गोत्रम्**– भारतीयसंस्कृतौ गोत्रशब्दः वंशापरपर्यायः। पूर्वं तावत् "**गावः** "**त्रायत इति गोत्रं**" इति व्युत्पत्त्या गोत्रशब्दः गोपालनार्थे आसीत्; यतः प्रथमं भारतं प्रविष्टाः आर्याः "**गोधनाः**" आसन् इति ऐतिहासिका वदन्ति। तेष्वाद्याः **वशिष्ठादयो** महर्षयः एवं विधगोत्राधिष्ठिता एव। एकैकोऽपि ऋषिः एकैकस्य गोष्ठस्याधिपतिः आसीत्; यतस्तद्वंशीयाः तत्तदृषिगोत्रीया इति विख्याताः। उक्तञ्च **पाणिनिना**– [1]"**सङ्ख्यावंश्येन**" इति सूत्रे। [2]व्याख्यातञ्च '**वंशो द्विधा; विद्यया जन्मना च इति** [3]"पुत्रपौत्रादिसन्ततिपरम्परया गोत्रप्रापकत्ववत्, शिष्यप्रशिष्यप्रवाहस्यापि गोत्रसंबन्धसम्पादकत्वसम्भवात्"।

अतो वंशः प्राकृतेषु **जन्मना** गण्यते। अप्राकृतेषु [4]**अतिवर्णाश्रमिषु** वीरशैवेषु तु वंशः **विद्यया** (षडक्षरमहामन्त्रोपदेशेन) परिगीयते। प्राकृतेषु द्विजत्वं उपनयनेन सिध्यति। तत्र उपदेष्टा पिता। अप्राकृतेषु तु शिवदीक्षया द्विजत्वसिद्धिः। अत्रोपदेष्टा [5]**वीरनन्द्यादिप्रवरो** श्रीगुरुः **शिष्यस्येति** च स्पष्टमुपदिष्टम्। अतस्तच्छिष्याः तद्गुरुमेव **स्वगोत्रप्रवर्तकं** मन्यन्ते। एतेनात्र वीरशैवसंप्रदाये **गोत्रशब्दो विद्यया** न त्वौरससन्तानरूपेणेति सिद्धम्।

**सूत्रम्**– एवं सूत्रशब्दोऽपि प्राकृतेषु **आपस्तम्बादिग्रन्थवाचकः**। तत्र **आपस्तम्ब-आश्वलायन-गोभिलादयो** मुनयः गृह्यादिसूत्राण्यलिखन्। अद्यापि तत्तच्छाखीयाः तत्तदृषिप्रोक्तसूत्रानुरोधेन आचारादीन् अनुतिष्ठन्ति। अप्राकृतेषु वीरशैवेषु तावत् सूत्रशब्दः **परशिवेष्टलिङ्ग**वाचकः; न तु ग्रन्थपर्यायः। उक्तञ्च–

> [6]"**सूचनात् परमेशस्य लिङ्गं सूत्रमितीरितम्।**"
> "**पञ्चाक्षरस्यैव सूत्रनामप्रसिद्धतः।**"

---

[1] अष्टाध्यायी – २, १, १९. [2] सिद्धान्तकौमुदी-बालमनोरमा व्याख्या पृ. ३२७. [3] वीरशैवानन्दचन्द्रिका पृ. ४५१. [4] वर्णश्च आश्रमश्च वर्णाश्रमौ। अतिशयितौ वर्णाश्रमौ येषां ते– अतिवर्णाश्रमिणः; तेषु। वीरशैवानन्दचन्द्रिका (वादकाण्डः) पृ. ४५२ [5] सि. शिखामणिः गुरुकारुण्यस्थले [6] किरणागमे।

[1]"सूत्रं पञ्चाक्षरस्त्वथ" परशिवेष्टलिङ्गमपि पञ्चसूत्रघटितत्त्वेनोच्यते यथा–

लिङ्गवृत्तसमं पीठं दीर्घं विस्तार एव च ।
तदर्धं गोमुखं चैव इत्येतल्लिङ्गलक्षणम् ॥ इति ।

अत्र लिंगगततार-दण्ड-कुण्डल-अर्धचन्द्र-विन्दवः सूत्रत्वेनाभिधीयन्ते । अत्र लिङ्ग-मन्त्रयोः वाच्य-वाचकत्वेन अभेदः संसूच्यते उक्तञ्च–

[2]नकारः तारकस्थानं मकारो दण्ड उच्यते ।
शिकारः कुण्डलाकारो वाकारश्चार्धचन्द्रकः ॥
यकारो विन्दुरूपोऽयमोङ्कारः पञ्चवर्णकः ॥

यथामन्त्रस्तारादिपंचसूत्रात्मकस्तथा लिङ्गमपि पञ्चसूत्रघटितम् ।

[3]नकारश्चादिपीठं च मकारो मध्यमेव च ।
शिकारो वर्तुळं चैव वाकारो गोमुखं तथा ॥
यकारो विन्दुरेवं स्यात् प्रणवो लिङ्गमुच्यते ॥ इति ।

[4]तारादिपञ्चसूत्राणां विवरणं अस्मत्कृत'इष्टलिङ्गविज्ञानाख्ये' भाषापुस्तके द्रष्टव्यम् । उक्ता च गोत्र-सूत्रव्यवस्था वीरशैवसम्प्रदाये–

[5]वीरो नन्दी वृषश्चैव भृङ्गी स्कन्दस्तथैव च ।
मत्स्वरूपाः समुत्पन्नाः पञ्चगोत्राधिकारिणः ॥

रेणुको दारुकश्चैव शङ्कुकर्णश्च धेनुकः ।
विश्वकर्णश्च पञ्चैते पञ्चगोत्रसमुद्भवाः ॥

सद्योजातं च प्रथमं वामदेवं द्वितीयकम् ।
अघोरं च तृतीयन्तु तत्पुरुषं च चतुर्थकम् ॥

---

[1] सि. शिखामणिः प. ८ २३. [2] शिवतत्त्वरत्नाकरः कल्लोलः १, त ५-१९-२०. [3] शिवतत्त्वरत्नाकरः १-४-३७-३८. [4] "इष्टलिङ्गविज्ञानम्"– प्रबोधपुस्तकमाला, मैसूरु प्रकाशनम् १९४६.
[5] "वीरशैवसदाचारसंग्रहः"– रावसाहेब् मल्लप्पा बसप्प वारद, सोल्लापुरप्रकाशनम्– पृ. ६-१, ई.१९०५.

ईशानं पञ्चमं प्रोक्तं मुखानि मम सर्वशः ।
तान्याननानि गोत्राणि वेदोक्तानि न संशयः ।।

सद्योजातमुखोत्पन्नो रेणुकः परिकीर्तितः ।
तन्नाम रेवणाराध्यः सूत्रं पडिविडित्यपि ॥

वामदेवमुखोत्पन्नो दारुकः परिकीर्तितः ।
तन्नाम मरुलाराध्यस्तस्य सूत्रं च वृष्टिकम् ।।

अघोराख्यमुखोत्पन्नः शङ्कुकर्ण इतीरितः ।
एकोरामेति तन्नाम तत्सूत्रं मुक्तगुच्छकम् ।।

तत्पुरुषाख्यमुखोत्पन्नो धेनुकर्णेति विश्रुतः ।
तन्नाम पण्डिताराध्यस्तस्य सूत्रं तु लम्बकम् ।।

ईशानाख्यमुखोत्पन्नो विश्वकर्णेति विश्रुतः ।
विश्वाराध्येति तन्नाम तत्सूत्रं पञ्चवर्णकम् ।। इति ।

अत्रोक्तवीर-नन्दि-वृषभ- भृङ्गि- स्कन्दरूपप्रमथगोत्रप्रवराः रेणुकादिपञ्चाचार्याः तत्तत्सूत्रोक्तदिशा यथाक्रमं स्वशिष्याणां मूलपञ्चाक्षरी-प्रसादपञ्चाक्षरी, मायापञ्चाक्षरी सूक्ष्मपञ्चाक्षरी-स्थूलपञ्चाक्षरीति महामन्त्रोपदेशादिकं उपदिश्य तत्तन्मन्त्ररहस्यादिकं च बोध यन्तीति श्रूयते ।

अन्यच्च अत्र वैदिकागमिकक्रियाकलापाः पञ्चाचार्याणां प्रतीकत्वेन स्थापितानां पञ्चकलशानां साक्ष्यत्वे प्रवर्तन्ते, न तु प्राकृतानामिव अग्निसाक्ष्यत्वेन ।
उक्तञ्च सिद्धान्तशिखामणौ–

[1]पञ्चब्रह्ममयैस्तत्र स्थापितैः कलशोदकैः ।
आचार्यः समभूत्विग्भिः त्रिवारमभिषेचयेत् ।। इति ।

---

[1] परि. ६-१८.

आचार्यपञ्चकमधिकृत्य वीरशैवग्रन्थेषु एवं प्रस्तूयते– (स्वयम्भुवागमे)

[1]यदा यदा हि धर्मस्य हानिर्भवति भूतले।
तदा तदावतारोऽयं गणेशानां महीतले ॥ १३ ॥

प्रवक्ष्यामि भवितृंश्च शृणु तज्जननक्रमम्।
द्राक्षारामे रामनाथलिङ्गे युगचतुष्टये ॥
एकोरामस्य जननमावासस्तु हिमालये ॥ १४ ॥

सुधाकुण्डाख्यसुक्षेत्रे लिङ्गे श्रीमल्लिकार्जुने।
जननं पण्डितार्यस्य निवासः श्रीगिरौ शिवे ॥ १६ ॥

तथा रेवणसिद्धस्य कोल्लिपाकी पुरोत्तमे।
सोमेशलिङ्गे जननमावासः कदलीपुरे ॥ १७ ॥

तद्वन्मरुलसिद्धस्य वटक्षेत्रे महत्तरे।
सिद्धेशलिङ्गे जननं स्थानमुज्जयनी पुरे ॥ १८ ॥

काश्यां विश्वेश्वरे लिङ्गे विश्वाराध्यस्य सम्भवः।
स्थानं श्रीकाशिकाक्षेत्रे शृणु पार्वति सादरम् ॥
कृताद्युगचतुष्के ते पञ्चाराध्या यथाविधि ॥ १९ ॥

मम पञ्चमुखोद्भूताः संस्थाप्य कलशान् भुवि ॥ २० ॥

वीरशैवानन्दचन्द्रिकायां श्रीपतेः गजकर्णवंशोऽभिहितः। उक्तञ्च–

[2]गजकर्णो त्रिरङ्गुष्ठो मञ्चणः सङ्गनोऽव्ययः।
कल्याणपंडितः केशी माधवः श्रीपतिः प्रभुः ॥
मल्लिकार्जुन इत्याद्या वामदेवमुखोद्गताः ॥ इति।

---

[1] वीरशैवसदाचार संग्रहः पृ. ३५. [2] वीरशैवानन्दचन्द्रिका पृ. ४५१.

## *सुप्रबोधागमान्तर्गतपञ्चाचार्योत्पत्ति गोत्र-सूत्रादिमालिका

| परमेश्वरस्य पञ्चमुखाः | | सद्योजातः | वामदेवः | अघोरः | तत्पुरुषः | ईशानः |
|---|---|---|---|---|---|---|
| पञ्चाचार्याणां नामानि | | रेवणाराध्यः | मरुळाराध्यः | एकोरामा-राध्यः | पंडिताराध्यः | विश्वाराध्यः |
| पञ्चाचार्याणां जन्मभूमिः | | कोल्लिपाकी क्षेत्रगत सोमेश लिङ्गो-द्भवः | वटक्षेत्रगत सिद्धेश-लिङ्गोद्भवः | द्राक्षाराम-क्षेत्रगतरामनाथ-लिङ्गोद्भवः | सुधाकुण्ड क्षेत्र-गत श्रीम-ल्लिकार्जुन-लिङ्गोद्भवः | काशीक्षेत्रगत-विश्वेश्वर लिङ्गोद्भवः |
| सिंहासन स्थानानि | | रंभापुरी (बाळे हळ्ळी) | उज्जयनीपुरी | हिमवत्केदारः | श्रीशैलपर्वतः | वाराणसी (काशी) |
| तेषां गोत्राणि | | वीरः | नन्दी | भृङ्गी | वृषभः | स्कन्दः |
| तेषां सूत्राणि | | पड्विडिः | वृष्टिः | लंबनः | मुक्तागुच्छः | पंचवर्णीः |
| तेषां प्रवराः | | वीरशैवः | वीरशैवः | वीरशैवः | वीरशैवः | वीरशैवः |
| शाखाः | | ऋग्वेदः | यजुर्वेदः | सामवेदः | अथर्वणवेदः | अजपवेदः |
| कलशानां धातुः | | स्वर्णम् | रजतम् | ताम्रम् | लोहः | सी सकः |
| तत्त्वानि | | पृथ्वी. | अप् | तेजः | वायुः | आकाशः |
| तेषां बीजमन्त्रः (बीजाक्षरं) | | नकारः | मकारः | शिकारः | वाकारः | यकारः |
| महासूत्रसंबन्धीनि उपसूत्राणि | १ | पुराणम् | लोहकंथा | गोणीकंथा | त्रिपुटी | पंचवर्णीः |
| | २ | पच्छकंथा | स्वर्णकंथा | दंती | रज्जुः | कंबालः |
| | ३ | पडंगम् | शृंगी | जठरः | कंथा | वृषभः |
| | ४ | सुरगी | मसणी | त्रिगुणः | भस्मी | दशवक्त्रम् |
| | ५ | महिषी | कुठारः | केशकंथा | शिखरी | जरत्कंथा |
| | ६ | दिगंबरः | मैत्री | ललाटम् | रौप्यकम् | पंचमुखः |
| | ७ | वेणी | कठारः | व्याघ्रकंथा | चंद्रगुंडः | गुहाग्रम् |
| | ८ | भित्तिः | चामरी | लोचनम् | मृत्कंथा | गोचरः |
| | ९ | मोरटः | कवाटः | भगिनी | काष्ठकम् | गगनम् |
| | १० | नाटी | कुक्षकंथा | जालकंथा | पवनः | मुसळी |
| | ११ | शौरी | ज्वलत्कंथा | नटनम् | रामगिरिः | लगुडम् |
| | १२ | मुसुडी (सुतूरु) | सिंही | बदडि | खड्गी | शिथिळी |

* वीरशैवसदाचारसंग्रहः- पञ्चाचार्यपंचमोत्पत्तिक्रमवर्णनम्, सोलापुर, वारदप्रकाशनम्- १९०५.

ग) **एकादशीप्राशस्त्यन्तु** बसवपूर्वयुगीयानां वीरशैवनामाचारः कुत्रचित् भवेदित्य- भ्यूह्यते। यतः तदानींन्तनवीरशैवानां शिवभक्त्याः औत्कट्यमवं सूचयति।

घ) **गायत्रीप्राशस्त्यं** अधिकृत्य भाष्ये– "परब्रह्मणः शिवस्य गुरुलिङ्गात्मकत्वसमर्थनं कृतम्। तत्र "[1]गायत्रीशब्देनात्र न हि छन्दोमात्रगायत्र्युपदिश्यते। छन्दोमात्रगायत्र्याः सर्वात्मकत्वासम्भवात् परशिवस्यैव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणः परशिवस्य गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः"; इति। समर्थितञ्च **नीलकण्ठशिवाचार्येणापि**–

> "[2]छन्दोभिधानान्नेति चेत्यादिसूत्रेण शाश्वतम्॥ २३४॥
> गायत्र्याख्यं परं ब्रह्म धार्यं ध्येयं हृदम्बुजे।
> तथा चेतोर्पणगदाच्छ्रुतिर्दर्शयतीति हि॥ २३५॥
> चेतोर्पणं धारणं च हृदयाम्भोजमध्यमे।
> बहुषु श्रुतिजालेषु सम्यगेवोपपादितम्॥ २३६॥
> स्थानानामुत्तमं स्थानं हृदब्जमिति निश्चितम्॥

इति। एतावत्पर्यन्तं **श्रीपतिभगवत्पादाचार्याणामुपरि** कृतानां आक्षेपानां सप्रमाणं समाधापितत्वात् **शासनोक्तस्य** श्रीपतेरिदं भाष्यं नान्यस्येति सहृदयहृदयवेद्यं स्यादिति विनिवेद्य विरम्यते।

## श्रीकरभाष्येवीरशैवपूर्वाचार्याणां तद्रचितग्रन्थानां च प्रस्तावः

श्रीकरभाष्ये पूर्वेषां वीरशैवाचार्याणां तद्रचितभाष्यादीनां च उल्लेखास्तत्र तत्र दृश्यन्ते। ता एवात्र सङ्क्षेपतो निरूप्यन्ते–

१ "[3]समन्वयसूत्रे **एकोरामसिद्ध**भगवत्पादाचार्यैः 'श्रोतव्य' इत्यत्र आत्मज्ञानविधिर्निराकृतः इति प्रतिपादितम्।" अनेन भाष्यकारस्य गुरुचरणैः **एकोरामसिद्ध-भगवत्पादैः** सूत्रभाष्यमेकं रचितमिति द्योत्यते।

---

[1] श्रीकरभाष्यं– १-१-१, पृ. ४२ [2] क्रियासारे– उ. १. [3] श्रीकरभाष्यम् ब्र. सू. १-१-१. पृ. २२.

२) "अत एव [1]गुहाधिकरणे मञ्चणपण्डितीये 'ऋतं पिबन्तौ' इत्यत्र पिबदपिबत्समुदायलक्षणायाः अजहल्लक्षणा प्रतिपादिता" इति। अत्र मञ्चणपण्डिताराध्यैरपि तत्कृतसूत्रभाष्ये गुहाधिकरणे अजहल्लक्षणायाऽङ्गीकारविचारो व्यज्यते।

३) "[2]तस्मात् लक्षणाद्वयमेव परमानन्दाराध्येन निर्णीतम्। एकोरामसिद्धाराध्यभगवत्पादाचार्यादिभिः स्वीकृतत्वादेव सम्यगुपादेयम्" "लक्षणाद्वयमेव शाम्भवानन्दशिवाराध्याभिप्रेतम्" एतेन एकोरामसिद्धाराध्यात् पूर्वमेव परमानन्दाराध्यैः लक्षणाद्वयपिकृत्य निर्णयः कृत इत्यवधार्यते।

४) "[3]एवं रेवणसिद्ध-रामसिद्ध-उद्भटाराध्य-वेमाराध्यादिभिः श्रौतशैवाचार्यैः व्यपदेशात् –

५) "[4]सकलशाखाध्येतृभिः वेमाराध्य-उद्भटाराध्य-मरुलसिद्ध-रेवणसिद्धाराध्यादिभिः कृतात् वेदान्तभाष्यादिग्रन्थात्" इत्याद्युल्लेखैः श्रीपतेः पूर्वं बहुभिः वीरशैवाचार्यैः वेदान्तोपनिषद्ब्रह्मसूत्राणामुपरि भाष्यणि विलिखितानीति निश्चीयते।

## अगस्त्य-रेणुकयोः कालः

वीरशैवधार्मिकेतिहासमधिकृत्य शैवसिद्धान्तपारंपर्यमधिकृत्य च विद्वद्भिर्बहुधा विचारः कृतः। आचात् रेणुकात् वीरशैवसिद्धान्तं उपदेशमुखेन गृहीतस्य अगस्त्यस्य कालमधिकृत्याऽपि विदुषां विचाराः प्रकटिता एव।

अगस्त्यमुनिकृतवैयासिकसूत्रवृत्तिमवलम्ब्यैव श्रीपतिना श्रीकरभाष्यं निर्मितमिति च ज्ञातविषय एव। श्रीरेणुकाचार्येण अगस्त्याय मुनये प्रबोधितसिद्धान्तः "सिद्धान्तशिखामणौ" शिवयोगिशिवाचार्येण निरूपितः। यश्च मणिः श्रीकरभाष्ये पदे पदे प्रमाणीकृतः। तादृशस्य शिवयोगिशिवाचार्यस्य कालः माकीं क्रि.श. ८०० शतकात् पूर्वमेव स्यादिति "मणिमुकुराख्ये"[5]काव्यमयसिद्धान्तशिखामणेः पीठिकायां तत्कर्तृभिः निडुमामिडी श्रीशैलसूर्यसिंहासनाधीश्वरैः जगद्गुरुपदवीमारूढैः डा॥ ज. च. नि. महोदयैः जगद्गुरु चन्नबसवराजदेशिकेन्द्रमहास्वामिपादैः उट्टङ्कितः। [6]शिवयोगिशिवाचार्यस्तु (क्रि. श.

---

[1] ब्र. सू. १-१-१ पृ. ४४. [2] सू. १-१-१ पृ. ४७. [3] ब्र. सू. २-२-३७. [4] ब्र सू. ३-३ ५.
[5] मणिमुकुरापीठिका– पृ. १९. [6] ಸಿದ್ಧಾಂತ ಶಿಖಾಮಣಿಯ ಸೌಂದರ್ಯದರ್ಶನ ಡಾ|| ಜ. ಚ. ನಿ. ವಿರಚಿತ ಪೀಠಿಕೆ, ಪು. ೧೧–೧೨ (೧೯೭೭).

८००) सालुहट्टि (सालोटगी) विद्यापीठे प्राचार्या आसन्निति श्रूयते। तदिदानीं विजापुर जिल्लान्तर्गत-इण्डी तालूकायां विद्यते। तत्र तन्नाम्ना समाधिरेकः विद्यते।

आगमोक्तो हि रेणुकः सिद्धान्तशिखामण्युक्तरीत्या कोल्लिपाकी सोमनाथशिवलिङ्गमुखादाविर्भूय मलयाचलमागत्य अगस्त्यस्य महर्षेस्तपोवनं विवेश।

"[1]तमागतं महासिद्धं समीक्ष्य कलशोद्भवः।
गणेन्द्रं रेणुकाभिख्यं विवेद ज्ञानचक्षुषा॥ ३३॥

तत अगत्स्यः—

तस्यानुभावं विज्ञाय सहसैव समुत्थितः।
लोपामुद्राकरानीतैरुदकैरतिपावनैः।
पादौ प्रक्षालयामास स तस्य शिवयोगिनः॥

कुशलप्रश्नानन्तरं अगस्त्यः आचार्यमेवं प्रार्थमामास।

'पुरा हैमवतीसूनुरपृच्छत्ते षडाननः ः
शिवधर्मोत्तरं नाम शास्त्रमीश्वरभाषितम्॥ ४२॥

त्वन्मुखात् श्रोतुमिच्छामि सिद्धान्तं श्रुतिसम्मतम्।
सर्वज्ञ वद मे साक्षात् शैवं सर्वार्थसाधकम्॥ ५१॥

शिवात्मैक्यमहाबोधसम्प्रदायप्रवर्तकम्॥

भवान् सकललोकमहोपकारकं सिद्धान्तं सम्बोध्य नानागमश्रवणवर्तितसंशयं मां कृतार्थयिष्यति इति। एतेन रेणुकागस्त्ययोः गुरु-शिष्यभावः सुप्रसिद्धः। वीरशैवमहर्षिपंक्तौ अगस्त्यः प्रप्रथमत्वेन वर्णितश्च—

[2]"अगस्त्यो जैमिनिश्चैव विश्वामित्रोऽथ काश्यपः।
भारद्वाजोऽङ्गिरा अत्रिर्वशिष्ठो रोमहर्षणः॥

---

[1] सिद्धान्तशिखामणिः— प. ४. [2] क्रियासारः १-१४.

**एते सर्वे महाभागाः अतिवर्णाश्रमे रताः ।**
**वीरशैवाः समाख्याताः जीवन्मुक्ता न संशयः ॥ इति ।**

## अगस्त्यमुनेः कालविचारः

अगस्त्यमधिकृत्य वङ्गदेशीयेन ओ. सि. **गङ्गोळी** महाशयेन विरचितं "**पूर्व-कालिकद्वीपान्तरसञ्चारी अगस्त्यः**" इति लेखनं विमृश्य कीर्तिशेषैः **राव्साहेब्, वचनशास्त्रपितामहः** इत्यादि बिरुदाङ्कितैः लिं॥ फ. गु. **हळकट्टीमहोदयैः** स्वकीयायां [1]"**शिवानुभवः**" इत्यभिधानवत्यां त्रैमासिकायां (१९२८ सं ५) कश्चन लेखः "**अगस्त्य-मुनि**" अभिधः प्रकटितः । तस्य सारोऽत्र सङ्गृह्यते–

"श्री**गङ्गोळी**महाशयानुरोधेन **अगस्त्यः पूर्वं** वाराणसीनिवासी । स च विन्ध्या-टवीमुल्लङ्घ्य (उत्तीर्य) दक्षिणापथमाजगाम । ततोऽयं नासिकाप्रान्ते प्रथमं आश्रमं निर्ममे । ततस्तेन "**वातापी-इल्वल**"नामानौ असुरौ महर्षेः सङ्कल्पमात्रादेव निहतौ । तयोः पाशविकी शक्तिः तपोधनस्यास्य प्रभावकुक्षौ [2]जीर्णा बभूव । "**वातापी जीर्णो भव**" इति भणितिरद्यापि सर्वश्रुता । शिवयोगमन्दिरनिकटस्थे "महाकूटे" तत्स्मारक-मद्यापि विद्यते ।

ततोऽगस्त्यः दक्षिणमभिप्रस्थितः पाण्ड्यराज्यं विवेश । तत्र सः राजगुरुपदवी-मलञ्चकार । तमिळुभाषायाः व्याकरणं "**अगत्ति**"नामकं व्यरचयच्च । "**अगत्तीय सक-लाधिकार**" नामकस्य **मूर्तिरचनाशास्त्रस्यापि** प्रवर्तकः अगस्त्य एवेति वदन्ति । वैद्य-शास्त्रमप्येकं अगस्त्यकर्तृकमस्तीति श्रूयते । तमिळुसंस्कृत्याः जनकं अगस्त्यं वदन्ति **कन्याकुमार्याः** समीपस्थे "**पोधीय**"नामके पर्वते अगस्त्योऽद्यापि अदृश्यः सन् तपोमग्न इति द्राविडानां दृढो विश्वासः ।

ततोऽगस्त्यः सागरमुत्तीर्य काम्बोडियाद्वीपमाजगाम । अमुमेवोदन्तं पौराणिकाः [3]**सप्तसागरशोषण-सप्तसागरपान**त्वादिना च सोत्प्रेक्षं वर्णयन्ति । उक्तञ्च **काम्बोडिया-**

---

[1] शिवानुभव त्रैमासिकी पत्रिका– १९२८ सं. ५. [2] 'जीर्णस्ते जाठरे वह्नौ द्दप्तो वातापिदानवः' (सि. शि. ४ २९). [3] आचान्ता भवता पूर्वं पङ्कशेषाः पयोधयः (सि. शि. ४-३९).

गत " अङ्कोरवाट "स्थे शिलालेखने– " आर्यदेशीयः कश्चन अगस्त्यो नाम ब्राह्मणः काम्बोडियाद्वीपमागत्य शिवयोगसिद्धो भूत्वा अलौकिकया शक्त्या भद्रेश्वरं समपूजयत् " इत्युल्लिखितः ।

अत्र अगस्त्यः " महिसिद्ध "वंशजायाः " यशोमती "नाम्न्याः राजकन्यायाः पाणिं गृहीत्वा, तस्यां " नरेन्द्रवर्म "नामानं सुतं लेभे " इति । तत्रस्थे अन्यस्मिन् शासनेऽपि समर्थितोऽयमुदन्तः ।

उक्तञ्च वायुपुराणे– अगस्त्यः बर्हिणद्वीप (बोर्नियो) कुशद्वीप-वराहद्वीप-शौख्य-द्वीपेष्वपि सञ्चचारेति । " हरिवंशेऽपि " अगस्त्यस्य परिपूत आश्रमः कुञ्जरपर्वते आसीदिति वर्णितश्च ।

पूर्वजावागत " दिनमया "ख्यग्रामसमीपे कस्मिंश्चत् शासने क्रि. पू. ७६०, तमेऽब्दे अगस्त्यनाम्ना काचन मूर्तिस्समुत्कीर्णा । तत्रागस्त्यं " शिवगुरुः, 'भट्टारकगुरुः इत्याद्यभिधानैः " कथयन्ति ।

अगस्त्यस्य जन्मभूमिस्तु कर्णाटकराज्यान्तार्गतः " कलशा "ख्यो ग्रामः (चिक्कमगळूरु जिल्ला) । तत्राद्यापि तत्स्मारकानि विद्यन्ते । इदमेवागस्त्यस्य "[1]कुम्भसम्भवत्वादिकस्य-पौराणिकवर्णनादेर्मूलम् । गङ्गोळीमहाशयस्तु मलयाद्रिं सुमात्राद्वीपस्थं कथयति । परन्तु हळकट्टी महोदयः, तन्निराकृत्य मलयाचलं दक्षिणभारते रेणुकाचार्यस्य रम्भापुरीपीठसमीपस्थं कथयति । रेणुक-रेवणसिद्धयोरैतिह्याख्ये प्रबन्धेऽपि वि. जि. पाटील् (रि. अ. ए. इन्स्पेक्टर्-बेळगाव्) महोदयः उदन्तमिमं सोपपत्तिकं समर्थयति । अगस्त्यमहर्षेः आदि-रेणुकेनैव तत्त्वोपदेशः कृत इति निश्चित्य [2]अगस्त्यस्य कालः क्रि. पू. ७८० शताब्दात् पूर्व इति अभिप्रैति ।

## कति रेणुकाभिख्या आचार्याः ?

एतेत सिद्धान्तशिखामण्युक्तो ? रेणुकः तदुक्तया रीत्या अगस्त्याय मुनये शिवाद्वैतसिद्धान्तमुपदिदेश । ततस्सः विभीषणस्य प्रार्थनानुगुणं लङ्कायां दशाननसङ्कल्पिता

---

[1] " ददर्श स महायोगी मुनिं कलशसम्भवम् (सि शि ४·३२). [2] " शिवानुभव " त्रैमासिकी (१९५३, सं. ८).

कोटित्रयशिवलिङ्गप्रतिष्ठां चाकरोदिति तत्राभिवर्णितम्। एतेन अगस्त्यमुनेः सिद्धान्तशिखामणिप्रतिपादितस्य रेणुकस्य चापि कालः माक्रीं क्रि. पू. (७००) शताब्दिर्भवेदित्यभ्यूह्यते।

२) रेवणः– ततो माक्रीं क्रि. श. ५३५-६३५ शताब्दौ रचितस्य [1]हरिभद्रसूरेः "षड्दर्शनसमुच्चया"ख्यस्य ग्रन्थस्य व्याख्याता मणिभद्रसूरिः स च स्वकीयव्याख्यायां

उत्पलः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः।
वामनस्तूभयं वेत्ति न किञ्चिदपि रेवणः॥

इति कश्चन रेवणं दार्शनिकेषु मध्ये पठति। मणिभद्रसूरेःकालस्तु न ज्ञायते च। अतः रेवणाख्यः कश्चनः वीरशैवाचार्यो आसीदिति ज्ञायते। न ज्ञायते चास्य कालः।

३) रेवणसिद्धः।

अतःपरं यश्च आचार्यशङ्कराय चन्द्रमौलीश्वरं लिङ्गं रत्नगर्भं च गणपतिं च दत्तवान् रेवणसिद्धः स तृतीयः। अस्मिन् विषये बहुषु ग्रन्थेषु उल्लेखो दृश्यते। तत्र पूर्वं श्रीशृङ्गेरीमठाध्यक्षाणां सच्चिदानन्दभारतीमहास्वामिनामाज्ञानुसारेण तदास्थानविदुषा काशीलक्ष्मणशास्त्रिमहोदयेन विरचिते गुरुवंशकाव्ये–

[2]श्रीचन्द्रमौलीश्वरलिङ्गमस्मै
सद्रत्नगर्भं गणनायकं च।
स विश्वरूपाय सुसिद्धदत्तं
दत्वा न्यागदीच्चिरमर्चयेति॥ ३३॥

व्याख्यातञ्चैतत् ग्रन्थकर्तृणैव यथा–

---

[1] जन्मसमयश्च हरिभद्रसूरेः प्रायः पञ्चम्याः वैक्रमशताब्द्याः समाप्त्युपकण्ठ अस्त्यनुमीयते। यतः षष्ठयास्तच्छताब्द्याः पंचत्रिंशे वर्षेऽयं पंचत्वमगमदिति निरधीधरनैतिहासिकाः। षड्दर्शनसमुच्चय भूमिका p. 3 (Printed at Banaras in 1905). [2] 'गुरुवंशकाव्यम्' श्रीरङ्गाधिष्ठितवाणीविलास मुद्रणालये मुद्रितम्। [3] गुरुवंशकाव्यम् स. ३.

"सुसिद्धेन रेवणसिद्धमहायोगिना दत्तं श्रीचन्द्रमौलीश्वरलिङ्गं सद्रत्नगर्भं सद्रत्नं माणिक्यं गर्भे यस्य सः तथोक्तस्तं गणनायकश्च" इत्यादिना आदिशङ्करः स्वस्य प्रथमशिष्याय सुरेश्वराचार्याय भगवता श्रीरेणुकाचार्येण स्वस्मै प्रदत्तं चन्द्रमौलीश्वराख्यं लिङ्ग-गणपतिं च प्रददौ इति। एवं [1]तत्रैव विचारोऽयं पुनः प्रकीर्त्यते। एवं केळदीबसवराजेन संकलिते [2]शिवतत्त्वरत्नाकरेऽपि—

ततः स रेवणासिद्धसम्प्रदायप्रवर्तिनाम्।
शङ्कराचार्यवर्याणां पारम्पर्यक्रमागतम्॥ ९॥

संन्यासिनमुपाश्रित्य विनयावनतोऽधिकम्।
वृत्तान्तमखिलं तस्मै यतये स्वं व्यजिज्ञपत्॥ १०॥

रेवणासिद्धसम्प्राप्तं चन्द्रमौलीशमप्यदात्।
आख्यायानेन लिङ्गेन तवाभीष्टाप्तिरित्यपि॥ १२॥

एतेन आद्यानां आचार्यशङ्कराणां समकालिकः कश्चन रेणुक आसीदिति वक्तुं शक्यते। रेणुकपरम्परायामयं तृतीयः तदभिन्न आचार्यः प्रतिभाति।

### ४) रेवणसिद्धेश्वरः

अतःपरं क्रि. श. एकादश-द्वादशशतकयोर्मध्ये अवतीर्य दिगन्तविश्रान्तां कीर्तिं लब्ध्वा सुप्रख्यातो रेवणसिद्धेश्वरः तुरीय इति प्रतिभाति। यस्य पवित्रमभिधानं श्रीकरभाष्यस्यादौ गुरुपरम्परायामभिवर्णितम्। अयं चाचार्यः ऐतिहासिको नागमोक्तः पुराणोक्तो वा; यश्च राजाधिराजपूजितचरणारविन्दः महानुभावी क्रि. श. १०५०-११५७ पर्यन्तं सप्तोत्तरशत (१०७) वर्षाणि उषित्वा अघटितघटनापटुरिति विख्यातोऽभवत्।

### श्रीकरभाष्यप्रभावः तदर्वाचीनेषु ग्रन्थेषु

श्रीकरभाष्यादनन्तरं विरचितेषु वीरशैवसिद्धान्तग्रन्थेषु क्रियासारः [3]नीलकण्ठशिवाचार्य विरचितः प्राथम्यं लभते। तत्र; श्रीकरभाष्योक्ताः अनेके विषयाः सन्दृश्यन्ते।

---

[1] गु. का स. ५-५९ सर्गे ६.१.२. [1] 'शिवतत्त्वरत्नाकरः' तरङ्गः १२— मदरास् सर्वकारीय प्राच्यग्रन्थभाण्डागार प्रकाशनम्।' [4] नीलकण्ठशिवाचार्य कालः— क्रि. श. १४००.

यच्च जिज्ञासाधिकरणे श्रीकरभाष्ये "अमृतस्य देवधारणो भूयासं" इति मन्त्रः विषयवाक्यत्वेन गृहीतः स एव **क्रियासारेऽपि** दृश्यते इति पूर्वमावेदितमेव । यथा–

अ) **विषयवाक्यं**–

> [1]**तत्रामृतस्य वाक्योक्तलिङ्गधारणवैभवे ।**
> **लिङ्गाङ्गसामरस्ये च फलं मोक्षं प्रचक्षते ॥**

इत्यादिना लिङ्गधारणं समर्थितम् । प्रायेण श्रीपतिरपि **क्रियासारमूलात् नीलकण्ठ-भाष्यात्** वा इदनगृण्हात् ।

आ) **भेदाभेदः**–

[2]शिवजीवयोः भेदाभेदप्रतिपादनं च **श्रीकरभाष्ये** यत्र यत्र अधिकरणेषु "**अहिकुण्डलादिषु**" प्रतिपादितं तत्र सर्वत्र **क्रियासारेऽपि** भेदामेदः समर्थितः । उक्तञ्च–

> [3]**न जीवब्रह्मणोरैक्यं सूत्रस्य स्वरसतः स्फुरेत् ।**
> **इति व्याचक्षते शक्तिविशिष्टं विषयस्त्विति ॥ १ ॥**
>
> **अग्निस्फुलिङ्गयोर्नास्ति तथा भेदः स्वरूपतः ।**
> **अग्नित्वेन कणत्वेन भेदोऽपि स्फुरति क्वचित् ॥ १५ ॥**
>
> **यथाहिकुण्डलमिति भदाभेदौ तथात्र च ।**
> **तस्माच्छक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटम् ॥ १६ ॥** इत्यादि ।

[4]"अतः परं **सासलचिकणाराध्य** प्रणीते **पञ्चब्रह्मोदयभाष्ये**– श्रीपतिविरचितस्य भाष्यस्योल्लेखः संसूच्यते । तत्र- 'वेदमन्त्रस्य सानन्दमुनिः' शम्भु(ब्राह्म)सूत्राख्यं ३६ सहस्रग्रन्थपरिमितं ७२ अध्यायात्मकं भाष्यं लिलेख । ततः श्रीपतिपण्डितः तदर्थं

---

[1] क्रि. सा. १-५. [2] क्रियासारे – पृ. १२७. [3] क्रि. सा उ. १ ९६ [4] सासल चिकणाणा-राध्य कालः– क्रि. श. १४५० अयश्चांश कन्नड कविचरिते भा. ।।। पृ. ३७८ द्रष्टव्यः ।

संगृह्य **आराध्यसंहिताख्यया १२** सहस्रगन्थपरिमितं षोडशाध्यायात्मकं भाष्यं व्यरचयत् " इति कन्नड कविचरितेक्तम्। अत्र **श्रीकरभाष्यस्य** षोडशपादा **एव** षोडशाध्यायत्वेन रूपिता भवेयुरिति ज्ञातुं शक्यते। (**K. 1674** तालपत्रकोशः- क. अध्ययनसंस्था मैसूरु विश्व-विद्यालयः पृ. ४९)

अतःपरं क्रि.श. १७०० शताब्दे रचितायां [1]**नन्दिकेश्वरस्य " लिङ्गधारण-चन्द्रिकायां " श्रीकरभाष्यकर्तुः** श्रीपतिपण्डितस्य नाम सुस्पष्टमेव निर्दिष्टम्। तत्र श्रीकरभाष्यगताः अन्तर्लिङ्गधारण-बहिर्लिङ्गधारणादयो बहवो विषयाः यथाश्रुतं उद्धृताः। उक्तञ्च– " वेदार्थप्रणेतृभिः **विद्यारण्यैः सर्वलिङ्गं स्थापयतीति " मन्त्रस्य** लिङ्गधारण-परत्वेन अव्याख्यातत्वात् कथं तस्य मन्त्रस्य लिङ्गधारणपरत्वमित्याशङ्क्य " तैर्व्याख्या-तत्वेऽपि **कालहस्तिदीक्षित-मञ्चण-पंडिताराध्यप्रभृतिभिः** तत्परत्वेन व्याख्यानात् " इत्यादिना श्रीपतिपंडितस्य नामोल्लेखः कृतः।

किञ्चात्र उल्लिखितः पण्डितः न **श्रीपति**पण्डितः किन्तु **तैत्तिरीयोपनिषद्भाष्यकर्ता** [2]वृषभपण्डित इति एम. आर्. **साखरे** महोदयेन सम्पादिते **लिङ्गधारणचन्द्रिको-पोद्घाते** (पृ.६५७) सूचितम्। तन्न श्रद्धेयम्– यतो **वृषभ**पण्डितोऽपि **तैत्तिरीयो-पनिषद्भाष्ये श्रीपति**पण्डितं सश्रद्धं संस्मरति। उक्तञ्च तद्भाष्यारम्भे

**वेदव्यासं सूत्रकारं दूर्वासं वृत्तिकारकम्।**
**भाष्यकृत्पण्डिताराध्यं प्रपद्ये पाशमुक्तये॥** इति।

अन्यच्च– स्वभाष्ये **श्रीकरभाष्यं** सर्वात्मना संगृह्य स्वकीयोपनिषद्भाष्ये उद्धरति। किञ्च– **श्रीमन्मरितोण्डदार्यप्रणीतवीरशैवानन्दचन्द्रिकायां** (वादकाण्डे) **उमचिगि शङ्करशास्त्रि** प्रणीतेषु **उपनिषद्भाष्यादिषु च श्रीकरभाष्यानुसरणं सर्वात्मना कृतम्।**

एतेन **श्रीपति**पंडिताराध्यप्रणीतं **श्रीकरभाष्यं** क्रि. श. एकादशशताब्दादारभ्य अद्यावधि वीरशैवशास्त्रकारैः प्रमाणत्वेन स्वीकृतमिति सर्वश्रुतम्।

---

[1] लिङ्गधारणचन्द्रिका पृ. ८८. नन्दिकेश्वरकृता– वाराणसेयप्रकटनम्– १९०५ [2] वृषभपंडित-कालः– क्रि. श १७००.

१४

# वीरशैवसिद्धान्तस्वरूपम्

निगमागमप्रसिद्धोऽयं सिद्धान्तः सनातनः शिवागमप्रसिद्धःश्च । उक्तञ्च रेणुक भगवत्पादाचार्यैः– ।

[1]सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ॥ इति

श्रीपतिपण्डिताराध्या अपि स्वकीयभाष्यस्वरूपं भाष्यारम्भे एवं निर्दिशन्ति–

श्रुत्यैकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ॥ इति ।

वीरशैवशब्दनिर्वचनमपि सिद्धान्तशिखामणौ निर्दिष्टम्–

[2]वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ।
तस्यां रमन्ते ये शैवाः वीरशैवाः प्रकीर्तिताः ॥ इति ।

एवमाचार्यपादैरपि स्वीयं श्रीकरभाष्यं भेदाभेदात्मकं अथवा द्वैताद्वैतात्मकं इति यद्यपि निर्दिष्टं तथापि भाष्यमिदं विशेषाद्वैतपरमिति वदन्ति । तत्स्वरूपमपि तत्रैवोक्तम्–

[3]वीशब्देनोच्यते शम्भुर्हंसहंसेति मन्त्रतः ।
शेषशब्देन शारीरो "यथाग्ने"रिति मन्त्रतः ।
अद्वैतेन भवेद्योगो यथा नद्य इति श्रुतेः ॥ इति ।

---

[1] सि. शि. प ५.२४. [2] सि. शि. मणि. प. ५. [3] श्रीकरभाष्यं– श्लो. १६.

**विशेषाद्वैत**पदनिर्वचनं च उत्तरत्र निरूपितम् यथा– "विश्च शेषश्च विशेषौ तयोरद्वैतं **विशेषाद्वैतं** इति निरुक्तिः। अद्वैतपदेन **भ्रमरकीटवज्जीवस्य** स्वाभाविकभेदनिवृत्तिः प्रतिपाद्यते। **"हंसहंसेति यो ब्रूयात्"** इत्यादिश्रुतिषु **"विशब्दश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि"** इति नैघण्टुकेषु विशब्दस्य परमात्मवाचकत्वेन स्पष्टोपदेशात्। वात्युत्पादयतीति व्युत्पत्त्या च विशब्देन जगत्कारणत्वं ब्रह्मलक्षणं सूचितम्। **"यथाग्नेः विस्फुलिङ्गाः"** इति श्रुतिषु परमशिवांशत्वेन जीवानां व्यपदेशात्। शेषशब्देन जीवोऽभिधीयते। अद्वैतपदेन **'यथा नद्यः'** इत्यादि[1]**श्रुतिसिद्धसायुज्यं** जीवब्रह्मणोरुपदिष्टम्।

विशेषाद्वैतमित्यत्र **विः** – परमात्मा, **शेषः** – शिवांशो जीवः। **"हंस हंसः"** **'यथाग्नेः'** इति मन्त्रौ अर्थमिमं समर्थयतः। एवम्भूतयोः **शिव-जीवयोः** **'यथानद्यः'** इति श्रुत्युक्तरीत्या यदद्वैत**मर्थात्** ऐक्यमेव; लिङ्गाङ्गसामरस्यात्मकः शिवयोगः। अयमेव **शिवाद्वैत-शक्तिविशिष्टाद्वैत-विशिष्टाद्वैत-षट्स्थलसिद्धान्तादिपदैः** व्यवह्रियते। पर्यायपदानामेतेषां निर्वचनमित्थं सङ्गच्छते–

अ) **विशेषाद्वैतम्**– विश्च शेषश्च विशेषौ; तयोरद्वैतं विशेषाद्वैतम्[2]।

आ) **शक्तिविशिष्टाद्वैतम्**– शक्तिश्च शक्तिश्च शक्ती; ताभ्यां विशिष्टौ जीवेशौ; तयोरद्वैतं शक्तिविशिष्टाद्वैतम्। सा च शक्तिर्द्विविधा, स्थूलचिदचिदात्मिका शक्तिः– सूक्ष्मचिदचिदात्मिका शक्तिश्चेति। शक्तिश्च शक्तिश्च शक्ती इत्यत्र प्रथमशक्तिपदस्य स्थूलचिदचिदात्मकशक्तिरिति, द्वितीयस्य शक्तिपदस्य सूक्ष्मचिदचिदात्मकशक्तिरिति चार्थः। जीवः स्थूलचिदचिदात्मकशक्तिविशिष्टः। अत्र स्थूला चित्– किञ्चिज्ज्ञत्वरूपा, स्थूला अचित् किञ्चित्कर्तृत्वरूपा। शिवस्तु सूक्ष्मचिदचिच्छक्तिविशिष्टः। सूक्ष्मा चित् सर्वज्ञत्वरूपा, सूक्ष्मा अचित् सर्वकर्तृत्वरूपा। अर्थात् जीवः किंचिज्ज्ञत्व-किञ्चित्कर्तृत्वरूपशक्तिविशिष्टः; शिवः सर्वज्ञत्व-सर्वकर्तृत्वरूपशक्तिविशिष्टः इति सिध्यति। एवम्भूतयोः जीवेशयोः स्थूल-सूक्ष्म-चिदचिच्छक्तिविशिष्टरूपयोः

---

[1] श्रीकरभाष्यं– १-३-१-७, पृ. २७६. [2] क्रियासारे उ. १-२६

अद्वैतं अर्थात् **सामरस्यं** "जले जलमिव न्यस्तं" "**वह्नौ वह्निरिव**" इति (न्यायेन) यत् तत् शक्तिविशिष्टाद्वैतम् ।

शक्तिविशिष्टाद्वैतपदं भाष्यकारेण "शक्ति**विशेषवि**शिष्टशिवाद्वैतमिति" क्रियासार कारेण **नीलकण्ठशिवाचार्येण** "तस्माच्छक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटम्" इति, **वीरशैवानन्दचन्द्रिका**कारेण **मरितोण्टदार्यशिवयोगिना** [1]"वीरशैवसिद्धान्तस्य लिङ्गाङ्ग-सामरस्यात्मकपरिणाम्युपादानरूपशक्ति**विशिष्टशिवाद्वैतस्य** सकलद्वैतविलक्षणत्वेन साधनीयतया" इति च प्रयुक्तम् ।

किञ्च श्रीकरभाष्ये– "**एतद्द्वैताद्वैत**मेव केचिद्**विशेषाद्वैतमिति, सेश्वराद्वैत**मिति, **सर्वश्रुतिसारमतन**मिति पर्यायत्वेन प्रवदन्ति" इति अस्य सिद्धान्तस्य पर्यायनामान्युल्लि-खितानि ।

इ) **विशिष्टाद्वैतम्**– विशिष्टं च विशिष्टं च विशिष्टे, विशिष्टे लिङ्गाङ्गे ; तयोरद्वैतं विशिष्टाद्वैतम् । अत्र प्रथमस्य विशिष्टपदस्य चिच्छक्तिविशिष्टः **परशिवः– रुद्रादि-**संज्ञकं "**लिङ्ग**"मित्यर्थः । द्वितीयस्य विशिष्टपदस्य चित्तशक्तिविशिष्टशिवांशरूपोऽङ्ग-शब्दवाच्यो जीव इत्यर्थः । एवंरूपयोः लिङ्गाङ्गयोः यदद्वैतं (**सामरस्यं**) **तद्विशिष्टा-द्वैतम्** ।

ई) **शिवाद्वैतम्**– शिवश्च शिवश्च शिवौ ; तयोरद्वैतं शिवाद्वैतम् । अत्रापि प्रथमस्य शिवपदस्य सूक्ष्मचिदचिच्छक्तिविशिष्टं शिवाभिधं "**लिङ्ग**"मित्यर्थः । अपरस्य शिवपदस्य स्थूलचिदचिच्छक्तिविशिष्टं, अनाद्यविद्ययाऽभिभूतशिवांशस्वरूपः, शिवदीक्षयापह्रिय-माणमलो जीवः अङ्गमित्युच्यते: । एवम्भूतयोर्लिङ्गाङ्गयोर्यदद्वैतं तत् शिवाद्वैतम् । पदमिदं [2]इदं "**शिवसिद्धान्तमिति**" "मदद्वैतपरं शास्त्रं" "शिवाद्वैतपरिज्ञानं" "शिवाद्वैतपरानन्दं" इत्यादिना सिद्धान्तशिखामणौ बहुधा प्रयुक्तम् ।

३) **शिवयोगः**– सूक्ष्मचिदचिच्छक्तिविशिष्टे शिवे शिवदीक्षया नष्टमलस्य शुद्धा-त्मनो जीवस्य यो योगः सामरस्यं तच्छिवयोग इत्यर्थः ।

---

[1] **मरितोण्टदार्यकृतवीरशैवानन्दचन्द्रिकायां–पृ. २३.** [2] **शिवाद्वैतशब्दापरपर्यायशब्दाः प्रयुक्ताः सि. शि पु. १-१७, ३-७०, ४-५, ४-४१.**

श्रीमन्नीलकण्ठशिवाचार्याः सिद्धान्तमिदं **विशिष्टाद्वैतं शक्तिविशिष्टाद्वैतं** वा वक्तव्यमिति वदन्ति ।

यद्यपि **श्रीकण्ठ-रामानुजावपि** स्वस्वमतं **विशिष्टाद्वैतमिति** वदतः । तदुक्त वैशिष्ट्यं च यथाक्रमं अन्तर्गणिकभेदरूपं– अपृथक्सिद्धत्वरूपं वा वैशिष्ट्यं **क्रियासारा**भिप्रेतं न भवितुमर्हति । यतः तादृशं वैशिष्ट्यं **श्रीपतिपंडितेन** सम्यक् निराकृतम् । उक्तञ्च–

[1]"**एवं विशिष्टाद्वैतस्याऽसङ्गतत्वात् विशेषाद्वैतमेव मुमुक्षुभिरादरणीयम्**" इति ।

**अन्यत्र च** "अत्र केचित् असिन्नानन्दमये ब्रह्मणि जीवस्य अस्य तद्योग शेषत्वसम्बधं शास्ति शास्त्रं प्रतिपादयतीति **विशिष्टाद्वैतमेव** मुख्यमिति जल्पन्ति ; तदवैदिकत्वान्न मुमुक्षुग्राह्यम् । .... विशिष्टाद्वैतमित्युक्तिविरोधात् ; विशिष्टस्य दुर्निरूप्यत्वेन मिथ्यात्वाच्च । विशिष्टं नाम विशेषणविशेष्यसम्बन्ध एव........ [2]तस्मात् विशिष्टस्य विशेषणविशेष्यसम्बन्धेभ्यस्सत्वासत्वाभ्यां दुर्निरूप्यत्वेन मिथ्यात्वात्तच्छिवाद्वैतमेव ग्राह्यम्" इत्यादिना विशिष्टाद्वैतं निराकृत्य "**शक्तिविशिष्टशिवाद्वैतं**" समर्थितम् । अथ च इदमेवान्यत्र [3]"शक्तिविशिष्टशिवाद्वैतहानेः" इत्यादिना प्रतिपादितञ्च ।

## शिवस्य शक्तिवैशिष्ट्यप्रतिपादनम्

सिद्धान्तेऽस्मिन् ब्रह्म अद्वैतमतोक्तरीत्या न केवलं ; किन्तु जीव-शिवौ विशिष्टौ वैशिष्ट्यञ्च विशेषणविशिष्टत्वरूपम् । समर्थितञ्च **क्रियासारे**–

[4]"**यथा घट इति ज्ञाने घटत्वं स्यात् विशेषणम् ।**
**तथा ब्रह्मणि वैशिष्ट्यं शक्तिरित्यभिधीयताम् ॥**

**न जीवब्रह्मणोरैक्यं सूत्रस्य स्वरसतः स्फुरेत् ।**
**इति व्याचक्षते शक्तिविशिष्टं विषयस्त्विति ॥**" इति । तथा
"**तस्माच्छक्तिविशिष्टस्य जिज्ञासा ब्रह्मणः स्फुटम्**" इत्यादिना च ।

---

[1] श्रीकरभा १-३-२ पृ. २७१. श्रीकरभाष्य– १-१-२१ पृ. १३८-१३९. [3] श्रीकरभाष्य– १-१-४ पृ. ८७ [4] क्रियासारे– १ ९३ ९६.

**वीरशैवसिद्धान्ते** [1]शक्तिवैशिष्ट्यं असाधारणलक्षणत्वेनाङ्गीकृतम् । सा च शक्तिः परशिवब्रह्मणि अविनाभावसम्बन्धेन विद्यमाना नित्या च । अस्मिन् भाष्ये शक्ति-शक्तिमतोरनन्यता च **आरम्भणाधिकरणे** च सम्यक् प्रतिपादिता इति । अस्याः शक्त्याः स्वरूपं श्रुतिषु आगमेषु च बहुधा प्रपञ्चितम्–

[2]**"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"**

[3]**"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।"**

अत्र **"स्वाभाविकी"** **"देवात्मशक्तिं"** इत्यादिपदानां स्वारस्येन शक्तिः परशिवब्रह्मणि स्वभावसिद्धेति विज्ञायते । सा च शक्तिः ज्ञानशक्ति-क्रियाशक्त्यादि-प्रभेदैः बहुप्रकारा । यथा–

**"[4]यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः ।**
**तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥"**

अत्र पुराणी अनादिसंसिद्धा, प्रज्ञा-चिच्छक्तिः, परशिवब्रह्मणः सकाशात् प्रसृता क्रियाशक्त्याद्यनन्तरूपेण प्रसृतेत्यर्थः ।

[5]**"मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम्"**

नचात्र मायाशब्दः अद्वैतदर्शनप्रसिद्धः मूलाऽविद्यारूपः ; किन्तु शिवाविनाभूत-विमर्शशक्त्यपरपर्याया इत्यवधेयम् ।

उक्तञ्च **सिद्धान्तागमे**–

**मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः ।**
**मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी ॥**

इति । [6]**"मं-शिवं** अयति स्वभावतः प्राप्नोतीति माया इति समर्थितं च श्रीकर-भाष्येऽपि ।

---

[1] शक्तिशक्तिमतोरनन्यत्वं श्रीकरभाष्ये पृ. ३६, तथा आरम्भणाधिकरणे पृ. ३९२. [2] श्वेता– ६-७.. [3] श्वेता– १-२ [4] श्वेता– ४-१८. [5] श्वेता– ४-१० [6] श्रीकरभाष्यं– पृ ३८२.

"एषा शक्तिः शिवा ह्येतच्छक्तिमानुच्यते शिवः ।
शक्ति-शक्तिमतोर्भेदं वदन्ति परमार्थतः ॥
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥" इति ।

एवं शिव-जीवयोरपि भेदाभेद एव पारमार्थिकः । यथा अग्नेः सकाशादाविर्भूतानां अग्निकणानां अग्नेश्च अत्यन्तभेदो अत्यन्ताभेदो वा वक्तुं न शक्यते, किन्तु भेदाभेद एव वक्तव्यः ; तथैव शिवादाविर्भूतानां शिवस्वरूपाणां अङ्गशब्दवाच्यानां जीवानां लिङ्गशब्दवाच्यस्य शिवस्य च अत्यन्तभेद अत्यन्ताभेदो वा वक्तुं न शक्येत ; किन्तु भेदाभेद एव वक्तव्यः । अंशांशिनोः अत्यन्ताभेदे अग्निकारणकाः पाकादिक्रियाः अग्न्यंशभूतविस्फुलिङ्गैरपि भवेयुः । अत्यन्तभेदे तदा अग्नेः अत्यन्तभिन्नजलादिभिरपि दाहक्रियाः यथा न सम्भवन्ति तथा अग्निकणैरपि दाहो न जायते । परन्तु लोकप्रसिद्धमेवैतत् यदग्निकणाः तूळादिकं रञ्जकं वस्तु प्रविश्य दाहमुत्पादयतीति ।

एवं शिवस्य शिवांशरूपजीवस्य च अत्यन्ताभेदाङ्गीकारे शिवनिष्ठाः सर्वज्ञत्वादयः जीवात्मन्यपि सम्भवेयुः । तयोः अत्यन्तभेदाङ्गीकारे शिवभिन्नैः घटपटादिभिः ज्ञानरूपकार्याभाववत् जीवेनापि न भवेत् । किन्तु जीवात्मनां घटपटादिवस्तुज्ञानं प्रसिद्धम् । अत एव श्रीपतिपण्डितचरणैः द्वैताद्वैतात्मकं विशेषाद्वैतमङ्गीकृतम् ।

श्रुतिषु [1]'द्वासुपर्णा' इत्यादिषु शिव-जीवयोः द्वैतं प्रतिपादितम् । तथैव [2]"तत्त्वमसि" [3]"अहं ब्रह्मऽस्मि" इत्यादिषु अद्वैतं प्रतिपादितम् । उभयार्थप्रतिपादकानां श्रुतीनां समन्वयसम्पादनमेव वैदिकानां कर्तव्यम् । तच्च वीरशैवाचार्यैः सश्रद्धमनुष्ठितम् । उक्तञ्च श्रीपतिपण्डितभगवत्पादैः—

द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ॥ इति ।

## जगत्सृष्टौ परिणामवादस्य स्थानम्

जगदिदं शक्तिविशिष्टस्य ब्रह्मणः परिणामः । यथा सुवर्णं आभरणादिरूपेण परिणमति तथा जगत्सृष्टौ प्रवृत्तं शक्तिविशिष्टं ब्रह्म जगद्रूपेण परिणतम् । उक्तञ्च—

[1] मुण्डकोपनिषत्– ३-१-१. [2] छान्दोग्यम्– ६-८-७. [3] बृ. १-४-१०.

[1] "आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः ।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात् ॥ ६५ ॥

पत्रशाखादिरूपेण यथा तिष्ठति पादपः ।
तथा भूम्यादिरूपेण शिव एको विराजते" ॥ ६६ ॥

[2] "वृक्षस्य पत्रपुष्पादि वटबीजे स्थितं यथा ।
तथा हृदयबीजस्थं विश्वमेतत्परात्मनः" ॥ २६ ॥

[3] "स्वशक्तिप्रचयोऽस्य विश्वम्"

[4] "शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ॥"

[5] "बहुस्यां प्रजायेय"

[6] "यथोर्णनाभिः सृजते गृण्हते च"

इत्यादिषु श्रुतिषु जगतः ब्रह्मपरिणामत्वं सूचितम् ।

## जगत्सत्यत्वप्रतिपादनम्

अद्वैतनये "ब्रह्म सत्यं जगन्मिथ्या" इत्युक्तदिशा जगज्जीवयोर्मिथ्यत्वमङ्गीकृतम् । शिवाद्वैतनये तु परशिवपरिणामरूपौ जगज्जीवौ नित्यौ । उक्तञ्च– [7] "तत्सृष्ट्वा-तदेवानुप्राविशत्" इति । अतो जगत्सत्यम् ।

[8] "शिवतत्त्वात्समुत्पन्नं जगदस्मान्न भिद्यते ।
फेनोर्मिबुद्बुदाकारो यथासिन्धोर्न भिद्यते ॥"

इति सत्यस्वरूपात् शिवतत्त्वात् समुत्पन्नं जगदपि सत्यमेव ।

---

[1] सि. शि. प. १०. [2] सि. शि. प. २० [3] शिवसूत्र ३-३०. [4] सर्वमङ्गलाग्रन्थे स्पष्टोयमंशः ।
[5] छां. ६-२-३. [6] मुं. १-१-८. [7] तै. आ. ६. [8] सि. शि. प १०.

## [1]अथवीरशैवनयसृष्टिक्रमः

परशिवश्च सच्चिदानन्दस्वरूपः, नित्यः, निर्विकल्पः अप्राकृतवैभवः, उपमातीतः, सर्वज्ञः, शान्तः, चराचरप्रपञ्चव्यापकः सर्वशक्तिसमन्वितश्च ।

शिवांशीभूतो जीवोऽपि किञ्चिज्ज्ञः, किञ्चित्कर्ता, किञ्चिच्छक्तिसमन्वितः, अविद्यामोहितः, ब्रह्मैश्वर्यज्ञानवर्जितः, घोरापारनिस्सारसंसारतापत्रयानलदन्दह्यमानः जननमरणान्वितो बद्धश्च ।

## षट्त्रिंशत्तत्त्वानि

सच्चिदानन्दरूपे परशिवब्रह्मणि अविनाभावसम्बन्धेन विद्यमानायाः विमर्शशक्त्याः स्फुरणात् षट्त्रिंशत्तत्त्वात्मकं जगदुत्पन्नम् । उक्तञ्च बृहज्जाबालोपनिषदि–

"पुनस्तं होवाच कानि षट्त्रिंशत्तत्त्वानीति स तस्या आह शिव-शक्ति-सदाशिव-ईश्वर-शुद्धविद्या एतानि शुद्धानि पञ्चतत्त्वानि; माया कालो नियतिः कला विद्या रागः पुरुषः इति शुद्धाशुद्धानि सप्ततत्त्वानि ।" इत्यादिना षट्त्रिंशत्तत्त्वानि वर्णितानि । एवं महानारायणोपनिषद्यपि षट्त्रिंशत्तत्त्वानि प्रतिपादितानि । तानि च समर्थितानि श्रीकरभाष्ये संख्योपसंग्रहाधिकरणे "[2]षट्त्रिंशत्तत्त्वानि सङ्कुचितत्वेन व्यपदेशात् श्वेताश्वतर-नारयणाद्युपनिषत्सु अतिविस्पष्टतया तद्दर्शनात् श्रुत्यागमानुसारेण द्वितीयपादप्रथमाधिकरणे बहुधा प्रपञ्चितम् । तस्मात् षट्त्रिंशत्तत्त्वग्रहणमेव युक्तम् । उक्तञ्च नीलकण्ठशिवाचार्यैः शैवपरिभाषायाम्–

"सृष्टेः प्राक् परशिवब्रह्मणः पराशक्तेश्च सूक्ष्म-स्थूलचिदचिद्रूपादिनामरूपविभागानर्हदशायां यथा–

> [3]"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।
> तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी"

---

[1] षट्त्रिंशत्तत्त्वात्मना जगत्सृष्टिप्रकारः प. ४१ तः ४४ पर्यन्तं पूर्वं निरूपितम् । [2] श्रीकरभाष्ये अ १. पा. ४-११ पृ. ३४१-३४२. [3] श्वेताश्वतरे– ४.१८.

**अस्यायमर्थः**– यस्मिन् काले चन्द्रसूर्यादिप्रकाशकवस्तूनां शून्यत्वेन दिवारात्रि-विभागरहितं नामरूपविशेषाभावदशायां सूक्ष्म-स्थूलचेतनाचेतनसदसद्व्यक्तिव्यवस्थाभावतः सर्वमिदं तमसावृतमासीत्। तदा शिवतत्त्वमेव अद्वितीयं केवलं नामरूपविभागानर्ह-सूक्ष्मचिदचिदात्मकशक्तिविशिष्टं स्वयम्प्रकाशत्वेन परिशिष्टमभूत्। तदेव शिवतत्त्वं तदानीं अक्षरं नाशरहितं परं वस्तु तत् सवितुः आदित्यस्य पूर्वं प्रकाशप्रदत्वेन वरेण्यं अन्तर्वर्तिप्रकाशरूपं तदपि तदेव शिवतत्त्वं तस्मात् तादृशात् पुराणी सनातनी नित्यशुद्धा विमर्शमयी प्रज्ञा चिदचिद्रूपशक्तिः प्रसृता प्रावर्तत इति (प्रकरणं– ७)।

उक्तञ्च वचनशास्त्रेऽपि–

1) ಆದಿ ಅನಾದಿ ಇಲ್ಲದಂದು, ಶೂನ್ಯ ಮಹಾಶೂನ್ಯವಿಲ್ಲದಂದು, ಸಾಧ್ಯಾಸಾಧ್ಯವಿಲ್ಲದಂದು, ರೂಪು ನಿರೂಪು ಇಲ್ಲದಂದು, ಸ್ಥೂಲಸೂಕ್ಷ್ಮವಿಲ್ಲದಂದು, ಸಾಕಾರನಿರಾಕಾರವಿಲ್ಲದಂದು, ವಾಕ್ಯ ಹುಟ್ಟದಂದು, ದ್ವೈತಾದ್ವೈತವಿಲ್ಲದಂದು, ಶಂಕರ, ಶಶಿಧರ, ಈಶ್ವರರೆಂಬ ಗಣಾಧೀಶ್ವರರಿಲ್ಲದಂದು, ವರ್ತನೆ ನಿರ್ವರ್ತನೆ ಇಲ್ಲದಂದು, ಉಮೆಯ ಕಲ್ಯಾಣವಿಲ್ಲದಂದು, ಇವರಾರೊಬ್ಬರ ನಾಮಸೀಮೆ ಇಲ್ಲದಂದು, ನೀನು ಹಡಗಿದ್ದೆಯಲ್ಲಾ ಕಲಿದೇವಯ್ಯ !"

2) ಆದಿ ಅನಾದಿ ಒಂದಾದಂದು, ಸೂರ್ಯಚಂದ್ರರೊಂದಾದಂದು, ಧರೆಯಾಕಾಶ ಒಂದಾದಂದು ಗೋಹೇಶ್ವರಲಿಂಗ ನಿರಾಳನು.

यदा परशिवब्रह्मणि "**बहुस्यां प्रजायेय**" इति सृष्ट्यभिमुखे सति तदा तन्निष्ठा विमर्शशक्तिः इच्छाशक्तिरूपेण परिणमतेति [1]पूर्वमेवावेदितम्।

**प्रवृत्ति-निवृत्तिमार्गे शक्ति-भक्तयोः स्थानम्।**

परमशिवः आत्मनो लीलार्थं जगदसृजत्। '**स एकाकी न रमते, स द्वितीयमैच्छत्**' "**सच्चासच्चाऽभवत्**" अर्थोऽयं समर्थितश्च आगमेषु 'जगत्कारणं ब्रह्म "**स्थल**"त्वेन निर्दिष्टं' इत्यादिना। उक्तञ्च स्थलस्वरूपं **अनुभवसूत्रे**–

**[2]"स्थीयते लीयते यत्र जगदेतच्चराचरम्।**
**तद्ब्रह्मस्थलमित्याहुः स्थलतत्त्वविशारदाः॥"**

---

[1] श्रीकरभा– पृ. ४१-४३. [2] अनुभवसूत्रम्– सू. २-१.

चराचरात्मकं विश्वं यत्र स्थित्वा आविर्भूय पुनर्यत्र लीयते तत् **स्थलतत्त्वं** इत्युच्यते ।

प्रलये "**स्वस्था**"वस्थायां स्थितस्य ब्रह्मणः यदा जगत्सिसृक्षा तदा तत् "**क्षुभिता**"वस्थां प्राप्नोति । अर्थात् तस्मिन् प्रज्ञाशक्तिः प्रस्फुरति । तदा तत्स्थलतत्त्वं द्विधा भवति । तदेव एकं **लिङ्गस्थलं, अन्यदङ्गस्थलं** भवति च । उक्तञ्च–

**[1]"स्वशक्तिक्षोभमात्रेण स्थलं तद्द्विविधं भवेत् ।**
**एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम् ॥"** इति ।

प्रलये चराचरात्मकं विश्वं यत्र विलीय पुनः सृष्टौ यस्मादाविर्भवति तत् "**लिङ्गस्थलम्**" । यथा–

**[2]"लीयते गम्यते यत्र येन सर्वं चराचरम् ।**
**तदेतल्लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः ॥"** इति ।

**अङ्गस्थलं** नाम–

**[3]अं भवेत् परमं ब्रह्म तत्परं तत्परायणम् ।**
**अङ्गस्थलमिति प्राहुः अङ्गतत्त्वविशारदाः ॥** इति ।

अं परब्रह्म, तदभिमुखं जीवतत्त्वमेव "**अङ्गस्थलं**" इत्युच्यते । एवं **स्थल**-शब्दवाच्यं शक्तिविशिष्टं परब्रह्म लिङ्गाङ्गात्मना यदा विभक्तं तदा तद्गता शक्तिरपि द्वैविध्यं प्राप्नोति । लिङ्गस्थलाश्रया शक्तिः "**कला**" इत्युच्यते । एवमङ्गस्थलाश्रया शक्तिः '**भक्तिः**' इति कथिता । उक्तञ्च **अनुभवसूत्रे** शक्तिभक्त्योर्वैशिष्ट्यम्–

**"यथा स्थलं द्विधा भूतं तथा शक्तिर्द्विधा भवेत् ॥ १९ ॥**

**शक्तिरप्रतिमा साक्षाच्छिवेन सहधर्मिणी ।**
**साक्षिणी सत्यसम्पूर्णा निर्विकल्पा महेश्वरी ॥ २० ॥**

---

[1] अनु– १-१. [2] अनु सू– ३-२. [3] अनु– ४-३.

सा शक्तिर्द्विविधा भूता स्वस्वातन्त्र्यबलेन तु ।
समानधर्मिणीत्वेन विभक्ता भक्तवत्सला ॥ २१ ॥

लिङ्गस्थलाश्रया काचित्काचिदङ्गस्थलाश्रया ।
लिङ्गस्थलाश्रया शक्तिः कलारूपा प्रकीर्तिता ॥ २२ ॥

अङ्गस्थलाश्रया शक्तिः भक्तिरूपा भवापहा ।
यथा महानलज्वाला विभक्ता दीपिकाकृतिः ॥ २३ ॥

तथा माहेश्वरी शक्तिर्विभक्ता भक्तिरूपिणी ।
ज्वाला तमस्विनी यस्माद्दीपिका सुप्रकाशिनी ॥ २४ ॥

तस्मात्सवासना शक्तिर्भक्तिर्निर्वासना मता ।
भक्तिर्महत्तरा शुद्धा सुसूक्ष्मा शोभना परा ॥ २५ ॥

सच्चिदानन्दरूपा सा स्याद्भुक्तिमुक्तिफलप्रदा ॥
शक्तिरेव स्मृता भक्तिर्भक्तिरेव हि सा मता । " इति ।

यद्यपि परमार्थनिरूपणे शक्तिभक्त्योर्न कोऽपि भेदः तथापि विचार्यमाणे तत्रोभयोः महदन्तरं परिदृश्यते । यथा तत्रैव—

शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता ॥ २७ ॥

शक्त्या प्रपञ्चसृष्टिस्स्यात् भक्त्या तद्विलयो मतः ।
शक्तिवैचित्र्यतो रूपं नीरूपमपि याति हि ॥ २८ ॥

भक्तिवैचित्र्यतो रूपमपि नीरूपतामियात् ।
प्रपञ्चवृध्यपेक्षा हि शक्तेः स्वाभाविको गुणः ॥ २९ ॥

प्रपञ्चसंक्षयापेक्षा भक्तेः स्वाभाविको गुणः ।
अधोमुखी भवेत् शक्तिर्भक्तिरूर्ध्वमुखी भवेत् ॥ ३० ॥

समाया शक्तिराख्याता निर्माया भक्तिरीरिता।
अपि तर्कप्रमाणाभ्यां शक्तेर्भक्तिर्गुणाधिका॥ ३१॥

इत्यादिना शक्तिभक्त्योर्महदन्तरं प्रतिपादितमाचार्यैः। परशिवब्रह्मणि अविनाभावेन स्थितायाः विमर्शशक्तेः परिणाम एव जगदित्युक्तम्। तत्र प्रवृत्तौ शिवशक्तिरेव षट्-त्रिंशत्तत्त्वात्मकजगद्रूपेण परिणतेति निरूपितम्।

**निवृत्तिमार्गस्तु**– जगत्सृष्टौ शिवस्य सहकारिणी शक्तिरेव निवृत्तौ जीवात्मान-मुद्धर्तुं भक्तिरूपेण परिणता अङ्गशब्दवाच्यं जीवात्मानमाश्रयति। तदायं "**भक्त**" इत्युच्यते। एवम्भूता भक्तिर्न सर्वेषु मानवेषु आविर्भवति। उक्तञ्च–

[1] "अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम्।
नराणां क्षीणपापानां शिवे भक्तिः प्रजायते॥" इति।

अनेकेषु जन्मसु कृतसत्कर्मफलरूपेण भक्तिरुदेति। तदा स "**पिण्डः**" इत्यु-च्यते। उक्तञ्च–

[2] "बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे।
शुद्धान्तःकरणो देही पिण्डशब्देन गीयते॥
पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः॥ इति।

एवम्भूतसुकृतशालिनो भक्तस्योपरि शिवकृपापातरूपः "**शक्तिपातो**" भवति। निर्दिष्टञ्च [3]सन्ध्याधिकरणे श्रीकरभाष्येऽपि "**इतरस्याप्येवमसंश्लेषः पाते तु**" इति सूत्रभाष्ये। उक्तञ्च [4]शक्ति-पातलक्षणं पूर्वमेव।

तथा च सिद्धान्तशिखामणौ–

[5] "येषां शरीरिणां शक्तिः पतत्येव निवृत्तये।
तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ, द्वेषो भवस्थितौ॥

---

[1] क्रियासारे– उ. १४. [2] सि. शि. प. ५-३१-३२. [3] श्रीकरभा– सन्ध्याधिकरणे– ३-२ ५.
[4] शक्तिपातलक्षणं श्रीकरभाष्ये– ३-२-५, ४ १-१४. [5] सि. शि. प. ५-१०.

भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके शिवे ।
एभिर्लक्ष्यैरविच्छिन्नैः शक्तिपातो महात्मभिः ॥

अनुमेयः सदीक्षैश्च शक्तिपातानुसारतः ।
शक्तिपातं समालोक्य दीक्षया योजयेद्गुरुः ॥" इति ।

पूर्वोक्तदिशा शक्तिपातलक्षणलक्षितं शिष्यं सम्यक् परीक्ष्य गुरुः तं शिवदीक्षया योजयति । उक्तञ्च—

[1] "दीयते च शिवज्ञानं क्षीयते पाशसञ्चयः ।
तस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः ॥"

[2] "दीक्षया मुच्यते देही त्रिविधात् पाशबन्धनात् ।
शिवत्वं याति सततं न पुनः पशुतां व्रजेत् ॥" इति ।

दीक्षा तु पाशत्रयं नाशयित्वा शिवज्ञानं ददाति— यतः इयं दीक्षाशब्दवाच्याऽभवत् । देही (जीवः) अनया दीक्षया आणव-माया-कार्यरूपात् पाशबन्धनात् विमुक्तस्सन् शिवत्वं प्राप्नोति ; न तस्य पुनर्भवश्च ।

## मलस्वरूपनिरूपणं तत्क्षपणोपायश्च

पाशापरपर्यायो मलः त्रिविधः । आणवः, मायीयः, कार्मणश्चेति । अनाद्यविद्यासम्बन्धात् जीवे पाशत्रयं स्वाभाविकं विद्यते, यथा ताम्रे कालिमा । रसवेधात् ताम्रं अनादिसिद्धया कालिमया विमुक्तं सत् सुवर्णत्वं लब्ध्वा यथा न पुनः ताम्रत्वं प्राप्नोति ; तद्वत् दीक्षया भक्तः गुरुकारुण्यं लब्ध्वा तत्कृतशिवधारणादिमक्रया शिवदीक्षया शिवो भवति ; न तस्य पुनर्भवः । इदानीं मलस्वरूपं निरूप्यते ।

अनादिकर्मवशात् जीवात्मनि आणवादयो मलाः सम्बद्धाः । जीवस्तु शिवांश इति पूर्वमावेदितम् । शिवे परिपूर्णत्व-सर्वज्ञत्व-सर्वकर्तृकत्वादयो गुणाः स्वाभाविकाः । वस्तुतो जीवः शिव एव । अनादिकर्मवशात् अग्नेर्विस्फुलिङ्गा यथा तद्वत् शिवाज्जीवो

[1] सि शि. ५. [2] वीरशैवाचारकौस्तुभे द्रष्टव्योऽयमंशः ।

शिवांशत्वेन विभक्तः। तदा शिवगताः परिपूर्णत्वादयो गुणाः सङ्कुचितास्सन्तः जीवात्मनि सङ्गताः। तदा शिवगत परिपूर्णत्वं विस्मृत्य "अहमपूर्णः" इति मन्यमानो जीवः आणवमलावृतो भवति। अयमेवाणवमलप्रभावः। पूर्वं स्वयं सर्वज्ञोऽपि जीवः, इदानीं आत्मानं "किञ्चिज्ज्ञं" मन्यमानो मायामलावृतो भवति। अयमेव मायामलप्रभावः।

एवं पूर्वं सर्वकर्ताऽपि तद्विस्मृत्यात्मानं किञ्चित्कर्तारं मनुते जीवः तदा सः कार्ममलावृतो भवति। कार्ममलप्रभावोऽयम्। पूर्वोक्तैः आणवादिभिर्मलत्रयैरावृतो जीवः संसारी भूत्वा जनन-मरणात्मके भवचक्रे निपतितः सन् परिभ्रमति। ततः पूर्वोक्तात् सुकृतविशेषात् सद्भक्त्या च शक्तिपातलक्षणलक्षितस्सन् यदाङ्गसंज्ञितो जीवः गुरुकारुण्यं लब्ध्वा भक्तो भवति तदा भवरोगवैद्येन सद्गुरुणा संसारामयभेषजरूपं लिङ्गं शिवदीक्षामुखेन भक्तः प्राप्नोति। उक्तञ्च दीक्षास्वरूपं आगमेषु–

"दीयते च शिवज्ञानं क्षीयते पापसञ्चयः।
दीयते क्षीयते यस्माद्दीक्षेतीयं प्रचक्षते॥"

सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः।
वेधारूपा क्रियारूपा मन्त्ररूपा च तापस॥ १२॥" इति।

दीक्षा च वेधा-मान्त्री-क्रियारूपेण त्रिविधा। उक्तञ्च वेधादीक्षास्वरूपं तत्रैव–

"गुरोरालोकमात्रेण हस्तमस्तकयोगतः।
यः शिवत्वसमावेशो वेधादीक्षेति सा मता॥" इति।

एवंरूपया अनया वेधादीक्षया हस्तमस्तकसंयोगात्मिकया दीक्षितस्य आणवमलो नश्यति। मान्त्री दीक्षा तु दीक्षाङ्गत्वेन क्रियमाणा मन्त्रोपदेशात्मिका। तथा दीक्षया मायामलक्षयो भवति। क्रिया-दीक्षा तु तदङ्गभूत-कुण्ड-मण्डल-कलशस्थापनाद्यात्मिका। तया कार्ममलध्वंसः। तेन भक्तः मलत्रयविमुक्तः सन् अग्निदग्धसुवर्णवत्परिपूतो भवति।

## मुक्त्युपायः

शिवदीक्षया **पाश**(मल)विमुक्तं जीवात्मानं समुद्धर्तुमेव शक्त्यपरपर्याया **भक्ति**-स्तमाश्रयति खलु। सा च **भक्तिः श्रद्धा-निष्ठा-अवधान-अनुभव-आनन्द-समरसरूपा** षड्विधा भवति। **मातृस्वरूपिणीं** तादृशीं भक्तिमाश्रित्य **साधकः षट्स्थलसोपानमारुह्य परमशिवे समरसो** भूत्वा **नित्यानन्दी** भवति।

## लिङ्गाङ्गस्थलविवेकः

पूर्वोक्तचित्तशक्तिविशिष्टो जीवः **अङ्ग**पदवाच्यः। एवं चिच्छक्तिविशिष्टः परशिव **लिङ्ग**पदवाच्य इत्युक्तम्।

तत्र **लिङ्गस्थलं** भक्तानुग्रहार्थम्। भक्तस्य **स्थूल-सूक्ष्म-कारण**रूपेषु शरीरेषु यथाक्रमं **इष्टलिङ्ग-प्राणलिङ्ग-भावलिङ्ग**रूपेण धार्यते। एवं **अङ्गस्थल**मपि **त्यागाङ्ग-भोगाङ्ग-योगाङ्गा**-त्मना त्रिप्रकारं भवति।

**इष्टलिङ्गं**– **आचारलिङ्ग-गुरुलिङ्गा**त्मना, **प्राणलिङ्गं**– **शिवलिङ्ग-चरलिङ्गा**त्मना, **भावलिङ्गं**– **प्रसादलिङ्ग-महालिङ्ग**त्मना च पुनर्द्वैविध्यं प्राप्य षड्विधं भवति।

एवं **त्यागाङ्गं भक्तो-माहेश** इति, **भोगाङ्गं प्रसादी प्राणलिङ्गी**ति, **योगाङ्गं शरणं ऐक्यं** इति षट्प्रकारं भवति।

किञ्चेदं **अङ्गस्थलं** अवान्तरप्रभेदैः **चतुश्चत्वारिंशत्**(४४)प्रकारत्था, विभज्यते। **एवं लिङ्गस्थलं** अपि अवान्तरविभागैः **सप्तपञ्चाशत्**(५७)प्रभेदैश्च विभज्यते। **लिङ्गाङ्ग**-स्थले चेमे आहत्य **एकोत्तरशतस्थलतां** भजेते। **एकोत्तरस्थलात्मक-अङ्गलिङ्गयोस्सामरस्य**-ज्ञानमेव **मोक्षमूल**मिति सिद्धान्तस्यास्य हृदयम्।

इदानीं **लिङ्गस्थलस्वरूपं निरूप्यते**। उक्तञ्च–

> **इष्टलिङ्गमिदं स्थूलं यद्बाह्ये धार्यते तनौ।**
> **प्राणलिङ्गन्तु तत् सूक्ष्मं यदन्तर्भावनामयम्॥**
> **परात्परन्तु यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते॥**

स्थूलदेहे धार्यमाणं इष्टलिङ्गमिति, सूक्ष्मशरीरे धार्यमाणं प्राणलिङ्गमिति, कारण-शरीरधार्यं च भावलिङ्गमिति कथ्यते। अथेदानीं लिङ्गत्रयेण विभक्तानां **आचारदि-लिङ्गानां** स्वरूपं निरूप्यते—

"आचारलिङ्गं घ्राणाख्यं भक्तस्थलसमाश्रयम्।
निवृत्तिकलयोपेतं गन्धग्रहणसाधनम्॥ १॥

गुरुलिङ्गन्तु जिह्वाख्यं माहेशस्थलसंश्रयम्।
प्रतिष्ठाकलयोपेतं रसग्रहणसाधनम्॥ २॥

शिवलिङ्गन्तु नेत्राख्यं प्रसादिस्थलसंश्रयम्।
विद्याकलासमायुक्तं रूपग्रहणसाधनम्॥ ३॥

त्वगाख्यं जङ्गमं लिङ्गं प्राणलिङ्गिस्थलाश्रयम्।
शान्त्याख्यकलयोपेतं स्पर्शग्रहणसाधनम्॥

प्रसादलिङ्ग श्रोत्राख्यं शरणस्थलसंश्रयम्।
शान्त्यतीतकलोपेतं शब्दग्रहणसाधनम्॥ ५॥

मानसन्तु महालिङ्गमैक्यस्थलसमाश्रयम्।
शान्त्यतीतोत्तरोपेतं सर्वग्रहणसाधनम्॥ ६॥"

इत्यादिना आचारादिलिङ्गानां स्वरूपं शिवागमेषु विस्तरेणाभिवर्णितम्।

अथेदानीं अङ्गस्थलस्वरूपं निर्दिश्यते यथा—

"अङ्गस्थलं तथा प्रोक्तमाचार्यैः सूक्ष्मदर्शिभिः॥
योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं च द्वितीयकम्॥
त्यागाङ्गं च तृतीयं स्यादित्येवं त्रिविधं स्मृतम्॥" इति।

अत्र वीरशैवः आत्मनो गुरु-लिङ्ग-जङ्गमानां च ऐक्यानुसन्धानं करोतीति "योगाङ्ग" इत्यभिधीयते। अथ च गुरुलिङ्गजङ्गमार्पितप्रसादस्वीकारद्वारा सुखभोग-

मनुभवतीति- "भोगाङ्ग" इति गुरु-लिङ्ग-जङ्गमानां निर्वञ्चनया तनु-मनो-धनानि [1]दासोऽहम्भावेन-

इत्युक्तरीत्या समर्पयतीति "त्यागाङ्ग" इति तस्य संज्ञा सञ्जाता। उक्तञ्च-

[2]"सदाचारः शिवे भक्तिर्लिङ्गे जङ्गम एकधीः।
लाञ्छने शरणे भक्तिर्भक्तस्थलमनुत्तमम् ॥ १ ॥

केवले सहजे दाने निष्णातः शिवतत्परः।
ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः ॥ २ ॥

मनःप्रसादसिध्यर्थं निर्मलज्ञानकारणम्।
शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते ॥ ३ ॥

लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते ॥ ४ ॥

सती चाहं पतिर्लिङ्गं हृदि युक्तः स्वयम्प्रभुः।
प्रापञ्चिकसुखं नास्ति शरणस्थलमुत्तमम् ॥ ५ ॥

प्राणलिङ्गादियोगेन सुखातिशयमेयिवान्।
शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत् ॥ ६ ॥" इति।

## षट्स्थलारोहणप्रकारः

उक्तञ्च मुक्त्युपाये भक्तोद्धारबद्धादरा मातृस्वरूपिणी भक्तिस्वरूपेण परिणता शक्तिः साधकमुद्धर्तुं षोढा विभज्यतेति। श्रद्धा-निष्ठा-अवधान-अनुभव-आनन्द-समरस-

---

[1] दासोहम्भावविषये प्रमाणवाक्यं यथा-
"शरीरादिपदार्थांश्च दत्वा दानं समर्पणम्।
समर्प्य सोऽहमस्मीति दासोऽहम्भाव उच्यते ॥"

[2] अनु सू- ७ ६१.

भक्तिरूपेण भक्तमुपगतेयं सङ्कुचितज्ञान-क्रियाशक्तिकं जीवात्मानं क्रमेण **भक्त-माहेश-प्रसादि-प्राणलिङ्गि-शरण-ऐक्यस्थानं** प्रापय्य **शिवसामरस्यं** शिवत्वाभिव्यक्तिं वा सम्पादयतीति दर्शनस्यास्य हृदयम् ।

**अथ भक्तस्थलम्**– इदं **बीजवृक्षन्यायस्थलम्** । परशिवशक्तिपातेन शिवदीक्षिते साधके बीजरूपेण समाविष्टश्रद्धाभक्तिस्तस्य देहाद्यभिमानं निरस्य **गुरु-लिङ्ग-जङ्गम-भस्म-रुद्राक्ष-मन्त्र-तीर्थ-प्रसादात्मकेषु अष्टावरणेषु ; लिङ्गाचार-सदाचार-शिवाचार-गणाचार-भृत्याचाररूपेषु** च पञ्चाचारेषु प्रथमतः श्रद्धां तदनुष्ठानप्रवृत्तिं च सम्पादयति । लोकः क्षीरे नवनीतलाभाय यथा मन्थनं करोति, तथा जीवः स्वात्मनि शिवत्वाभिव्यञ्जनाय प्रेममन्थनोद्युक्तो भवति । अत एवेदं स्थलं **बीजवृक्षन्यायस्थलं** इत्युच्यते । उक्तञ्च **भक्तस्थलस्वरूपं** आचार्यरेणुकेन–

**"सदाचारः शिवे भक्तिर्लिङ्गे जङ्गम एकधीः ।**
**लाञ्छने शरणे भक्तिर्भक्तस्थलमनुत्तमम् ॥" इति ।**

**अथ माहेश्वरस्थलम्– सलिलमुक्तान्यायस्थलमिदम्** । सागरस्थे मौक्तिकसम्पुटे पतितः **स्वातीवर्षजलविन्दुस्तदन्तरे** घनीभूय नियतकाले यथा मौक्तिकं भवति, तथा ईश्वराभिमुखी श्रद्धाभक्तिः **चित्तस्थैर्यरूपेण** घनीभूय निष्ठात्मना परिणता दृढीभवति । अतस्तत्र विद्यमाना भक्तिर्निष्ठेत्युच्यते । तेन साधकः **आचारविचारादिषु** सर्वत्र दृढव्रतो भवति । तदैवायं **शिवव्रती** इत्युच्यते । उक्तञ्च–

**"[1]केवले सहजे दाने निष्णातः शिवतत्परः ।**
**ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः ॥" इति ।**

**अथ प्रसादिस्थलम्**– इदं **चानलकाष्ठन्यायस्थलम्** । अत्रस्था भक्तिश्चित्तशुध्या **अवधानभक्तिरिति** व्यपदिश्यते । काष्ठं प्रविष्टोऽग्निः सर्वाकारेण काष्ठमभिव्याप्य यथा काष्ठं निर्दहति, तथैव ऐश्वरं प्रेम अवधानात्मना एकीभूय साधकान्तःकरणं सर्वात्मना

---

[1] सि०, शि० १०.

अभिव्याप्य तत्रस्थान् शब्दस्पर्शादिविषयान् स्रक्चन्दनादींश्च निर्दिश्य तान् प्रसादरूपताना-पादयति। तदा साधके चित्तप्रसन्नतारूपो मनःप्रसादः सञ्जायते। तथा च–

[1]"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥"

इत्युक्तदिशा शिवदीक्षाप्रकरणोक्तज्ञानेन्द्रिय-कर्मेन्द्रियादिषु स्थापितेषु आचारादिलिङ्गेषु तत्त-द्विषयान् समर्प्य प्रसादतां सम्पादयति। तादृशप्रसादभोगेनायं प्रसादीति व्यवह्रियते। उक्तञ्च–

[2]"मनःप्रसादसिध्यर्थं निर्मलज्ञानकारणम्।
शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते॥" इति।

अथ प्राणलिङ्गिस्थलम्– भ्रमरकीटन्यायस्थलमिदम्। तथा हि–

"कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम्।
भक्तश्च शिवयोगेन शिवो भवति निश्चयम्॥" इति।

इत्युक्तदिशाऽत्र त्यक्तजीवभ्रमः साधकः शिवानुभावी भवति। अत्रस्थायाः भक्तेरनुभवात्मक-त्वात् यथा "भ्रमद्भ्रमरचिन्तायां कीटोऽपि भ्रमरायते" इति न्यायेन जीव नैरन्तर्येण शिवचिन्तया च शिवध्यान-पूजा-जपादिषु तदनुभावमनुभूय शिवानुभावी भवति। तदात्मनः शिवभावो उदेति यथा–

"[3]लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते॥" इति।

अथ शरणस्थलम्– सति-पतिन्यायस्थलमिदम्। अत्र विद्यमाना भक्तिरानन्दभक्तिः। शिवनित्यत्वनिश्चितत्वादेवास्य आनन्दः समुदेति। भक्तस्तु शरण्यं परशिवं मत्वा शिवा-नन्दी भवति। श्रुतिरपि इमामवस्थां–

---

[1] भ. गी. ९-२७, [2] सि. शि. ११-८. [3] सि. शि. १२-३.

[1]"यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति वर्णयति। उक्तञ्च–

[2]"सती चाहं पतिर्लिङ्गं हृदि युक्तः स्वयम्प्रभुः।
प्रापञ्चिकसुखं नास्ति शरणस्थलमुत्तमम्॥" इति।

भक्तोऽत्र विमुक्तलोकविषयः अनासक्तयोगेन शिवानन्दतुन्दिलो भूत्वा जीवन्मुक्तावस्थामनुभवति।

**अथैक्यस्थलम्– शिखिकर्पूरन्यायस्थलमिदम्।** यथा भूतात्मकौ शिखि-कर्पूरौ केवलं संयोगमात्रेण परस्परमेकीभूय प्रज्वाल्य विलीनौ भवेतां तथैव शरणभिधानो जीवः समरसभक्त्या विमुक्तकिञ्चिज्ज्ञत्वकिञ्चित्कर्तृकत्वाभिव्यक्तसर्वज्ञत्व-सर्वकर्तृकत्वकः **नदी-समुद्रन्यायेन परशिवसमरसो** भवति। उक्तञ्च–

[3]"प्राणलिङ्गादियोगेन सुखातिशयमेयिवान्।
शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत्"॥ इति।

**लिङ्गाङ्गसामरस्यप्रकारः**

[4]"एवं स्थूल-सूक्ष्म-कारणशरीरावच्छिन्नो जीवः स्वगुरुणा दीक्षात्रयेण शरीरत्रये योजितलिङ्गत्रयान्तर्भूतषड्विधलिङ्गेभ्यः तत्तत्पदार्थार्पणानुसन्धानद्वारा स्वभक्तिसमरसीकृतं घनलिङ्गैक्यरूपमहानन्दमनुभवति। भक्त्यानन्दयोः प्रेमातिशयत्वेन **नीरक्षीरसमरसीभाववत्** तदेकरसानुभवेन जीवन्मुक्तो भवतीति तत्त्वम्"। युक्तञ्चैतत्। तथाहि–

**भक्तस्तु** आचारलिङ्गस्य क्रियाशक्तियुक्तस्य श्रद्धाभक्त्या सुचित्तहस्तेन गन्धपदार्थं धृत्वा **"न"**कारमन्त्रमनुसरन् घ्राणेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति।

---

[1] बृहदा उ– ४-३-२१. [2] सि. शि. १३-५. [3] सि. शि. १४-२. [4] शिवाद्वैतपरिभाषा– पृ. ७४.

आचारे दिव्यलिङ्गे निरुपमनिजभक्तस्थलाऐक्यभाजि
घ्राणस्थे चित्तहस्तेन च घनसुखहेतौ क्रियाशक्तियुक्ते ।
घ्रातव्यं द्रव्यमप्यर्पणविषयविधानोपदिष्टं समर्प्य
प्रायस्सद्भक्तिपूर्णस्स्वयमयमिह गन्धप्रसादं भजेत ॥ ४५ ॥

**माहेश्वरो हि**– गुरुलिङ्गस्य ज्ञानशक्तियुक्तस्य नैष्ठिकभक्त्या सुबुद्धिहस्तेन रसपदार्थं धृत्वा "**म**"कारमन्त्रमनुसरन् रसनेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति ।

स्वाङ्गे माहेश्वरात्मन्यनुपमसहजज्ञानशक्तिप्रयुक्ते
जिह्वास्ये सुप्रसिद्धे परतरगुरुलिङ्गाभिधे संस्थितेऽस्मिन् ।
निष्ठाभक्तिप्रभावप्रणिहितसुमहाबुद्धिहस्तेन विद्वान्
रस्यं द्रव्यं समर्प्य स्वयममलरसाख्यं प्रसादं भजेत ॥ ४६ ॥

**प्रसादी** तु– शिवलिङ्गस्येच्छाशक्तियुक्तस्य सावधानभक्त्या निरहङ्कारहस्तेन रूपपदार्थं धृत्वा "**शि**"कारमन्त्रमनुसरन् नेत्रेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति ।

योऽसौ नित्यं प्रसादिस्थलपरमपदप्राप्तदिव्याङ्गभाजि
स्वेच्छाशक्तिप्रयुक्ते दृशि जगति मुखे पाणिनाहङ्कृतेन ।
साक्षाल्लिङ्गे शिवाख्ये सविनयमवधानात्मना भक्तियुक्तो
द्रष्टव्यांशं समर्प्यार्पणविनिहितरूपप्रसादं भजेत ॥ ४७ ॥

---

*लिङ्गाङ्गसामरस्यविचारः सविमर्शं अनुभवसूत्रकारिकायां अधि. ७-४५ सूत्रतः ५० सूत्रान्तं यावद्वर्णितः । त चात्र उक्तार्थस्पष्टीकरणाय अनूदितः ।

प्राणलिङ्गी तु– आदिशक्तियुक्तस्य जङ्गमलिङ्गस्य अनुभवभक्त्या सुमनोहस्तेन स्पर्शपदार्थं धृत्वा "वा"कारमन्त्रमनुसरन् त्वगिन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति ।

संसक्ते प्राणलिङ्गिस्थलनिहितनिजाङ्गे मनःपाणिनासौ
लिङ्गे साक्षाच्चराख्ये त्वचि जगति मुखे ह्यादिशक्तिप्रयुक्ते ।
स्प्रष्टव्यं चार्पयित्वा स्वयमनुभवभक्तिप्रभावोपपन्नो
नित्यं स्पर्शप्रसादं निरतिशयसुखं तत्त्ववेत्ता भजेत ॥ ४८ ॥

शरणस्तु– पराशक्तियुक्तस्य प्रसादलिङ्गस्य आनन्दभक्त्या सुज्ञानहस्तेन शब्द-पदार्थं धृत्वा "य"कारमन्त्रमनुसरन् श्रोत्रेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति ।

लिङ्गे साक्षात्प्रसादे विमलशरणसंज्ञाङ्गसंस्थापितेऽस्मिन्
श्रोतव्यं श्रोत्रवक्त्रे निखिलमिह पराशक्तियुक्ते समर्प्य ।
आनन्दाकारभक्तिस्फुटतरपरमज्ञानहस्तेन सोऽयं
शब्दाख्यं तत्प्रसादं स्वयमविरतमत्याश्रमस्थो भजेत ॥ ४९ ॥

ऐक्यस्तु– चिच्छक्तियुक्तस्य महालिङ्गस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा प्रणवमन्त्रमनुसरन् मनोमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति ।

ऐक्याङ्गं भाजि लिङ्गे महति हृदि मुखे चिन्महाशक्तियुक्ते
नित्यं भावेन हस्तेन च समरसभक्तिप्रसक्तस्स्वयं सन् ।
सर्तव्यं चार्पयित्वा विशदमतिरवश्यं सदैवार्पणीयं
तस्माल्लब्धं विशुद्धं घनतरपरिणामप्रसादं भजेत ॥ ५० ॥

एवं समर्पितवतो जीवस्य लिङ्गभोगोपभोगित्वेन शुद्धे ब्रह्मणि विश्रमितत्वात् तच्छरीरस्यापि मन्त्रलिङ्गरूपत्वं सिद्धम् । अतो यावच्छरीरावधिश्वासस्तावत्-क्रिया-ज्ञान-समुच्चयेन उपासनाविधानात् शरीरवियोगपर्यन्तं **लिङ्गाङ्गसामरस्याचरणमव्याहतमेव ।**

उक्तञ्च– "सर्वमिदमुपासनं इष्टलिङ्गनिक्षिप्तनिर्निमेषवर्जितदृष्टिद्वारा प्राणलिङ्गानुलक्षितशाम्भवीमुद्रया शिवपञ्चाक्षरीमहामन्त्रजपक्रमानुसन्धितात् हृदयपुण्डरीकान्तर्वर्तिज्योतिर्लिङ्गानुसन्धानात् पश्चिमचक्रविराजमानभावलिङ्गसमरसानन्दानुभवरूपमतोऽनुसन्धानरूपान्तर्लिङ्गध्यानयोगबलेनैवोपासनं विधीयते" **इति ।**

"ततो हृदयपुण्डरीकान्तर्वर्तिज्योतिर्लिङ्गानुसन्धानवतः शिवयोगिनः स्वस्वरूपसाक्षात्कारवशात् अणिमाद्यष्टसिद्धिसम्पत्तेः समुद्भवेऽपि तत्रानुरागं परित्यजन् निरन्तरज्योतिर्लिङ्गानुसन्धानात् **त्रिलोचनत्व-नीलकण्ठत्व-उमासहायत्वादिमङ्गलस्वरूपं** स्वानन्दानुभवं **शिवतत्त्वं** साक्षात्करोति । ततस्तस्मः परस्तात् निष्कलसच्चिदानन्दस्वरूपघनलिङ्गैक्यलोलायमानोऽयं **पूर्वोक्तशिखिकर्पूरन्यायेन परब्रह्मस्वरूपो** भवति" इति च ।

एवं अङ्गस्थलप्रतिपाद्यो भक्तः लिङ्गस्थलप्रतिपाद्ये आचारलिङ्गे; माहेश्वरः गुरुलिङ्गे; प्रसादी शिवलिङ्गे; प्राणलिङ्गी जङ्गमलिङ्गे; शरणः प्रसादलिङ्गे, ऐक्यो महालिङ्गे समरसो भवति । तथैव आचारलिङ्गं गुरुलिङ्गे, गुरुलिङ्गं शिवलिङ्गे, शिवलिङ्गं जङ्गमलिङ्गे; जङ्गमलिङ्गं प्रसादलिङ्गे, प्रसादलिङ्गं महालिङ्गे, महालिङ्गं परशिवरूपे घनलिङ्गे **सामरस्यं** प्राप्य अखण्डानन्दमनुभवति । उक्तञ्च–

**[1]"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥"** इति ।

उक्तञ्च भगवता **रेणुकगुरुणा–**

**[2]"जले जलमिव न्यस्तं वह्नौ वह्निरिवार्पितः ।**
**परे ब्रह्मणि लीनात्मा विभागेन न दृश्यते ॥"** इति ।

एवमैश्वर्यं प्रेम (भक्तिः) शिवाद्वैतरूपेण परिणतं सत् साधकं परशिवसमरसं प्रापयति ।

---

[1] मुण्डकोपनिषत्– ३-२-८. [2] सि. शि २०-६१.

अत्र भाष्यकारसम्मतिः–

श्रीपतिपण्डितभगवत्पादाचार्यैस्तु सन्ध्याधिकरणे । [1]" देहयोगाद्वा सोऽपि " इति सूत्रभाष्ये " शक्तिपाता"दारभ्य ऐक्यस्थलपर्यन्तं षट्स्थलानां स्वरूपं सावतरणं निरूपितम् । यथा– " शक्तिपातस्तु तीव्र-मन्दादिभेदेन भक्ताद्यैक्यान्तस्थलेषु षड्विधोऽभूत् । पति-पशु-पाशादि-परमरहस्यप्रकाशक-निगमागमोभयवेदान्तशास्त्रश्रवण-मनन-निदिध्यासनानुक्रमेणा-खण्डाकारवाक्यजन्यबुद्धिवृत्तौ नित्यनिरतिशयानन्दात्मकमहेश्वरतत्त्वाविर्भावः । प्रथमे भक्तस्थले निर्दिष्टः । ........ऐक्यस्थलेऽभिधीयते । एवंविधशक्तिपातेषु " पिपीलिका-मर्कट-पक्षि – गो-मत्स्य-कच्छपन्यायेन " स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिरेव मोक्षः इत्यन्तेन षट्स्थलसिद्धान्तस्वरूपम्" इति । एवं " तदन्तरप्रतिपत्त्यधिकरणे"ऽपि [2]" भाक्तं वा नात्मवित्वात्तथा वा दर्शयति" इति सूत्रभाष्ये ........[3]" अतो भक्तानां भक्तादिशरणान्त पञ्चस्थलेषु तेषां जीवभावसत्वेन शिव-जीवयोरुपास्योपासकत्वेन स्वामि-भृत्यन्यायात्मक-स्वभावद्वैतसिद्धिः । ऐक्यस्थले " यथा नद्यः " इति श्रुतिशतसिद्धनदीसमुद्रवत् जीवब्रह्मैक्यत्वेन अद्वैतसिद्धिश्च राद्धान्तः" इति ।

अन्यच्च– श्रीकरभाष्यस्य जन्माधिकरणस्यान्ते शैवागमोक्तानां परशिवाङ्गभूतानां सर्वज्ञत्वादिषडङ्गानां षट्स्थलात्मकत्वञ्च प्रदर्शितम् । तत्प्रकारस्तु—

" अतएव शैवागमे–

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रतानित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥

यद्भक्तस्थलमित्याहुः तत्सर्वज्ञत्वमुच्यते ।
यन्माहेश्वरकं नाम सा तृप्तिर्मम शाङ्करि ॥

यत्प्रसादाभिधं स्थानं तद्बोधो मे निरङ्कुशः ।
यत्प्राणलिङ्गकं नाम तत्स्वातन्त्र्यमुदाहृतम् ॥

---

[1] सन्ध्याधिकरणे– ३·२·५ [2] ब्र सू· ३·२·५. [3] श्रीकरभाष्यं– ब्र सू ३·१·७.

यदस्ति शरणं नाम ह्यलुप्ता शक्तिरुच्यते ।
यदैक्यस्थानमूर्ध्वस्थाह्यनन्ताशक्तिरुच्यते ।
एतदङ्गस्थलं देवि गुह्याद्गुह्यतमं परम् ॥ इति ।

[8]" सर्वज्ञत्वादिधर्माणां शिवस्यैव सम्भवात् ।"

अपरञ्च– श्रीकरभाष्ये प्रथमाध्यायस्य प्रथमपादे– आचारादिषड्लिङ्गानां प्रतिपादनमेकैकस्मिन् सूत्रभाष्ये सम्यक् प्रतिपादितं यथा– परशिवस्य ब्रह्मणः [2]" अन्तस्तद्धर्मोपदेशात् " इत्यत्र महालिङ्गात्मकत्वं ; [3] " आकाशस्तल्लिङ्गात् " इत्यत्र प्रसादलिङ्गात्मकत्वम् , [4] " अत एव प्राणः " इत्यत्र चरलिलिङ्गात्मकत्वं ; [5] " ज्योतिश्चरणाभिधानात् " इति सूत्रभाष्ये शिवलिङ्गात्मकत्वं ; [6] " छन्दोभिधानात्...." इति सूत्रभाष्ये गुरुलिङ्गात्मकत्वं ; [7] भूतादिपादव्यपदेशोपपत्तेश्चैवम् " इत्यत्र आचारलिङ्गात्मकत्वञ्च प्रतिपाद्य [8] " प्राणस्तथानुगमात् " इति सूत्रभाष्ये प्राणशब्दस्य इष्टलिङ्गात्मकत्वं च सूचितम् । उक्तञ्च– " पूर्वं जगज्जन्मादिहेतुभूतस्य.... शिवस्य षड्लिङ्गात्मकत्वं प्रसाध्य, तस्यैव सर्वमुमुक्षूपास्य बाह्यप्राणलिङ्गात्मकत्वमधिकरणान्तरेण दर्शयति " इत्यवतारिकामुखेन । [9] " जीवमुख्यप्राणलिङ्गात्..." इत्यत्र तु सूत्रभाष्ये इष्ट-प्राण-भावलिङ्गरूपत्रिविधोपासनञ्च सम्यक् प्रतिपादितम् ।

एवं [10] " सर्वत्रप्रसिध्यधिकरणे " " निधनपतये नमः " इत्यारभ्य [11] " परमलिङ्गाय नमः " इत्यन्तं आचारादिदशविधलिङ्गात्मकत्वं आचार्यपादैस्सम्यक् सूचितम् । तत्र " निदनपतये नमः " इत्यनेन सिष्कलशिवतत्त्वं उपदिश्य, " उर्ध्वाय नमः " इत्यनेन .... सदाशिव एवोपदिश्यते । " हिरण्याय नमः " इत्यनेन पश्चिमचक्रस्थितं स्वयं प्रकाशात्मकं भावलिङ्गं, ' सुवर्णाय नमः ' इत्यनेन शिखाचक्रस्थितं चित्कलात्मकं प्राणलिङ्गं, ' दिव्याय नमः ' इत्यनेन सहस्रारचक्रस्थितं गुणत्रयप्राचुर्यात्मकं इष्टलिङ्गं, ' भवाय नमः ' अग्नेय चक्रस्थितं महालिङ्गं, ' शर्वाय नमः ' विशुद्धचक्रस्थितं व्योमतत्वात्मकं प्रसादलिङ्गं, 'शिवाय नमः' इति अनाहतचक्रस्थितं पवनतत्त्वात्मकं चरलिङ्गं, 'ज्वलाय नमः'

---

[1] श्रीकरभाष्ये– १-१-२ पृ. ६७-६८. [2] १-१-२१ पृ. १४१. [3] १-१-२३ पृ. १५३. [4] १-१-२४ पृ. १५५. [5] १-१-२५ पृ. १५७. [6] १-१-२६ पृ. १६० [7] १-१-२७ पृ. १६४. [8] १-१-२९ पृ १७३ [9] १-१ ३२ पृ. १७७. [10] १-२-१ पृ. १८२-८६. [11] महानारायणोप– अनु १४.

इति मणिपूरकचक्रस्थितं तेजस्तत्वात्मकं **शिवलिङ्गं**, 'आत्माय नमः' इति स्वाधिष्ठानचक्र-स्थितं जलतत्त्वात्मकं **'गुरुलिङ्गं'**, **'परमाय नमः'** इत्यनेन क्षित्यात्मकं आधार-चक्रस्थं आचारलिङ्गं च निरूप्य [1]"तस्मात् दशविधलिङ्गात्मकपाण्यधिकरणकस्वेष्टलिङ्गस्य पञ्चब्रह्मात्मकत्वं, षट्त्रिंशत्तत्वात्मकत्वं च निरूप्यते' इति'।

अयमेव विचारः [2]**'लिङ्गधारणचन्द्रिकायां'** यथाश्रुतमुद्धृतः। [3]**'वीरशैवानन्द-चन्द्रिकायाञ्च'** संस्थापितः। तथैव [4]**'क्रियासारेऽपि'** द्रष्टव्यश्च।

## अथ साधनक्रमः

सिद्धान्तविभागे यथा वीरशैवः द्वैताद्वैतयोः समन्वयं मनुते, तथा साधनक्रमेऽपि ज्ञान-कर्मणोः समसमुच्चयत्वं अङ्गीकारोति। लिङ्गाङ्गसामरस्यात्मकमुक्तौ ज्ञान-कर्मणो-स्समसमुच्चयः आवश्यकः। उक्तञ्च

**[5]"ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।**
**फलाभिसन्धिरहितं तस्मात् कर्म न सन्त्यजेत्॥"** इति।

आचारस्तु आवश्यकः। "आचार एव सर्वेषामलंकाराय कल्पते। आचार-हीनः पुरुषः लोके निन्दितो भवति।" महेश्वरः आचारयुक्तेन ज्ञानेन प्रसीदति। अतः ज्ञानी आचरवान् भवेत्।" शिरो व्यधिनाशाय केवलं औषधिपरिज्ञानं न शक्तं तल्लेपमनमन्तरा व्याध्यनिवृत्तेः। ज्ञानमन्तरा लेपनसम्भवेन च, ज्ञान-कर्मभ्यां समुच्चिताभ्यां ईश्वरार्पणबुध्युपजीवभ्यां फलाभिसन्धिरहिताभ्यां नित्यामृतत्त्वप्राप्तिर्भवति"। उक्तञ्च **सिद्धान्तशिखामणौ—**

**[6]"अन्धपङ्गुवदन्योन्य सापेक्षे ज्ञानकर्मणी।**
**फलोत्पत्तौ विरक्तस्तु तस्मात्तद्वयमाचरेत्॥"** इति।

ननु **"तमेवं विदित्वामृतत्वमेति; नान्यः पन्था विद्यतेऽयनाय।"** **"न कर्मणा न प्रजया धनेन"** इत्यादिषु कर्मनिन्दायाः श्रुतत्वात् कथं ज्ञानेन

---

[1] श्रीकरभाष्ये– पृ १८७-१८८. [2] लिङ्गधारणचन्द्रिकायां– पृ. ६८-७३ [3] वीरशैवानन्द-चन्द्रिकायां– पृ ३९-४०. [4] क्रियासारे– उ १-२१०-२४६ [5] सि. शि. प. १६. [6] सि. शि. प. १६

साकं कर्मग्रहणमिति न च वाच्यम् । तादृशवचनानां पशुकर्मपरत्वम् ; न तु पति-कर्मपरत्वम् ।

कर्म द्विविधं **पशुकर्म-पतिकर्मेति** । फलाभिसन्धिसहितं पशुविशसनादिज्योतिष्टोमादिकं कर्म **पशुकर्म** । फलभिसन्धिरहितं अपुनर्भवकारणं शिवार्पणधिया क्रियमाणं शिव ध्यानोपासनादिकं कर्म **पतिकर्म** । ईदृशपतिकर्मणा साकं ज्ञानस्य समुच्चयः न तु पशुर्मणा । "**शिवपूजानिरत एव कायः कायः, न चेतर**" इति विदुषामाशयः । उक्तञ्च **आचार्यरेणुकेन** पञ्चयज्ञस्वरूपम्—

**अथ वीरशैवीयाः पञ्चयज्ञाः**

[1] "तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम् ।
पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः ॥ २१ ॥

शिवार्थे देहसंशोषस्तपः कृच्छ्रादिनो मतम् ।
शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते ॥ २२ ॥

जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा ।
रुद्राध्यायादिकाभ्यासो न वेदाध्यनादिकम् ॥ २३ ॥

ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम् ।
शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम् ॥
इति पञ्च प्रकारोऽयं शिवयज्ञः प्रकीर्तितः ॥ २४ ॥

अनेन पञ्चयज्ञेन यः पूजयति शङ्करम् ।
भक्त्या परमया युक्तः स वै भक्त इति स्मृतः ॥ २५ ॥"

इत्यादिना भक्तस्थलापन्नेन साधकेन **पञ्चयज्ञाः** कर्तव्याः । एवं भक्तस्य **अष्टावरण-पञ्चाचाराश्च** अवश्यमनुष्ठेया एव । तदुक्तं **श्रीकरभाष्ये** अष्टावरणस्वरूपम्—

---

[1] सि. शि. ९.

[1] "भस्म रुद्राक्षकं लिङ्गं गुरुर्मन्त्रं तथा चरः।
पादोदकं प्रसादश्च शैवाष्टावरणानि हि ॥" इत्यादि ।

[2] वैदिकशिवागमोक्त संस्काराश्च अलिङ्गिनां ब्रह्मविद्याङ्गत्वेन न सम्भवन्ति" इति । इत्तश्च "अथाऽतो ब्रह्मजिज्ञासे"त्यत्र अथ शब्दनिर्वचनावसरे "अष्टावरण-पञ्चाचाराणां" पूर्वभावित्वम् इति । वीरशैवाध्यात्मपुरुषस्य "अष्टावरणमङ्गं, पञ्चाचाराः प्राणाः, षट्स्थलमात्मा" इति कथ्यते । उक्तञ्च नीलकण्ठशिवाचार्यैरपि क्रियासारे–

[3] "अष्टावरणविज्ञानी पञ्चाचारपरायणः ।
वैदिकं कर्म कुर्वीत ज्ञानैकफलसाधनम् ॥
न कुर्यात् पाशवं कर्म वीरशैवः कदाचन ॥ ३०६ ॥"

अतः षट्स्थलसाधनाङ्गत्वेन अष्टावरणपञ्चाचारणां च स्वरूपं निरूप्यते । उक्तञ्च चन्द्रज्ञानागमे–

गुरुर्लिङ्गं जङ्गमश्च तीर्थं चैव प्रसादकः ।
भस्म रुद्राक्षमन्त्राश्चेत्यष्टावरणसंज्ञिताः ॥ २ ॥

इमान्यष्टावरणानि शिवभक्तानां भवदोषततेः निवारणैककार्याणीति कथ्यन्ते । तत्रादौ क्रमप्राप्तं गुरोः स्वरूपं निगद्यते–

## १) गुरुतत्त्वस्वरूपनिर्वचनम्

उक्तञ्च गुरोः स्वरूपं वीरशैवानन्दचन्द्रिकायाम्– [4] "लिङ्गाङ्गसामरस्यरूपमुक्तिसाधनीभूततत्सामरस्यानुसन्धानस्यासाधारणतया मोक्षहेतुत्वेन तादृशविशिष्टाद्वैतज्ञानप्रदायकस्य वीरमाहेश्वरसम्प्रदायप्रवर्तकस्यैकोत्तरशतप्रभेदभिन्नषट्स्थलज्ञानसम्पन्नस्याङ्ग- लिङ्ग- मुख-हस्त- शक्ति-भक्ति-मन्त्र-पदार्थाद्यष्टविधार्पणरूपमानसानुसन्धानविशेषस्य शान्त्याद्यसाधारणगुरुलक्षणलक्षितस्य गुरोरेवेतरापेक्षयाभ्यर्हितत्वम्" इति ।

---

[1] श्रीकरभाष्य– पृ. १९६-२३५. [2] श्रीकर– १-२-२ पृ. १९६. [3] क्रियासारे– उ. ४

[4] वीरशैवानन्दचन्द्रिका श्रीमन्मरितोण्टदार्यविरचिता - पृ ५२.

स तु गुरुः कुलक्रमागताचारः, कुमार्गाचारवर्जितः, शिवध्यानपरः, शिवतत्त्वविवेकी **लिङ्गाङ्गयोगतत्त्वज्ञः** [1]**निरूढाद्वैतवासनः** [2]**श्रोत्रियब्रह्मनिष्ठश्च** भवेत्। उक्तञ्च–

[3]**गुरुर्गृहस्थ एव स्यात् न कदाचिद्यतिर्गुरुः।**
**वानप्रस्थयतीनान्तु गुरुत्वं निष्फलं भवेत्॥ ५३॥**

**क्रियासारेऽपि**– ......................**गृही स्यादुत्तमो गुरुः।**
**यथाहं सर्वलोकानां गुरुरम्बिकया सह॥**

इत्यादिना गुरोः गृहस्थत्वं न विरुध्यत इति विज्ञायते। उपनिषद्यपि ब्रह्मज्ञानिने **रैक्काय** राजा **जानश्रुतिः** विद्यारूपां स्वसुतां परिणयमुखेन समर्प्य, तस्मात् ब्रह्मविद्यां उपदेशमुखेन अवाप्नोतीति श्रूयते। वीरशैवेऽपि आचार्याणां मध्ये **रेवणसिद्धादीनां** अनासक्तयोगिनां लोककल्याणार्थं गार्हस्थ्यं च श्रूयते। एवं **बसवेश्वरोऽपि** स्वयं गृहस्थस्सन्नेव **चन्नबसवाय**: दीक्षागुरुरभूत्। मुमुक्षुः साधकः तादृशं गुरुं अभिगम्य तत्कारुण्यं लब्ध्वा तन्मुखात् शिवदीक्षां लभेत।

उक्तञ्च मुण्डकोपनिषद्भाष्ये **उमचिगी शङ्करशास्त्रिणा** "शौनको ह वै **महाशालः**" इति पदव्याख्यानावसरे **गृहस्थस्य** गुरुत्वौचित्यमधिकृत्य। "महाशालः इत्यत्र महागृहस्थः इति व्याख्यातमत्र महत्वविशेषणस्य वैयर्थ्यं स्यात्। अस्मन्मते तु महच्छब्देन प्राकृताश्रमातिशयितत्वबोधात् सार्थक्यं भवति। [4]"**अगस्त्यो जैमिनिश्चैव**.... न संशयः" [5]"अत्र ब्रह्मविद्यासम्प्रदायप्रवर्तकानां गार्हस्थ्यदर्शनात् शिवगृहस्थाश्रमधर्मसमुच्चितमपि ब्रह्मज्ञानं मोक्षसाधनमिति निश्चीयते।" गुरुमठेषु [7]"**पुत्रवर्ग**" "**शिष्यवर्ग**" इति सम्प्रदायद्वयमस्यस्मारकं भवति। प्रायः पञ्चाचार्य प्रवराः पट्टगाधिकारिण एव शिष्याणां शिवदीक्षादिकमाचरन्तीनिदिक्।

२) **लिङ्गतत्त्वस्वरूपन्तु** प्रपञ्चितं [6]**रेणुकगुरुणा** लिङ्गधारणस्थले। तस्य लिङ्गस्य वैदिकत्वप्रतिपादनं च **श्रीकरभाष्ये** जिज्ञासाधिकरणे बहूनां श्रुतीनां लिङ्गधारणविधायकत्वं च। भक्तःस्तु गुरूक्तप्रकारेण प्रत्यहं नियतकालेषु लिङ्गार्चनादिकं कृत्वा तत्परायणो भवेत्।

---

[1] सि. शि. प. ६. [2] मुण्डकः १-१-३ १-२-१२. [3] चन्द्रज्ञानागमः– २-५३ [4] क्रियासारः १-१४. [5] मुण्ड. भा– १२-१३. [6] सि. शि. प ६. [7] वी. सदाचारसंग्रहः पृ. ११९-१२०.

३) जङ्गमतत्त्वम्-- जङ्गमस्तु साक्षात् शिवस्वरूपः । गुरुमुखेन शिवदीक्षापवित्रात्मनां भक्तानां लिङ्गनिष्ठादिकं सम्यक् परीक्ष्य अनुगृहीतुमेव परमेश्वरः जङ्गमरूपेण अवतरति । गुरुजङ्गमयोः न कोऽपि भेदः यद्यपि तथापि जङ्गमस्तु प्रायेण विरक्त एव स्यात् न तु गुरुवत् गृहस्थोऽपि ।

उक्तञ्च नन्दिपुराणे–

"अहं ममत्वशून्यत्वात् निजबोधैकरूपधृत् ।
स्वयमेव स्वयम्भूत्वा चरतीति चरः स्मृतः ॥"

पारमेश्वरे–

ईषणत्रयनिर्मुक्ता ज्ञानविज्ञानतत्पराः ।
दृढवैराग्यसम्पन्ना धीरास्ते शिवयोगिनः ॥

सिद्धान्तशिरोमणौ–

"स्वरूपज्ञानसम्पन्नो ध्वास्ताहं ममताकृतिः ।
स्वयमेव स्वयं भूत्वा चरतीति चराभिधः ॥
अन्तर्धाय ललाटाक्षिशशाङ्कं सम्पिधाय च ।
अवामभागललनो जङ्गमः परमेश्वरः ॥

वीरागमे–

[1]कन्थाकमण्डलुर्दण्डः खर्परो भस्मभस्त्रिका ।
एताः पञ्चमहामुद्राः जङ्गमानाञ्च लक्षणम् ॥

चन्द्रज्ञानागमे च–

[2]"एकमूर्तेस्त्रयो भागाः गुरुर्लिङ्गन्तु जङ्गमः" इति ।

---

[1] वीरशैवानन्दचन्द्रिका– पु १०८-१०९ [2] चन्द्रज्ञानागमः– ५-१५.

स्वरूपज्ञानसम्पन्नो जङ्गमः भक्तोद्धारार्थमेव लोके चरति। शिष्यस्तु यथा गुरौ, यथा लिङ्गे भक्तिमान् प्रवर्तते तथा जङ्गमे च नित्यं भक्तिं च कुर्यात्। लिङ्गं द्विविधं **जङ्गम-अजङ्गमात्मना**। गुरुणा दीक्षामुखेन दत्तं **इष्टलिङ्गं अजङ्गमं लिङ्गम्। शिवयोगीति** विश्रुतं लिङ्गं **जङ्गमात्मकं लिङ्गम्**। यतो जङ्गमं लिङ्गं अजङ्गमलिङ्गापेक्षया वरं इति ज्ञानिनां मतम्। तादृशाय लिङ्गस्वरूपिणे जङ्गमाय यद्दत्तं तदक्षयफलं भवेत्।

अतो भक्तः लिङ्गपूजां विधाय गुरु-जङ्गमयोरन्यतरस्य पूजामपि भक्तितो विधाय ततः **पादोदक-प्रसादौ** स्वीकृत्य दासोऽहम्भावेन वर्तेत।

दासोऽहम्भावलक्षणन्तु–

**[1]"शरीरादिपादार्थांश्च दत्त्वा दानं समर्पणम्।**
**समर्प्य सोऽहमस्मीति दासोऽहम्भाव उच्यते॥"**

४-५-६) एवं [2]**भस्म-रुद्राक्ष-मन्त्राणां** च स्वरूपं सिद्धान्तशिखामण्यादिषु विस्तरतो निरूपितमेव।

७-८) **गुरु-चरपादोदक-प्रसादस्वीकारविधिमधिकृत्य** [3]श्रीकरभाष्ये "**ईशावास्य-मिदं सर्वं**" **इत्युपनिषद्** व्याख्यायां यन्निरूपितं **उभयलिंगी** शङ्करशास्त्रिणा तत् सर्वमनूदितम्। किञ्च [4]**तत्र पादोदकविधौ "अथातो महापादोदकविधिं व्याख्यास्यामः"** इत्यारभ्य "**श्रीरुद्रेण** .... महादेवं स्थापयित्वा '**सर्वो वै रुद्रः**' इति द्वाभ्यामभिमन्त्र्य शिरसि संप्रोक्ष्य "**ऋतं सत्यमिति**" प्राशयेत् "**इत्यादिकं**" सर्वं [5]**वीरशैवानन्दचन्द्रिकायां** यथाश्रुतमनूद्योक्तं ".... शिवपादोदकस्य मुमुक्षुभिः शिरसि धार्यत्वं पेयत्वञ्च प्रतिपाद्यते। तस्मादवश्यं शिवपादोदकं मुमुक्षुभिः सेवनीयम्।" इत्युक्तं। ततः [6]".... एकपात्रस्थितं पादोदकं पुरातन**बसवेश्वरप्रमुखप्रमथसंप्रदायानुरोधेन** वीरशैवदीक्षित-भक्तमाहेश्वराः क्रमेणै-**कैकशः 'ऋतं सत्यं'** इति पिबेयुः। तत्रोच्छिष्टदोषो नास्ति, यथा **सोमरसपानेन "न सोमेनोच्छिष्टा भवन्ति" इत्यापस्तम्ब**सूत्रवचनेन ऋत्विग्भिर्बहुभिरेकस्मिन् चमसरूपपात्रविशेषे स्थितः सोमरसः पर्यायतः पीयत इति तत्रोच्छिष्टदोषो नास्ति।

---

[1] अनुभवसूत्र– अधि.७-६१. [2]श्रीकरभाष्ये- १-२.१ पु २१६, २२१ पृष्ठयोः द्रष्टव्यः। [3] श्रीकर-भाष्यम्– २२२-२३०. [4]श्रीकरभाष्ये–पृ.२३०. [5] वादकाण्डे पृ ११३. [6] वीरशैवानन्दचन्द्रिकायां वादकाण्डे– पृ. ११९.

अत्र यद्यपि गुरु-चर पादोदकस्य मुमुक्षुभिः विधिना संगृह्य शिरसि धार्यत्वं च श्रीकर-भाष्य-वीरशैवानन्द-चन्द्रिकयोश्च समानम्, तथापि [1]" पादोदकं पुरातनबसवेश्वरप्रमुखप्रमथ सम्प्रदायानुरोधेन...." इत्यादिकं तत्परिष्कृतप्राशनप्रकारं श्रीकरभाष्यकारो न जानाति इत्यतः श्रीकरभाष्यस्य बसवपूर्वकालीनत्वं सुस्पष्टमेवेति सहृदयैराकलनीयम् ।

## अथ पञ्चाचाराः

वीरशैवपथप्रवृत्तस्य साधकस्य पञ्चाचाराः प्राणस्वरूपा इति पूर्वमेवावेदितम् । उक्तञ्च

> [2]लिङ्गाचारः सदाचारः शिवाचारस्तथैव च ।
> भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ॥ इति ।

लिङ्गाचारः– तत्र 'गुरुणा शिवदीक्षामुखेन दत्तात् लिङ्गात् नास्ति दैवं महीतले इति मत्वा' तद्भावानुसन्धानं क्रियते यत् भक्तेन तल्लिङ्गाचारः ।

सदाचारः– कायकरूपधर्मार्जितेन द्रव्येण गुरुलिङ्गजङ्गमानां यत् सन्तर्पणं तत् सदाचारः । उक्तञ्च–

"आचार एव सर्वेषामलङ्कारः । आचारहीनः पुरुषः निन्दितो भवति । 'आचारः परमो धर्मः' आचारः परमं धनम् ।' आचारहीनं ज्ञानं न च सिद्धिदम् ।" सदाचारः अष्टशीलाढ्यः । उक्तञ्च–

> [3]सदाचारोऽष्टशीलाढ्यः सेवितः कल्पपादपः ।
> सद्भक्तानां सुमनसां ददातीष्टफलं महत् ॥ ३२ ॥

स च अङ्कुर-उत्पन्न-द्विदल-प्रवृद्ध-सप्रकाण्ड-सशाख-सपुष्प-सफलभेदेनाष्टधा विभक्तः । तत्राङ्कुरः–

---

[1] वीरशैवानन्दचन्द्रिका वादकण्डः– पृ. ११९. [2] चन्द्रज्ञानागमः पटलः ९.४. [3] चन्द्रज्ञाने– प. ९.

१) तत्र गुरुकारुण्यकलितषडध्वन्यासशोभिता स्वीया तनुः अप्राकृतेति यो भावः स एव बीजभूतः स अङ्कुरः ।

२) शिवदीक्षायुतैः दारादिभिः यत् सहवासः तदुत्पन्नं शीलमित्युक्तम् ।

३) भस्मादीनां लाञ्छनानां अप्रमादेन धारणं द्विदलं शीलम् ।

४) शिवधर्माणां माहात्म्यस्य विभावनं प्रवृद्धं शीलम् ।

५) इष्टलिङ्गमनभ्यर्च्य यदभोजनं तत् सप्रकाण्डं शीलम् ।

६) इष्टलिङ्गानर्पितस्य द्रव्यस्य अग्रहणं सशाख शीलम् ।

६) शिवार्पितस्य प्रसादस्य अपरित्यजनं सपुष्पं शीलम् ।

७) शिवार्पितस्य प्रसादस्य अपरित्यजनं तत् सत्पुष्पंशीलम् ।

८) गुरु-लिङ्ग-जङ्गमानां यदेकत्वभावनं तत् सफलशीलम् ।

[1] "यस्सदाचारमष्टाङ्गं भक्तिनिष्ठो निषेवते ।
स सद्यः सिद्धिमाप्नोति परां शम्भोरनुग्रहात् ॥ ३१ ॥"

## अथ शिवाचारः

द्रव्य-क्षेत्र-गृहादीनां षोडशानां शिवशास्त्रोक्तमार्गेण विशोधनं शिवाचारः ।

१) **द्रव्यशुद्धिः**— भक्तहस्तगतं वापि फलमूलादिकं भस्मना विशोधितं ग्राह्यम् ।

२) **क्षेत्रशुद्धिः**—नन्दिमुद्राङ्कितशिला-दार्वादिपरिशोभितं क्षेत्रं भक्तिपरैः ग्राह्यम् ।

३) **गृहशुद्धिः**— भक्तैः निर्मितं शिवलिङ्गाङ्कितं वा वेश्म भक्तैः ग्राह्यम् ।

४) **भाण्डशुद्धिः**— भक्तेन निर्मितं शिवलिङ्गाङ्कितं वा भाण्डजातं परिग्राह्यम् ।

५) **तृणशुद्धिः**— भक्तलोकसमानीतं भस्मना संस्कृतं तु वा तृणादिकं परिग्राह्यम् ।

---

[1] चन्द्रज्ञाने प. ९.

६) **काष्ठशुद्धिः**— भक्तसमानीतं विभूत्या संस्कृतं तु वा काष्ठं व्रतस्थैः संग्राह्यम् ।

७) **वीटिकाशुद्धिः**— भक्तारामे समुत्पन्नं भसना संस्कृतं वा ताम्बूलं ग्राह्यम् ।

८) **पाकशुद्धिः**— शिवदीक्षान्वितैः पक्वं, अभक्तानवलोकितं, भोज्यं भक्तैः परिग्राह्यम् ।

९) **रसशुद्धिः**— माहिष-आविकादिघृत-दधि-पयः तक्रादिकं परित्यज्य गव्यन्तु सर्वदा ग्राह्यम् ।

१०) **भवशुद्धिः**— काम्यकर्मविसर्जनात् जन्मराहित्यसंपत्तिः ।

११) **भूतशुद्धिः**— सर्वभूतदयालुत्वं, भूतदूषणराहित्यम् ।

१२) **भावशुद्धिः**— सर्वकामान् समुज्झित्य सदा शिवभावानुभावनम् ।

१३) **मार्गशुद्धिः**— पद्भ्यां पिपीलिकादीनां न यथाहिंसनं भवेत् तथा गमनम् ।

१४) **कालशुद्धिः**— शास्त्रसंशोधिते निश्शब्दे च मनोरमे काले शिव लिङ्गाराधनम् ।

१५) **वाक्शुद्धिः**— अनृत-परुष-कुत्स-भीभत्स-दांभिकवचसो विसर्जनम् ।

१६) **जनशुद्धिः**— आसने शयने याने गोष्ठ्यां सर्वत्र सर्वदा सद्भक्तजनसाङ्गत्यम् ।

**विद्भ्मयं शिवाचारः सर्वशास्त्रेषु गोपितः ।**
**एतदाचरणान्मर्त्यः शिवसायुज्यमश्नुते ॥ ५० ॥**

## अथ गणाचारः

भक्तगणैः अनुष्ठितो आचारः **गणाचारः** । तत्र चतुष्षष्टि शीलानि वर्तन्ते यथा—

**वाचिकं शीलं सप्तविधम्—**

१) यथार्थभाषणं **प्रथमं** शीलम् ।

२) न वाच्यमप्रियं सत्यम्; नासत्यं च प्रियं वदेत्; ब्रूयात् प्रियं च यत् सत्यं **द्वितीयं** शीलम् ।

३) प्रत्यहं वेदागमपुराणादिसच्छास्त्रपठनम् तृतीयं शीलम् ।

४) शिवस्य शिवभक्तानां विशेषतः गुरोः प्रशंसनं चतुर्थम् ।

५) अन्यदेवानां मानुषाणां वा जातुचित् प्रशंसावर्जनम् पञ्चमम् ।

६) आत्मस्तुतिवर्जनं षष्ठम् ।

७) परनिन्दाराहित्यं सप्तमम् ।

**अथ पाणिगतं शीलम् पञ्चविधम्–**

८) गुरु-जङ्गम-लिङ्गानां नमस्कृतिः ।

९ पूजापरिकराणां सम्पादनम् ।

१०) रुद्राक्षमालया मूलमन्त्रं अन्वहं जपः ।

११) गुरु-लिङ्ग-जङ्गमानां प्रत्यहं आराधनम् ।

१२) गुरु-जङ्गमयोः शिवधर्माय च यथाशक्ति दानम् ।
एवं पञ्चविधं शीलं पाणिसंबद्धमीरितम् ।

**अथ पादगतं शीलं चतुर्विधम्**

१३) गुरोः माहेश्वरस्याभिगमनम् ।

१४) गुरोः माहेश्वरस्यापि भक्त्या प्रदक्षिणम् ।

१५) पूजापरिकराणां संपादनाय गमनम् ।

१६) इष्टलिङ्गपूजार्थं स्थिरमासनम् ।

**अथ त्वक्संबद्धं शीलं द्विविधम्–**

१७) नित्यं इष्टलिङ्गस्य अवियोगतः स्पर्शनम् ।

१८) इष्टलिङ्गस्पर्शजन्यरोमाञ्चसमलङ्कृतिः ।

अथ चक्षुर्गतं शीलं द्विविधम्–

१९) अश्रान्तं सानुरागं इष्टलिङ्गनिरीक्षणम् ।

२०) इष्टलिङ्गेक्षणोद्भूतानन्दबाष्पसमुद्गमः ।

अथ जिह्वागतं शीलं

२१) अन्वहं निवेदितप्रसादीयरसास्वादः ।

अथ घ्राणगतं शीलम्

२२) निर्माल्यगन्धपुष्पादि सौरभाघ्राणनम् ।

अथ श्रोत्रगतं शीलम्

२३) गुरोः शिवस्य भक्तानां स्तोत्राकर्णनम् ।

२४) गुरोः शिवस्य भक्तनां वा निन्दानाकर्णनम् ।

अथ कायशोधशीलं पञ्चविधम्–

२५) गुरोः इष्टस्य चरस्यैव प्रसादतः कायसंशोधनम् ।

२६) निषिद्धविषयेभ्यः इन्द्रियनिग्रहः ।

२७) अस्पृश्यवस्तुसंस्पर्शे नीरेण भसना वा स्नानम् ।

२८) आसने शयने गोष्ठयां भविसंबन्धवर्जनम् ।

२९) भूति-रुद्राक्ष-लिङ्गानां शरीरे धारणम् ।

अथ मानसिकं शीलम्

३०) निषिद्धभोगविषये संकल्पराहित्यं ब्रह्मचर्यम् ।

३१) भक्तिरतौ कामं कुर्यात् न जातुचित् विषयेषु ।

३२) **क्रोधं** अधर्मे वहेत् न वैरिषु ।

३३) **लोभं** धनादौ न वहेत् किन्तु शिवस्याराधने ।

३४) **मोहं** भक्तजने कुर्यात् न कान्तायां सुतेषु वा ।

३५) **मात्सर्यं** करणेष्वेव न जनेषु वहेत् इति अमात्सर्यम् ।

३६) मदं मायाजये कुर्यात् न धर्मे नापि सम्पदि इत्यमदम्।

३७) गुरौ चरे वा गुणागुणविमर्शत्यागः ।

३८) प्राणिनो यस्य कस्यापि बाधाऽकरणम् अहिंसा ।

३९) दया प्राणिदुःखवीक्षायां अक्षमत्वम् ।

४०) क्रियायां वचने परस्मात् स्वतो वा आर्जवं शीलम् । ह्रीः तत् चत्वारिंशम् ।

४१) रिपौ निजसुते वापि वैषम्यविवर्जनम् ।

४२) गुरूदिते निगमागमवचसि च विश्वासः ।

४३) दुरन्तायां आपद्यपि धर्मस्य अवर्जनं धृतिः ।

४४) वैरिजनेषु अपकरिष्वपि अदूषणं क्षमा ।

४५) मानसे भोगासक्तिच्युतिः ।

४६) क्रियायां वचने वा प्रमादरहितस्थितिः धीः ।

४७) शिवान्यवस्तुसंकल्पवर्जनम् दमः ।

४८) परद्रव्यापरिग्रहः अस्तेयम् ।

४९) सन्तुष्टिः- अलब्धवस्तुविषयव्यसनाभावः ।

५०) नित्यं पारमेश्वरनामरूपयोः स्मरणम् ।

५१) शम्भुनामगुणादीनां चिन्तनमनारतम् ।

५२) सदा शम्भोः पादसंवाहनादिकं भाव्यमानम् ।

५३) शम्भोः आवाहनादिना मानसं अर्चनम् ।

५४) शम्भुपादाऽब्जयोः नित्यं मानसिकप्रणामः

५५) शम्भोः मनसा कैङ्कर्यकरणं दास्यशीलम् ।

५६) शम्भोः कल्याणरूपस्य सखिताभावने सख्यम् ।

५७) बन्धमोचनभारस्य कृत्स्नस्य ईश्वरे समर्पणं आत्मार्पणम् ।

५८) मूलमन्त्रस्य मनसा सदा जपः ।

५९) शम्भोः दिव्यरूपानुसन्धानं ध्यानम् ।

६०) तैलधारावदविच्छिन्नं ध्रियते यत् तत् धारणम् ।

६१) निवातदीपवत् ध्याने चेतसः स्थितिः समाधिः ।

६२) शिवं सोऽहं भावेन ध्यायन् तदिन्द्रियमुखेनैव स्वीकरणम् ।

६३) महेशितुः अपरिच्छिन्नरूपानुसन्धानम् ।

६४) देवस्य अनन्तरूपं निजरूपतः भावयन् शिवानन्दवशात् आत्मानं विस्मरन्नपि अचलं यत्तिष्ठति तत् चतुष्षष्टिकं शीलम् ।

**यश्चतुष्षष्टिशीलाढ्यः शिव एव न चापरः ।**
**एतदभ्यासयोगेन शिवसायुज्यमश्नुते ॥ १२३ ॥**

## अथ भृत्याचारः

भृत्यत्वं वीरभृत्यत्वमित्युच्यते । तच्च द्विधा मतः । गुरु-लिङ्ग-जङ्गमानां कैङ्कर्याचरणं प्रथमं महत् । अथ द्वितीयन्तु देशिकाय (गुरवे) तनुं, शंभवे (लिंगाय) चित्तं, जङ्गमाय धनं च समर्प्य दासोऽहंभावेन स्थातव्यम् । उक्तञ्च—

**[1]मुक्तिमेव परां कांक्षमाणो यदवतिष्ठते ।**
**तन्मतं वीरभृत्यत्वं शिवानुग्रहसाधनम् ॥ १२६ ॥** इति ।

एतादृशसाधनक्रमः नीलकण्ठशिवाचार्यैः सम्यक् समर्थितम् । उक्तञ्च—

**[2]अष्टावरणविज्ञानं पञ्चाचारानुवर्तनम् ।**
**उद्गीथविद्यासाम्येन वीर्यवत्वं प्रयाति हि ॥ २६५ ॥**

---

[1] चन्द्रज्ञानागमे प ९. [2] क्रियासारेः उ. ३.



स्थलं-शक्तिमत् घनलिंगम्
लिंगम्
(सत्, प्रकाशः ईश्वरः बिंदुः)
भावलिंगं
(चिद्, विमर्शः हिरण्यगर्भः विराट्)
प्राणलिंग
(आनंदः आभासः विराट् : विद्या)
इष्टलिंग
परशिवः | with
महालिंगं | चिच्छक्तिः
शिवः | with
प्रसादलिंगं | पराशक्तिः
शक्तिः | with
परलिंग | आदिशक्तिः
सदाशिवः | with
शिवलिंगं | इच्छाशक्तिः
ईश्वरः | with
गुरुलिंगं | ज्ञानशक्तिः
शुद्धविद्या | with
आचारलिंगं | क्रियाशक्तिः
शक्तिः
प्रकाशनं, सत्
विमर्शनं, चित्
आभासनं-आनंदः
चिच्छक्तिः
शांत्यतीतोत्तरकला
पराशक्तिः
शांत्यतीतकला
आदिशक्तिः
शांतिकला
इच्छाशक्तिः
विद्याकला
ज्ञानशक्तिः
प्रतिष्ठाकला
क्रियाशक्तिः
निवृत्तिकला
अंगः
प्राज्ञः-योगांगः
ऐक्यः
शरणः
तैजसः-भोगांगः
प्राणलिंगी
प्रसादी
विश्वः-त्यागांगः
माहेश्वरः
भक्तः

- भक्तिः
  - विशुद्धः
    - समरसः
    - आनन्दः
  - विचारः
    - अनुभवः
    - अवधानं
  - विधेयः
    - निष्ठा
    - श्रद्धा

In a simplfied form the same can be tabulated as follows:—

- स्थलं (ब्रह्म)
  - लिंगस्थलं (ईशः)
    - भावलिंग (ईश्वरः)
      - महालिंग
      - प्रसादलिंग
    - प्राणलिंगस्थलं (हिरण्यगर्भः)
      - चरलिङ्ग
      - शिवलिंग
    - इष्टलिंगस्थलं (विराट्)
      - गुरुलिंग
      - अचारलिंग
  - अंगस्थलं (जीवः)
    - योगांगस्थलं (प्राज्ञः)
      - ऐक्यः
      - शरणः
    - भोगांस्थलं (तैजसः)
      - प्राणलिंगी
      - प्रसादी
    - त्यागांगस्थलं (विश्वः)
      - माहेश्वरः
      - भक्तः



## सामरस्य-सारूप्यमुक्तिविवेकः

**श्रीकण्ठमते** सारूप्यमुक्तिरङ्गीकृता। सारूप्यं नाम सादृश्यम्। तत्सादृश्यं तत्र एवं समर्थितम्– "मुक्तस्य ब्रह्मणा सादृश्यमस्ति। कुतः? [1]'**निरञ्जनः परमं साम्यमुपैति**' 'मुक्तः शिवसमो भवेत्' इति मुक्तस्य ब्रह्मगुणस्वरूपाविभागेन ब्रह्मसदृशतया दृष्टत्वात्' इति। अत्र निगमागमवाक्येषु मुक्तः 'परशिवसादृश्यं प्राप्नोति' इति 'परशिवसमो भवति' इत्युक्तत्वात् मुक्तस्य ब्रह्मगुणस्वरूपाविभागः अर्थात् [2]'ब्रह्मसादृश्यमेव' सिध्यति।

यद्यपि **क्रियासारेऽपि** सारूप्यमुक्तिरुपदिष्टा तथापि तत्सारूप्यं सामरस्यात्मकम्। उक्तञ्च–

> [3]**अमृतस्येति वाक्येन धारणं प्रतिपादितम्।**
> **तन्निष्ठा एव मनुजा अतिवर्णाश्रमे रताः॥ १८१॥**
>
> **त एव हि महात्मानो ब्रह्मनिष्ठा उदाहृताः।**
> **लिङ्गाङ्गसामरस्येन ब्रह्मभावमुपाश्रिताः॥ १७२॥**
>
> **सारूप्यरूपिणीं मुक्तिं सम्प्राप्य परदुर्लभाम्।**
> **कृतकृत्या भवन्त्येव शिवानन्दभुजोऽनिशम्॥ १८३॥** इति।

अस्यायमर्थः– **तैत्तिरीयोपनिषदि "अमृतस्य देवधारणो भूयासं"** इत्युक्तम्। तत्र मुक्त्यर्थं लिङ्गधारणं विधीयते। लिङ्गनिष्ठा मनुजा अतिवर्णाश्रमिणः। त एव हि महात्मानो ब्रह्मनिष्ठाः। ते च लिङ्गाङ्ग**सामरस्येन** ब्रह्मभावं उपाश्रयन्ति। सा च अनन्यदुर्लभा, लिङ्गाङ्गसमरस्यात्मक-सारूप्यरूपिणी मुक्तिः। मुक्तास्तु कृतकृत्यास्सन्तः निरन्तरं शिवानन्दमनुभवन्ति" इति। एतेन क्रियासारोक्तं सारूप्यं लिङ्गाङ्गसामरस्यात्मकम् इति सिद्धम्।

उत्तरत्र [4]"**भोगमात्रसाम्यलिङ्गाच्च**" इति सूत्रकारिकायां–

> [5]**तथा विद्वान् पुण्यपापे विधूयाथ निरञ्जनः।**
> **उपैति परमं साम्यमिति तत्साम्यमीरितम्॥ १५७॥**

---

[1] मुण्डकोपनिषत्– ३-३ [2] ब्र. सू. अविभागाधिकरणं– ४-४-२-४. [3] क्रि सा. उ. १.
[4] ४-४-६-२१ [5] क्रि सा. उ. ४.

इत्यत्रोक्तं 'परमसाम्यमपि उपर्युक्तसामरस्यात्मकसारूप्यमेव न तु भेदद्योतकं साम्यम्। अत एव "परम"पदस्य सार्थक्यम्। अयमेवाशयः श्रीकरभाष्ये— "मुक्तोपसृप्य-व्यपदेशात्" इत्यत्र "परमं साम्यमुपैति" इत्यत्र परमशिवोपासकानां शिवसारूप्यमुद्दिश्य इत्यारभ्य "निरतिशयानन्दस्वरूपा तत्समानगुणसार कैवल्यलक्ष्मीप्राप्तिरूप मुक्तिः" अर्थात् परमशिवोपासकैरुपलभ्यं सारूप्यं नाम निरतिशयानन्दस्वरूपा शिवानन्दसमान-गुणसारकैवल्यलक्ष्मीरूपा मुक्तिरेव। न तु श्रीकण्ठप्रोक्तं मुक्त्यवस्थायामपि भेदद्योतकं सादृश्यात्मकं सारूप्यम्।

रामानुजीयैः प्रतिपाद्यं सारूप्यं मुक्तस्य लक्ष्मीवल्लभत्वादिकं विना विष्णुसदृश-शंख-चक्र-गदाधारणत्वादितद्रूपप्राप्त्यात्मकं सारूप्यम्; एवं श्रीकण्ठशिवाचार्यैरपि "गौरी-वल्लभत्वादिधर्मरहितं सारूप्यमङ्गीकृतम्। अर्थात् मुक्तानां शिवसदृशं त्रिनेत्रत्व-चन्द्रधरत्वादिरूपं; नन्द्यादिप्रमथैरिव लभ्यं शिवरूपप्राप्तिरूपसारूप्यम्।

इदमेव श्रीकण्ठेन [2]"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रभाष्यान्ते उपासकस्य— "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" अत्र उपासकाय ब्रह्मणा अनुग्रहिष्यमाणः प्रसादस्तु अयमेव; यत् 'त्वमेवाहं, अहमेव त्वमिति' भावः। अर्थात् कश्चन राजा कस्मिंश्चिदात्मभृत्ये पूर्णकृपां विधाय स्वकीयवस्त्राभरणादिकं तस्मै धारयित्वा केषुचिद्विषयेषु केवलं "अहमेव त्वं, त्वमेवाहम्" इत्याज्ञापयति, तद्वदत्रापि। एवमुत्तरत्रापि "निरतिशयस्वरूपानन्दसाक्षिस्वप्रकाशशिवरूपाहम्भावापत्तिर्मुक्तिः"; अर्थात् निरतिशयस्वरूपानन्दसाक्षिकस्वप्रकाशशिवरूपपराहम्भावः इत्युक्तम्। श्रीकण्ठमते शिवरूप-प्राप्तिरेव मुक्तिः इति तत्र "परं ब्रह्म च तादृगेव तद्भावनया उपासकश्च तथैव भवति" इति भेदद्योतकं औपम्यमेव साधितम्।

तस्यैव सूत्रस्य श्रीकरभाष्ये— "निरतिशयपरानन्दचिदचित्प्रपञ्चविलक्षणशिवतत्त्वप्राप्तिरेव मोक्षः" अर्थात् निरतिशयपरमानन्दरूपा चिदचित्प्रपञ्चविलक्षणा शिवत्वप्राप्तिः। अत्र वीरशैवसिद्धान्तसम्मता सामरस्यात्मिका मुक्तिरुपदिष्टेति भावः।

---

[1] ब्र. सू. १-३-२ पृ २६९ [2] ब्र सू. ४-१-३.

**शिवरूपप्राप्ति-शिवत्वप्राप्त्योरन्तरं** अत्र सुस्पष्टम्। अत एव श्रीपतिः **श्रीकण्ठोक्तं "विशिष्टाद्वैत"**पदमपि न सहते। उक्तञ्च- "**विशिष्टाद्वैत**मित्युक्तिविरोधात् विशिष्टस्य दुर्निरूप्यत्वेन मिथ्यात्वाच्च **शिवाद्वैतमेव** ग्राह्यम्"; इति विशिष्टाद्वैतं निराकृतम्। अत एव **श्रीपतिपण्डितेन "अनावृत्तिश्शब्दात्"** इत्यन्तिमे सूत्रभाष्ये "**लोहरस-न्यायं निर्दिश्य** परमेश्वरोपासकानां तदुपासनामहिम्ना स्वाभाविकजीवभावनिवृत्तिपूर्वकशिवत्व-प्राप्तिरेव मोक्षः" इति **स्पष्टीकृतम्**।

## जगद्व्यापारवर्ज्यविचारः

ननु वीरशैवसिद्धान्तरीत्या मुक्तः **जले जलमिवेति न्यायेन** शिवसामरस्यं प्राप्नोति; तदा मुक्तोऽपि स्वयं शिव एव भवति। तेन जगत्सृष्ट्यादिपञ्चकृत्यकर्तृत्वादिकमपि तस्यैव स्यात् इत्याशङ्कायां सूत्रकारैः [1]"**जगद्व्यापारवर्ज्याधिकरणे**" मुक्तस्य न जगद्व्यापारः इति निर्णीतम्। यतो मुक्तस्य निरतिशयशिवानन्द **एव** लक्ष्यम्। किं तस्य जगद्व्यापारेणेति।

न च श्रुतौ **नदीसमुद्रन्याय**निदर्शनात् आचार्यैः "**जले जलमिव वह्नौ वह्निरिव**" इत्युक्तत्वात् मुक्तस्य शिवेऽविरलसायुज्यमेव न्याय्यम्। तेन जगद्व्यापारोऽपि मुक्तस्य स्यादिति वाच्यम्। विभिन्नदिग्विभागैः विभिन्ननामरूपरुच्यादिभिस्समन्विता नद्यः समुद्रं प्राप्य यथा विमुक्तनामरूपाः समरसा भवन्ति, तथैव तत्समुद्रजलेऽपि विभाग-द्वयं सर्वानुभवसिद्धम्; यतस्तत्र समुद्रं प्राप्तानां नदीनां जलं उपरितनं स्तरं केवलं (Surface of the water) प्राप्नोति तत्रस्थं जलं रविरश्मिभिरुष्णीभूय ऊष्मरूपेण मेघ-मण्डलं प्राप्य वर्षित्वा पुनस्समुद्रमेवागच्छति; न पुनः समुद्रस्य तत्तले विद्यमानं जलं न कदापि रविरश्म्यसम्पर्कात् उष्णीभवति; किन्तु परमशीतलमेव स्यात्; तथात्रापि मुक्तात्म-नोऽपि साधारणजीववैलक्षण्येन जनन-मरणविदूराः सागरतत्तलजलमिव जगद्व्यापाररहिताः सन्तः केवलमानन्दात्मके शिवांशे नित्यसुखमनुभवन्ति। जगद्व्यापारभारः परशिवस्यैव। अत एव तस्य शक्तेः साहाय्यमावश्यकम्। मुक्तस्य तु जगद्व्यापारभाराभावादेव तत्र गौरी-वल्लभत्वादि प्रश्न एव नोदेति।

---

[1] ब्र. सू. ४-४

ननु परमात्मन्यपि जगद्व्यापारांशः, तद्रहितांशश्चेति अंशद्वयं स्यादिति न च वाच्यम्; यत इमां शङ्कां श्रुतिरेव समाधत्ते; यथा– [1]"**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि**" इत्यत्र परमात्मना स्वकीयानुपमप्रभावात् चतुर्थोऽशः (पादभागः) जगद्व्यापाराय निक्षिप्तम्। अवशिष्टं पादत्रयं तस्मिन्नेव '**अमृतं दिवि**' सुरक्षितम्। यत्र मुक्तात्मानः नित्यानन्दमनुभवेयुः। लोकेऽपि कश्चन धनिकः स्वीयस्यैश्वर्यस्य पादभागं व्यवहारे नियोज्य अवशिष्टं पादत्रयं निक्षिपति (Reserve Fund)। तथैवात्रापि मुक्तात्मानः जगद्व्यापाररूपं भवचक्रमतिक्रान्ताः सन्तः नित्यानन्दात्मके अखण्डानन्दे तन्मया भवन्ति। उक्तञ्च **श्रीकरभाष्ये** तस्मिन्नेवाधिकरणभाष्ये–

[2]किञ्च– परशिवकैलासवासिनां नित्यमुक्तानां सूरिणां स्वेच्छया सञ्चाराणां "**कामान्नीकामरूप्यनुसञ्चरन्**" इत्यादौ कामान्निष्कामरूपविगलितमनुष्यादिशरीराभिमानरहितेच्छाशक्तिक्रियाशक्तिज्ञानशक्तिव्यापाराणां नित्यवैभवपरमानन्दकन्दस्वप्रकाशविभूतिमयं **शिवसामरस्यसारूप्यरसैकप्रपञ्चावगाहिनां** परिपूर्णसर्वशिवात्मकभावप्रकटनं श्रुतिर्दर्शयति। "**अहमन्नमहमन्नमहमन्नम्**" "**अहमन्नादोऽहमन्नादोऽहमन्नादः**" इत्यादिना श्रुत्यन्तरेऽपि मुक्तानुभवं स्पष्टमुपदिष्टम्.......आकाशवत्सर्वव्यापकशिवतत्वानन्दानुभवशिवयोगसमाधिनिष्ठानुष्ठानजीवन्मुक्तशिवज्ञानिनां वामदेवादिवदुपलक्षणम्। शिवसारूप्यधारिणां जीवन्मुक्तानामपि दृढशिवैकज्ञाननिष्ठायास्सत्वेऽपि शिववत्तेषां न जगज्जन्मादिहेतुत्वम्" इति।

## प्रमाणविचारः

दार्शनिकेषु मध्ये **चार्वाकाः प्रत्यक्षमेकमेव प्रमाण**मङ्गीकुर्वन्ति। **बौद्ध-वैशेषिकायोः प्रत्यक्षं अनुमानमिति** प्रमाणद्वयम्। **सांख्य-वीरशैवयोः- प्रत्यक्षं अनुमानं** शाब्दं चेति प्रमाणत्रितयम्। **नैयायिकानान्तु**-' प्रत्यक्ष-अनुमान-उपमानशब्दाः चेति प्रमाणचतुष्टयम्। प्राभाकरैस्तु पूर्वोक्तैस्साकं अर्थापत्तिः चेतिप्रमाणपञ्चकमङ्गीक्रियते। भाट्टाद्वैतिभिस्तु पूर्वोक्तैस्साकं अनुपलब्धिमरपि प्रमाणत्वेनानुमन्यते। **पौराणिकैतिहासिकैश्च** तैस्सह सम्भवैतिह्ये प्रमाणत्वेनांगीक्रियेते। **वीरशैवाभिमते प्रमाणत्रितये** अवशिष्टानां समन्वयप्रकारस्तु इत्थम्–

---

[1] पुरुषसूक्तम्। [2] श्रीकरभा– ४-४-५-१९.

प्रत्यक्षे अनुपलब्धिरन्तर्भवति । अनुमाने तु उपमान-अर्थापत्ति-सम्भवानामन्तर्भावः । शब्दे ऐतिह्यमन्तर्भवतीति तस्मादत्र न प्रमाणान्तरस्वीकृतिप्रसङ्गः ।

[1]**एकोरामः विरूपाक्षदेशिकेन्द्रश्च**– उक्तञ्च भाष्यभूमिकायां **श्रीविरूपाक्षदेशिकेन्द्रः श्रीपतेः** दीक्षागुरुरिति । स एव भाष्यारम्भे "**एकोरामसिद्ध**"भगवत्पादत्वेन, [2]"**पूर्वाचार्यप्रशिष्यं शरणमहमिमं देशिकेन्द्रं प्रपद्ये**" इत्यत्र "**शिवशरणत्वेन**" च संस्तुतः । आदय्याख्यशिवशरणोऽपि "**एकोरामं**" बसवपूर्वसमकालीनेषु **रेवणसिद्ध-मरुलसिद्धादिषु** शिवशरणेषु मध्ये निर्दिशति । तेन **विरूपाक्षदेशिकेन्द्रोऽपि** शिव-शरणपुत्रे "**एकोरामा**"ख्यया विख्यातो भवेदिति विज्ञायते । अत एव भाष्यकारः "**निजगुरुं**" "**आत्मनाम गुरोर्नाम निजनाम न कीर्तयेत्**" इत्यार्योक्तिमनुरुध्य, तदन्वर्थकैरेव **एकोराम-, शिवाचार्य-देशिकेन्द्र-शरण**-इत्यादिभिर्नामभिराह्वयति ; न त्वङ्कितनाम्ना विरूपाक्षाभिधानेन ।

**एकोरामस्य "विरूपाक्ष" इत्यङ्कितनामसत्वे** किञ्चन बाह्यप्रमाणमपि दरीदृश्यते। यतोऽस्य देशिकेन्द्रस्य करकमलसञ्जातः '**चन्द्रगुण्डदेशिकेन्द्रः**' । स च श्रीपति-पंडितवंशीय इति **श्रीशैलपंडिताराध्य**चरितादवगम्यते । अयं च बसवपूर्वयुगप्रख्यातस्य **देवदासिमार्यस्य** दीक्षागुरुः । दासिमार्यस्तु यद्यपि स्वपुत्राय परमगुरोः '**एकोराम**' इत्यन्वर्थकं नाम चकार ; तथापि सः '**विरूपाक्ष**' इति तदङ्कितनाम्नैव विख्यातो अभवत् । उक्तञ्च [3]**देवाङ्गचरिते**--

> "**एकोराम इति ख्यातः आत्मजः समजायत ।**
> **विरूपाक्षाभिधानं च यस्याभूल्लोकविश्रुतम् ॥**" इति ।

एतेन श्रीपतेः गुरुः **एकोरामः विरूपाक्षः** इत्याद्यभिधानैर्विख्यातो भवेत् इत्यभ्यूह्यते ।

---

[1] अस्यामेव भूमिकायां श्रीपतेः दीक्षागुरुविषयप्रस्तावे १२४ तमे पृष्ठे इदमनुसन्धेयम् । [2] भाष्य-प्रारम्भे ९ तमे पद्ये द्रष्टव्यः । [3] देवाङ्गचरितं अथवा 'देवदासोपाख्यानं' (ब्रह्माण्डपुराणान्तर्गतउत्तरखण्डः) आन्ध्राक्षरमयम् , प्रकाशकः- कां· मुनिस्वामिचेट्टि, १८६८ चन्नपुरी (Oriental Librery, Mysore No. A. 420)

१५

# अथ वीरशैवाभ्युपगमाः

क) आगमसाङ्कर्यविचारः

**वीरशैवः अष्टविंशत्यागमानां** प्रामाण्यं मनुते। तत्रापि **'निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्,** इत्युक्तदिशा तदुत्तरभागस्यैवात्र प्रामाण्यम्।

किञ्चागमानां साङ्कर्यं दोषत्वेन परिगण्यते इतरेषु शैवप्रभेदेषु। अत्र तु–

[1] "दिव्यागमार्थसाङ्कर्यमैकतन्त्रान्नदोषकृत्।
किन्तु पाशुपताद्यर्थसाङ्कर्यं तेषु दोषकृत्॥ ६॥

तेष्वप्येकं समाश्रित्य ग्राह्यमन्यदुपेक्ष्यते।
इत्येतन्मानुषे लिङ्गे न तु स्वायम्भुवादिषु॥ ७॥

एकागमावलम्बेऽपि प्रविहाय तदीरितम्।
प्रशस्तमन्यतो ग्राह्यमित्यन्वादिशदीश्वरः॥ ९॥

प्राशस्त्यमुभयोस्साम्येऽप्यर्चनाङ्गमपेक्षितम्।
तत्रोक्तमन्यत्रोक्तं च सममित्यप्युपादिशत्॥ ९॥

तस्माद्दिव्यागमेभ्योऽसावखिलेभ्यः समुद्धृतैः।
अपेक्षितांशैः क्रियते श्रीशिवागमपद्धतिः॥ १०॥

ख) अथ स्थलतत्त्वस्वरूपनिरूपणम्–

पत्यपरपर्यायं ब्रह्मात्र स्थलशब्देनाभिधीयते। उक्तञ्च स्थलस्वरूपं **मायिदेवशिवाचार्येण अनुभवसूत्रे**[2]–

---

[1] क्रियासारे– उ. १४ पृ २०२. [2] अनुभवसूत्रं अधि– २.

एकमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ।
शिवतत्त्वं शिवाचार्या स्थलमित्याहुरादरात् ॥ २. २ ॥

सर्वेषां स्थानभूतत्वाल्लयभूतत्वतस्ततः ।
तत्वानां महदादीनां स्थलमित्यभिधीयते ॥ ३ ॥

यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः ।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः ॥ ४ ॥ इत्यादि ।

तदेव स्थलतत्त्वं स्वशक्तिक्षोभमात्रेण **लिङ्गस्थलाङ्गस्थलत्वेन** द्विविधं भवति उक्तञ्च तत्रैव—

लिङ्गाङ्गोपाधिभेदेन द्विधा भिन्नं परस्परम् ।
महान् घटप्रभेदेन यथाकाशः प्रतीयते ॥ ११ ॥

शिवरुद्रादिसंज्ञितं स्थलाभिधं परं तत्त्वमेव उपास्योपासकत्वेन द्वैविध्यमवापेत्यर्थः । एवं द्विधा भिन्नः परमः शिवः आत्मलीलया अप्रच्युतात्मभेदेन स्थितः ।

[1]अत्र लिङ्गतत्त्वं उपास्यम् । अङ्गतत्त्वं उपासकम् । अतः शिवस्यैव शिवोपास्तिरिति नानाश्रुतिस्थितिः । नाशिवस्य शिवोपास्तिर्घटते जन्मकोटिभिरिति न्यायात्। यथा चिन्मात्रं स्थलमेव लिङ्गं, तथा जीव एव अङ्गम् । यथा स्थलं द्विधा भूतं तथा तदङ्गाश्रितशक्तिरपि कलात्मना भक्त्यात्मना च द्वैविध्यं लभतेति पूर्वमेवोक्तम् ।

## (ग) जीवस्य शिवांशत्वनिरूपणम्—

अत्र जीवस्तु शिवांशः; न तु लकुलीशपाशुपताभ्युपगतवत् विभुः । स चानादिवासनाविशेषात् संसरति । सुकृतविशेषाच्च मानुषं जन्म लभते । तत्र पुण्याधिक्यात्

---

[1] श्रीकरभा– पृ. १९७

नष्टपापे नरे शिवकारुण्यरूपशक्तिपातो भवति। उक्तञ्च [1]शक्तिपातलक्षणं पूर्वमेव। गुरु शिष्ये तादृशशक्तिपातलक्षणानि सम्यक् परीक्ष्य लिङ्गधारणात्मिकां शिवदीक्षां करोति। ततः शिष्ये गुरूक्तमार्गेण **अष्टावरण-पञ्चाचारषट्स्थलाद्यनुष्ठानपरे** सति, अग्नेः सकाशात् उत्क्षिप्तो विस्फुलिङ्गः रञ्जकं वस्तु प्राप्य यथा पुनरग्निर्भवति, यथा वा रविरश्मिपातेन ऊष्मरूपेण मेघजालं प्राप्तं सामुद्रं जलं पुनर्वर्षाकाले वृष्टिर्भूत्वा भुवि निपत्य नदीरूपेण पुनः समुद्रं प्राप्नोति तथैव जीवगुणैर्विमुक्तो अंगपदवाच्यो जीवः शिवत्वाभिव्यक्त्या मुक्तो भवति।

(घ) **पञ्चसूतकनिराकरणम्ः-**

अत्याश्रमित्वात् वीरशैवस्य प्राकृताः वर्णाश्रमनियमाः वीरशैवैर्नानुष्ठेयाः। उक्तञ्च- **सिद्धान्तशिखोपनिषदि-**

> **अत्याश्रमित्वात् गणवंशजानां**
> **लिङ्गाङ्गसङ्गिनां तत्राजन्मान्तदीक्षा।**
> **यथा गङ्गा शिवसङ्गात्तथैव**
> **न सूतकं वा नाप्यशुचित्वमेषाम्** ॥ १२ ॥

गणवंशजानां- **वीरनन्द्यादिगणगोत्र**जातानां **लिङ्गाङ्गसङ्गिनां-** वीरशैवानां **अत्याश्रमित्वात्-** अतिशयिताः प्रकृष्टाः आश्रमाः शिवब्रह्मचर्यादयः येषां सन्तिते अत्याश्रमिणः तेषां भावः अत्याश्रमित्वम्। **"प्रकर्षे लंघनेप्यतिः" इत्यमरोक्तेः।** **तत्र** वीरशैवेषु **आजन्मान्तदीक्षा-** जन्मनः प्रभृति मरणपर्यन्तं दीक्षा विहिता। **"आजन्मान्तमियं दीक्षा पशुपाशविनाशिनी"** इत्युक्तेः। इदमेव लिङ्गधारणमहाव्रतं **मुण्डकाद्युपनिषत्सु शिरोव्रत-पाशुपतव्रत-शाम्भवव्रतादिनाम्ना** ब्रह्मविद्याधिकारिविशेषणतयोच्यते। ननु लिङ्गधारणव्रतस्य नित्यत्वेन स्त्रीपुरुषसाधारण्येनाभिहितत्वात् कथं दर्शनस्पर्शनानर्हाणां रजस्वलानां प्रसूकातिस्त्रीणां लिङ्गधारण-लिङ्गपूजादिकमुपपद्यतेत्याशंक्य निराकारोति यथेत्यादिना श्रुतिः।

---

[1] **भूमिकायां-** पृ. २६.

**यथा** भागीरथी गङ्गा नित्यशुद्धस्य शिवस्य सङ्गात् सूतकवर्जिता तथैव लिङ्गाङ्गसङ्गिनां वीरशैवानां स्त्रीपुरुषाणां जननाद्युत्थं सूतकं नास्तीत्यर्थः। उक्तञ्च लिङ्गसारे–

**यथा विश्वेशनिकटात् गङ्गा सूतकवर्जिता।**
**तथा लिङ्गांकिता भक्ताः पञ्चसूतकवर्जिताः॥** इति।

समर्थितञ्च सिद्धान्तागमे–

**स्वेष्टलिङ्गैकपूजायां नैवाशौचं विधीयते।**
**पौण्डरीके रजः स्त्रीणां स्वाग्निहोत्रे यथा तथा॥**

**अकरस्पर्शयोग्यापि यथा जिह्वा महेश्वरि।**
**मन्त्रोच्चारणमात्रस्य पूता भवति भूतले॥**

**तथा सूतकिनः शैवाः पूजामात्रसुनिर्मलाः।**
**नान्यस्पर्शानुकूलास्युरिति वेदानुशासनम्॥**

इति रजस्वलानां धारणाद्यंशे परिशुद्धत्वं न तु कर्मान्तरेत्यवगन्तव्यम्। इत्येवमादीनि सिद्धान्तशिखोपनिषद्भाष्ये विस्तृतमवलोकनीयानि। समर्थितञ्च [1]**श्रीकरभाष्ये**।

ङ) **वीरशैवस्य अत्याश्रमित्वप्रतिपादनम्**–

अत्याश्रमित्वमित्यत्र आश्रमपदेन प्राकृतब्राह्मणादयो वर्णाः अप्युपलक्ष्यन्ते। तेन जन्मप्रधानाः प्राकृतवर्णधर्मा अप्यननुष्ठेया एव। यतोऽत्र शक्तिपातपरिपूतात्मानः सर्वेऽपि मानवाः **प्राकृतवर्ण-आश्रम**-लिङ्गप्रभेदादिकं निराकृत्य शिवदीक्षाधिकारिणो भवेयु-रित्यर्थः। उक्तञ्च सिद्धान्तागमे।

**ब्राह्मणः क्षत्रियो वापि वैश्यश्शूद्रस्तथैव वा।**
**यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत्॥**

---

[1] १-२-१-६. पृ. २१०.

**ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।**
**यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत् ॥ इति ।**

६) च) **क्रिया-ज्ञानयोः समसमुच्चयत्वसमर्थनम् ।**

सिद्धान्तेऽस्मिन् कर्म फलाभिसन्धिसहितत्वेन, तद्रहितत्वेनेति च द्वैविध्यमापद्यते । तत्र आद्यं कर्म स्वर्गस्वाराज्यादिफलाभिसन्धिसहितत्वात् तत्पशुकर्मेत्युच्यते । द्वितीयन्तु—शिवार्पणधिया क्रियमाणाः शिवपूजादयः क्रियाः पतिकर्मत्वेनाद्रियन्ते । एवं विधेन पतिकर्मणा साकं मोक्षविषयकस्य ज्ञानादिकस्य च समसमुच्चयः अङ्गीक्रियते ।

छ) **शिवदीक्षान्ते गुरूपदिष्टेष्वादेशेषु** तदभ्युपगमा अपि लक्ष्यन्ते । तदादेशास्तु इमे—

१) अद्यप्रभृति शिवदीक्षया निर्मलतनुस्त्वं, प्राकृतैर्दोषैः अनभिभूततामनुभूय, शिवशरणानां मार्गे निरातङ्कं सावधानेन मनसा प्रवर्तस्व ।

२) प्रातः सायं च नियमतः स्नात्वा भस्मरुद्राक्षभूषिततनुस्त्वं श्री शिवपंचाक्षरी-पुरश्चरणपूर्वकं वामहस्तपीठे निजमिष्टलिङ्गमाराधय ।

३) शौचेन तनुं, सत्येन वचः, शिवसङ्कल्पेन च मनः परिशोध्य इतःपरं शिवाचारपरतामवलम्बस्व ।

४) गुरुलिङ्गजङ्गमेभ्योऽन्यत्र स्थावरलिङ्गादौ शिवप्रसादादन्यत्र प्राकृतान्नादौ च ते रतिर्माभूत् ।

५) परिशुद्धेन केनापि कायिकेन कर्मणा वृत्तिं सम्पाद्य दासोऽहम्भावेन वर्तस्व ।

६) दीक्षया परिपूतेष्वप्राकृताचारपरेषु वीरशैवेषु जाति-कुल-वृत्याचारभेदभावनां सर्वथा परिहर ।

७) यदि ते शिवधर्मे कापि विचिकित्सा भवेत् तदा शिवशास्त्रपरिणतानां पूर्वाचार्याणां तदाचारपरायणानां शिवशरणानां च निर्णयमनुवर्तस्व ।

८) यदि वीरशैवाचारस्य कुत्रापि विप्लवः शिवस्थानानां शिवशास्त्रस्य चापायो वा तत्र त्वं प्राणमुत्सृज्यापि प्रतिविधेहि ।

९) गुरौ जङ्गमे वा वैषम्यं परिहृत्य, तयोराचारज्ञानरूपतामात्मनि सन्निवेश्य, पादोदक-प्रसादयोः परिणामितामुपेहि ।

१०) एवं स्थलमार्गेण प्रवृत्या ज्ञानेन च परिसमाप्तासु सत्क्रियासु लिङ्गाङ्गसामरस्यं परमानन्दं विन्दस्व इति ।

ज) वीरशैवे सन्ध्यावन्दन प्रकारः–

[1]अन्तः प्रकाशमानस्य संवित्सूर्यस्य सन्ततम् ।
मनसा यदुपस्थानं तत्सन्ध्यावन्दनं विदुः ॥

झ) वीरशैवलिङ्गार्चनावैशिष्ट्यम्–

वीरशैवे लिङ्गार्चनं विशिष्टतरम् । तदुक्तम्–

[2]वत्स लिङ्गार्चनं नित्यं त्रिकालं कुरु भक्तितः ।
पूजाद्रव्याणि संशोध्य शुचिस्तद्गतमानसः ॥

स्नानं समत्वसलिलेन हि पूर्णभाव
वस्त्रं त्रिशक्तिगुणसंयुत-यज्ञसूत्रम् ।
विद्यासुगन्धमिह भूतदयाक्षतांश्च
शब्दादिपुष्पचयमर्पय नित्यमङ्ग ॥

प्रज्ञामनोऽहंकृतिचित्तधूपं
श्रोत्रादि पञ्चेन्द्रियदीपमङ्ग ।
सद्वासनातैलयुतं च देहि
जीवोपहारं सुखदुःखबाह्यम् ॥

---

[1] वी सदाचार संग्रहः ७-१०. [2] वेदान्त सार वी. चिन्तामणौ– पृ. १९५-९६.

गुणत्रयाख्यताम्बूलं प्राणार्पणनमस्कृतिः ।
शान्तिपुष्पाञ्जलिं देहि चैकभावविसर्जनम् ॥
एवमाभ्यन्तरं द्रव्यसम्भृतं शिवपूजनम् ।
कृत्वा निधेहि सततं लिङ्गं वस्त्रेण वेष्टयेत् ॥

इत्यादीनि वैशिष्ट्यानि तत्र तत्र शास्त्रानुभवेषु द्रष्टव्यानि ।

## वीरशैवस्य इतरदर्शनेभ्यो वैलक्षण्यम्

१) ब्रह्माद्वैतशिवाद्वैतयोः वैशिष्ट्यम्

| ब्रह्माद्वैते | शिवाद्वैते |
|---|---|
| १. ब्रह्म निर्विशेषम् । | ब्रह्म सविशेषम् |
| २. ब्रह्मविवर्तं जगत् । | ब्रह्मपरिणामं जगत् । |
| ३. जगन्मिथ्या । | जगत्सत्यम् । |
| ४. ज्ञानादेव मुक्तिः । | ज्ञान-क्रिये समुच्चित्य मुक्तौ कारणम् । |
| ५. कैवल्यमेव मुक्तिः । | सामरस्यं मुक्तिः । |

२) लकुलीशपाशुपतात् वीरशैवस्य भेदः

| लकुलीशपाशुपते | वीरशैवे |
|---|---|
| १. पति-पाश-योग-विधि दुःखान्ताः पञ्च पदार्थाः । | पति-पशु-पाशा इति त्रयः पदार्थाः । |
| २. मिथ्याज्ञानं, अधर्मः, सक्तिहेतुः, च्युतिः पशुत्वमूलं इति पंचमलाः । | आणव-मायीय-कार्मरूपा त्रिमलाः । |
| ३. मलक्षपणोपायाः पंच-वासः, चर्या, जपध्यानं-सदारुद्रस्मृतिः, प्रसादः इति । | वेधा-मनु-क्रियारूपदीक्षात्रयेण मलत्रय ध्वंसः । |
| ४. क्राथन-स्पन्दन, मण्टन-शृङ्गारण-अपितत्करण-अपितद्भाषणादयश्च साधनमार्गाः । | अष्टावरण-पंचाचाराणां साधनं मुक्त्युपायः । |

| | |
|---|---|
| ५. आत्मा विभुः | आत्मा शिवांशः । |
| ६. विध्यनुष्ठानेन पशुः पतिस्वरूपं प्राप्नोति । | षट्स्थलमार्गेण शिवत्वाभिव्यक्तिः । |
| ७. मोक्षोऽत्र सुखस्वरूपः पत्युः सर्वज्ञत्वादि प्राप्तिरूरः शिवसाम्यरूपः । | नदीसमुद्रन्यायेन शिखिकर्पूरन्यायेन वा लिङ्गाङ्गसामरस्यात्मकः मोक्षः । |

**३) शैव-वैष्णवविशिष्टाद्वैतम् — शक्तिविशिष्टाद्वैतम्**

| | |
|---|---|
| १. ब्रह्म सगुणम् । | स्थलं (ब्रह्म) सकल-निष्कलम् । |
| २. श्रीकण्ठमते अन्तर्गणिकाभेदः, **रामानुजमते** अपृथक्सिद्धिसंबंधः । | शिव-शक्त्योरबिनाभावस्संवन्धः । जीवस्तु शिवांशः । |
| ३. शिवसारूप्यं, बिष्णुसारूप्यं वा मोक्षः । | लिङ्गाङ्गसामरस्यं मोक्षः । |
| ४. ब्रह्म-जीवयोः भेदाभेदः कल्प्यते । | शिव-जीवयोः संसारदशायां स्वाभाविको भेदः, मुक्तिदशायां पारमार्थिकोऽभेदः । |

५. वीरशैवस्य तु साधनमार्गः उभयविशिष्टाद्वैतबिलक्षण एव ।

**४) श्रीकण्ठ रामानुजमतयोः साम्यप्रदर्शनम्**

| | |
|---|---|
| १. शक्तिविशिष्टाद्वैतम् । | चिदचिद्विशिष्टाद्वैतम् । |
| २. संसारदशायामत्यन्तं भेदः ; शिवजीवयोः मुक्तदशायां विशिष्टाभेदश्च । | जीव-जगद्ब्रह्मणोः अत्यन्तं भेदः ; विशिष्टाभेदश्च । |

३. परिणामवादः जगत्सत्यत्वं च पूर्वोक्तमतत्रयेऽपि समानम् ।

| | |
|---|---|
| ४. भेदाभेदात्मिक शक्तिर्ब्रह्मनिष्ठा सनातनीं मुक्तौ शिवब्रह्मणोः अभेदः । | ब्रह्मणोऽत्यन्तभिन्नचेतनाचेतनरूप पदार्थद्वयविशिष्टत्वं इत्युच्यते । एवं प्रलये मुक्तिकालेऽपि भेदेनैवावस्थानम् जीवस्य । |
| ५. शक्तिविशिष्टस्य ब्रह्मणः उपादानत्वम् । | चिदचितोः ब्रह्म उपादानम् । |

६. उभयोरनयोः मतयोः केवलं शिवस्य विष्णोर्वा पारम्यप्रतिपादनमात्र मेव वैशिष्ट्यमिति ज्ञातव्यम् ।

५) भास्कराचार्यमतादपि विशेषाद्वैतं भिद्यते। भास्कराचार्यमते–

अचिद्ब्रह्मणोः भेदाभेदौ स्वाभाविकौ। चिद्ब्रह्मणोस्तु अभेद एव स्वाभाविकः। भेदस्तु औपाधिकः। समर्थितञ्च ज्ञाधिकरणे भास्करभाष्ये "स्वाभाविकश्चास्य ब्राह्मं रूपम्। औपाधिकं चेतरत्" इति। एवं अंशाधिकरणेऽपि– स च भिन्नाभिन्न-स्वरूपः, अभिन्नरूपं स्वाभाविकम्, औपाधिकं तु भिन्नम्" इति। अविभागाधिकरणेऽपि यथा च भग्ने घटे घटाकाशो महाकाशे विलीयते एममत्रापि। जीवपरमयोश्च स्वाभाविकोऽभेदः, औपाधिकस्तु भेदः। स तन्निवृत्तौ निवर्तत इति।

एवं चात्र भेदश्रुतीनां औपाधिकभेदपरत्वमंगीकृतम्। अतोऽत्र भेदश्रुतीनां औपचारिकत्वं स्वीकृतं स्यात्। एतेन उभयश्रुतीनां स्वाभाविकत्वाभाव एव अस्वारस्यमिति दोषः। एवं च जीवब्रह्मणोः भेदाभेदविषये न सर्वश्रुतिसमन्वयः। अतो विशेषाद्वैतमंगीकर्तव्यम्।

६) यादवप्रकाशमतस्याशयः– विशेषाद्वैतात् भिद्यते

अयं चाचार्यः पूर्वाश्रमे रामानुजस्य गुरुः। अस्य मते मुक्तावपि जीव-परमयोः भेदाभेदौ सम्मतौ। विशेषाद्वैते तावत् एतन्नाङ्गीकृतम्। यतः श्रुतौ नदी-समुद्रन्यायेन अत्यन्ताभेदस्य प्रतिपादनात्। एवं च शिवाद्वैतरीत्या मुक्तौ केवलमभेदः न तु भेदाभेदः इति उभयोर्वैलक्षण्यं स्पष्टम्।

एवं श्रीपतेः विशेषाद्वैतं अथवा शक्तिविशिष्टाद्वैतदर्शनं पूर्वोदाहृतेभ्यः शङ्करोपज्ञात् केवलाद्वैतसिद्धान्तात् द्वैतशैवादिसम्मतात् भेदवादात्, श्रीकण्ठ-रामानुज-सम्मतात् विशिष्टाद्वैतात्, लकुलीशसम्मतात् द्वैताद्वैतात्, भास्कर-यादवप्रकाश प्रतिपादितात् भेदाभेदवादाच्च विलक्षणत्वात् विशेषाद्वैतं सर्वदर्शनेभ्यो भिद्यत इति दर्शनस्यास्य सर्वोत्तरत्वं युक्तमित्युत्पश्यामः

सहृदयविदुषां विधेयः,
एम्. जि. नञ्जुण्डाराध्यः,
निवृत्तप्रधानाध्यापकः,
श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

दिनाङ्कः २०-३-१९७७
पैङ्गलसंवत्सरादिः

## श्रीकरभाष्यपरिष्करणे आधारत्वेन स्वीकृताः मातृकाकोशाः

१

**कोशसंज्ञाः** **अथ हस्तलिखितकोशाः**

"क" मैसूरु पञ्चाचार्यमुद्रणाधिकारिभिः वे।। ब्रं।। श्री।। पं. महादेवय्यमहोदयैः प्रदत्तः लिं।। काशीनाथशास्त्रिपरिशोधितः श्रीकरभाष्यस्य आरम्भतो द्वितीयपादान्तः कोशः (कर्णाटकलिप्यात्मकः)

"ख" श्रीकरभाष्य-चतुस्सूत्रो लिं।। उमचिगी शङ्करशास्त्रिपरिष्कृतः कर्णाटकव्याख्या-समेतः मैसूरु जपदकट्टे मठाध्यक्षैः ष. ब्रं. विद्वद्भिः श्री शिवप्रकाशस्वामिभिः प्रदत्तः कोशः।

"ग" वाराणसीत्र जङ्गमवाटिका ग्रन्थभाण्डागारगत श्रीकरभाष्यहस्तप्रतेः भावचित्रात्मकः कोशः (Alphabetical List of Micro Films in O. R. I. No. 989 श्रीकरभाष्य July 1972)

असंपूर्णः कोशः अध्याय ३ पाद ३ सूत्र ८ आरभ्य
(कन्नडलिप्यात्मकः) ,, ४ पाद ४ पादान्तंयावत्

"गA" मैसूरु विश्वविद्यालये कन्नडअध्ययनसंस्थाग्रन्थभण्डारस्थ लिं।। के. सि. नन्जुण्डाराध्यप्रदत्तः असंपूर्णः १९२३ वर्षेविलिखितश्च (कन्नडलिप्यात्मकः) कोशः यश्चकोशः प्रायः दि।। सि. हयवदनरायमहोदयेन सूचितः के. बसवाराध्यान्तिकस्थ इति अभ्यूह्यते। अत्र अधो निर्दिष्टा भागा विद्यन्ते यथा।

१) अध्याय १ पाद २ आरभ्य
,, १ ,, ३ सूत्र १० भाष्यम्
२) ,, २ ,, १ आरभ्य सूत्र १२-२४ सूत्रांतं (असमाप्तं) भाष्यम्
३) ,, २ ,, १-२४ आरभ्य
,, ३ ,, ३ सूत्र ३४ भाष्यम्

## अथ मुद्रितकोशाः

"घ" श्रीकरभाष्यस्य प्रथमाध्यायस्य प्रथमः पादः आन्ध्राक्षरमयः सिकिन्द्राबादनगरे सन् १८९३ मुद्रितः कोशः ।

"ङ" "श्रीकरभाष्यचतुस्सूत्री" सन् १९३८ लिं ॥ काशीनाथशास्त्रिपरिष्कृतः कर्णाटकलिप्यात्मकः कोशः ।

"च" "श्रीकरभाष्यचतुस्सूत्री" लिं ॥ चिदिरेमठ वीरभद्रशर्मपरिष्कृतः । वाराणसी जङ्गमबाटिकामठस्थे शैवभारतीभवने प्रकाशितः संस्कृतलिप्यात्मकः कोशः १९५६.

"छ" लिं ॥ उमचिगी शङ्करशास्त्रि विरचितः श्रीकरभाष्य चतुःसूत्री कन्नड व्याख्या-रूपभावप्रदीपिकासहितः वे॥ एम् जि. नञ्जुण्डाराध्य सम्पादितः कोशः ।

"ज" दि॥ सि. हयवदनराव् सम्पादितः (१९३६) बेङ्गळूरु मुद्राक्षरशालायां मैसूरु वीरशैवविद्यावर्धकसंघाश्रये प्रकाशितः सम्पूर्णः कोशः ।

"झ" डा ॥ टि. जि. सिद्दप्पाराध्यमहोदयेन प्रकटितः कन्नडानुवादसहितः सम्पुटद्वया-त्मकः कोशः ।

## दि। सि· हयवदनराव् महोदयेन आधारत्वेन स्वीकृताः

### मातृकाकोशाः

"१" सिकिन्द्राबाद् तिरुमलवीथ्यां श्रीलक्ष्मीविलासमुद्रणालये (१८९३) मुद्रितः आन्ध्राक्षरमयः अपूर्णः कोशः।

तत्राधोनिर्दिष्टाः भागा विलुप्ताः– यथा–

१) प्रथमाध्यायस्य प्रथमपादे ३-४-५ सूत्रभाष्यं।

२) द्वितीयाध्यायस्य तृतीयपादे ४६ सूत्रभाष्यं।

३) ,, चतुर्थपादे १-१४ सूत्रभाष्यं।

"२" मैसूरु सर्वकारप्राच्यपुस्तकभाण्डागारे श्रीकरभाष्यस्य असम्पूर्णः कोशः।

"३-५" गंजां जिलान्तर्गत (आन्ध्रप्रदेश) विशाखपत्तनस्थ देवडी वंशीयस्य कन्दुकूरु बालसूर्यप्रसादराव् महोदयस्य शैवग्रन्थभाण्डागारे कोशत्रयं आसीत्। तत्र कोशद्वयं तालपत्रात्मकम्। अन्यच्च कर्गजलिखितम्। अस्मिन् कर्गजकोशे "सूत्रवृत्ति"रप्यासीत्। सर्वं आन्ध्रलिपिमयः।

"६" बेङ्गलूरु कै. बसवाराध्यानामन्तिकस्थः कर्गजलिखितः कोशः।

"७-८" वाराणसेय जङ्गमवाटिकामठस्थौ द्वौ कोशौ; सिकिन्द्राबादे मुद्रितस्य श्री र-भाष्यप्रस्तावनायां अनयोः हस्तप्रतिरूपयोः कोशयोः संस्मरणं दृश्यते।

---

## श्रीकरभाष्यसम्पादनोपयुक्ताः इतरे मातृकाकोशाः

वाराणसेय जङ्गमवाटिकामठाध्यक्षैः जगद्गुरु वीरभद्रशिवाचार्यैः (पूर्वाश्रमे-चिदिरेमठ वीरभद्रशर्मा) सम्पादितायाः श्रीकरभाष्यचतुस्सूत्र्याः आधारत्वेन स्वीकृताः कोशाः—

१) सिकिन्द्राबाद् वैद्यनागलिङ्गप्पमहाशयप्रदत्तं द्विसम्पुटात्मकं सम्पूर्णं कर्गज-लिखितं लेखनदोषजुष्टम् भाष्यम् ।

२) सिकिन्द्राबादनगरे १८९३ तमे ईसवीये आन्ध्राक्षरैः मुद्रितं द्विशत-पत्रपर्यन्तं असंस्कृतमशुद्धबहुलं असंपूर्णं भाष्यम् ।

३) लिङ्गपल्लि शिवकोटिवीरभद्रार्यमहाशयप्रदत्तं तृतीयाध्यायपर्यन्तं लिखितं दोषभूयिष्ठं सुन्दराक्षरं भाष्यम् ।

---

# अथ श्रीकरभाष्यविषयानुक्रमणिका

## पञ्चाधिकरणी



## १. जिज्ञासाधिकरणम्

## २. जन्माद्यधिकरणम्

## ३. शास्त्रयोनित्वाधिकरणम्



## ४. समन्वयाधिकरणम्

## ५. ईक्षत्यधिकरणम्



---

# अथ श्रीकरभाष्ये पञ्चपादिकाया विषयानुक्रमणी

## प्रथमाध्याये प्रथमः पादः

## प्रथमाध्याये द्वितीयः पादः

प्रथमाध्याये तृतीयः पादः

प्रथमाध्याये चतुर्थः पादः

अथ श्रीकरभाष्ये द्वितीयाध्यायस्य प्रथमः पादः

---

## शंकरभाष्यानुबन्धादिषु प्रयुक्तानां सङ्केताक्षराणां सूची

अ–अथर्वसंहिता

अ.शिखा.–अथर्वशिखोपनिषत्

अ.शिर.–अथर्वशिर-उपनिषत्

अ.सू.–अष्टाध्यायी-सूत्रपाठः

आ.ध.सू.–आपस्तम्ब-धर्म-सूत्रम्

इतिहा.–इतिहासोपनिषत्

ई. उ.–ईशावास्योपमिषत्

ई. गी.–ईश्वरगीता

ऋ. सं. मं.–ऋकसंहिता-मण्डलम्

ऐत.–ऐतरेयोपनिषत्

कठ.–कठोपनिषत्

कामिक.–कामिकागमः

कालाग्नि.–कालाग्निरुद्रोपनिषत्

का. शा.–काण्वशाखा

कू.–कूर्मपुराणम्

केन.–केनोपनिषत्

कै.–कैवल्योपनिषत्

कै. चं.–कैवल्यचन्द्रोदयः

कौ.–कौर्मे

कौषीत.–कौषीतकी-उपनिषत्

गौ. स्मृ.–गौतम-स्मृतिः

च. ता. सं.–चतुर्वेदतात्पर्यसंग्रहः

छां.–छान्दोग्योपनिषत्

जाबालो.–जाबालोपनिषत्

त्रि. ब्र.–त्रिशिखि-ब्राह्मणोपमिषत्

त्रि. ता.—त्रिपुरतापिनी उपनिषत्
तै. आ.—तैत्तिरीयारण्यकः
तै. ब्रा.—तैत्तिरीयब्राह्मणम्
तै. भृ.—तैत्तिरीय-भृगुवल्ली
तै. शि.—तैत्तिरीय-शिक्षावल्ली
तै. सं.—तैत्तिरीय-संहिता
दूर्वासो.—दूर्वासोपनिषत्
ध. शा.—धर्मशास्त्रम्
ना. प.—नारद-परिव्राजकोपनिषत्
नारा.—नारायणोपनिषत्
नृ. पु.—नृसिंहपुराणम्
नृ. पू.—नृसिंहपूर्वतापिन्युपनिषत्
पा. पु.—पाराशरपुराणम्
पा. स्मृ.—पाराशरस्मृतिः
पुरु.—पुरुषसूक्तम्
पू. मी.—पूर्व-मीमांसासूत्रम्
प्रश्नो.—प्रश्नोपनिषत्
ब्रह्म. गी.—ब्रह्मगीता
बा. स्मृ.—बादरायणस्मृतिः
बृ. उ.—बृहदारण्यकोपनिषत्
ब्रं. पु.—ब्रह्मपुराणम्
ब्रं. बि.—ब्रह्मबिन्दूपनिषत्
ब्रं. वि.—ब्रह्मविद्योपनिषत्
ब्रं. सू.—ब्रह्मसूत्रम्
भ. गी.—भगवद्गीता
भाग.—भागवतम्
म. भा. अनु.—महाभारतं अनुशासनपर्व
महाना. अनु.—महानारायणोपनिषत् अनुवाकः

मनु.—मनुस्मृतिः

महो.—महोपनिषत्

माण्डू.—माण्डूक्योपनिषत्

मात्स्य. पु.—मात्स्यपुराणम्

मुद्गलो.—मुद्गलोपनिषत्

मुण्डको.—मुण्डकोपनिषत्

मै.—मैत्रोपनिषत्

मैत्रा.—मैत्रायण्युपनिषत्

य.—यजुर्वेदः

य. आ.—यजुरारण्यकम्

या. स्मृ.—याज्ञवल्क्यस्मृतिः

यो. स्मृ.—योगस्मृतिः

व्या. गी.—व्यासगीता

रामा.—रामायणम्

रु. जा.—रुद्राक्षजाबालोपनिषत्

रुद्रा.— रुद्राध्यायः

रुद्रोप.—रुद्रोपनिषत्

रु. सू.—रुद्रसूक्तम्

रु. या.—रुद्रयामलम्

लिंगो.—लिंगोपनिषत्

लि. पु.—लिंगपुराणम्

लैङ्गे—लिंगपुराणम्

वा. आ.—वातुलागमः

वा. पु.—वायुपुराणम्

वा. सं.— वाजसनेयसंहिता<br>वायवीयसंहिता

वाराहो.—वाराहोपनिषत्

वि. पु.—विष्णुपुराणम्

वी. आ.—वीरागमः
वृ. शा.—वृद्धशातातपः
शां. स्मृ.—शंखस्मृतिः
शं. सं.—शङ्करसंहिता
शा. स्मृ.—शाण्डिल्यस्मृतिः
शाता. स्मृ.—शातातपस्मृतिः
शां.—शाण्डिल्योपनिषत्
शि. गी.—शिवगीता
शि. पु.—शिवपुराणम्
शि. ध. शा.—शिवधर्मशास्त्रम्
शि. प्र.—शिवाद्वैतप्रकाशः
शिवमहि.—शिवमहिम्नस्तवः
शै. आ.—शैवागमः
श्वे.—श्वेताश्वतरोपनिषत्
सा. प.—सामपरिशिष्टः
सां. स्मृ.—सांख्यस्मृतिः
सं. स्मृ.—संवर्तस्मृतिः
सि. आ.—सिद्धान्तागमः
सि. शि. म.—सिद्धान्तशिखामणिः
सुबालो.—सुबालोपनिषत्
सू. गी.—सूतगीता
सू. सं.—सूतसंहिता
स्कान्द.—स्कान्दपुराणम्
सौ. सं.—सौन्दरसंहिता
हरिवं.—हरिवंशः
हंसो.—हंसोपनिषत्

---

ब्रह्ममीमांसासूत्राणां

श्रीपतिपण्डितभगवत्पादाचार्यप्रणीतं

# श्रीकरभाष्यम्

पञ्चाधिकरणी

प्रथमो भागः

॥ श्री ॥

ॐ शिवाभ्यां नमः

श्रीपतिपण्डितभगवत्पादाचार्यविरचितं-

ब्रह्ममीमांसासूत्र-

# श्रीकरभाष्यम्



ॐ नमो लिङ्गरूपाय जगज्जन्मादिहेतवे ।
निगमागमवेद्याय भक्तसिद्धिप्रदायिने ॥ १ ॥

यत् [1]सन्दर्शनमात्रजर्जरितभक्तानीकपुर्यष्टकं
द्वैताद्वैतविशिष्टबौद्धमतमत्तेभेन्द्रकण्ठीरवः ।
शैवाद्वैतविवेकसारविलसत्सिद्धान्तपक्षप्रदं
शम्भोस्तच्चरणं भवाब्धितरणं मन्ये जगत्पोषणम् ॥ २ ॥

शिव त्वद्दासदासो यस्तद्दासोऽस्मीति या सुधीः ।
तां दत्वा कृपया पाहि जन्मजन्मान्तरेऽपि माम् ॥ ३ ॥

शिवस्य तत्त्वं शिव एव वेत्ति नन्दी च विष्णुर्नगजाकुमारः ।
शिवप्रसादाच्छिवतत्त्वमापुस्तेभ्यो नमः शङ्करतत्त्वविद्भ्यः ॥ ४ ॥

---

[1] संवीक्षण ( ख, घ, ज )

नत्वा नन्दीशमुख्यादीन् शिवतत्त्वोपदेशकान् ।
[1]शिवागमात्तविज्ञानात्पारंपर्यमिहोच्यते ॥ ५ ॥

सदाशिवं शक्तिधरं सुकेशं चण्डीश्वरं भृङ्गिरिटिं शिलादम् ।
कुम्भोद्भवं चिन्मयवामदेवं [2]श्रीरेवणासिद्धगुरुं प्रपद्ये ॥ ६ ॥

श्रीमच्छिवाचारविचारदीक्षं स्वशिष्यसत्प्रीणनपूर्णपक्षम् ।
दुर्वारकामादिविदारदक्षं भजाम्यहं रेवणकल्पवृक्षम् ॥ ७ ॥

श्रीमत्सर्वकलासु कोविदतमः प्रालेयशैलात्मजा-
जानेः पूर्णकृपाविशेषनिचयप्रज्ञानधीर्यो बभौ ।
[3]सम्यग्रेवणदेशिकेन्द्रधृतपङ्कलिङ्गावधानोज्ज्वलं
सिद्धार्यं मरुलप्रभुं बुधनुतं तं मन्महे श्रेयसे ॥ ८ ॥

एकोरामाख्यसिद्धं प्रथितगुणगणागण्यपुण्योदयश्री-
सम्यक् संसेव्यमानं बुधनुतचरितं द्वापराचार्यवर्यम् ।
उद्यद्वेदान्तशास्त्रोभयगतविलसच्छैवसंस्थापनाढ्यं
[4]पूर्वाचार्यप्रशिष्यं शरणमहमिमं देशिकेन्द्रं प्रपद्ये ॥ ९ ॥

वातूलान्तिमकामिकादिशिवशास्त्रज्ञानषाण्मातुरो
मीमांसाद्वयतत्त्वबोधकवचस्संरम्भणाम्भोजजः ।
तर्कव्याकरणादिशास्त्रनिचये साक्षाद्भवानीपति-
स्तस्मै श्रीगुरुमूर्तये शिवमताचार्याय तुभ्यं नमः ॥ १० ॥

---

[1] पाठोऽयं ख, घ, ज कोशेषु दृश्यते. [2] रेवणसिद्ध (ख). [3] श्रीमद्रेवणदेशिकेन्द्रविभवम् (च, झ, ञ) सिद्धस्तोमविनुत्यपादकमलम् (ख). [4] पूर्वाचार्यप्रसिद्धम् (ख, च, ञ).

[1]श्रीमद्दण्डशिखोपवीतविलसत्कन्थाजिनालङ्कृतः
काषायाम्बरकुण्डिका[2]प्रणवपात्रच्छत्रमौञ्जीधरः ।
वेदान्तोभयवाक्प्रबोधितलसच्छ्रीभस्मघुण्टीयुत-
श्चैकोरामयतीन्द्रशेखरशिवाचार्यः सदा पातु नः ॥ ११ ॥

[3]श्रीवैयासिकसूत्रवर्णपदमुख्यार्थं शिवानुग्रहाद्-
भाष्यं श्रीकरनामकं भवहरं दुर्वादिगर्वापहम् ।
सर्वानर्थविनाशकं बुधनुतं तत्त्वार्थबोधाकरं
श्रीमच्छ्रीपतिपण्डितेन्द्रयतिना [4]व्यातन्यते साम्प्रतम् ॥ १२ ॥

अशेषोपनिषत्सारविशेषाद्वैतमण्डनम् ।
शिवज्ञानप्रदं सूत्रभाष्यं जयतु सर्वदा ॥ १३ ॥

वेदागमार्थतत्त्वज्ञशैवानां मोक्षकाङ्क्षिणाम् ।
वैदिकानां विशुद्धानामेतद्भाष्यं हि कल्पकम् ॥ १४ ॥

श्रुत्येकदेशप्रामाण्यं द्वैताद्वैतमतादिषु ।
द्वैताद्वैतमते शुद्धे विशेषाद्वैतसंज्ञके ।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः ॥ १५ ॥

विशब्देनोच्यते शम्भुः [5]"हंसहंसे"तिमन्त्रतः ।
शेषशब्देन शारीरो "यथाग्ने" रिति मन्त्रतः ।
अद्वैतेन भवेद्योगो [6]"यथानद्य" इति श्रुतेः ॥ १६ ॥

अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं शुभाम् ।
सूत्रवृत्तिं समालोक्य कृतं भाष्यं शिवंकरम् ॥ १७ ॥

---

[1] श्रीमद्दण्डशिखाक्षहार (ज). [2] प्रवण (ज). [3] श्रीवैयासिकब्रह्मसूत्र (ज, ख)- [4] व्याचक्षते (घ, ज). अन्तिमपादद्वयव्यत्ययश्च (ख, घ, ज). [5] द्वासुपर्णेति (घ, ज). [6] यथानद्यादिभिस्तथा (घ, ज).

## जिज्ञासाधिकरणम्

अथोपनिषद्ब्रह्ममीमांसां दर्शयिष्यामः—

[1]विषय-संशय-पूर्वपक्ष-सिद्धान्त-प्रयोजन-सङ्गतिरूपाधिकरणविशिष्टत्वे सति, सूत्रानुकूलश्रुत्यादिसहलिखितपदपरिष्कृतसूत्रपदाधिष्ठानत्वे सति, उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गप्रकाशकत्वं भाष्यत्वम् ।

गर्भाष्टमप्रयुक्त[2]शिवदीक्षासंस्कारसिद्धश्रुत्यर्थोपदेष्टृदेशिकमुखोदितनियमनियतनिगमार्थज्ञानावच्छिन्नश्रोत्रियस्यैव स्थूलारुन्धतीन्यायेन धर्मजिज्ञासादर्शने स्वभावनियमनियतप्रयोजकतया यत् पूर्वभावित्वं विधीयते, यत्पुरुषव्यापारतन्त्राभ्युदयफलं, यदसन्दिग्धमप्रयोजनं घटवन्न तत्प्रेक्षाविषयः, अप्रयोजकत्वात् करटदन्तवत् ।

विषयस्सोपाधिको निरुपाधिको वा? प्रसिद्धोऽप्रसिद्धो वा? युष्मदस्मत्प्रत्ययविषयाराध्याराधकयोः शिवजीवयोर्भेदो वा? न वा? भेदे "यथा नद्यः" इत्यादि श्रुतिशतविरोधापत्तिः, अभेदे "द्वासुपर्णा" इत्यादि श्रुतिवैय्यर्थ्यप्रसङ्गः । [3]मुख्यत्वेन प्रामाण्यं यावच्छ्रुतीनां यत्किञ्चिच्छ्रुतीनां वा? यन्नियमनियतपूर्ववृत्तधर्मविशिष्टो ह्यधिकारी? यदवच्छिन्नविशेषार्थित्वादयो धर्माः? यदनन्तरमेतदारम्भः? इत्याद्यनेकसंशयविशिष्टमुमुक्षुस्वान्तचिन्ताशूकविध्वंसनार्थं परमकारुणिकेन सर्वशास्त्रविज्ञानशिखामणिना महापाशुपतदीक्षाविशिष्टेन पाराशर्येण पुनरावृत्तिरहितचरमशाश्वतपुरुषार्थफलप्रदर्शकमिदं सूत्रं निरूपितम् ।

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इति । [4]अत्र जिज्ञासापदेन संशयप्रयोजने दर्शयति । संशयश्च सूत्रप्रतिपादितं ब्रह्म अस्ति वा? न वा? इति ।

---

[1] विशय (ख). [2] उपनयन (ख, घ, च, ज). [3] यावच्छ्रुतीनां यत्किञ्चिच्छ्रुतीनां वा मुख्यत्वेन प्रामाण्यम् (ख. ज, घ). [4] प्रयोजने दर्शयन् मीमांसारम्भमुपदिशति सूत्रप्रतिपादितं ब्रह्म अस्ति वा नवेति सन्दिह्यते (ख .

"ब्रह्म वा इदमग्र आसीत्" "असद्वा इदमग्र आसीत्" इत्यादिभिः सत्त्वासत्त्वप्रतिपादनात् ।

अत्र पूर्वपक्षः— ब्रह्म नास्ति । घटादिवच्चाक्षुषादिविषयत्वायोगात्. जीवानां जन्मान्तरज्ञानादर्शनात्, परलोकगतपुरुषपुनरागत्यनुभवाभावात्, "भस्मीभूतस्य देहस्य पुनरागमनं कुतः । तस्मात्सर्वप्रयत्नेन ऋणं कृत्वा घृतं पिबेत् ॥" इति शास्त्रदर्शनाच्च । सुधाहरिद्राचूर्णवैशिष्ट्येनारुणरूपोत्पत्तिवत् गोमयादिषु कीटोत्पत्तिवच्च पृथिव्यादि भूतवैशिष्ट्येन चेतनाचेतनोत्पत्तिः, तद्वियोगो नाशः, न तस्माज्जीवः शरीरभिन्नः ।

किञ्च— मतान्तरवैदिकवादे शरीरभिन्नजीवसत्त्वपक्षेऽपि तज्जीवनियामकेश्वरो नास्ति । तथाहि—

विधिमन्त्रार्थवादभेदेन श्रुतिस्त्रिविधा । तत्र— "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति विधिवादो मुख्यः; [1]मन्त्रवादोह्यनुष्ठेयार्थप्रकाशनविषयः; अर्थवादः स्तुतिविषयः। जीवान स्वकर्मानुसारेण सुखदुःखादिकमपूर्वमेव दास्यति । तस्मान्न ब्रह्मजिज्ञासा सम्भवति ।

किञ्च— उपनिषच्छास्त्रमनारम्भणीयं, संशय[2]प्रयोजनसद्भावाभावात् । सन्दिग्धं हि विचारविषयः; "सन्दिग्धे न्यायः प्रवर्तते" इति न्यायात् । संशयस्तु, परशिवात्मनि ? शरीरात्मनि वा ? नाद्यः— "सत्यं ज्ञानमनन्तं ब्रह्म" "एको हि रुद्रो न द्वितीयाय तस्थुः" रुद्रमेकत्वमाहुः शाश्वतं वै पुराणं" इत्यादि श्रुतिशतेन परशिवात्म स्वरूपस्य निश्चितत्वात् । अहम्प्रत्ययेन शारीरात्मद्योतनान्न द्वितीयः ।

किञ्च— तद्विचारस्य तद्विषयज्ञानं हि फलं ? ज्ञेयपरिच्छेदो हि ज्ञानं ? तदा अनेन ब्रह्म परिच्छेद्यं ? न वा ? [3]परिच्छेदे हि अपरिच्छेद्यत्वविधायकश्रुतिशतविरोधः, [4]घटवदनित्यत्वप्रसङ्गश्च । अपरिच्छेदे यथार्थसाक्षात्काराभावेनाप्रसिद्धिप्रसङ्गः । न च प्रयोजनं— "अजामेकां लोहितशुक्लकृष्णां" "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिभिः स्वाभाविकशारीरप्रकृत्योरविनाशित्वावगमेन ब्रह्मज्ञानेनापि मुक्तेरसम्भवात् ।

---

[1] मन्त्रवादोह्युपासनीयविषयः (ख.). [2] विषय (ख, ज,). [3] परिच्छेदेह्यभिन्नत्वविधायकश्रुतिशतविरोधः (ख, ग, ज). [4] घटवन्नाशप्रसङ्गश्च (ख, ज, घ).

ननु– "**अयमात्मा ब्रह्म**" "**तत्त्वमसि**" इत्यादिभिर्जीवब्रह्मणोरेकत्वप्रतिपादनात्, अहम्प्रत्ययेन भेदप्रतिपादनाच्च संशयः किं न स्यात्? इति चेन्न– अबाधिताहम्प्रत्ययविरोधेनैक्यश्रुतीनामुपचरितार्थत्वात्, न च परमात्मविषयेऽप्यहम्प्रत्ययस्य दुर्बलत्वं, स्वयंप्रकाशेऽपि ब्रह्मण्यनाद्यविद्यावशादहम्प्रत्ययेन "**मनुष्योऽहं**" इत्याद्यध्यासानुभवदर्शनात्। "**न हि दृष्टेऽनुपपन्नं नाम**" इति न्यायात् आध्यासानुपपत्तावनिर्मोक्षप्रसङ्गः।

किञ्च– तमःप्रकाशवद्भेदाभेदयोः परस्परविरुद्धस्वभावत्वादेकपक्षावलम्बनं युक्तम्। अतः– "**यतो वाचो निवर्तन्ते**" इत्यादिना ब्रह्मणोऽविषयत्वदर्शनाच्च वेदान्तशास्त्रमनारम्भणीयम्। इति प्राप्ते ब्रूमः—

सर्वोपनिषत्सिद्धद्वैताद्वैतविधायकब्रह्ममीमांसाशास्त्रारम्भो युक्तः। ब्रह्मसत्वे प्रत्यक्षानुमानागमप्रमाणदर्शनात्। तथा हि– "**एको हि रुद्रो न द्वितीयाय तस्थुः**" इत्यादि बह्वागमदर्शनादागमप्रमाणम्। सूर्यचन्द्रर्तुसमुद्रकालादीनामीश्वरापेक्षावशात् स्वधर्मप्रवृत्तिद्योतनात्, लोके धनधान्यविद्यादिपूर्णसहायसम्पन्नानामपि स्वाभीष्टसर्वकार्यसिद्ध्यदर्शनात्, तत्सहायरहितानामपि कदाचित्काले दुर्घटकार्यसिद्धेर्दृष्टत्वाच्च सर्वज्ञेश्वरसत्वे जीवानां जन्मसत्वे चेदमेव प्रत्यक्षं प्रमाणम्।

लोके रथगोपुरप्रासादप्राकारादिकार्य[1]जातस्य चेतनकर्त्रपेक्षादर्शनात्, तद्वद्वियदादिजडाजडप्रपञ्चस्यापि कर्ता परमेश्वरोऽस्तीति विवेकिभिरनुमीयते।

"सुधानिशाचूर्णसंयोगे लोहितरूपप्राप्तिवत् पृथिव्यादिभूतचतुष्टयसंयोगेनैव चेतनाचेतनसृष्टिः स्वतो भविष्यति" इति यदुक्तं तदयुक्तं। केवलपृथिव्यादिभूतसंयोगेन पशुपक्षिमृगाद्युत्पत्यदर्शनात्, एकशरीरावच्छेदेन पशुमनुष्यादिधर्मविशिष्टभूतोत्पत्तिश्च किं न स्यात्? [2]गोमयादिषु गुप्तजीवस्य ईश्वरेण स्थापितत्वात्, सर्वसहायसम्पन्नस्य महाराजस्यापि अनपेक्षिताधिव्याधिजरामरणदरिद्रत्वादिप्राप्तिदर्शनात्, जीवानां जन्मान्तरकृतपुण्यापुण्यकर्मानुसारेण प्रभुवत् फलप्रदायकेश्वरोऽस्तीति निश्चीयते।

जडस्यापूर्वस्य जीवकृतपुण्यापुण्यकर्मानुकूलफलदातृत्वायोगात्, जारचोरादिकर्मणामेव तत्तत्कर्मानुसारेण फलदातृत्वादर्शनाच्च [3]धर्ममीमांसावादोऽप्यविचारितरमणीयः। एतेन[4] कपिलकणादादीनां जडजगत्कारणवादोऽपि निरस्तः।

---

[1] जालस्य (ख). [2] न स्यात् गोमयादिषु गुप्तजीवत्वमीश्वरेण स्थापितत्वात् (ख, ज, घ). [3] पूर्वमीमांसावादोऽप्यविचारितरमणीयः (ख, ज). [4] कपिल कणादादि (ख, ज, घ).

**"असद्वा इदमग्र आसीत्"** इति श्रुतावसच्छब्देन सूक्ष्मत्वमुपदिष्टम्। नो चेत् **"ततो वै सदजायत"** इत्युत्तरवाक्याविरोधो दुर्निवारः। अत्रासच्छब्देन खपुष्पशशशृङ्गादिवच्छून्यत्वाङ्गीकारे वन्ध्यापुत्रेण सत्पुरुषोत्पत्तिः किं न स्यात्? अतः **पूर्वोक्तमेव** युक्तं **"असदिति चेन्न प्रतिषेधमात्रत्वात्"** इति सूत्रे **बादरायणेनै**वायमर्थो बहुधा प्रपञ्चितः।

किञ्च— **संशय**प्रयोजनसद्भावादपि [1]शास्त्रारम्भो युक्तः, वेदागमोभयवेदान्तप्रतिपादितस्वाभाविकानन्तशक्तिविशिष्टजगदुभयकारणपशुपाशनियामकसकलनिष्कलस्थूलसूक्ष्मचिदचित्प्रकाशकसत्यज्ञानानन्तकल्याणगुणविभवाश्रयत्वं **ब्रह्मत्वम्**। अनादिस्वाभाविकमायापाशबद्धघोरापारनिस्सारसंसारव्यापारतापत्रयानलदन्दह्यमाननानाशरीरप्रवेशनिर्गमनवर्णाश्रमाभिमानविशिष्टकामक्रोधाद्यनुस्यूतसुखदुःखाश्रयत्वं **जीवत्वम्**। परस्परविरुद्धस्वभावयोरजन्ययोरविनाशिस्वभावयोरेतयोः **"तत्त्वमसि" "अहं ब्रह्मास्मि"। "ब्रह्म वेद ब्रह्मैव भवति"** इत्यादिभिरभेदव्यपदेशात् सन्देहः।

ब्रह्मणस्सविशेषत्वे परिच्छेद्यत्वमिति यदुक्तं तदयुक्तम्। घटवत्परिच्छेद्यत्वाभावेऽपि **"नेति नेति" "अस्थूलमनण्वह्रस्वमदीर्घं"** इत्यादि व्यावर्तकलक्षणेन परिच्छेदयोग्यत्वात्। लक्ष्यविषयत्वाल्लक्षणपरिच्छेदस्य तदलक्षणसजातीयविजातीयस्थूलसूक्ष्मप्रपञ्चव्यावृत्ततया ब्रह्म वेदान्तवाक्यैर्निरूप्यते। तस्मात्तद्विचारो युक्तः।

**"ब्रह्मविदाप्नोति परम्" "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "ईशं तं ज्ञात्वा अमृता भवन्ति" "ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः" "शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्य" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः". तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं" ज्ञात्वा देवं मुच्यते सर्वपाशैः"** इत्यादिष्व[2]द्वितीयपट्स्थलपरशिवब्रह्मज्ञानेन स्वाभाविकमलत्रयात्मकमायापाशदुःखनिवृत्तिपूर्वकपरमपुरुषार्थपरशिवतत्त्वप्राप्तिदर्शनात् प्रयोजनम्।

भ्रमरकीटलोहरसादिषु स्वाभाविकभेदनिवृत्तिदर्शनात् तत्त्वमस्याद्यभेदश्रुतिषु मुख्यार्थबाधाभावान्न गौणार्थलक्षणार्थस्वीकारः। **"यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति**

---

[1] "शास्त्रारम्भो युक्तः" इति भागः ख घ. ज. प्रतिषु न दृश्यते। [2] अद्वितीयपरशिवः (ख, घ, ज).

नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादि श्रुतावसन्दिग्धतया प्राप्यप्रापकत्वोपदेशात्, न चैतच्छ्रुतेरुपचरितार्थत्वम्। उपक्रमादि-षड्विधतात्पर्यलिङ्गसहकृतानेकश्रुतीनामुपचरितार्थत्वस्य [1]वक्तुमयुक्तत्वात्। मुख्यार्थपरित्यागे ईक्षत्याधिकरणविरोधः।

न चाध्यासानुपपत्तावनिर्मोक्षप्रसङ्गः। तद्विधायकप्रात्यक्षिकश्रुत्यदर्शनात्। "अहमज्ञः" इत्यनुभवस्य शरीरेन्द्रियादिविशिष्टमायापाशबद्धजीवलक्षणत्वात्। निर्विशेषचिन्मात्रब्रह्मणस्तद्भिन्न-मायोपाधित्वं कथमुपपद्यते? "यस्सर्वज्ञस्सर्ववित्" "प्रज्ञानं ब्रह्म" इत्यादि श्रुतिषु तस्य सर्वज्ञत्वप्रज्ञानत्वादिधर्मोपदेशान्न जीववदज्ञत्वादिधर्मप्रसङ्गः। तस्याऽविद्याङ्गीकारे ब्रह्मत्व-भङ्गप्रसङ्गः। तस्याविद्यासत्वे अविद्यैव मानमिति चेत् अन्येन्याश्रयदोषः।

किञ्च– "अप्राणो ह्यमनाश्शुभ्रः" इति श्रुतौ तस्य मनःप्राणसम्बन्धाभावदर्शना-त्तद्विहीनस्य भ्रमः कथमुपपद्यते? किञ्च जीववत्तस्याज्ञत्वस्वीकारे तदज्ञाननिवर्तकब्रह्मान्तरमवश्य मङ्गीकर्तव्यम्। तथा चेदनवस्थाप्रसङ्गः। ब्रह्मणः स्वस्वरूपतिरोधायकमज्ञानमस्ति चेत्, तस्य ततोऽधिकत्वेन मिथ्यात्वं नोपपद्यते। "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" "तमेव विदित्वाऽतिमृत्युमेति" "ब्रह्मविदाप्नोति परं" इत्यादि श्रुतिषु तस्य तमःपरत्वं, [2]तदज्ञानस्य जीवानां मुक्तिहेतुत्वं चोपदिश्यत इति न तद्युक्तम्।

शुक्तिरजतवत्तस्य जीवत्वं भ्रान्तिमात्रमिति चेन्न, सर्वत्र पदार्थचतुष्टयसद्भावे भ्रान्तिः सम्भवति। अत्र ब्रह्मेतर[3]वस्त्वभावान्न भ्रान्त्युपपत्तिः, वस्त्वन्तराङ्गीकारे ह्यद्वैतहानिः। अनङ्गी-कारे भ्रान्त्यनुपपत्तिः। न स्वप्नवत् प्रपञ्चस्य मिथ्यात्वं, अर्थसिद्धिक्रियासिद्धिदर्शनात्। [4]विधिनिषेधरूपशास्त्रार्थाचार्योपदेशादीनां कर्तव्यत्वायोगेन बुद्धमतप्रवेशापत्तेश्च। "नाभाव उपलब्धेः" "वैधर्म्याच्च न स्वप्नादिवत्" इति द्वितीयेऽध्याये स्वप्नेन्द्रजालवत् प्रपञ्च-मिथ्यात्ववादो बहुधा निरस्तः।

---

[1] वक्तुमयोग्यत्वात् (ख, घ, ज). (ख, ज, घ). [2] तदज्ञानेन (ख, घ, ज).
[3] वस्त्वसम्भवात् (ख). [4] विधिनिषेधविधायकशास्त्राचार्योपदेशादि (ख, घ ज).

**असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहेतुकम् ॥ ८ ॥**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**

इत्यादिना कृष्णगीतायां चैतन्मतं बहुधा निरस्तम् ।

किञ्च— "**लक्षणप्रमाणाधीना हि वस्तुसिद्धिः ।**" इति न्यायेन निर्विशेषब्रह्मसत्वे किं मानं? श्रुतिरस्तिचेत्, तस्या जगदन्तःपातित्वेन मिथ्यात्वात् तत्प्रतिपाद्यस्य ब्रह्मणोऽपि मिथ्यात्वं स्यात् । वेदसत्यत्वाङ्गीकारे अद्वैतहानिः, असत्यत्वे तु ब्रह्मसत्वे सत्प्रमाणान्तराभावात् वन्ध्यापुत्रादेरिव ब्रह्मणोऽपि मिथ्यात्वं स्यात् ।

किञ्च— अध्यासानङ्गीकारे मुक्तेर्बाधकाभावः, तदङ्गीकारे[1] स्वाभाविकत्वेन सर्वश्रुतीनां समन्वयायोगः । न चाध्यासे अविद्यैव मानं, स्वप्रकाशकत्वभङ्गप्रसङ्गात् । न च अविद्याविशिष्टं चैतन्यमिति वाच्यं, अन्योन्याश्रयप्रसङ्गात् । "**जीवोऽहं मनुष्योऽहम्**" इत्यादि भ्रमप्रत्ययस्यापि परमेश्वराधीनत्वात्[2], "**एष एव साधु कर्म कारयति**" इत्यादिषु परमेश्वरस्यैव सर्वकर्मकारयितृत्वोपदेशात् ।

**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥**

इति कृष्णगीतायां तथैवोपदेशात् । "**वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं**" इति श्रुतावपवाददर्शनादध्यासो ग्राह्य इति चेन्न; वाचारम्भणादिश्रुतीनां शिवोपादानत्वात् प्रपञ्चस्य तत्तादात्म्यबोधकत्वं विधीयते; न मिथ्यात्वबोधकत्वम् ।

**वाचारम्भणवाक्यानि तदनन्यत्वबोधनात् ।**
**न मिथ्यात्वाय कल्पन्ते जगतश्शिवरूपतः ॥**

---

[1] तत् स्वीकारे (ख, घ, ज). [2] परमेश्वराधीनत्वापत्तेः (ख, ज) परमेश्वराधीनत्वेति (घ).

इति स्मृतेश्च । अत एव भगवता **व्यासेन** जगन्मिथ्यात्ववारणाय "**तदनन्यत्वमारम्भणशब्दादिभ्यः**" इति सूत्रे तज्जन्यप्रपञ्चस्य तत्स्वरूपत्वं निर्दिष्टम् ।

अध्यारोपस्तु तस्य ? तदन्यस्य वा ? नाद्यः— ब्रह्मणश्शरीरेन्द्रियादिशून्यत्वात् । न द्वितीयः— "**सदेव सोम्येदमग्र आसीत्**" इत्यादौ सृष्टेः प्राक् द्वितीयवस्तुनिषेधदर्शनात्; तदन्यस्वीकारे शुद्धाद्वैतभङ्गप्रसङ्गाच्च । तमःप्रकाशवद्विरोधाभावाद्भेदाभेदो युक्तः । द्वैताद्वैतात्मकशरीरशारीरपरमात्मनां तादात्म्यभावे व्यवहारायोगादद्वैतिनामध्यासासम्भवात् ।

न च ब्रह्मज्ञानपर्यन्तमेव प्रपञ्चस्य सत्यत्वं, तदूर्ध्वमपि क्षुत्पिपासादिद्वैतकर्मद्योतनात् । न चैकपक्षो युक्तः—अभेदस्वीकारे "**द्वा सुपर्णा**" इत्यादि भेदश्रुतिविरोधः; भेदस्वीकारे "**तत्त्वमसि**" इत्याद्यभेदश्रुतिविरोधः । द्वैताद्वैतस्यैव स्वाभाविकत्वेन सर्वश्रुतिसमन्वयात्, श्रुतिसङ्कोचे मानाभावात्; यत्किञ्चिच्छ्रुतिप्रामाण्याङ्गीकारे बौद्धादिवद्वेदबाह्यत्वप्रसङ्गात्, "**यतो वा**" इत्यादिना द्वैताद्वैतात्मकप्रपञ्चब्रह्मणोः[1] कार्यकारणत्व[2]दर्शनात्, "**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः**" इत्यादि सूत्रत्रयेण भेदादिमतत्रयस्यैवात्र विवक्षितत्वात् । "**उभयव्यपदेशात्त्वहिकुंडलवत्**" इति सूत्रेण भेदाभेदस्यैवाविरोधित्वेन निर्दिष्टत्वात्, "**भेदाभेदस्तथाऽभेदो भेद एते मतास्त्रयः**" इति सूतसंहितायां, "**ध्रुवं कश्चित् ब्रूते सकलमपरस्त्वध्रुवमिदं परो ध्रौव्याध्रौव्ये**" इति महिम्नस्तवादिषु च भेदादिमतत्रयस्यैव निर्देशाच्च । "**यतो वाचो निवर्तन्ते**" इत्यादिश्रुतीनां गुरुकटाक्षरहितप्राकृतजीवपरत्वं; नो चेत्— "**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति**" इत्युत्तरवाक्यविरोधः, तन्माहात्म्यज्ञापनपरत्वं वा, अन्यार्थत्वे "**ब्रह्मविदाप्नोति परं**" "**ब्रह्म वेद ब्रह्मैव भवति**" इत्यादिब्रह्मानुभवविधायकबहुश्रुतिविरोधश्च ।

किञ्च— "**नावेदविन्मनुते तं बृहन्तं**" "**नैषा तर्केण मतिरापनेया**" "**तं त्वौपनिषदं पुरुषं पृच्छामि**" "**शास्त्रयोनित्वात्**" इत्यादिश्रुतिसूत्रेषु ब्रह्मणो मानान्तरनिषेधदर्शनाच्च, सर्वश्रुतिसमन्वितभेदाभेदब्रह्ममीमांसारम्भो युक्तः ।

अत्राथशब्देनानन्तर्यार्थो विवक्षितः । "**अथ शब्दानुशासनं**" "**अथ योगानुशासनं**" "**अथैष ज्योतिरथैष विश्वज्योतिः**" इत्यादाविवाथशब्दस्य नाधिकारार्थत्वम् ।

---

[1] ब्रह्मप्रपञ्चयोः ( ख. घ ज). [2] कारणकार्यत्व ( ख घ, ज ).

जिज्ञासाया अनधिकार्यत्वात् । ननु जिज्ञासापदस्य विचारलक्षकत्वात् विचारस्य च प्रत्यधिकरणं वर्तिष्यमाणत्वेन[1] अधिकृतत्वसम्भव इति चेन्न—आनन्तर्याभिधानमुखेन विध्यपेक्षिताधिकारिविशेषसमर्पकत्वेन साधकत्वं विधीयते[2]; तदनपेक्षिताधिकारार्थकत्वस्यायोगात् । "**अथ शब्दानुशासनं**" इत्यादेर्विधिमूलकत्वाभावात् नाधिकार्यपेक्षितृत्वम् । मङ्गलस्य जिज्ञासायामन्वयासम्भवा[3]न्न मङ्गलार्थः, पूर्वाचार्यानुचारस्थापनार्थं वर्णध्वनिमात्रेण मङ्गलार्थकत्वम् ।

**ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।**
**कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥**

इति स्मृतेः । "**अथातश्शेषलक्षणं**" इतिवन्न पक्षान्तरं; पूर्वमेकस्याप्रकृतत्वात् ।

अदीक्षितस्य मलत्रयविध्वंसाभावान्न साधनचतुष्टयानन्तर्यम्[4] ।

न च अनियतभोजनगमनादिवत् यत्किञ्चित्पूर्ववृत्तत्वं; नियमविधिदर्शनात्' यत्पूर्वभावित्वं नियमनियतप्रयोजकतया मुमुक्षूणां मलत्रयविध्वंसने विधीयते, [5]तत्पूर्वकत्वं ब्रह्मविचार[6]शास्त्रस्येति निर्णीयते । अस्य विषयः श्रूयते तैत्तिरीयशाखायाम्— ब्रह्ममेधाकामस्य तत्प्राप्तिसाधनं किमित्याकाङ्क्षायामाह—

**"यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवाधरणो भूयासं । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवं । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय"** इति ।

**अस्यार्थः**— यः— शिवः, छन्दसामृषभः— सर्वविद्याप्रभुः, "**ईशानस्सर्वविद्यानां**" इति श्रुतेः । विश्वरूपः— प्रपञ्चमयः, "**सर्वो ह्येष रुद्रः**" इति श्रुतेः । यः— छन्दोभ्यः—

[1] करिष्यमाणत्वेन (ख, घ, ज). [2] व्याचक्षते (ख, घ, ज). [3] जिज्ञासायामन्वयाभावात् (ख, घ, ज). [4] न धर्मजिज्ञासानन्तर्यं, धर्मब्रह्मशास्त्रयोः कर्तृकर्मफलभेदव्यपदेशात् । प्राकृतक्रियात्मकधर्मप्रतिपादकपूर्वतन्त्रस्य सिद्धब्रह्मप्रतिपादकत्वासम्भवाच्च । (ख, घ, ज). [5] तत्पूर्वभावित्वं (ख, ग, ज). [6] ब्रह्मविचारस्येति (ख, घ, ज).

आम्नायेभ्यः, अमृतात् अधिसम्बभूव– वेदोपनिषदागमादीनाममृतरूपत्वात् तत्प्रतिपाद्यः, वचन-व्यत्ययश्छान्दसः, स इन्द्रः– परमैश्वर्यशाली शिवः, मा– मां, मेधया– प्रज्ञया, स्पृणोतु– प्रीणयतु ; बलयतु वा । तद्विज्ञानार्थं प्रज्ञाबलं हि प्रार्थ्यते । अमृतस्य– मोक्षाय, देवधारणः– देवस्य– लिङ्गरूपशिवस्य धारणं यस्य सोऽहं देवधारणः, भूयासं– भवेयं । चिच्छक्तिप्रकटीकृतपर-शिवेष्टलिङ्गधारी भूयासमित्यर्थः । अतः मे शरीरं विचर्षणं किल्बिषरहितं भूयादित्यर्थः । मे जिह्वा, मधुमत्तमा– मधुमती, अतिशयेन मधुरसंभाषिणी भूयात्, कर्णाभ्यां– श्रोत्राभ्यां, भूरि विश्रुतं– शिवज्ञानयोग्यकार्यकारणसङ्घातरूपो भूयासमित्यर्थः । तन्मेधा च तदर्थमेव प्रार्थ्यते । ब्रह्मणः– शिवस्य, कोशोऽसि– असेरिवोपलब्ध्यधिष्ठानमित्यर्थः । मेधया– लौकिकप्रज्ञया, पिहितः– आच्छादितः, सामान्यप्रज्ञया अविदितसत्व इत्यर्थः । **"नावेदविन्मनुते तं बृहन्तं" "नैषा तर्केण मतिरापनेया"** इति श्रुतेः, श्रुतं– श्रवणपूर्वकं भक्तिज्ञानादिकं, मे– मम, गोपाय– रक्ष ; तत्प्राप्त्यविस्मरणादिकं कुर्विति भावः ।

देवधारणो भूयासमित्यत्र बाह्यलिङ्गधारणं ? अन्तर्लिङ्गधारणं ? प्रणवधारणं वा ? इति सन्देहः । **"तं दैवतानां परमं च दैवतं" "तस्माद्देवश्शिवः स्मृतः" "देव्या युतं देवतनुं युवानं"** इत्यादौ देवशब्दस्य परशिवपरत्वेन बहुशः प्रयोगदर्शनात्, अन्यदेवधारण कर्तव्यताविधायकशास्त्रादर्शनादाचाराभावाच्च । धारणशब्दस्य कर्तरि ल्युडन्तत्वेन देवं धरतीत्यर्थ-सिद्धे सति, [1]अमृतस्य– मुक्त्यर्थं देवधारणो भूयासं, तस्मात् मां मेधया स्पृणोतु– संयोजयतु, इत्यादिना लिङ्गधारणप्रतीतेः, भूयासमित्यत्र लिङोऽपि सत्वेन विध्यर्थोपपत्तेश्च ब्रह्ममेधाकामस्य लिङ्गधारणावश्यकत्वं प्रतीयते ।

[2]किञ्च **"यश्छन्दसामृषभो विश्वरूपः"** इत्यादिना प्रणवपरत्वमपि सूचितम् । **"यो वेदादौ स्वरः प्रोक्तः"** इत्यनेन छन्दोवृषभत्वं, **"ॐ तत्सर्वं"** इत्यादिना विश्वरूपत्वादिकं[3], **"ब्रह्मणः कोशोऽसि"** इत्यत्र परब्रह्माधिष्ठानत्वं च तस्यैवोपपन्नमिति अन्तर्धाणविधायकत्वपरत्वमपि सूचितम् । यमाद्यष्टाङ्गयोगेषु वैदिकानामन्तर्धारणस्य विधेयत्वाच्च ।

**पूर्वपक्षस्तु**— विश्वरूप इति ब्रह्मलिङ्गस्य निरुपपदब्रह्मपदस्य च परिच्छिन्नलिङ्गपरत्वा-योगात्, देवधारण इत्यत्र "देव" इति पदच्छेदाभावे गोपायेत्यन्वयस्यासम्भवात्, भूयासमित्यत्र

---

[1] यस्मादमृतस्य मुक्त्यर्थं (ख, घ, ज) [2] उत (ख, घ, ज). [3] तस्यैव छन्दो ऋषभत्वं ॐ तत्सर्वमित्यादिना (ख, घ, ज)

आशीर्लिङ्त्वेन विध्यर्थकत्वासम्भवात्, "**लिङ्गिनं चक्रिणं दृष्ट्वा**" इत्यादिना बाह्यलिङ्गधारणस्य निषिद्धत्वात्, "**लिङ्गमध्ये जगत्सर्वं**" "**प्राणेष्वन्तर्मनसो लिङ्गमाहुः**" "**ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः**" "**लिङ्गं ब्रह्मैव केवलं**" [1]इत्यादिषु शिवस्य परब्रह्मणः लिङ्गरूपत्वोपदेशात्, तैत्तिरीयकैवल्यादिषु "**दहरं विपाप्मं परवेश्मभूतं**" "**हृत्पुण्डरीकं विरजं विशुद्धम्**" इत्यादिनान्तर्लिङ्गधारणस्यैव निर्दिष्टत्वात्, शाखान्तरेष्वपि बाह्यलिङ्ग-धारणाऽदर्शनात् न [2]बाह्यलिङ्गधारणस्य वैदिकत्वं सिध्यति।

"ननु–"**विश्वाधिको रुद्रो महर्षिः**" "**त्वं देवेषु ब्राह्मणः, त्वं देवानां ब्राह्मणाना-मधिपतिः, क्षत्रियाणामधिपतिर्विष्णुः**" इत्यादिश्रुतिष्वद्वितीयस्य शिवस्य विश्वाधिकत्व-ब्राह्मणत्व-ब्राह्मणाधिपतित्वदर्शनात्, तत्प्रणीतकामिकादिवातूलान्तागमविरुद्धमन्वादिस्मृतिपुराणानां मानत्वाभावात्, [3]यजुर्वेदसंहितायां त्रिपुरसंहारे– "**तेषामसुराणां तिस्रः पुर आसन्**" इत्यारभ्य "**सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानि**" इत्यादिना ब्रह्मविष्ण्वादिदेवेषु पशुत्वस्य, शिवे पशुपतित्वस्य तेषु शिवलिङ्गभस्मरुद्राक्षादिशैवलाञ्छनधारणस्य च श्रूयमाणत्वात् लोके आराध्याराधकप्रभुभृत्ययोस्तथादर्शनात्, "**सर्वलिङ्गं स्थापयति**" इत्यादिभिश्च बाह्यलिङ्ग-धारणस्य विधेयत्वदर्शनात्, रागद्वेषादिपाशबद्धानां पशुभावमापन्नानां मुमुक्षूणां भक्तानामस्माकं पतिलाञ्छनात्मकपरशिवेष्टलिङ्गधारणं किमु वक्तव्यम्? इति चेन्न।

शिवोक्तकामिकाद्यागमानां यावज्जीवलिङ्गधारणविधायकत्वात्, "**न हि कर्मणि-कर्मान्तरारम्भः**" इति न्यायेन नित्यौपासनादिपौण्डरीकान्तश्रौतस्मार्तकर्मणां निरवकाशत्वात्, दीक्षितस्य सूतकादिनिषेधदर्शनेन सापिण्ड्याद्युत्तरकर्मणां वैयर्थ्यप्रसङ्गात्, शैवदीक्षानन्तरं जीवत्व-प्रेतत्वाभावेन स्वजात्याश्रमधर्माणां प्रयोजनाभावात्, "**न कुर्यान्निष्फलं कर्म**" इति न्यायेन विधिनिषेधनिरवकाशत्वेन वेदबाह्यमतप्रवेशापातात्, वसिष्ठादिब्रह्मनिष्ठानां मुक्तात्मनामपि ज्योतिष्टोमादिसर्वकर्मारम्भश्रवणात्, "**यद्वै किञ्च मनुरवदत्तद्भेषजं**" इत्यादि श्रुतौ मन्वादि-स्मृतीनामौषधवद्विधेयत्वदर्शनात्, ब्रह्मादीनां लिङ्गधारणदीक्षाविधायकश्रुतिस्मृत्यागमपुराणोपबृंहणा-भावात्, "**श्रद्धाभक्तिध्यानयोगादवेहि**" इति कैवल्ये श्रद्धाभक्त्यवच्छिन्नध्यानयोगस्यैव

---

[1] इत्यथर्वणसामरुद्रहंसकैवल्यादिषु शिवस्य (ख घ, ज)　[2] न बाह्यलिङ्गधारणं युक्तं (ख. घ, ज).　[3] षष्ठाष्टके त्रिपुरसंहारे (ख, घ, ज)

मोक्षसाधनत्वेनोपदेशात्, "**तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय**" "**ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये**" इत्यादिश्रुतिषु मोक्षस्य ज्ञानहेतुकत्वोपदेशात्, "**ऐश्वर्यमीश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्**" इत्यादिना जनार्दनस्यैव मोक्षप्रदातृत्वश्रवणात्, "**सर्वलिङ्गं स्थापयति**" इत्यत्र लडन्तत्वेन विध्यभावात्, अनेकविधाने वाक्यभेददोषाच्च। स्थापयतीति धात्वर्थेन स्थावरलिङ्गस्थापनपरत्वद्योतनात्, 'तच्च लिङ्गं पाणिना अभिमन्त्रितं पाणिमन्त्रं' इत्यर्थलाभाच्च, निर्मलान्तःकरणस्य बाह्यकर्माचरणे प्रयोजनाभावात्, राजनिष्ठश्वेतच्छत्रादिलाञ्छनानां भृत्येष्वदर्शनात्, परमेश्वरनिष्ठगरलभक्षणभुजगभूषणादिधर्माणां भयहेतुत्वेन धर्तुमशक्यत्वात्, मङ्गलाचरणवन्मानाभावेऽपि निखिलवैदिकशिष्टाचाराभावात्, सगुणोपासनस्य निर्गुणसाक्षिचैतन्यप्रापकत्वाभावात्, कामिकादीनामालयोत्सवप्रतिष्ठाद्यंशेष्वेव प्रमाणत्वात्, प्रात्यक्षिकश्रुतिस्मृत्याचारविरुद्धस्य लिङ्गधारणस्य स्मृत्यनवकाशन्यायेन साङ्ख्यस्मृतिवन्न विधेयत्वं इति [1]चेत्। **अत्र ब्रूमः—**

[2]लिङ्गधारणसिद्धान्तस्तु—प्रात्यक्षिकश्रुतिस्मृत्यागमपुराणेतिहासविहितत्वेन लिङ्गधारणस्याग्निहोत्रादिवद्वैदिकत्वं सिद्धम्। तस्माद्दीक्षानन्तरं ब्रह्मजिज्ञासा विधीयते। "**यश्छन्दसामृषभो विश्वरूपः**" इत्यत्र शिवस्य भक्तोपासनार्थं परिच्छिन्नत्वं युक्तम्। नारायणीये "**निधनपतये नमः**" इत्यादिना लिङ्गस्य सर्वात्मकत्वमुक्त्वा "सर्वलिङ्गं स्थापयति" इत्यनेन तस्यैव परिच्छिन्नलिङ्गधारणविधायकत्वदर्शनात्।

**सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः।**
**सर्वव्यापी स भगवांस्तस्मात्सर्वगतश्शिवः॥**

"**प्राङ्वः प्रत्यङ्ङोऽहं**" इत्यादि श्वेताश्वतराथर्वशिरःप्रभृतिषु श्रवणाच्च, "**प्राणेष्वन्तर्मनसो लिङ्गमाहुः**" "**लिङ्गे सुषुप्तिः**" "**लिङ्गं ब्रह्म सनातनम्**" [3]इत्यथर्वशिरोहंसोपनिषल्लिङ्गपुराणादिषु निरुपपदब्रह्मपदस्य हस्त-कर-पाणि-शब्दवल्लिङ्गपर्यायत्वेन निर्देशात्, "**अमृतस्य देवधारणो भूयासं .... श्रुतं मे गोपाय**" इति वाक्ये देवेति पद-

---

[1] इति चेत् ब्रूमः (ख, घ, ज). [2] "लिङ्गधारणसिद्धान्तस्तु" इति ख, घ, ज मातृपाठः।
[3] कठवल्लीहंसोपनिषल्लिङ्गपुराणादिषु (ख, घ, ज).

विभागे अपरिमिताविकरणन्यायेन सन्निधिश्रुतधारणशब्दान्वयं परित्यज्य व्यवहिते गोपायेत्यत्र अन्वयायोगात्, ब्रह्मणः कोशोऽसीति सन्निहितब्रह्मपदस्यैव विभक्तिविपरिणामेनान्वयसम्भवात्, धारणशब्दस्य संयोगार्थकत्वेन अमृतपदवाच्यस्य मोक्षस्य अन्यथायोगात्।

लिङ्गाङ्गसङ्गिनो वत्स! पुनर्जन्म न विद्यते।
युगपद्-ज्ञानसिद्धिस्स्यात्ततो मोक्षमवाप्नुयात् ॥

इति शङ्करसंहितावचनेन तस्यैव मोक्षोपदेशात्, "शरीरं मे विचर्षणं" इत्यादिना बाह्यपदार्थफलविशेषविधानात्, "अत्याश्रमस्थस्सकलेन्द्रियाणि" "अत्याश्रमी सर्वदा सकृद्वा जपेत्" "व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय" "व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति तस्मात् तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय" "तेषामेवैतां ब्रह्मविद्यां वदेत", "तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति कैवल्याथर्वशिरःकालाग्निरुद्रमुण्डकश्वेताश्वतरादिषु पाशुपतव्रतस्थस्यैव ब्रह्मविद्याधिकारित्वोपदेशाच्च लिङ्गधारणदीक्षितस्यैव ब्रह्मविद्याधिकारित्वं सिद्धम्।

ननु– "कैवल्यश्वेताश्वतराद्युपनिषत्सु लिङ्गधारणविधायकवाक्यादर्शनात् पाशुपतव्रतस्य भस्मधारणपरत्वमेव इति चेन्न। पाशुपतदीक्षितस्यैव लिङ्गिनस्तदङ्गत्वेन भस्मधारणविधायकत्वोपदेशात्–

लिङ्गाङ्गसङ्गिनां चैव पुनर्जन्म न विद्यते।
एष पाशुपतो योगः पशुपाशनिवृत्तये ॥

सर्ववेदान्तसारोऽयमत्याश्रम इति श्रुतिः।
परब्रह्माभिधं लिङ्गं पशुपाशविमोचकम् ॥

यो धारयति सद्भक्त्या स पाशुपत उच्यते।
शरीरत्रितये भक्त्या लिङ्गं परशिवात्मकम् ॥

यो धृत्वा विचरेद्भूमौ स पाशुपत उच्यते।
लिङ्गं शिवो भवेत् क्षेत्रमङ्गं संयोग आश्रयः ॥

तस्माल्लिङ्गाङ्गसंयुक्तो यस्तु सोऽत्याश्रमी भवेत् ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।
यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत् ॥

इत्यादित्यलैङ्गस्कन्दकूर्मपुराणेषु पाशुपतात्याश्रमिशब्दयोर्लिङ्गधारिपर्यायत्वेन निर्देशात् तत्परत्वमेवेति सिद्धम् । किञ्च– सामजैगीपीयशाखायां सदानन्दोपनिषदि—

अन्तर्धारणशक्तो वा ह्यशक्तो वा द्विजोत्तमः ।
संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरस्थले ॥
धार्यं विप्रेण मुक्त्यर्थमेवं वेदविदो विदुः ॥

अथर्वणे ऐश्वर्यशाखायां—

यो वामहस्तार्चितलिङ्गमेकं
परात्परं धारयते सततं विप्रः क्षत्रियो वा ।
तस्यैव लभ्यः परमेश्वरोऽसौ
निरञ्जनः परमं साम्यमुपैति दिव्यम् ॥

इत्यादिमन्त्रेषु परमेश्वरध्यानधारणमेव मुमुक्षूणां विधेयमिति श्रूयते । रुद्राध्याये—

"अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्" इत्यनेन परशिवस्यैव जननमरणप्रवाहरूपसंसाररोगनिवर्तकत्वं सूचितम् । अत एव वेदपुरुषेणापि लिङ्गधारणस्यैव पशुपाशविमोचकत्वं ऋग्यजुस्सामादिषूपदिश्यते । ऋग्वेदे—

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयम्मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥

अयं माताऽयं पिताऽयं जीवातुरागमत् ।
इदं तव प्रसर्पणं सुबन्धवेहि निरीहि ॥

इत्यनेन वेदपुरुषस्य प्राणलिङ्गधारणं निर्दिष्टम्। "शिवाभिमर्शनः" इत्यत्र स्थावरलिङ्ग-स्पर्शो विवक्षित इति चेत्— शिवमभितस्सर्वदा स्पृशतीत्यर्थलाभात् सार्वकालिक[1]स्पर्शानुपपत्त्या नान्यार्थो युक्तः। एतदेव वातूले श्रूयते—

धारयेद्यस्तु हस्तेन लिङ्गाकारं शिवं सदा।
तस्य हस्तस्थितं विद्धि मत्पदं सम्पदां पदम्॥ इति।

अग्न्ययवच्छिन्नायःपिण्डस्य तन्निष्ठदाहकत्वप्रकाशकत्वोपदेशात् लिङ्गधारणेनैव तत्करस्य भगवत्तरत्व-विश्वभेषजत्वादिपरमेश्वरधर्माः प्रतिपाद्यन्ते। तथा कामिके—

अयं मे हस्तो भगवानिति मन्त्रेण सर्वदा।
पाणिलिङ्गधृतिर्वेदपुरुषस्य समीरिता॥ इति।

यजुर्वेदे—

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम्।
अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्॥

इत्यादिमन्त्राणामुपबृंहणं श्रूयते लैङ्गे—

या ते शिवा तनू रुद्र लिङ्गं मङ्गलदायकम्।
लिङ्गं शिवा तनूः प्रोक्ता मूर्तिर्घोरा तनुः स्मृता॥

---

[1] स्पर्शान्यथानुपपत्त्या (ख, ग, ज).

अपापेषु च भक्तेषु तयोर्मध्ये शिवा तनूः ।
काशते परमेशस्य शिष्टास्ते लिङ्गधारिणः ॥

तया शंतमया सौख्यकारिण्या लिङ्गरूपया ।
अभिचाकशीहि तन्वा गिरिशन्ताभिरक्ष माम् ॥

त्रियम्बकं विरूपाक्षं लिङ्गं ब्रह्म सनातनम् ।
यजामहे धारयामः सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकं यथा बन्धान्मृत्योर्मुक्षीयमामृतात् ॥

प्रथमाष्टे यजुर्वेदे प्रश्ने चरमसंज्ञके ।
लिङ्गधारणमाख्यातं वेदपुंसां महात्मनाम् ॥

सोमारुद्रा युवमेतान्यस्मे अस्मभ्यमेव हि ।
विश्वानि भेषजानीष्टप्राणभावात्मकानि च ॥

तनूषु देहत्रितये बद्धं मायामलात्मकम् ।
कृतं यदेनो दुरितं मनोवाक्कायकर्मजम् ॥

तदस्मदस्मत्तस्तूर्णं मुख्यतोऽवस्यतं युवाम् ।
मुञ्चतं कृपया सम्यक् प्रमोचयतमीश्वरौ ॥ इति ॥

सोमारुद्रा– सोमारुद्रौ, "**देवताद्वन्द्वे च**" इति पूर्वपदस्य दीर्घः, "**सुपां सुलुक्**" इत्यादिना आत्प्रत्ययः । तत्रैव परमेश्वरस्य मूर्तिद्वयं श्रूयते । "**रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवान्या**" इति । तस्मात्सोमरुद्रशब्दाभ्यां घोराघोरमूर्तिद्वयमुक्तम् । युवं– युवामित्यर्थः । विश्वे– विश्वेति टावन्तमेतत्; विश्वानीत्यर्थः । एतानि भेषजानि भवरोगहराणि इष्ट-प्राण-भाव-संज्ञाकानि, अस्मे– अस्मभ्यं, "**सुपां सुलुक्**" इत्यादिना शे इत्यादेशः । तनूषु– शरीरत्रितये, धत्तं– धारयतं; नः तनूषु बद्धं– अनाद्यविद्यावासितं, अत एव कृतं एनः– दुरितं, यदस्ति, तत्, अस्मत्– अस्मत्तः, युवां अवस्यतं मुख्यतः; मुञ्चतं–

मोचयतम् । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्" इत्यादिष्वद्वितीयस्य शिवस्य परब्रह्मणो मूर्तिद्वयप्रतिपादनादत्र "सोमारुद्रा" इति मन्त्रे तदुभयं निरूपितम् । उमया सहितः सोमः— पञ्चोपनिषन्मयदिव्यमङ्गलविग्रहः, रुद्रम्— भक्तसंसारदुःखं द्रावयतीति रुद्रः, युवामेतावुभौ अस्मच्छरीरेषु इष्टादिलिङ्गस्वरूपाणि धारयित्वा अस्मच्छरीरावच्छिन्नमलत्रयात्मककिल्बिषं नाशयतमित्यर्थः ।

"विश्वे देवं विदुषा वेदितव्यं शैवं लिङ्गं प्रधृतं सर्वदेवैः । तदात्मसिद्धेर्मुनिभिर्मुक्तिकामैः कण्ठे हस्ते मस्तके वा भवतु धार्यम्" इति सामवेदेऽपि । अत एव भवभेषजात्मकशिवलिङ्गधारणादिकं मुमुक्षूणामावश्यकम् । "पवित्रं ते" इति ऋग्वेदमन्त्रस्य—

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ।
तस्मात् पवित्रं तल्लिङ्गं धार्यं शैवमनामयम् ॥

ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः ।
पवित्रं तद्धि विख्यातं तत्सम्पर्कात्तनुः शुचिः ॥

अतप्ततनुरज्ञो वै ह्याम-संस्कारवर्जितः ।
दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तमम् ॥

[ सि-शि. परि- ६ ]

इति सिद्धान्तशिखामणौ श्रीरेणुकाचार्येण लिङ्गधारणपरत्वेन निर्देशात् ।

भक्तस्याबिभ्रतो लिङ्गं यावत्प्राणविधारणम् ।
श्वमांसभक्षणं तावदन्नेन रचितं भवेत् ॥

लिङ्गस्य धारणं यस्य स्थूलदेहे न विद्यते ।
तद्देहं निष्फलं ज्ञेयं जीवत्यक्तशरीरवत् ॥

तस्मात्तद्धारणं प्रोक्तं यावज्जीवाग्निहोत्रवत् ।
यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथा लिङ्गविहीनस्तु सर्वकर्मबहिष्कृतः ॥

इति वातूलस्कान्दलैङ्गादिषु सन्ध्यावन्दनादिवदकरणे प्रत्यवायदर्शनाच्च लिङ्गधारणस्य नित्यत्वं सिद्धम् ।

किञ्च– भूयासमित्यत्रापि "**मेधावी भूयासम्**" "**ब्रह्मवर्चस्वी भूयासम्**" "**अहमेकः प्रथममासं**" इत्यादिष्विव विध्यर्थोपपत्तेः, देवतान्तरधारणविधायकप्रमाणाचारादर्शनात्, दीक्षाऽकरणे शरीरत्रयगताणवादिमलत्रयध्वंसाभावात् ।

**वैदिकत्वं यथा वह्नेः सर्ववेदप्रमाणतः ।**
**तथा वेदैकसिद्धत्वाद्वैदिकं लिङ्गधारणम् ॥**

**वेदवेदान्तशास्त्रेषु पुराणेष्वागमेषु च ।**
**ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम् ॥** इत्यारभ्य,

**वेदोत्तमे यजुर्वेदे तैत्तिरीये विशेषतः ।**
**मोक्षार्थिनां मुक्तिहेतुर्लिङ्गधारणमीर्यते ॥**

**छन्दोभ्यस्सर्ववेदेभ्यो ह्यमृतात्सम्बभूव हि ।**
**इन्द्रस्तु परमैश्वर्यशाली साम्बस्त्रिलोचनः ॥**

**मां मेधया प्रज्ञया च स्पृणोतु प्रीणयत्वथ ।**
**अमृतस्य मोक्षलाभाय सर्वदेहेषु सर्वदा ॥**

**देवस्य लिङ्गरूपस्य शिवस्य परमात्मनः ।**
**धारणं तद्धृतिर्यस्य देवधारण इष्यते ॥**

**तस्माच्छरीरं मे लोके विचर्षणमकिल्बिषम् ।**
**जिह्वा मे रसना भूयान्मधुरालापभाषिणी ॥**

**कर्णाभ्यां श्रोत्रयुग्मेन भूरि व्यश्रुवमस्म्यहम् ।**
**ब्रह्मणः पार्वतीशस्य कोशोऽधिष्ठानमेव हि ॥**

असेरिव यथा लोके प्रज्ञया मेधया वृतः ।
श्रुतं तच्छ्रवणादीनि मे गोपाय प्रयत्नतः ॥

इत्यादिना लैङ्गे एतदुपबृंहणश्रवणात्,

बिभेत्यल्पश्रुताद्वेदो मामयं प्रह(त)रेदिति ।
इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ॥

वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्महात्मनाम् ॥

इत्यादिस्मृतौ स्वतन्त्रतया वेदार्थनिरूपणनिषेधदर्शनाच्च नान्यार्थो युक्तः। **"लिङ्गिनं चक्रिणं दृष्ट्वा"** इत्यादि निषेधकस्मृतीनां प्रात्यक्षिकवेदमूलकत्वाभावात् सांख्यस्मृतिवन्न विधायकत्वं; श्रौतविधेर्बलीयस्त्वात्। **"उदिते जुहोति– अनुदिते जुहोति"** इति वचनद्वयविरोधे शाखान्तरविषयवन्मूलानुट्टङ्कितधूर्तस्मार्तमायावादिकल्पितनिषेधवाक्यानां गगनारविन्दवत् प्रामण्याङ्गीकारे अवैदिकतप्तलिङ्गधारिविषयत्वं ग्राह्यम्; चक्रिपदसामानाधिकरण्यदर्शनात्। श्रौतलिङ्गविषयत्वे लिङ्गधार्युत्तमाधिकारित्वव्यवस्थापकश्रुतिस्मृतिपुराणागमादीनां दत्तजलाञ्जलित्वप्रसक्त्या वेदबाह्यमतप्रवेशः स्यात्।

श्रौताश्रौतविभेदेन द्विधा लिङ्गस्य धारणम् ।
षडध्वशुद्धलिङ्गन्तु श्रौतमित्यभिधीयते ।
अश्रौतं तप्तलिङ्गादिधारणं प्रोच्यते शिवे ॥

श्रौतानां वीरशैवानां वेदमार्गैकवर्तिनाम् ।
तप्तलिङ्गपरिग्राहे[1] प्रत्यवायो महान् भवेत् ॥

इति **सिद्धान्तागमे** दर्शनात्। यावज्जीवाग्निहोत्रदीक्षितस्य तदितरश्रौतयागदीक्षाविरोधाभाववल्लिङ्गधारणदीक्षाया अपि नित्यविधिप्राप्तत्वेन **"नहि कर्मणि कर्मान्तरारम्भः"**

---

[1] परिग्राह्ये (ख, घ, ज).

इति नियमस्य सावकाशदीक्षाविषयत्वम्। शैवदीक्षाया अग्निष्टोमादिदीक्षावत् [1]प्रतिप्रयोगापवर्गित्वाभावात् तया सह विरोधाभावात् समुच्चयोपपत्तेः [2]शैवानां क्रत्वनुष्ठानमावश्यकमेव; उभयोः श्रौतत्वात्। [3]निषेधस्य प्रतिप्रयोगापवर्गितयावर्जावनिषिद्धदीक्षान्तरनिषेधपरत्वादवैदिकपाञ्चरात्रादिदीक्षानिषेधपरत्वेनोपपत्तिः।

जाताशौचमृताशौचादौ स्वकर्तृकयावज्जीवाग्निहोत्रदीक्षितस्य स्वनित्योपासनाधिकारवत् शैवदीक्षितस्य जाताशौचादावपि लिङ्गपूजामात्राधिकारवत्त्वम्। अत एव "**सर्वलिङ्गं स्थापयति**" इत्यत्र पवित्रशब्देन धृतलिङ्गस्य सर्वकालधारणपूजाधिकारयोग्यत्वं सूचितम्।

**शैवं देवार्चनं यस्य यस्य चाग्निपरिग्रहः।**
**ब्रह्मचारियतीनाञ्च शरीरे नास्ति सूतकम्॥**

**लिङ्गार्चनरता नारी सूतिका वा रजस्वला।**
**रविरग्निर्यथा वायुस्तथा कोटिगुणोज्ज्वला[4]।**
**जातके मृतके वाऽपि न त्याज्यं शिवपूजनम्॥**

इत्यादि **पाराशरस्मृतिसिद्धान्तशिखामण्यादौ** लिङ्गाङ्गिदेहस्य पवित्रत्वव्यपदेशाल्लिङ्गधारणपूजादेर्न विरोधः।

ननु प्रमाणाचारसत्त्वेऽपि प्रत्यक्षविरुद्धत्वात् रजस्सूतकादिकालकृतपूजाधारणादिकमनुपपन्नम्, इति चेन्न– ज्योतिष्टोमातिरात्रपौण्डरीकादियागीयपशुविशसनमांसभक्षणसुरापानब्रह्मचारिकृतदिवादासीसङ्गमादिप्रत्यक्षलोकविरुद्धश्रौताचारभङ्गप्रसङ्गात्।

ननु– शैवनां पञ्चसूतकाभावे वर्णचतुष्टयातीतत्वप्रसङ्गात्, तत्कृतपाकादिपरिग्रहप्रसक्तेश्च[5] वैदिकानां लिङ्गधारणमनर्हमिति चेन्न।

---

[1] प्रतियोगापसर्गित्वाभावात् (ख, घ, ज). [2] शैवानां ज्योतिष्टोमादिक्रत्वनुष्ठानमावश्यकमेव (ख, घ, ज). [3] निषेधस्य प्रतियोगापसर्गितया (ख, घ, ज). [4] गुणःशुचिः (ख, घ, ज). [5] तत्परिग्रहे शैवशास्त्रोक्तपूजाधारणसूतकनिषेधशास्त्रविरोधप्रसङ्गाद्वैदिकानां लिङ्गधारणमनर्हमेवेति चेन्न। (ख, घ, ज).

स्वेष्टलिङ्गैकपूजायां नैवाशौचं विधीयते ।
पौण्डरीके रजः स्त्रीणां स्वाग्निहोत्रे यथा तथा ॥

अकारस्पर्शायोग्याऽपि यथा जिह्वा महेश्वरि ।
मन्त्रोच्चारणमात्रस्य पूता भवति भूतले ॥

तथा सूतकिनः शैवाः पूजामात्रसुनिर्मलाः ।
नान्यस्पर्शानुकूलाः स्युरिति वेदानुशासनम् ॥

इति सिद्धान्तागमादिषु शिवपूजामात्रयोग्यताश्रवणात्, शैवदीक्षानन्तरं प्रेतत्व-जीवत्वाभावेऽपि शिवागमेषु शैवानां स्ववर्णाश्रमोचितपूर्वापरकर्मकर्तव्यताया विधेयत्वादकरणे प्रत्यवायदर्शनाच्च विधिविहितयावत्कर्मानुष्ठानमावश्यकमेव ।

स्वजातिविहितं धर्मं कुर्वन्तः पूजयन्ति ये ।
भक्त्या श्रीकण्ठमनिशं ते वै माहेश्वरा स्मृताः ॥

कर्म विध्युक्तमुत्सृज्य स्वजातिविहितन्नराः ।
येऽर्चयन्ति शिवं तेषां पूजां गृह्णाति नेश्वरः ॥

वर्णाश्रमसदाचाराः शिवेन कथिताः पुरा ।
ये तानुल्लङ्घ्य वर्तन्ते शिवस्याज्ञापलापिनः ॥

राजाज्ञाभङ्गकृन्नृणां यथा दण्डो भविष्यति ।
शिवाज्ञाभङ्गकृन्नृणान्दण्डो हि नरकस्तथा ।

साम्बेन शम्भुनाऽऽज्ञप्तं धर्मं त्यक्त्वार्चयेच्छिवम् ।
यस्तस्मै कुप्यति स्थाणुः स्वाज्ञाभङ्गविधायिने[1] ॥

---

[1] स्वाज्ञाभङ्गनिमित्ततः (ख. घ. ज).

चोदनालक्षणं धर्मं शिवेनाज्ञप्तमत्यजन् ।
शङ्करं पूजयेद्यस्तु तस्मै साम्बः प्रसीदति ॥
[शङ्करसं, अ- १८५, ७८-८३]

अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी ।
फलोत्पत्तौ विरक्तस्तु तस्मात्तद्द्वयमाचरेत् ॥

ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते ।
फलाभिसन्धिरहितं तस्मात् कर्म न सन्त्यजेत् ॥

आचार एव सर्वेषामलङ्काराय कल्पते ।
आचारहीनः पुरुषो लोके भवति निन्दितः ॥

ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः ।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्[1] ॥
[सि शि. परि- १६]

इति शङ्करसंहितासिद्धान्तशिखामण्यादौ कर्मकर्तव्यतादर्शनात्, स्वप्रयोजनाभावेऽपि भृत्यानां राजाज्ञाभङ्गभयात् तदुदीरितकर्माचरणवत् शैवदीक्षितानां कर्मकरणे प्रयोजनाभावेऽपि शिवाज्ञापालनार्थमवश्यं तत्कर्तव्यमेव । "**भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः**" इत्यादिश्रुतौ पवनप्रभाकरादिदेवानां शिवज्ञानाधिकानामपि परमेश्वराज्ञाभङ्गभयेन सकलजगदनुकूलस्वोचितकर्मानुष्ठानश्रवणात् किं वक्तव्यमल्पज्ञानिनां मनुष्याणाम् ।

किञ्च लैङ्गे –

वयं ब्रह्मादयस्सर्वे पशवःपरिकीर्तिताः ।
त्वमस्माकं पतिर्यस्मात्तस्मात्पशुपतिः शिवः ॥

---

[1] शिवाज्ञापालनार्थाय शिवभक्तः शिवव्रती ।
शिवार्पणधिया कर्म कुर्याद्वेदोदितं बुधः ॥

इत्युक्त्वा देवताः सर्वाः शिवलिङ्गादिधारणम् ।
कृत्वा पाशुपताः सर्वे तस्मात्पशुपतिः शिवः ।
अतो ब्रह्मादिदेवानामुपास्यः शिव एव हि ॥

तथा विभूतिरुद्राक्षलिङ्गधारणदेहिनः ।
शुद्धस्फटिकमालाभिर्बद्धहस्ताम्बुजानपि ॥

ब्रह्मविष्ण्वादिदेवांश्च दृष्ट्वा साम्बस्त्रिलोचनः ।
त्रिपुरासुरसंहारमकरोद्भक्तवत्सलः ॥
ब्रह्मविष्ण्वादिदेवाश्च मुनयो गौतमादयः ।
धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः ॥

किञ्च स्कान्दे शङ्करसंहितायां—

उरस्थले हरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः ।
लिङ्गस्थम्माँ समाराध्य स्वं स्वं पदमवापतुः ॥

इत्याद्युपबृंहणवाक्ये ब्रह्मादीनां शिवलिङ्गादिधारणदर्शनात्, लोके अनन्तपद्मनाभ-विठलेश्वरादिक्षेत्रेषु नारायणस्यापि पाणि-शिरोदेशेषु प्रत्यक्षशिवलिङ्गधारणदर्शनाच्च न सन्देह-कलङ्कप्रसङ्गः[1] ।

"श्रद्धाभक्तिध्यानयोगादवेहि" इत्यादिषु ध्यानज्ञानयोरेव मोक्षहेतुत्वव्यपदेशात् बाह्यलिङ्गधारणादिना न किञ्चित्प्रयोजनमिति चेन्न— **"तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः"** इति श्रुतौ तस्य- हरस्य, अभिध्यानात्— अन्तरनुसन्धानात्, योजनात्— संयोगात्, बाह्यधारणात्, तत्त्वभावात्— तत्त्वसाक्षात्कारात्, सकलमायानिवृत्तिर्भव-

[1] पाणिशिरोदेशेषु ध्यानज्ञानयोरेव मोक्षहेतुत्वव्यपदेशात् बाह्यलिङ्गधारणादिना न किंचित्प्र-योजनम् । इति चेत्— "तस्याभिध्या (ख).

तीति श्रवणात्, श्रुतिसङ्कोचे मानाभावात्, "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादश्रितत्वादिह तद्योगात्" इत्यादौ भगवता व्यासेनापि त्रिविधोपासनाव्यपदेशात्। तथा **स्कान्दे**—

> मानसोपासनं कुर्यात् हृदये दहरेऽपि वा ॥
> पञ्चाक्षर्या च गायत्र्या रुद्रसूक्तादिभिस्तथा ।
> वाचिकोपासनं प्रोक्तं धृतलिङ्गे शिवात्मके ॥
>
> पाणिपीठे तथा वह्नौ स्थण्डिले वा विधानतः ।
> कायिकोपासनं कुर्यात् श्रद्धाभक्तिसमन्वितः ॥
>
> एवं त्रिकरणैर्नित्यमीश्वरोपासनं द्विजः ।
> कुर्वन्मुक्तिमवाप्नोति वैदिको नान्यहेतुना ॥

इत्यादिना, "मनस्येकं वचस्येकं कर्मण्येकं महात्मनां" इति न्यायेन च मानसयज्ञसंन्यासादीनां प्रवर्तकत्वदर्शनात्, अन्तर्धारणमात्रत्वे बाह्याङ्गस्य निष्फलत्वात्, तद्गतकार्मिकमलध्वंसाभावप्रसङ्गाच्च।

किञ्च—[1]प्रागुपनयनदीक्षितस्यैव "स्वाध्यायोऽध्येतव्यः" "अहरहस्सन्ध्यामुपासीत" इत्यादिवाक्यविहितस्वाध्यायादिकर्माधिकारवत्, लिङ्गधारणदीक्षितस्यैव शिवध्यान-शिवज्ञानाधिकारित्वमविरुद्धम्। अन्तर्ध्यानधारणयोरवश्यकत्वेऽपि पाकस्य वह्निवत् मोक्षस्य लिङ्गदीक्षाया मुख्यसाधनत्वात्, तदस्वीकारे पूर्वोदाहृतश्रुतिस्मृत्यागमपुराणवैरुध्येन वेदबाह्यत्वप्रसङ्गात्।

> शिवध्यानपरो भूत्वा शिवलिङ्गाङ्गसंयुतः ।
> शिवेतरपरित्यागी ध्यानयोगी स उच्यते ॥
>
> मुखे मन्त्रो हृदि ध्यानं मस्तके लिङ्गधारणम् ।
> शिखा सूत्रं तथा भस्म चैतद्ब्राह्मणलक्षणम् ॥

---

[1] प्रा° परशिवदीक्षितस्यैव (ज).

इति **मनुगौतमादिस्मृतिषु** शिवलिङ्गधारणस्य वेदविहितत्वेन दृष्टत्वाच्च वैदिकाना-मविरोधः ।

"**मोक्षमिच्छेज्जनार्दनात्**" इति नारायणस्यैव मोक्षप्रदातृत्वोपदेशात्तस्योपासनमेव मुमुक्षूणामावश्यकमिति चेन्न– तथाविधश्रुत्यभावात्, "**शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्प-रित्यज्य**" "**ज्ञात्वा शिवं शांतिमत्यन्तमेति**" "**ईशं तं ज्ञात्वा अमृता भवन्ति**" "**क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः, तस्याभिध्यानाद्योजना-त्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः**" "**एको हि रुद्रो न द्वितीयाय तस्थुः**" "**यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः**" "**तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्**" इत्यादि श्रौतविधेर्बलीयस्त्वात् नारायणस्य ब्राह्मण-देवतात्वाभावात्, श्रुतिविरुद्धस्मृतेः प्रामाण्याभावात्, तादृशस्मृतीनां **समक्षजलन्यायेन** परम्परया शिवोपासनाद्वारा मोक्षहेतुतापरत्वस्य सिद्धत्वात् ।

**साङ्ख्ययोगसहस्रेण जन्मना द्वैतगो भवेत् ।**
**तन्मतस्य सहस्रेण सौरम्मतमुपाश्नुते ॥**

**तत्सहस्रसमभ्यासाद्गाणापत्यमती भवेत् ।**
**तत्सहस्रेण भूलोके वैष्णवं मतमीर्यते ॥**

**तद्वैष्णवसहस्रेण शाक्तो भवति सर्वदा ।**
**तत्सहस्रान्महाभाग शैवसामान्य उच्यते ॥**

**तत्सहस्रेण विप्रेन्द्र वीरशैवमतीभवेत् ।**
**तेनैव मुक्तिमाप्नोति नान्यथा बहुयत्नतः ॥**

इति **स्कान्दे** दर्शनाच्च । विष्णुलोकं प्राप्तानां विष्णुसारूप्यमापन्नानां शिव-शर्मादीनां शिवोपासनद्वारा मोक्षप्राप्तिः **काशीखण्डे** श्रूयते । **व्यासोऽपि** स्वभुजस्तम्भनानन्तरं शिष्यैस्सह शाम्भवदीक्षां लब्ध्वा मोक्षाधिकार्थभूदिति तत्रैव श्रूयते । **महिम्नस्तवेऽपि,** "**त्रयी साङ्ख्यं**" इत्यारभ्य "**त्वमसि पयसामर्णव इव**" इत्यन्तेन ऋजुकुटिलत्वेन स्वमतमन्यमतानि च निरूप्य शिव एव सर्वेषां प्राप्यस्थानमित्युपदिष्टम् ।

**"सर्वलिङ्गं स्थापयति"** इत्यत्र लडन्तत्वेऽपि **"व्रीहीन् प्रोक्षति, व्रीहीनवहन्ति"** इत्यादिवद्विध्यर्थत्वोपपत्तिः । न चानेकविधाने वाक्यभेददोषः, **"यदाग्नेयोऽष्टाकपालः"** इतिवत् सर्वेषामप्राप्तत्वेन विधेयत्वात्, **"अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः"** इति स्मृतिदर्शनात्, स्थापयतीत्यत्र भूमावेवेति विनिगमकाभावात्, श्रुतेः सङ्कोचासहिष्णुत्वादुभयथा प्रमाणाचारदर्शनाच्च ।

न च पाणिना मननात्पूजनात्त्रायत इत्यर्थसम्भवेन लिङ्गधारणासिद्धिरिति वाच्यम्— मानसादीनां पूजाकरणत्वदर्शनेन पाणिशब्दस्य वैय्यर्थ्यप्रसङ्गात्, पाणिना अभिमन्त्रितं पाणिमन्त्रमित्यप्यसङ्गतं, मन्त्रशब्दस्य गौणार्थस्वीकारे ईक्षत्यधिकरणविरोधप्रसङ्गः, एतन्मन्त्रार्थस्तु **लैङ्गोत्तरभागे एकविंशाध्याये** भगवता **वेदव्यासेन** स्पष्टमुक्तः ।

यजुरप्याह सर्वं वै लिङ्गं स्थापयतीति च ।
तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः ॥

पाणौ लिङ्गं विनिक्षिप्य दीक्षाकाले गुरुः शिवम् ।
येन स्मरति तन्मन्त्रं पाणिमन्त्रं वदन्ति हि ॥

पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् ।
पवित्रीकरणात् पुंसां पवित्रमिति कथ्यते ॥

अतस्सर्वेषु कालेषु धारयेल्लिङ्गमुत्तमम् ।
गच्छंस्तिष्ठन् स्वपन् जाग्रदुन्मिषन्निमिषन्नपि[1] ।
शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् ॥

[2]लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोहरं ।
[3]अर्चयेद्गन्धपुष्पाद्यैः करपीठे समाहितः ॥

---

[1] गच्छंस्तिष्ठन्नुपविशन् शयानोऽप्यन्यथापिवा (ख, घ, ज). [2] पाठोऽयं ख प्रतौ नास्ति । [3] अर्चयन् (ख).

नित्यानि कर्मवृन्दानि तथा नैमित्तिकानि च ।
शिवार्पणधिया कुर्यात्सम्यग्ज्ञानाभिवृद्धये ॥ इति

(लिं. पु. उ. भा- अ. २१)

ननु वृश्चिकादिविषमात्रेण म्रियमाणस्य कालकूटभक्षणे शक्त्यभावात्, रज्जुदर्शनेन सर्पभ्रान्त्या पलायमानस्य भुजगधारणे शक्त्यभावात्, यत्किञ्चिल्लाञ्छनधारणे प्रमाणाभावाच्च शिवलिङ्गभस्मरुद्राक्षधारणं मुमुक्षूणां राजभृत्यवन्नाङ्गीकर्तव्यमिति चेदुच्यते—

भक्तानां स्वसायुज्यसिध्यर्थं स्वनिष्ठभस्मरुद्राक्षशिवलिङ्गचिह्नानामकरणे प्रत्यवायजनक-नित्यविधिविषयत्वेन परमेश्वरोपदिष्टत्वात्, लोके राजाज्ञाविहितराजचिह्नानामेव भृत्यैः स्वीकार-दर्शनात्, पूर्वोक्तवेदशास्त्रपुराणागमादिषु शिवलिङ्गभस्मरुद्राक्षधारणविधायकविध्युपदेशात्, भुजगधारणविषभक्षणविध्यदर्शनात्, ब्रह्मविष्ण्वादीनां सर्वेषां पूर्वभक्तानां शिवलिङ्ग-भस्म-रुद्राक्ष-धारणस्यैव दर्शनात्;

शिवाज्ञापालनार्थाय शिवभक्तः शिवव्रती ।
लिङ्गरुद्राक्षभस्मानि शिवचिह्नानि धारयेत् ॥

राजाज्ञोल्लङ्घनाल्लोके यथा दण्डो विधीयते ।
शिवाज्ञोल्लङ्घनाद्दण्डो रौरवं नरकं तथा ॥

इति लैङ्गे दर्शनाच्च ।

सगुणस्य मिथ्याभूतत्वात् कथं तदुपासनस्य निर्गुणचैतन्यप्रापकत्वमिति चेन्न— **"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं, ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्"** इति कैवल्यश्वेताश्वतराद्युपनिषत्सु सगुणोपासन-स्यैव हेयगुणरहितसर्वसाक्षिचैतन्यप्रापकत्वोपदेशात्[1], **"स्थिरेभिरङ्गैः पुरुरूप उग्रः"** इति रुद्रसूक्तादिषु परमेश्वरशरीरस्य नित्यत्वोपदेशाच्च ।

---

[1] निर्गुणसर्वसाक्षिचैतन्यप्रापकत्वात (ख, घ, ज).

न चागमानामाऊर्योत्सवप्रतिष्ठांश एव प्रामाण्यमिति वाच्यम्। गायत्र्यादिसर्व-मन्त्राङ्गन्यासकरन्यासध्यानमुद्राकुण्डमण्टपादीनामागमप्रमाणविधेयत्वात् तदस्वीकारे सर्वयाग-मन्त्रफलसाधनत्वायोगाच्च ब्रह्मविद्यायां शाम्भवदीक्षितस्यैवाधिकारित्वमिति निर्णीयते।

ननु– "[1]यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणस्सायुज्यं [2]सालोक्यं च गच्छति" इत्यादिना गर्भाधानादिसकलकर्मणां दुरितक्षयद्वारा परमेश्वर-प्रापकत्वोपदेशात्, "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" "तेनैति ब्रह्मवित्-पुण्यकृत्तैजसश्च" "सत्येन लभ्यस्तपसाह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यं" इत्यादि ज्ञानकर्मसमुच्चयश्रुतिदर्शनाच्च धर्मजिज्ञासानन्तर्यं युक्तम्।

किञ्च– "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिना कर्मफलानामनित्यत्वं[3], "[4]परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इत्यादिना कर्मफलेषु वैराग्यं, "शान्तो दान्तः" इत्यादिना शान्त्यादिकं, "न स पुनरावर्तते" इत्यादिना मोक्षस्य नित्यत्वं चावगम्यते। अतस्तत्रेच्छासंभवान्मुमुक्षुत्वं सूचितम्। तस्मादेतत्साधनचतुष्टयानन्तरं वा ब्रह्मजिज्ञासा कर्तव्या। लिङ्गधारणस्यापि कर्मत्वेन मोक्षोपयोगित्वाभाव इति चेन्न।

"नास्त्यकृतः कृतेन" इति वाक्येन प्राकृतस्यैव कर्मणो निषिद्धत्वात्, "अमृतस्य देवधारणो भूयासं" "[5]तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्व-मायानिवृत्तिः" "व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति। तस्मात् तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय" "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्" इति तैत्तिरीय-श्वेताश्वतर-कालाग्निरुद्रादिषु शिवलिङ्गध्यानधारणादीनामप्राकृतकर्मणां मोक्षहेतुत्वोपदेशात्। गर्भाधानादिप्राकृतकर्मणां मोक्षसाधनत्वविधायकश्रुतिस्मृतीनां साधनचतुष्टयानन्तर्यब्रह्मविद्याधिकारि-त्वोद्देशकवाक्यानां च "अन्नं ब्रह्म" इत्यादिवाक्यानामिव [6]स्थूलारुन्धतीन्यायेन च परम्परया साधनत्वं युक्तम्।

---

[1] यस्यैतेऽष्टाचत्वारिंशत्संस्काराः इत्यारभ्य (ख, घ, ज). [2] सलोकतामाप्नोति (ख, घ, ज). [3] कर्मफलेषु वैराग्यं (ख, ग, ज). [4] पाठोऽयं ख, घ. ज प्रतिषु न दृश्यते। [5] पाठोऽयं ख. प्रतौ न दृश्यते। [6] समक्षजलन्यायेन च (ख, घ, ज).

"**सन्दिग्धेषु वाक्यशेषात्**" इति न्यायेन "**अमृतस्य देवधारणो भूयासं**" इति वाक्ये असन्दिग्धत्वेन ब्रह्मविद्याधिकारित्वनिरूपणात् पूर्वोदाहृतज्ञानकर्मसमुच्चय-साधनचतुष्टयप्रतिपादकश्रुतीनां सन्दिग्धत्वं सिद्धम्। **शङ्करसंहितायां** भगवता व्यासेन-"**नित्यानित्यविचारवानिह परत्रापेक्षितार्थो रतिः**" इत्यारभ्य–

"**न त्यज प्राणलिङ्गं त्वं यावज्जीवं प्रतिज्ञया।**
**पुनर्भवो न ते वत्स! विद्यते मातृयोनिषु**"॥

इत्यन्तेन साधनचतुष्टयसम्पद्विशिष्टस्य लिङ्गधारणमुक्त्वा ततो ब्रह्मज्ञानोपदेशविधिर्निर्दिष्टः। **रेणुकभगवत्पादाचार्येणापि** "**पिण्डता पिण्डविज्ञानं**" इत्यारभ्य "**एतानि शिवभक्तस्य कर्तव्यानि प्रयत्नतः**" इत्यन्तेन **सिद्धान्तशिखामणौ** तथैवोपदिष्टम्।

न च लिङ्गधारणमात्रेण मुक्तिसम्भवे तदेवालं, किमौपनिषदशास्त्रविचारप्रयासेन ? इति वाच्यं "**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**" "[1]**वेदान्तश्रवणं कुर्यात्**" इत्यादिना मायापाशविमुक्तानामपि प्रारब्धप्रतिभासनाशपर्यन्तं परमेश्वराज्ञापालनस्य कर्तव्यश्रवणात्, तदभावे लिङ्गाङ्गज्ञानदृढप्रत्ययाभावात्, पुनः काम-क्रोधादीनामन्तःकरणप्रवेशावकाशहेतुत्वात्,

"**आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया।**
[2]**कामादिपरिहाराय शिवज्ञानाभिवृद्धये**"॥

इति स्मृतेश्च। कारणतया स्वतन्त्रविध्यन्तररहितसौत्रामणीबृहस्पतिसवादेरग्निचयनवाजपेया-द्यङ्गत्वेन उभयविधिबलादुभयसिद्धिवत् लिङ्गधारणब्रह्मजिज्ञासयोर्न विरोधः।

न च ज्योतिष्टोमादिवल्लिङ्गधारणस्यापि कर्मत्वेन परम्परया मुक्तिहेतुत्वमिति वाच्यम्, पूर्वोदाहृतप्रात्यक्षिकश्रुतिविरोधात्। श्रवणादीनामपि कर्मत्वेन तेषामपि मुक्तिहेतुत्वं

---

[1] 'वेदान्तश्रवणं कुर्यात्' 'योगं समारभेत्' (ख, घ, ज). [2] दद्यान्नावसरं किञ्चित् कामादीनां मनागपि (ख, घ, ज).

न स्यात्। तत्स्वीकारे मायापाशनिवृत्तौ मुख्यकारणाभावात् ब्रह्मजिज्ञासाशास्त्रस्य प्रसक्त्यसम्भवप्रसङ्गः। तथा चेन्मूलच्छेदी तव पाण्डित्यप्रकर्षः।

व्रीहिप्रोक्षणादिकं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे यथा समुच्चीयते, तथा परमेश्वरार्पितपुराकृतज्योतिष्टोमादिसर्वकर्माणि साधनचतुष्टयादिकं च शिवज्ञानशिवलिङ्गधारण-प्रयोजकतया मोक्षे समुच्चीयन्ते।

ननु— [1]लिङ्गधारण-ब्रह्मविचारशास्त्रयोः कर्त्रैक्याभावात् कथं क्रमनियमः? कर्त्रैक्यमिह आघारदर्शपूर्णमासवदङ्गाङ्गित्वेन वा? पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गत्वेन वा? गोदोहनादिवदधिकारान्तरप्रयुक्त्युपजीवित्वेन वा? षड्यागवदौषध्यादिवच्च फलैक्येन वा भवति? इति चेदुच्यते— पूर्वोक्तैत्तिरीयश्वेताश्वतरकैवल्यजाबालकठवल्यादिश्रुतिस्मृतिपुराणागमप्रमाणैः कर्त्रैक्यदर्शनात् कर्त्रैक्यविकल्पविचारो न विधेयः।

ननु— लिङ्गधारणस्य नित्यत्वमस्तु, जैमिनिसूत्रविहितविधित्रये को विधिराश्रियते? अपूर्वविधिः? नियमविधिः? परिसङ्ख्याविधिर्वा? "**व्रीहीन् प्रोक्षति**" इति वन्नापूर्वविधिः, लिङ्गधारणस्य "**पवित्रं ते विततं ब्रह्मणस्पते**" इत्यादिबहुश्रुतिविहितत्वात् "**व्रीहीनवहन्ति**" इतिवन्न नियमविधिः, शिवलिङ्गेतर[2]शिखायज्ञोपवीतभस्मरुद्राक्षधारणस्य सत्वात् "**पञ्च पञ्चनखा भक्ष्याः**" इतिवन्न परिसङ्ख्याविधिः, लिङ्गधारणादिकर्तव्यत्वाकर्तव्यत्वयोरेकदा समुच्चयप्रसक्त्यसम्भवात्। अतो लिङ्गधारणस्य न वैदिकत्वमितिचेन्न— विधित्रयेणापि सिद्धत्वात्।

"**अमृतस्य देवधारणो भूयासं**" इत्यत्रापूर्वविधिः। लिङ्गधारणस्य "**सर्वलिङ्गं स्थापयति**" इत्यादि बहुश्रुतिविहितत्वेन नापूर्वविधिरिति चेत्— उपजीव्योपजीवकभावन्यायेन "**सर्वलिङ्गं स्थापयति**" इत्यादिवाक्यानां फलधारणशब्दायोगेन उपजीवित्वं; "**अमृतस्य देवधारणो भूयासं**" इत्यत्र मोक्षफलधारणविधायकत्वश्रवणादुपजीव्यत्वं; अतो न दोषः।

---

[1] "लिङ्गधारणब्रह्मविचारशास्त्रयोः" (ध. १०) न (१६-१७) इत्यारभ्य "स्मृतिपुराणागमादिप्रमाणैः कर्त्रैक्यविकल्पविचारो न विधेयः" इत्यन्तं पूर्वापरार्थवैरुध्यात्पौनरुक्त्याश्च ख, च, ज प्रत्युक्तरीत्या परिष्कृतः पाठः स्वीकृतः (सं). [2] शिखाक्षमाला (ज).

नियमविधिश्च— तान्त्रिकतप्तलिङ्गशूलडमरुगशङ्खचक्राङ्कननिषेधपूर्वकश्रौतभस्मरुद्राक्षलिङ्गधारणादिविधानश्रवणात् ।

[1]परिसङ्ख्याविधिरपि— तान्त्रिकतप्तलिङ्गशूलडमरुशङ्खचक्राङ्कननिषेधपूर्वकश्रौतशिखासूत्रभस्मरुद्राक्षलिङ्गधारणस्वीकारात् । "**हरिकेशायोपवीतिने**" "**रुद्रशिखा**" इत्यादौ भस्मरुद्राक्षादिवच्छिवस्यैव शिखासूत्रधारणश्रवणाच्छिवलाञ्छनमिति सिद्धम् । "**यश्छन्दसां**" इत्यादि लिङ्गधारणविधायकश्रुतीनां परमेश्वरानुग्रहलब्धसर्ववेदार्थवेदिभिः सर्वज्ञव्यासदूर्वासो-**रेणुकश्वेतोपमन्युदधीचिकुम्भसम्भवादि**पूर्वाचार्यैर्लिङ्गधारणपरत्वेन व्याख्यानात्तदेव गौरवम् । वयं श्रुतियुक्त्यनुभूतिवादिनः, बौद्धादिवन्न युक्तिमात्रावलम्बिनः ।

निगमागमोभयवेदान्तप्रतिपादितभक्तिक्रिया-ज्ञानकाण्डत्रयविहितस्थूलसूक्ष्मचिदचित्प्रपञ्चप्रकाशक**षट्स्थलपरशिव**साक्षात्कारकारणबहुजन्मकृतशिवार्पितयजनयाजनतपोध्यानाद्यनेकपुण्यापूर्वफलकशरीरत्रयगतमलत्रयध्वंसककारुण्यकल्याणकैवल्यविभूतित्रयप्रदाय**काष्टावरणपञ्चाचार**सद्गुरुकरुणाकटाक्षलब्धशक्तिपाताद्यवच्छिन्न**परशिवेष्टलिङ्गधारणात्मक**पाशुपतदीक्षाऽऽनन्तर्यमित्य**थ**शब्दार्थो निर्णीयते ।

अत्रानन्तर्याभिधानमुखेन**अथ**शब्देनैव हेतुत्वार्थसिद्धेः कुतोऽतःशब्दः? इति चेन्न; "**अपामसोममममृता अभूम**" इत्यादौ प्राकृतकर्मफलस्यापि नित्यत्वश्रवणात्, "**ओमित्येकाक्षरं ब्रह्म**" "**असावादित्यो ब्रह्म**" "**नारायणपरं ब्रह्म**" "**अन्नं ब्रह्मेति व्यजानात्**" इत्यादौ नानाविधोपासनदर्शनात् कथं परशिवेष्टलिङ्गधारणान्मुक्तिस्सम्भवतीति शङ्कानिरासाय हेतुत्वदृढीकरणार्थम**तः**शब्दो निर्दिष्टः । प्राकृतकर्मफलस्य नित्यत्वे "**पुण्यचितो लोकः क्षीयते**" इत्यादि बहुश्रुतीनां विद्यमानत्वात्, कर्मप्रकरणपठितश्रुत्यपेक्षया ; ब्रह्मप्रकरणपठिताया "**अमृतस्य देवधारणो भूयासं**" इत्यादिश्रुतेर्बलवत्त्वात्, "**शिव एको ध्येयशिवङ्करस्सर्वमन्यत्परित्यज्य**" "**एको हि रुद्रो न द्वितीयाय तस्थुः**" "**असङ्ख्यातास्सहस्राणि स्मर्यते न च दृश्यते**" "**त्वं देवानां ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपतिर्ब्राह्मणानां ब्राह्मणैराश्रयत**" इत्यादिश्रुतिषु ब्राह्मणानां शिवोपासनस्यैव विधेयत्वात्,

---

[1] पाठोऽयं घ, ज कोशयोर्न दृश्यते, परिष्कृत ख, च, ङ कोशेषु समाविष्टः (सं).

"**यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति**" इति श्रुतौ स्वदेवतापरित्यागे प्रत्यवायश्रवणात् ।

**ब्राह्मणानां शिवो देवः क्षत्रियाणां तु माधवः ।**
**वैश्यानां तु तथा ब्रह्मा शूद्राणां सुरनायकः ॥**

**ब्राह्मणो भगवान् रुद्रः क्षत्रियः परमो हरिः ।**
**पितामहस्तथा वैश्यो वृषलस्तु पुरंदरः ॥**

इत्यादिपाराशर्यपुराणादिषु वैदिकब्राह्मणानां शिवदेवत्वश्रवणात्, अपामेत्यादिश्रुतेः "**अभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते**" इत्यादिस्मृत्या भूतप्रलयावध्यपेक्षितामृतत्वप्रतिपादनतात्पर्यावधारणाच्च ।

यतोऽसाधारणकारणत्वेन अमृतस्य देवधारणं विधीयते, अतः पशुपतिस्वरूपब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्यः । "**सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः**" "**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**" इत्यादिषु ब्रह्मजिज्ञासाविधिः श्रूयते । "**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**" इत्यादिश्रुतिष्वात्मन् शब्दस्य परशिवप्रतिपादकत्वदर्शनान्नान्यार्थकत्वम् ।

अत्र— ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति कर्मणि षष्ठी, न शेषषष्ठी । जिज्ञासाया जिज्ञास्यापेक्षत्वात् । शेषषष्ठीपरिग्रहणेऽपि ब्रह्मणो जिज्ञासाकर्मत्वमुपदिश्यते । सम्बन्धसामान्यस्य विशेषनिष्ठत्वात् । एवमपि ब्रह्मणः प्रत्यक्षं कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात्; प्रधानपरिग्रहे तदपेक्षितानामप्यर्थात् सिद्धत्वात् ।

अत्र सूत्रे कर्तव्येति पदाध्याहारो नाङ्गीकर्तव्यः, विषयप्रयोजनज्ञानादेव पुरुषव्यापारसम्भवात्, सिद्धान्ते कार्यान्विते पदशक्त्यनङ्गीकाराच्च । नह्यनुवाददोषः; अप्राप्तानुवादे दोषाभावात् । कर्तव्यपदाध्याहारमात्रेण कथमनुवाददोषपरिहारः ? "**विष्णुरुपांशुयष्टव्योऽजामित्वाय**" इत्यादौ तव्यप्रत्ययेऽप्यनुवाददर्शनात्, अप्राप्तस्यानुवादस्य कर्तव्यपदाध्याहारं विनापि "**तत्त्वमसि**" "**अयमात्मा ब्रह्म**" इत्यादिवदनुवादत्वसम्भवान्नानुवादपरिहारायाध्याहारः ।

न च श्रवणविध्यपेक्षितन्यायविचारार्थत्वादस्य सूत्रस्य श्रुतिसूत्रयोरैकरूप्यार्थमव्याहारः, श्रवणविधेरनङ्गीकारात्। विधित्वप्रयोजकरूपसम्पत्त्यभावेन न तावदपूर्वविधिः। विचारस्य निर्णयहेतुत्वस्य तात्पर्यग्राहकस्य लोकसिद्धत्वात्। न च ब्रह्मसाक्षात्कारहेतुत्वं न प्राप्तमिति वाच्यम्। विचारमात्रस्य विचार्यनिर्णयहेतुत्वस्य ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्तज्ञानरूपश्रवणस्य तद्धेतुत्वप्राप्तेः।

नापि नियमविधिः, व्यावर्त्याभावात्। न च गुरुविरहितविचारो व्यावर्त्यः, "**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं**" इति विज्ञानार्थं विधीयमानगुरूपसदनदृष्टद्वारसम्भवे अदृष्टकल्पनायोगात्। वेदान्तविचारेणैव विज्ञानार्थः पर्यवस्यतीति स्वतन्त्रविचारव्यावृत्तेरुपगम विधिनैव सिद्धत्वात्[1]।

न परिसङ्ख्याविधिः, साधनान्तरस्य समुच्चित्य प्राप्त्यभावात्। न च व्यापारान्तरस्य निवृत्त्यर्थं यावज्जीवं वेदान्तविचारः कर्तव्यः। न च व्यापारन्तरनिवृत्तिस्सम्भवतीति वाच्यं, तत्रैव दोषापातात्। किञ्च– सन्यासिनोऽसंन्यासिनो वा व्यापारान्तरनिवृत्तिः? **नान्त्यः** अशक्यत्वात्। **नाद्यः–** सन्यासविधायकवाक्येनैव सिद्धत्वात्। "**ब्रह्मसंस्थोऽमृतत्वमेति**" इति छान्दोग्येऽप्यनन्यव्यापारस्यैव मुक्तिसाधकत्वश्रवणात्, सम्पूर्वकतिष्ठतेस्समाप्तिवाचकत्वस्य "**अग्निष्टोमसंस्था**" इत्यादौ दर्शनात्, ब्रह्मसंस्थशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापाररूपत्वात्, "**तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ**" इत्याथर्वणिके कण्ठत एव व्यापारान्तरनिषेधाच्च. "**आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया**" इति स्मृतेश्च। तस्माद्विध्यन्तरसिद्धस्य व्यापारान्तरनिषेधस्य नात्र त्रैदोष्यमङ्गीकृत्यविधानमङ्गीकर्तव्यम्। अत एव "**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विद्यादिवत्**" इत्यधिकरणे कैवल्यचन्द्रोदये **परमाराध्याः**—

**न चापूर्वविधिः प्राप्तेरनन्योपायतो न च।**
**नियमः परिसंख्या वा श्रवणादिषु सम्भवेत्॥**

---

[1] अत्र 'अत एव तत्त्वमस्यादिमहावाक्यार्थप्राप्ति' (पृ १८, घ, ज) इत्यारभ्य (पृ. १९) 'भिन्नविषयत्वं सिद्धं' इत्यन्तं अर्थपौनरुक्त्यात् ङ, च., कोशसिद्धः ख. ९-९६ परिष्कृतः पाठः स्वीकृतः (सं).

इत्याहुः । तस्माच्छ्रवणविध्यभावान्न तदैकरूप्याय लक्षणाश्रयणाहार्या । अस्तु वा श्रवणविधिः तथापि न लक्षणाश्रयणाहार्या । सर्वत्र श्रुतिसूत्रयोरैकरूप्यस्यानुमानिकत्वात् । तस्माद्विषयप्रयोजनप्रतिपादनार्थमिदं सूत्रं, ब्रह्मज्ञानस्य इष्यमाणतया प्रयोजनत्वं, ब्रह्मणश्च विषयत्वं श्रौतम् । इष्यमाणं ब्रह्मज्ञानं न विचारमन्तरेणेति विचारः कर्तव्य इत्युपदिश्यते ।

सदा ब्रह्मणो न निर्विशेषत्वं– **"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"** इति श्रुतिदर्शनात् जिज्ञास्यब्रह्मणः सदा मूर्तामूर्तत्वम् । **"द्वे वाव ब्रह्मणो रूपे" "तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतं । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्"** इत्यादिषु व्यपदेशात्; श्रुतिसंकोचे मानाभावात् ।

ननु– निर्विशेषब्रह्मज्ञानस्यैव तत्त्वज्ञानत्वात् तदेव पशुपाशमोचकं, न तु सगुणज्ञानम् । धर्माणां बाध्यत्वात्, **"अथात आदेशो नेति नेतीति" "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमणण्वह्रस्वं"** इत्यादिना सर्वधर्मनिषेधश्रवणात्, **"एकमेवाद्वितीयं" "नेह नानास्ति किञ्चन"** इत्यादिनाऽद्वितीयत्वबोधनात्, **"साक्षी चेता केवलो निर्गुणश्च"** इति श्रुतौ गुणनिषेधाच्च ।

इति चेन्न– नेति नेतीति वाक्यस्य पूर्ववाक्यप्राप्तमूर्तामूर्तोभयप्रपञ्चनिषेधपरत्वात्, ब्रह्मधर्माणामनिषिद्धत्वाच्च । तथा च सूत्रं– **"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः"** इति । अन्यथा आनन्दादीनामपि निषेधः स्यात् । अद्वितीयादिवाक्यानां च **"सदेव सौम्येदमग्र आसीत्"** इति पूर्ववाक्यैकवाक्यतया सृष्टेः पूर्वकाले अद्वितीयत्वपरत्वप्रतीतेः, निर्गुणश्रुतेरपि सत्वादिगुणत्रयाभावपरत्वात्, अन्यथा **"यस्सर्वज्ञस्सर्ववित्"** इत्यादिवाक्यविरोधाच्च ।

**"रेवणसिद्धमरुलसिद्धादिपूर्वाचार्याणां[1]"** वैदिकानां सृष्टेः पूर्वकाले व्यक्ताव्यक्तोभयप्रपञ्चोत्पत्तेरभावादद्वैतब्रह्मवाक्यानि तद्विषयाणीति तात्पर्यम् । तथा च **श्वेताश्वतरे–**

---

[1] रेणुकदारुकशङ्कुकर्णगोकर्णादिपूर्वाचार्याणां (ङ, छ).

**"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः"** अथर्वशिरसि च– **"अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः"** ऐतरेयके– **"आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्"** इति। सर्ववेदान्तेषु गतिसामान्यन्यायेन ब्रह्मणि सृष्टिपूर्वकाल एवाद्वैतत्वमवगन्तव्यम्, सृष्ट्युन्मुखस्य ब्रह्मणः कामनया बहुभावश्रवणात्। तथा च श्रुतिः– **"सोऽकामयत बहुस्यां प्रजायेयेति"** इति। [1]निर्भेदवाक्यान्यपि सृष्टेः पूर्वकाले प्रतियोगिसापेक्षभेदस्याभावात्तद्विषयाण्येव। अभेदवाक्यान्यपि **"ऐतदात्म्यमिदं सर्वं"** **"सर्वो ह्येष रुद्रः"** **"आत्मैवेदं सर्वं"** इत्यादीनि स्वेच्छया बहुभावमापन्नस्य ब्रह्मणो विश्वाभेदपराणि। कार्यकारणयोरभेदश्च मृदादिदृष्टान्तेन, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया च। **"यो मां वेद स सर्वान् देवान् वेद"** इत्यथर्वशिरसि शिवतत्त्वज्ञानेन सर्वविज्ञानसिद्धिरिति सिद्धम्।

सृष्टेः पूर्वकाले जगदुपादानकारणप्रकृतेस्सत्वात् कथमद्वैतमिति चेन्न। तस्या ईश्वरशक्तित्वेन तदभिन्नत्वात्। अयस्कान्तस्य लोहाकर्षणशक्तिवत्। वह्नेर्दाहशक्तिवच्च प्रकृतिस्ततोऽभिन्ना दृश्यते। तथा च श्रुतिः– **"देवात्मशक्तिं स्वगुणैर्निगूढां"** इति। **"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"** इति च पराशक्तिश्च शिवस्यैवासाधारणीति श्रुत्यागमपुराणादिषु प्रसिद्धिः। अतो मुमुक्षुभिरवैदिकजगन्मिथ्यात्वाद्वैतवादो नाङ्गीकर्तव्यः।

**"नेति नेति"** इत्यादि श्रुतीनां न केवलं निषेधमुखेन निरवयवब्रह्ममात्रनित्यत्वबोधकत्वं **"स्थिरेभिरङ्गैः पुरुरूप उग्रः"** इत्यादि श्रुतिष्वप्राकृतपरमशिवलीलादिव्यमङ्गलविग्रहाणामपि नित्यत्वश्रवणात्। सदा शेषशेषित्वव्यवस्थापक[2]संयुक्ताद्वैतपाञ्चरात्रादिवत् न चाङ्गाङ्गित्वेन वयं सावयवत्ववादिनः। जीववत्सुखदुःखभोक्तृत्वप्रसङ्गात्, **"आकाशवत्सर्वगतश्च पूर्णः"** इत्यादि श्रुतिशतभङ्गप्रसङ्गाच्च। सदा घटपटव[3]न्नात्यन्तभेदवादिनः **"येनाश्रुतं श्रुतं भवति"** इत्यादिप्रतिज्ञादृष्टान्त श्रुतिभङ्गप्रसङ्गात्। न च रज्जुसर्पवदेकतरमिथ्यात्ववादिनः। **"सत्यकामः सत्यसङ्कल्पः"** इति श्रुतिसिद्ध-

---

[1] अभेदवाक्यान्यपि (ख, ज). [2] संयुक्ताद्वैत (विशिष्टाद्वैत) पाञ्चरात्रादि (ख). [3] अत्यन्तभेदवादिनः (ज).

स्वाभाविकानन्तकल्याणगुणभङ्गप्रसङ्गात्, **"यतो वा इमानि भूतानि जायन्ते"** इत्यादि श्रुतिविहितजगज्जन्मादिकारणत्वभङ्गप्रसङ्गात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविधायकश्रुतिविरोधात्, मूर्तामूर्तोभयब्रह्मोपासनावैफल्यप्रसङ्गाच्च। तस्माद्वयं स्वाभाविकसर्वश्रुतिसमन्वयसिद्धभेदाभेदवादिन इति राद्धान्तः।

**"ज्ञाज्ञौ द्वावजावीशनीशौ"** **"प्रधानक्षेत्रज्ञपतिर्गुणेशः"** इत्यादि श्रुतिष्वद्वितीयस्य शिवस्य परब्रह्मणः सर्वज्ञत्वाद्यसाधारणधर्मोपदेशाच्छुद्धचिद्रूपत्वम्। स्वाभाविकाविद्यापाशबद्धत्वाज्जीवस्य किञ्चिज्ज्ञत्वं सर्वानुभवसिद्धं महदादिजगदुपादानकारणत्वाद्गुणत्रयात्मकप्रकृतेरचिद्रूपत्वम्।

सर्वाधिष्ठानस्य सर्वव्यापकस्य परमशिवस्य कथं मूर्तामूर्तत्वमिति चेन्न। मूर्तत्वेन पवनस्य दिगेकदेशवर्तित्वं; अमूर्तत्वेन निखिललोकव्यापकत्वं, प्रधानस्य महदहङ्कारकालाकाशवायुरूपेणामूर्तत्वं, तेजस्सलिलपृथिवीरूपेण मूर्तत्वं च दृश्यत इति। अनन्तशक्तिविशिष्टस्य अघटितघटनासमर्थस्य परशिवस्य किमु वक्तव्यम्? **"विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः**[1]**"** इत्यादि बहुश्रुतिवाक्यदर्शनात्।

**शक्तेः सङ्कोचभावेन सृष्टेः पूर्वं महेश्वरः।**
**निरंशो निर्गुणश्चेति वेदान्तेषु प्रगीयते॥**

**शक्तेर्विकासभावेन ह्यनन्तगुणवानिति।**
**प्रोच्यते भगवान् रुद्रः पशुपाशविमोचकः॥**

**मूर्तामूर्तस्वरूपेण यथा वायुर्विराजते।**
**सदाशिवस्तथा भाति सर्वानुग्रहकारकः॥**

**मूर्तामूर्तजगद्रूपा यथा माया तथा शिवः।**
**मूर्तामूर्तस्वरूपं स्यादिति वेदान्तडिण्डिमः॥**

---

[1] विश्वरूपेभ्य वै नमो नमः विश्वरूपेभ्यश्च ॐ नमो नमः (ज) पठान्तरे।

**एतद्वेदान्तहृदयमज्ञात्वा मोहिताः परे।**
**श्रुतेरपार्थं कुर्वन्ति लोके पण्डितमानिनः॥**

इत्यादिना शैवागमेषु वेदैकदेशमतनिन्दाश्रवणान्न तद्विद्वत्परिग्राह्यम्।

न च तमः प्रकाशवद्भेदाभेदो विरुद्धः— किं तदेककालेन वा? दिवारात्रवत्कालभेदेन वा? **नाद्यः**, रूपजाति-शब्दार्थ-गुणगुणि-मणिप्रकाशादिष्वविरोधित्वेनैककाले दर्शनात्, द्वैतप्रपञ्चे "घटस्सन्, घटो भाति, घटः प्रियः" इत्यत्र नामरूपास्तिभातिप्रियाणामेकत्र द्योतनात्, चिदानन्दाद्यात्मकाद्वैतब्रह्मण्यनृतजडदुःखस्वभावप्रकृतेः कार्यकारणत्वेन दर्शनात्, तदस्वीकारे "[1]**न हि दृष्टेऽनुपपन्नं नाम**" इति न्यायविरोधात्, मरुमरीचिकादिवद्भ्रान्तिमात्रत्वे ह्यर्थसिद्धिक्रियासिद्धिविरोधाच्च।

न **द्वितीयः** "**द्वासुपर्णा**" इत्यादिश्रुत्यनुभवदर्शनात्। संसारदशायां जीवब्रह्मणोर्भेदः, "**तत्त्वमसि**" इत्याद्यनेकश्रुत्यनुभवदर्शनान्मोक्षदशायामभेदश्च युक्त एव। "**सत्यकामः**" इति श्रुतौ शिवस्य परब्रह्मणः सृष्टिस्थितिप्रलयतिरोधानानुग्रहरूपकामस्य सत्यत्वेन व्यवस्थापनात्, ऐन्द्रजालशुक्तिरजतवत्प्रपञ्चस्य न व्यवहारमात्रसत्यत्वम्।

न चाध्यासोपपत्तिः, कारणसत्यत्वेन कार्यसत्यत्वमिति नियमात्। निर्विशेषस्य निष्क्रियस्य ब्रह्मणो जिज्ञास्यत्वायोगात्। तत्रारोपितप्रधानसत्त्वगुणप्रतिबिम्बितमिथ्याभूतेश्वरशबलब्रह्मणो जिज्ञास्यत्वं युक्तमिति चेन्न— "**यन्मनसा न मनुते येनाहुर्मनो मतं। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते**" इत्यादिश्रुतेः, पूर्ववाक्योपात्तवागिन्द्रियाद्यग्राह्यत्वप्रतिपादनद्वारा प्रधानवाक्यैकवाक्यतया सर्वेन्द्रियसाक्षिभूतब्रह्मस्तुतिपरत्वात्, सगुणोपासनस्याप्युपक्रमादिसिद्धत्वात्, अन्यथा गारुडमान्त्रिकयोरप्यसम्भवप्रसङ्गाच्च।

सगुणब्रह्मत्वेश्वरत्वादिकं कल्पितमितिचेत्— तद्विधायकप्रात्यक्षिकवेदवेदान्तेतिहासपुराणागमादीनां भक्तिक्रियाज्ञानशास्त्राणां दत्तजलाञ्जलित्वप्रसक्तिः स्यात्। असति कल्पिते अविद्यकेश्वरे [2]कृत्रिमसालग्राम इव भक्तिश्रद्धाविश्वासाः कस्य वा भवेयुः? कथं

---

[1] न हि दृष्टेरनुपपन्नं (ज) पाठान्तरे [2] सालग्रावा इव (ब).

कल्पितेश्वरो नानाविधकर्माराधितस्सन् विचित्रफलदाता, भवेत्? **"मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव"** इत्यादिविधयोऽपि [1]परित्यक्ता इत्यसंभाव्यत्वमायातम्। एवं चैतन्ये अध्यस्तेश्वरत्वविशिष्टेश्वराद्रज्जुसर्पादिवद्भयमपि न स्यात्। श्रूयते चापरोक्षविद्यावतामपि सूर्यादीनां भयं **"भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः"** इत्यादौ। **"ज्ञाज्ञौ द्वावजावीशनीशौ" "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्यः"** इत्यादिश्रुतिषु जीवब्रह्मणोरजन्यत्वप्रदर्शनेन कल्पितत्ववादो ह्यवैदिकः।

किञ्च– निर्विशेषब्रह्मणि किं प्रमाणं प्रवर्तते? न तावच्छब्दः, शब्दस्य शक्यतावच्छेदकलक्ष्यतावच्छेदकपुरस्सरं शक्तिलक्षणयोः प्रवृत्तेः। [2]नाप्यनुमानं, अनुमानस्य पक्षतावच्छेदकव्यापकतावच्छेदकादिपुरस्सरं प्रवृत्तेः। तदनुकूलतर्काणां च व्याप्तिमूलत्वेन व्याप्यतावच्छेदकादिपुरस्सरं प्रवृत्तेः। निर्विशेषज्ञानस्य संशयविपर्ययादिनिवर्तकत्वाभावात्। समानप्रकारकसमानविषयकनिश्चयस्यैवविपर्ययादिनिवर्तकत्वात्। अन्यथा द्रव्यत्वेन घटनिश्चये "गेहे घटोऽस्ति न वा" इति संशयो न स्यात्।

"ईश्वरः स्वनिष्ठवाध्यधर्मातिरिक्तधर्माश्रयः? स्वज्ञानाबाध्यधर्माश्रयो वा? धर्मित्वात्– घटवत्, आत्मत्वात्– देवदत्तवत्" "सत्यकामत्वादयः न ब्रह्मसाक्षात्कारबाध्याः, ईश्वरेतरावृत्तित्वात् ईश्वरत्ववत्"। न चाप्रयोजकत्वं, निर्धर्मके वस्तुनि साधकप्रमाणसत्वासत्वाभ्यां **"मम माता वन्ध्या"** इतिवद्वचनव्याघातेन सर्वव्यवहारोच्छेदप्रसङ्गस्यैव विपक्षबाधकत्वात्। **"आत्मा वा अरे द्रष्टव्यः"** इति श्रुतौ परमात्मसाक्षात्कारफलमनूद्य तत्साधनत्वेन श्रवणं विधीयत इत्यनुपपन्नं "श्रु– श्रवणे–" इति धातोश्शब्दकर्मतया श्रावणज्ञानार्थकत्वात्तस्य चाविधेयत्वादध्ययनविध्यवच्छिन्नवेदाध्यनादेव श्रावणज्ञानस्य वृत्तत्वात्, न च– **"वेदार्थं शृणोति"** इत्यादि प्रयोगदर्शनात् अर्थज्ञानेऽपि धातोश्शक्तिरिति वाच्यं, तत्र लक्षणयैवोपपत्तौ शक्तिद्वयाकल्पनात्। **"वीणानादं शृणोति"** इत्यादावर्थज्ञानाभावेन वैपरीत्यशङ्कानवकाशात्।

अस्तु वा अर्थज्ञानेऽपि शक्तिः- तथापि तदपि च न विधेयं, अधीतसाङ्गाध्ययनस्य विदितपदपदार्थसङ्गतेः **"सत्यं ज्ञानमनन्तं ब्रह्म"** इत्यादि वाक्येनैव ज्ञातत्वात्।

---

[1] परिहृता (ख). [2] न शब्दः, नानुमानं (ज) परिष्कारे सूचितम्।

ननु– "आपातप्रतिपत्तिस्सा, अवधारणात्मकं तु ज्ञानमध्ययनमात्रान्न प्राप्यते", इति चेन्न– तस्यापि [1]भ्रमरकीटवत् स्वाभाविकाविद्यानिवृत्तिपूर्वकगुरुकरुणाकटाक्षप्राप्तत्वेन विध्यनर्हत्वात्। न च अत एव विचारः श्रवणशब्देन विवक्षित इति वाच्यं– विधौ लक्षणापत्तेः।

अत्राहुः– **"न वा अरे पत्युः कामाय पतिः प्रियो भवति"** इत्यारभ्य **"आत्मनस्तु कामाय सर्वं प्रियं भवति"** इत्यन्तेन आत्मन एव निरतिशयसुखस्वरूपत्वेन परमपुरुषार्थत्वमुक्त्वा **"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं"** **"एतावदरे खल्वमृतत्वं"** इत्युपसंहारादात्मज्ञानमेव तत्प्राप्त्युपाय इति निश्चीयते तथा च तादृशमात्मज्ञानं **"द्रष्टव्यः"** इत्यनूद्य तत्साधनाकांक्षायां **"श्रोतव्यः"** इत्यादिना साधनविधिरिति निश्चीयते। शब्दज्ञाने ह्यसाधारणकारणतया विचार एव लक्षणया विधेयो ह्यवगम्यते। **"तं त्वौपनिषदं पुरुषं पृच्छामि"** **"नावेदविन्मनुते तं बृहन्तं"** **"नैषा तर्केण मतिरापनेया"** इत्यादिना श्रुतिमात्रवेद्यत्वेन प्रतिपादिते ब्रह्मणि मानान्तराभावात्, द्रष्टव्य इत्यत्र दर्शनसाधनाकाङ्क्षायां वेदान्तवाक्यमेव तत्साधनम्। तच्चाविचारितं न निश्चयाधायकम्। मनननिदिध्यासनसहकृतं विचारितवेदान्तवाक्यमात्मसाक्षात्कारहेतुरित्ययमर्थः सम्पद्यते।

न च विधौ लक्षणा कल्प्यदृष्टचरी **"अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि"** इत्यत्र देशविशेषलक्षणायाः, **"जातपुत्रः कृष्णकेशोऽग्नीनादधीत"** इत्यत्र वयोविशेषलक्षणायाः, **"उच्चैः ऋचा क्रियते"** इत्यादौ ऋगादिपदेन वेदलक्षणायाः, **यावतोऽश्वान् प्रतिगृह्णीयात्"** इत्यत्र णिजर्थलक्षणायाः, **"नेक्षेतोद्यन्तमादित्यं"** **"नार्षेयं वृणीते"** इत्यादौ पर्युदासलक्षणायाः, **"न कलञ्जं भक्षयेत्"** इत्यादिपुरुषार्थनिषेधेषु बलवदनिष्टसाधनतालक्षणायाश्च बहुश उपलब्धेः। तस्माल्लक्षणया विचारविधिर्युक्तः।

ननु– विचारोऽपि विचार्यनिर्णयहेतुत्वेन लोकसिद्धत्वात् कथं विधेय इति चेन्न। अपूर्वविध्यसम्भवेऽपि नियमविधेरवकाशात्। तथाहि, विधिस्त्रिविधः– **अपूर्वविधिः, नियमविधिः, परिसंङ्ख्याविधिश्चेति।** तत्र कालत्रयेऽपि मानान्तराप्राप्तस्य प्राप्तिफलो विधिराद्यः,

[1] भ्रमरकृमिवत् ( ख, घ, ज ).

यथा "**व्रीहीन् प्रोक्षति**" इत्यत्र विधिव्यतिरेकेण प्रोक्षणं केनापि न प्राप्तम्। पक्षप्राप्तस्य अप्राप्तांशपरिपूरणफलो विधिर्द्वितीयः, यथा "**व्रीहीनवहन्ति**" इत्यत्र विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलत्वोप्याक्षेपादेवावहननं प्राप्यत इति नापूर्वविधिः, किन्त्वाक्षेपान्नखविदलनमपि प्राप्नुयादिति तदानीमप्यवहननप्राप्त्यर्थः। द्वयोरेकत्र नित्यप्राप्ता-वितरनिवृत्तिफलकविधिस्तृतीयः, यथा "**इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते**" इत्यत्र लिङ्गादेव मन्त्रो रशनाग्रहणे नित्यं प्राप्नोतीति नापूर्वनियमविधी; किन्तु लिङ्गा-विशेषादश्वाभिधान्यामिव गर्दभाभिधान्यामपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः। एवं च "**व्रीहीनवहन्ति**" इतिवत् "**श्रोतव्यः**" इति नियमविधिः। न च व्यावर्त्याभावः शारीरात्मविचारस्य व्यावर्त्यत्वात्। न च तस्य मोक्षसाधनज्ञाने प्राप्त्यभावः– "**द्वा सुपर्णा**" "**द्वे ब्रह्मणी**" इत्यादिवाक्यादापातप्रतिपत्तिदशायां तस्यापि प्राप्तिसंभवात्। न च वस्तुतस्साधनान्तरप्राप्तावेव नियमविधिः, अपूर्वीयव्रीहिषु नखविदलनस्याप्राप्तेर्नियमो न स्यात्। कथञ्चित्तण्डुलीभावमात्रे तत्प्राप्त्या नियमोऽत्राप्यापातज्ञानत्वेन जीवात्मविचारत्वप्राप्त्या परमात्म विचारे नियमविधिरस्तु।

इहात्मन् शब्दस्य "**इदं सर्वं यदयमात्मा**" "**आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं**" इत्यादिप्रकरणपर्यालोचनया परमात्मपरत्वावगमात्, समन्वयसूत्रे **एकोरामसिद्धभगवत्पादाचार्यैः** "**श्रोतव्यः**" इत्यत्रात्मज्ञानविधिर्निराकृतः। न तु ज्ञानो द्देशेन विचारविधिरिति तदविरोध इति निर्णीयते। तस्माद्विचारविधौ न किञ्चिद्बाधक-मित्येवं स्थिते श्रवणविधेरपेक्षिताधिकारिविषयफलत्रयपरमित्यागमिकन्यायेन निर्णीतमिदं सूत्रं "**अथातो ब्रह्मजिज्ञासा**" इति। अत्रानुवादपरिहाराय शास्त्रेषु पुरुषप्रवृत्तिसिद्धये च **कर्तव्येति** पदमध्याहर्तव्यम्। जिज्ञासापदेन **विचारो** लक्षणीयः। ननु **जिज्ञासापदेन लक्षणा** युक्ता, प्रकृतिप्रत्ययसमुदायस्याशक्ततया समुदायलक्षणानुपपत्तेः इति चेन्न। सन्प्रत्ययेन जहल्लक्षणया विचारो बोध्यते, प्रकृत्या च साध्यज्ञानमजहल्लक्षणयोच्यते।

केचित्– प्रकृतेस्सिद्धज्ञानमात्रपरत्वमङ्गीकृत्य साध्यज्ञानेऽपि जहल्लक्षणैवेत्युक्तम्। सिद्धतयोपस्थितौ साधनान्वयायोगेन साध्यतयोपस्थितेरावश्यकत्वात् प्रकृतिलक्षणाऽऽवश्यकीति लक्षणाद्वयमेव [1]**शाम्भवानन्दशिवाराध्याभिप्रेतम्**।

---

[1] शाम्भवानन्दशिवानन्दाभिप्रेतं (ख, घ, ज).

अत्र केचित्–प्रकृतिप्रत्ययसमुदाये एकैव लक्षणा, न च वाक्ये लक्षणा न दृष्टचरी "अर्धमन्तर्वेदि" इत्यत्र, "[1]विषं भुङ्क्ष्व" इत्यादौ च दृष्टत्वात्। न च शक्यसंबन्धाभावः, समुदायशक्त्यभावेऽपि समुदायिशक्यसंम्बन्धादेव तदुपपत्तेः। [2]सा चाजहतीति। न च एकरूपेणैकक्रियान्वयाभावान्न चैकस्य लक्षणेति वाच्यं[2]– तस्या अप्रामाणिकत्वात्। "छत्रिणो गच्छन्ति" इत्यत्रापि छत्रित्वेनाच्छत्रित्वेन चैकान्वयित्वं न गमनकर्तृत्वेन, "गन्तारो गच्छन्ति" इति प्रसङ्गात्। शाब्दधियोऽवच्छेदकप्रकारतानियमात्। गन्तृत्वस्यावच्छेदकत्वे मुख्यार्थस्यापि लक्ष्यत्वप्रसङ्गात्। न चेष्टापत्तिः। [3]मुख्यार्थसम्बन्धाभावादेतदतिरेकेण मुख्यार्थकल्पनाप्रसङ्गात्[3]। अतो नैकरूपेणैकक्रियान्वयित्वम्। किन्तु छत्रित्वेनाच्छत्रित्वेन च नानारूपेणैव। अत एव "काकेभ्यो दधि रक्ष्यतां" इत्यत्रापि काकत्वाद्याकारेणैव क्रियान्वयः, न दध्युपघातकत्वाद्याकारेण। न च एकवृत्त्युपस्थापिनां परस्परमनन्वयात् विचारज्ञानयोरनन्वयः स्यादिति वाच्यम्। तयोर्भिन्नवृत्त्युपस्थाप्यत्वात्। मुख्यार्थस्य लक्ष्यत्वाभावेनाजहल्लक्षणास्थले सर्वत्र वृत्तिद्वयाङ्गीकारात्। न च सकृदुच्चरितस्य वृत्तिद्वयमव्युत्पन्नं, "गङ्गायां घोषमत्स्यौ" इत्यत्र दृष्टत्वात्।

न च तीरस्य बोधने गङ्गापदस्य न व्यापारः– तात्पर्यपर्यवसानात्। तात्पर्यपर्यवसानस्यैव बोधकता। तस्मात्समुदाये अजहल्लक्षणायां न किञ्चिद्बाधकम्।

वस्तुतस्तु– जिज्ञासापदं तन्त्रेणोपात्तं; तत्रैकेन जहल्लक्षणया विचारो बोध्यते। इतरेण इष्यमाणं ज्ञानमभिधया बोध्यत इति न किञ्चिदनुपपन्नम्। एवमेकलक्षणयैवोपपत्तौ न लक्षणाद्वयं; गौरवात्। प्रत्ययलक्षणायाः काप्यदृष्टचरत्वाच्च।

किञ्च– इष्यमाणज्ञानत्यागेन तस्यैव पुनस्वीकारात् **वान्तभोजनन्याय**प्रसङ्गः। ज्ञानस्य फलवत्त्वाच्च। अनुपपत्तौ हि साध्यत्वं लक्ष्यं; तत्र मोक्षसाधनस्यैव सफलत्वमिति। [4]तदंशोऽपि लक्ष्यते। न चेष्टापत्तिः– तस्यार्थिकत्वकथनविरोधात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वनिश्चयाच्च। जिज्ञासापदेनेति ग्रन्थविरोधाच्चाहुः। वाक्ये तावन्नैकलक्षणा सम्भवति। शक्यसम्बन्धस्य लक्षणात्वात् शक्यान्वयबाधे शब्दोपस्थितस्यैव

---

[1] विषं भुङ्क्ते (ख). [2] वाक्यमिदं ख कोशे नास्ति (सं). [3] वाक्यमिदं ख कोशे नास्ति (सं).
[4] तदंशस्यापि लक्ष्यतापत्तेः (खकोशे पाठान्तरम्).

विषयत्वप्रसक्त्या सर्वशक्तिकल्पने गौरवात्। अनन्यलभ्यस्य शब्दार्थत्वात्। शक्य-सम्बन्धेनोपस्थितस्यापि तात्पर्यवशाद्विषयत्वमङ्गीक्रियत इति शक्यभेदे तत्सम्बन्धानामपि भेदान्न लक्षणाया एकत्वम्। एवं चार्थवादादिस्थलेऽपि पदानामेव वाक्यार्थद्वारा प्राशस्त्यादि-लक्षकत्वं प्रत्येकमेव। न तु वाक्ये कदाचिद्व्यासज्यवृत्तिलक्षणा। पदानां तदर्थानां तत्सम्बन्धानां च नानात्वे लक्षणाया एकत्वासम्भवात्।

एवञ्च– वाक्यार्थसम्बन्धेन यत्र वस्त्वन्तरं पदैर्लक्ष्यते तत्र वाक्यलक्षणा। यथा "अर्धमन्तर्वेदि इत्यादौ तद्भिन्ना पदलक्षणेति शास्त्रे व्यवहारः। एवं स्थिते प्रकृतेऽपि समुदाये नैकलक्षणा। सामुदायिशक्यसम्बन्धादेव तदुपपत्तिरिति वदतां च कथमेकत्वम्? समुदायिनां भेदेन तत्सम्बन्धस्यापि भेदात्। न च एकप्रतीतिजनकत्वेन लक्षणा-नामेकत्वं, इष्टापत्तेः। तथा सत्यन्यतरलक्षणयैव विचारोपस्थितौ लक्षणाद्वयेनापि तदुपस्थि-त्यङ्गीकारे वैय्यर्थ्यात्।

यत्तु– "छत्रिणो गच्छन्ति" इत्यत्र[1] छत्रित्वादिनैवान्वयबोध इति, तच्चिन्त्यं– "प्राणभृत उपदधाति" "सृष्टेरुपदधाति" इत्यत्रेव समुदायस्य लक्ष्यत्वात्[1]। "छत्रिणो गच्छन्ति" इति च छत्र्यच्छत्रिसमुदायो गच्छतीत्यर्थः, न च बहुवचनानु-पपत्तिः, "गङ्गायां घोषमत्स्यौ" इत्यत्र वृत्तिद्वयवचनानामेकवचनस्यैव साधुत्वोपपत्तेः। "अदितिः पाशान्" इत्यत्रेवावयवबहुत्वेन वा साधुत्वात्।

न च शक्यसम्बन्धाभावः– समुदायसमुदायिनोरभेदसम्बन्धात्– तयोरभेदेऽपि प्रत्यय-योर्वैचित्र्यस्य सर्वसम्प्रतिपत्तेः। शक्यतावच्छेदकभिन्नधर्मेणोपस्थितेरेव लक्ष्यत्वप्रयोजकत्वात्। न च जहल्लक्षणातो भेदप्रसङ्गः– रूपान्तरेणोपस्थितस्यापि स्वार्थस्य क्रियान्वयात्।" "काकेभ्यो दधि रक्ष्यतां" इत्यत्र दध्युपघातकत्वप्रकारकबोधस्यानुभविकस्य अन्यथोप-पादयितुमशक्यत्वाच्च।

**वस्तुतस्तु–** यत्र छत्र्यच्छत्रिसमुदायत्वेन रूपेण गमनान्वयप्रतिपत्त्यर्थं "छत्रिणो गच्छन्ति" इति वाक्यप्रयोगः, तत्राजहल्लक्षणया शक्याशक्योपस्थितिर्दुर्वारा। अत एव गुहाधिकरणे [2]**मञ्चनपण्डितीये "ऋतं पिबन्तौ"** इत्यत्र पिबदपिबत्समुदायलक्षणाया

---

[1] ख. ब. ञ. कोशेषु नास्तीदं वाक्यम् (सं). [2] दूर्वासीये (च).

अजहल्लक्षणता प्रतिपादिता। एवं च लिङ्गसमवायाधिकरणे उपाधानयोगितया गणे स्वार्थोऽप्यन्तर्भूत इति न वृत्तिद्वयविरोध इत्युक्तं **कैवल्यप्रकाशे** व्याख्यातं च **परमशिवाराध्यभट्टाचार्येण। "उपधानयोगितया गणस्य लक्ष्यता"** इति।

यदि च वृत्तिद्वयमपि तात्पर्यवशात्सकृदुच्चरितस्याप्यङ्गीकृत्य छत्रित्वाच्छत्रित्वप्रकारकबोधेच्छया "छत्रिणो गच्छन्ति" इति वाक्यमङ्गीकृत "गङ्गायां घोषमत्स्यौ" इत्यत्रैव वृत्तिद्वयव्यापारोऽप्यङ्गीक्रियते; अङ्गीक्रियताम्। न चैतावता उक्तस्थले लक्षणया शक्याशक्योपस्थितिर्वारयितुं शक्येत्यवश्याभ्युपेयत्वात्। अजहल्लक्षणानिरासायासवैफल्यमिति दिक्।

एवं स्थिते प्रकृतेऽजहल्लक्षणाङ्गीकारे एकवृत्त्युपस्थितयोर्विचारज्ञानयोः **"वषट्कर्तुः प्रथमभक्षः"** इत्यत्रैव उद्देश्यविधेयभावेनान्वयो न स्यात्। दर्शितश्च तादृशान्वयः **"ज्ञानाय विचारः कर्तव्यः"** इति [1]**परमशिवानन्दाराध्य स्वामिना शिवज्ञानचन्द्रोदये।** न च प्रकृते वृत्तिद्वयमेवाङ्गीक्रियते नाजहल्लक्षणेति वाच्यम्। तथा सत्यजहल्लक्षणोक्तिविरोधात्। **"गङ्गायां घोषमत्स्यौ"** इत्यादौ वृत्तिद्वयस्थले अजहल्लक्षणाव्यवहाराभावात्।

आस्तां तावजहत्त्वाजहत्त्वविचारः, वृत्तिद्वयाङ्गीकारेऽपि प्रकृतेनैकलक्षणया निर्वाहः— तथाहि— ज्ञानस्य साध्यत्वोपस्थितिर्व्यतिरेकेण तावन्न साध्यतयान्वयः, न चेच्छाविषयत्वमात्रं साध्यत्वम्। अनिच्छाविषयस्यापि दुःखस्य साध्यत्वात्। असाध्यस्यापि इच्छाविषयत्वात्। विधुरस्यातीतभार्यायामिच्छौत्कट्यदर्शनात्। इष्टसाध्यशब्दयोरपर्यायत्वाच्च। अत एवेष्टत्वेन साध्यत्वानुमानं निरस्तम्। व्यभिचारस्योक्तत्वात्। अस्तु वा साध्यत्वानुमानं, तथापि प्रकृते नाप्युपयोगः— वृत्त्युपस्थितस्यैव शाब्दान्वयबोधविषयत्वनियमात्। अन्यथा विचारेऽपि लक्षणा न स्यात्। इष्यमाणज्ञानसाध्यत्वन अनुमानादिनोपस्थितस्य अन्वयाद्धीविषयत्वसम्भवात्।

किञ्च— प्रत्ययार्थविशेषणत्वेनोपस्थितस्य ज्ञानस्य स्वातन्त्र्येणैव तदुपस्थितिर्नास्ति। "गौर्नित्या" इत्यादौ गोत्वस्य स्वतन्त्रोपस्थितये लक्षणाया अङ्गीकारात्। तस्माच्च

---

[1] इति परमशिवाराध्यस्वामिना (ब, ज).

प्रकृत्या साध्यावस्थं ज्ञानं लक्षणीयमेवेति लक्षणाद्वयस्यावश्यकत्वात् प्रत्यय एव विचारलक्षणा युक्ता, न तु समुदाये, एतेन तत्कल्पनापि निरस्ता। एकेन विचारलक्षणाया इतरेणापि साध्यावस्थज्ञानलक्षणाया अप्युक्तक्रमेणावश्यकत्वेन पदद्वयं कल्पयित्वा पदद्वयेऽपि लक्षणाङ्गीकारापेक्षया एकस्मिन् श्रुतपदे प्रकृतिप्रत्ययलक्षणाद्वयकल्पनात् द्वयोरेव लघुतरत्वात्। विचारलक्षणापि न समुदाये युक्ता। उक्तयुक्तेः प्रकृतेः प्रत्ययस्य वा तल्लक्षकत्वादन्यतरवैयर्थ्यादिति।

यत्तु सन्प्रत्ययस्य लक्षकत्वं न दृष्टमिति तन्न। **"सक्तून् जुहोति"** इत्यत्र द्वितीयायाः करणत्वलक्षकत्वस्य, **"प्रयाजशेषेण [1]हवींष्यभिघारयति"** इत्यत्र तृतीयाद्वितीययोः कर्मत्वाधारत्वलक्षकत्वस्य, आख्यातस्य कृत्यर्थकत्ववादिनां **"रथो गच्छति"** इत्यत्र व्यापारलक्षकत्वस्य, फलानुकूलव्यापारार्थकत्ववादिनामपि **"जानाति-इच्छति-द्वेष्टि- यतते"** इत्यादौ क्रियानुकूलकृतिव्यापारयोरप्रतीतेः, ज्ञानाद्याश्रयत्वप्रतीतेः, **"नश्यति"** इत्यादौ च नाशप्रतियोगित्वप्रतीतेराश्रयत्वप्रतियोगित्वलक्षकत्वस्य च बहुलमुपलब्धेः। गुहाधिकरणपूर्वपक्षे **"ऋतं पिबन्तौ"** इत्यत्र बुद्धिक्षेत्रज्ञसाधारणार्थशतृप्रत्ययस्य-कर्तृत्वशक्तस्य कारकत्वमात्रलक्षणाया **दूर्वासीमे** प्रतिपादनाच्च। न च प्रत्ययान्तरस्य लक्षकत्वेऽपि सन्प्रत्यये क्वापि लक्षणा न दृष्टेति वाच्यम्। **"श्वा मुमूर्षति" "कूलं पिपतिषति"** इत्यादौ व्यापारमात्रे लक्षणाया दृष्टत्वात्।

अत एव **"धातोः कर्मणस्समानकर्तृकादिच्छायां वा"** इति सूत्रे **"आशङ्कायामचेतनेषूपसङ्ख्यानं"** इत्युपसंङ्ख्यानं चोदयित्वा **"न वा तुल्यकारणत्वादिच्छया वा प्रवृत्तित उपलब्धेः"** इति वार्तिकेन इच्छाकार्ये व्यापारे लक्षणया प्रयोग इत्युक्तेरचेतने इच्छावत्तदिच्छाकार्यस्याप्यभावात्। तत्र **"क्वचा- उपमानाद्वा"** इति वार्तिकेन इच्छासदृशे व्यापारे गौणः प्रयोग इति **पतञ्जलिभाष्ये** प्रपञ्चितम्। **कैयटश्च**- तथा सति **"गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः"** इति न्यायेन इच्छासदृशे प्रयोगो न स्यादित्याशङ्क्य **गौणमुख्यन्यायश्च क्वचिल्लक्ष्यानुरोधेनाप्यङ्गीक्रियत** इति समादधे।

**ईक्षत्यधिकरणे** "कूलं पिपतिषति" इत्यत्र **दूर्वासभगवत्पादाचार्यैर्लक्षणाया** **अङ्गीकाराच्च**। तस्मात् सन्प्रत्यये लक्षणा नास्तीति वचोरिक्तम्। यदपि **वान्त-**

---

[1] हवींष्यभिघारयति 'क' पाठान्तरम्।

**भोजनन्याय** इति, तन्न। प्रत्ययस्य विचारलक्षकत्वेन न बोध्यते साध्यता, किन्तु लक्षणया प्रकृत्यैवेति बोधकभेदस्वीकारमात्रेण **वान्तभोजनन्यायासम्भवात्**। साध्यत्वस्यात्यागेन त्यक्त पुनःस्वीकाराभावात्।

यदत्रार्थिकत्वकथनं विरुद्धमिति तदपि न। "ज्ञानाय विचारः कर्तव्यः" इति ज्ञानं साध्यत्वेनोद्दिश्य साधनं विचारो विधीयते। तत्र सिद्धत्वेनोपस्थितौ साधनाकाङ्क्षा नेति साध्यतामात्रं लक्ष्यते। यावता विना शब्दान्वयापर्यवसानं तावन्मात्रं लक्षणीयम्। तस्मिन् [1]पर्यवसिते विधेः पुरुषप्रवृत्तिपर्यवसितत्वात्तस्याश्च निष्फलाया असम्भवात् फलवत्त्वसिद्धये मोक्षसाधनत्वं ज्ञानस्य कल्प्यत इत्यार्थिकत्वम्। तत्र भवतामेव तु तद्दृष्ट्या दुरुत्तरम्। ज्ञानस्य प्रत्ययार्थेच्छायां विषयत्वेनान्वये ज्ञानमात्रस्य निष्प्रमाणत्वेन [2]विषयत्वासन्भवान्मोक्षसाधनब्रह्मज्ञानस्यैवेष्यमाणत्वेन श्रौतत्वप्रसङ्गात्।

एवञ्च— इदमप्यपरं प्रत्यये विचारलक्षणायां बीजम्। यदाचार्याणां मोक्ष-साधनत्वस्यार्थिकत्वकथनं, अन्यथा उक्तरीत्या श्रौतत्वप्रसङ्गात्। यदपि प्रत्ययानामित्यादि, तदपि न। अपेक्षितविचारस्य प्रकृत्यर्थज्ञानं प्रति साधनत्वेनान्वयात्। इच्छाया विषयविषयिभावेनान्वयः, विचारस्य तु साध्यसाधनभावेनेति प्रकृत्यर्थान्वितस्वार्थाभिधाने न कश्चिद्विशेषः। यदपि जिज्ञासापदेन विरोध इति तन्न। प्रकृतिप्रत्यययोर्द्वयोरपि लक्षकत्वे पदस्य सकलस्य लक्षकत्वात्तदभिधानोपपत्तेः। ज्ञानस्य प्रकृत्यर्थस्य साध्यत्वलक्षणायाविचार-लक्षणाकथनेनैव कथितप्रायत्वात् तामनभिधाय विचारमनपेक्ष्यति, विचारलक्षणाभिधानोपपत्तेश्च। तस्माल्लक्षणाद्वयमेव **परमानन्दाराध्येन** निर्णीतम्। **एकोरामसिद्धाराध्यभगवत्पादा-चार्यादिभिः** स्वीकृतत्वादेतदेव सम्यगुपादेयम्।

## शिवस्य परब्रह्मत्वकथनम्

ननु— **"असद्वा इदमग्र आसीत्, ततो वै सदजायत" "अमूलमनाधार-मिमाः प्रजाः प्रजायन्ते" "न कदाचिदनीदृशं जगत्"** इत्यादिना जगतः

---

[1] पर्यवस्थिते (ज) [2] विषयत्वासंभवात् इति योजितं (घ, ज).

असत्करणत्वानादित्वे प्रतिपादिते, तस्मात्तस्य न कर्त्रपेक्षिता समुचिता। **"ज्योतिष्टोमेन स्वर्गकामो यजेत"** इत्यादौ यागादिकर्मणां जीवकर्तृकत्वफलदातृत्वदर्शनात्, चेतनशारीरव्यतिरिक्तेश्वरसद्भावे मानाभावात्, तेन प्रयोजनादर्शनात्, अदृष्टद्वारा जीवानामेव कर्तृत्वाङ्गीकारात्, लोके सुखदुःखभोक्तृत्वदर्शनात्. परमेश्वरकर्तृकत्वे वैषम्यनैर्घृण्यापत्त्या ईश्वरत्वभङ्गप्रसङ्गाच्च ईश्वरेण न किञ्चित्प्रयोजनं सिध्यति[1]।

[2]किञ्च— जडकर्मणां जीवानां च फलदातृत्वासंभवात् सर्वज्ञेश्वरसद्भावे **"क्षित्यङ्कुरादिकं सकर्तृकं, कार्यत्वात् घटवत्"** इत्यनुमानेन ईश्वरस्याङ्गीकारे **"आत्मा वा इदमेक एवाग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" "ओमित्येकाक्षरं ब्रह्म" "असावादित्यो ब्रह्म" "नमस्ते वायो, त्वमेव प्रत्यक्षं ब्रह्मासि" "गणानां त्वा गणपतिं हवामहे" "विश्वस्मादिन्द्र उत्तरः" "एको ह वै नारायण आसीत्, न ब्रह्मा नेशानो नापो नाग्निष्टोमौ नेमे द्यावापृथवी" "अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति, नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं" "मनो वै ब्रह्मेति, चक्षुर्वै ब्रह्मेति, श्रोत्रं वै ब्रह्मेति, प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" "अन्नं ब्रह्म"** इत्यादिना बहुविप्रतिपत्तिदर्शनात्; शिवस्यैकस्यैव कथं ब्रह्मत्वं? इति चेन्न।

**"अग्नीषोमीयं पशुमालभेत"** इत्यत्र **द्विपदाश्चतुष्पदाश्च पशवः"** इति श्रुत्या द्विपदां चतुष्पदां च पशुशब्दवाच्यत्वेन निर्देशात्, सन्देहे **"छागस्य वपाया मेदसः"** इति श्रुत्यन्तरेण छागपशुत्वनिर्णयवत् शिवस्य ब्रह्मत्वं ग्राह्यम्। अतः— **"यतो वा इमानि भूतानि जायन्ते"** इत्यादिषु जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमुक्तं परमेश्वरस्य। त्रिगुणात्मकशक्त्यवच्छिन्नहिरण्यगर्भनारायणकालरुद्रादीनां नेश्वरत्वम्। तेषामेकैककर्तृत्वेन जगज्जन्मादिकर्तृत्वाभावात्। अत एव सूत्रकारेण **"जन्माद्यस्य यतः"** इति निर्दिष्टम्। **ब्रह्मोत्तरखण्डे—**

---

[1] सिद्धम् (ख, ज) [2] उत (ख, ज). [3] एको नारायण आसीत् (ज)

**यस्याज्ञया जगत्सृष्टा विरिञ्चिः पालको हरिः ।**
**संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥**

इति जगदुत्पत्त्यादीनां प्रयोजककर्तृशिवस्यैवेश्वरत्वं निर्दिष्टम् । किञ्च– "**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्**" इति । मायां– प्रकृतिं कारणं [1]विद्यात्, मायिनं तु महेश्वरं विद्यात् इत्यनेन मायायाः परमेश्वराधीनत्वमुक्तम् । अत एव वशीकृतमायत्वात् स्वतन्त्र इति ; तस्यांशभूतैः ब्रह्मविष्णुकालरुद्रादिभिश्चेतव्याप्तं सर्वमिदं जगदित्युक्तम् ।

तथा **अथर्वशिरसि**– "**देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चन मत्तो व्यतिरिक्तः**" इत्यादिना शिवस्यैव त्रैकालिकाबाध्यत्वं सर्वान्तर्यामित्वं सर्वकारणत्वं सर्वशब्दवाच्यत्वं सर्वेश्वरत्वं सर्वात्मकत्वं ब्रह्मत्वं च प्रतिपादितम् । **काण्वशाखायां**– "**यः पृथिव्यां तिष्ठन्**" इत्यादिना पृथिव्याद्यष्टमूर्तिस्वरूपस्यैव ब्रह्मत्वकथनान्नान्यस्याशशङ्खचक्रविशिष्टदेवताया भूतभौतिकसृष्टिकर्तृत्वेनेश्वरत्वम् । न चावयवव्युत्पत्त्या विष्णोरपि पृथिव्यादिशरीरत्वमन्तर्यामित्वं च सम्भवतीति वाच्यम् । अष्टमूर्तित्वं हि शिवस्यैव प्रसिद्धत्वात् ; विष्णोरन्तर्यामित्वाप्रसिद्धेः । न चोभयोः शिवकेशवयोरन्तर्यामित्वमष्टमूर्तित्वं च वक्तुं युक्तं ; उभयोरेकशरीराभावात् । स्वतन्त्रयोरुभयोरपि नियन्तृत्वे जगतामुत्पत्तिस्थितिसंहाराणां युगपत्संभवे [2]विश्वविलयापत्तेः । "**सोन्तरादन्तरं प्राविशत्, दिशश्चान्तरं प्राविशत्**" "**यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु**" इत्यादि श्रुतिशतेषु शिवस्यैव सर्वात्मकत्वसर्वान्तर्यामित्वदर्शनात् ।

"**यो वेदादौ स्वरः प्रोक्तः**" इत्यारभ्य "**यः परस्समहेश्वरः**" इत्यन्तेन अकारोकारमकारवाच्यब्रह्मविष्णुरुद्राणां महेश्वरे विलयः प्रतिपादितः ; तस्मान्नेतरेषां ब्रह्मत्वम् ।

---

[1] विन्द्यात् (ज). [2] विलयानापत्तेः (ज, ब, ङ).

किञ्च– "**ईशानः सर्वविद्यानां**" इत्यारभ्य "सदाशिवों" इत्यन्तेन तस्यैव ब्रह्मत्वं प्रणवप्रतिपाद्यत्वं चोक्तम् ।

"**तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां प्रथमं परस्ताद्विदाम देवं भुवनेशमीड्यम्**" इति श्वेताश्वतरे ब्रह्मविष्णुरुद्रादिदेवानां नियन्तृत्वेनेश्वरं विदामो– जानीमः; नान्यथेश्वरं जानीम इति निर्णीयते । "**सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः**" इति ऋग्वेदे बुध्यादिविष्ण्वन्तजगत्कारणत्वं तस्यैवोपपादितम् । सोमप्रकरणपठितत्वान्न सोमलतापरत्वम्; अचेतनसोमलतायास्सर्वकारणत्वासम्भवात् ।

अथर्वशिखायां च– "**ध्यायीतेशानं प्रध्यायितव्यं, सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता कारणं तु ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये ध्रुवं सर्वाधिकं**" इत्युपक्रम्य "**शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य**" इत्यन्तेन मुमुक्षूणामितरनिषेधपूर्वकं शिवोपासनमेव [1]विहितम् ।

"**उतामृतत्वस्येशानः**" "**सर्वमिदं शिव एव विजानीमहि**" "**शुद्धो निरञ्जनो विभुरद्वयं शिवमेकं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः शिवोऽद्वैतः**" "**एको हि रुद्रो न द्वितीयाय तस्थुः**" "**न सन्न चासच्छिव एव केवलः**" "**विश्वाधिको रुद्रो महर्षिः**" इत्यादिश्रुतिभिश्शिवस्याद्वितीयत्वप्रतिपादनाच्छिव एव पर इति निश्चीयते । किञ्च–

> [2]**ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।**
> **ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥**

इत्यादिना नीललोहितस्य शिवस्य परब्रह्मत्वमुक्तम् ।

---

[1] उपपादितम् (क, घ, ज). [2] 'ऋतं सत्यं' इत्यारभ्य 'चतुर्थं मन्यन्ते' इत्यन्तं ख, घ, ज कोशेषु न दृश्यते (सं).

"प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते" "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" "स ब्रह्मा स शिवस्सहरिस्सेन्द्रस्सोक्षरः परमः स्वराट्" इत्यादिना शिवस्य मूर्तित्रयातीतपरब्रह्मत्वप्रतिपादनात्; तदन्येषां कारणत्वाभावान्नान्येषां ब्रह्मत्वं युक्तम्। "अन्नं ब्रह्म" इत्यादि तु स्तुतिमात्रमेव।

किञ्च– "सर्वो वै रुद्रः" "सर्वं खल्विदं ब्रह्म" "त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्; मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्" इत्यादिना हस्तकरपाणिशब्दवत् ब्रह्मात्मशिवशब्दानां पर्यायत्वश्रवणात्, माण्डूक्योपनिषदि उपक्रमे– "सर्वं ह्येतद्ब्रह्म अयमात्मा ब्रह्म सोऽयमात्मा" इत्युक्त्वा अन्ते "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इत्युक्त्वा अद्वितीयब्रह्मप्रकरणे उपक्रमोपसंहारयोरेकार्थप्रतिपादकत्वादुपक्रान्तस्य ब्रह्मण उपसंहारगताद्वैतशिवस्य चाभिन्नत्वोपदेशाच्च जगज्जन्मादिकारणत्वेन परब्रह्मत्वं तस्यैव सिद्धम्। अन्यथा शिवब्रह्मात्मादीनां श्रुत्या जगत्कारणत्वप्रतिपादनात्तेषां प्रत्येकमीश्वरत्वाङ्गीकारे ईश्वरनानात्वप्रसक्त्या सकलमतविरोधः, सकलश्रुतिविरोधश्च स्यात्।

एवं सर्ववेदान्तार्थज्ञैर्जैमिन्याचार्यैः स्वकृतवेदपादस्तवे सकलवेदवाक्यानां शिवपरत्वमुक्तम्। तथा च चतुर्वेदपारङ्गतैः ज्योतिर्नाथघण्टानाथभीमनाथभट्टभास्करादिभिर्वैदिकैर्वेदमार्गप्रतिष्ठापनाचार्यैरपि पाषण्डपाञ्चरात्रबौद्धाद्वैतादिदुर्मतनिराकरणानन्तरं–

> महादेवो देवः सकलजगदाराध्यचरण-
> स्त्रयीमार्गो मार्गः कुमतिमतवृत्तिप्रमथनः।
> तयोर्यो वा ब्रूते वृजिनमनयोस्तस्य निदधे,
> शिरस्यङ्घ्रिं वादिप्रलयदहनोऽहं नृपसभे!॥

इत्यादिना शिवस्यैव परब्रह्मत्वं व्यवस्थापितम्। तस्माच्छास्त्रे ब्रह्मजिज्ञासेत्यत्र शिवस्यैव स्वरूपजिज्ञासेति निर्दिष्टम्।

एवं ब्रह्मणो यज्जगत्कारणत्वं तच्छिवस्यैवेति सूत्रसन्दर्भरूपे शास्त्रे ब्रह्मेति व्यवहारः। "**ब्रह्मविदाप्नोति परं**" "**ब्रह्म वेद ब्रह्मैव भवति**" "**शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य**" इत्यत्र शिवङ्करोतीति शिवङ्करः– भावप्रधानो निर्देशः, तस्मादात्यन्तिकपाशनिवृत्तिपूर्वकशिवत्वप्राप्तिरेव मुक्तिरित्युपदिश्यते। न च आगन्तुकत्वेनानित्यत्वात् कथं शिवत्वप्राप्तिरेव मुक्तिरिति वाच्यम्। **भ्रमरकीटन्यायेन** सत्यक्रिमेः सत्यभ्रमरत्वप्राप्तिदर्शनात्। सत्यात्मकस्य जलस्य स्वभावनिवृत्तिपूर्वकसत्यमौक्तिकत्वप्राप्तिदर्शनात् किमर्थं बन्धमिथ्यात्वकल्पनमिति विवेकिभिर्बोद्धव्यम्।

ननु– [1] मरुमरीचिकायां भासमानस्यासत्यस्य तोयज्ञानस्य सत्यं मरीचिकाज्ञानं निवर्तकमिति व्याप्तिबलात् ज्ञानेन सत्यस्य कथं निवृत्तिः? इति चेन्न। सत्यस्य पूर्वज्ञानस्योत्तरज्ञानेन, स्मृत्या संस्कारस्य, शिवस्मरणेन पापस्य, प्रियस्मरणेन दुःखस्य, प्रत्यधिकरणं संशयस्य– पूर्वपक्षनिर्णयेन, पूर्वपक्षस्य च सिद्धान्तेन निवृत्तिदर्शनात्।

ननु– "**अजामेकां लोहितशुक्लकृष्णां**" इत्यादौ प्रधानस्य जगत्कारणत्वनिर्देशात्, ब्रह्मणो जगत्कारणत्वे विकारित्वप्रसङ्गाच्च।

"**अथ-अतः– अब्रह्मजिज्ञासा**" इति अब्रह्मणः प्रधानस्य जिज्ञासा कर्तव्येति– चेन्न– तज्जिज्ञासाविधायकश्रुत्यदर्शनात्, "**नोपास्यौ प्रकृतिजीवौ**" इति श्रुतौ तदुपासनानिराकरणदर्शनात्, प्रधानवन्निरधिष्ठानशक्तेरभावाच्च। प्रधानस्य जगत्कारणत्वप्रतिपादकश्रुतीनां "**शस्त्रं छिनत्ति श्रोत्रं श्रृणोति**" इति वाक्यानामिव तदन्यकर्तृत्वं सूचितम्। जडस्य जगत्कारणत्वासम्भवात् "**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं**" इत्यादौ मायायाः शिवाधीनत्वदर्शनात्।

## इति श्रीकरभाष्ये आद्यं जिज्ञासाधिकरणम्

---

[1] मरीचिकान्यायेन सत्यज्ञानमसत्याज्ञानस्य निवर्तकमिति व्याप्तिबलात् असत्यस्य सत्यज्ञानान्निवृत्तिरिति वाच्यम् (ख): मरीचिकान्यायेन तोयज्ञानमज्ञानस्य निवर्तकमिति व्याप्तिबलात्सत्यस्य ज्ञानान्निवृत्तिरिति चेन्न सत्यस्य (ज. घ).

## जन्माद्यधिकरणम्

"लक्षणप्रमाणाधीना हि वस्तुसिद्धिः" इति न्यायेन प्रथमं ब्रह्मणः प्राधान्यलक्षणार्थमिदं सूत्रं प्रदर्श्य, निर्विशेषत्वसविशेषत्वसंशयविपर्ययनिराकरणार्थं जिज्ञास्य ब्रह्मणो लक्षणमाह—

## जन्माद्यस्य यतः ॥ २ ॥

इति— **"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति"** इति। तैत्तिरीये श्रूयतेऽस्य **विषयः,** प्रयन्ति म्रियमाणानि सन्ति अभिसंविशन्तीति वाक्यार्थः।

अतः पूर्वाधिकरणे सन्दिग्धत्वेन ब्रह्मणो विचार्यत्वसम्भवादा**क्षेपसङ्गतिः**। सर्वत्र **दृष्टान्तप्रत्युदाहरणसङ्गती** च सम्भवतः। यथा सन्दिग्धत्वहेतुना ब्रह्म विचार्यं, तथा जन्मादीनां जगन्निष्ठत्वेन हेतुना न ब्रह्मणो लक्षणमिति **दृष्टान्तसङ्गतिः**। अत्र **तटस्थलक्षणत्वेन** न तथा सम्भवतीति **प्रत्युदाहरणसङ्गतिः**। जन्म आदिर्यस्येति [1]**तद्गुणसंविज्ञानबहुव्रीहिः**। अत्र ब्रह्मेति पदमनुवर्तते तच्छब्दस्याध्याहारः। **जन्मादि— अस्य— यतः—** इति पदविभागः। **जन्मादि—** सृष्टिस्थितिलयतिरोधानानुग्रहात्मककृत्यपञ्चकं अस्य चिदचित्प्रपञ्चविलासस्य, यतो— यस्मात् स्वाभाविकानन्तशक्तिविशिष्टब्रह्मणः, सम्भवति तद्ब्रह्मेति सूत्रार्थः।

**अस्येत्यनेन** चाक्षुषप्रत्यक्षविषयीभूतचेतनाचेतनप्रपञ्चस्य कार्यत्वं, **यत** इत्यनेन ब्रह्मणो जन्मादिपञ्चकृत्यकारणत्वं च निर्दिष्टम्। परशिवस्य ब्रह्मणो जगज्जन्मादिपञ्चकृत्यानां श्रुतिसिद्धत्वाज्जीवानां तदुपासकत्वं विधीयते। कारणस्य ब्रह्मणः कर्तृमकर्तुं च शक्यमेव। अत्र— यतो वेति श्रुतावभिसंविशन्तीत्यनेन आविर्भावतिरोधाने सूचिते।

---

[1] तद्गुणसंविज्ञानेप्युद्भूतावयवसमुदायस्यान्यार्थत्वे जन्मादयोऽस्येति सूत्रनिर्दिष्टः। अनुद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वे "स्त्रीलिङ्गपुल्लिङ्गयोर्जन्मादिर्यस्येति निर्देशस्स्यात्। सर्वत्र वर्णान्तराधिक्यगौरवं स्यादिति सूत्रकारेण कृतो नपुंसकलिङ्गनिर्देशः (ख, घ, ङ, ज).

विज्ञाते ब्रह्मणि **तटस्थादिलक्षणानुपपत्तिः**; अविज्ञाते प्रवृत्तिरेव न स्यात्। अतस्तत्र कथं लक्ष्यलक्षणप्रवृत्तिरिति न शङ्कनीयम्। गुरूपदिष्टशाम्भवदीक्षितस्यापातज्ञानसम्भवात्। तन्निश्चयार्थं लक्ष्यलक्षणविचारप्रवृत्तिर्न विरुध्यते।

**विशयस्तु–** [1]कारणत्वं सर्वाधिष्ठानस्य ब्रह्मणः? तत्रारोपितप्रधानसत्वगुणप्रतिबिम्बित-कल्पितेश्वरस्य वा? सर्वाधिष्ठानस्य ब्रह्मणो निर्गुणत्वाज्जगतश्च नित्यत्वात्तन्न सम्भवति। सावयवस्य कल्पितस्य मिथ्याभूतस्य सुतरां न सम्भवति।

किञ्च– "**ज्ञाज्ञौ द्वावजावीशनीशौ**" "**न कदाचिदनीदृशं जगत्**" इत्यादिना जगज्जीवयोरजातत्वनित्यत्वव्यपदेशात् कथं परमेश्वरस्य कारणत्वम्? कारणत्वे "**उत्पत्त्यसम्भवात्**" इति सूत्रे भगवता सूत्रकारेण श्रुतिस्मृतिविरुद्धत्वेन जीवोत्पत्ति-प्रधानवैष्णवमतस्य निराकृतत्वात् तन्न सम्भवति। अकारणत्वे– "**यतो वा इमानि**" इत्यादिश्रुतिविरोधः स्यात्। "**असद्वा इदमग्र आसीत्। ततो वै सदजायत**" "**सदेव सोम्येदमग्र आसीत्**" "**न सन्न चासच्छिव एव केवलः**" इत्यादिश्रुतिषु असत्कारणत्वसत्कारणत्वसदसद्व्यतिरिक्तपरशिवकारणत्वश्रवणात् बहुविप्रतिपत्तिर्दृश्यते।

**पूर्वपक्षस्तु–** न च परमेश्वरस्य जगत्कारणत्वं, निर्गुणत्वात्। तथात्वे जगद्वि-लक्षणत्वेन? तदन्तर्यामित्वेन वा? साकारस्य? निराकारस्य वा? **नाद्यः**– सर्वव्यापकत्व-भङ्गप्रसङ्गात्, निरुपाधिकत्वेन निराधारत्वेन च कुलालकुविन्दादिभ्यो घटपटाद्युत्पत्तेरसम्भ-वाच्च। न **द्वितीयः**– घटादिवत्परिच्छिन्नत्वप्रसङ्गात्, आधेयत्वप्रसक्तेश्च। न **तृतीयः**– सावयवस्य ब्रह्मणः निरवयवाकाशादिकल्पनायोगात्, पूर्ववत्परिच्छिन्नत्वप्रसङ्गाच्च। नापि **चतुर्थः**– निरवयवस्य सावयवप्रपञ्चकल्पनासम्भवात्, "**निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं**" इत्यादि श्रुतिविरोधप्रसङ्गाच्च।

[2]किञ्च– सत्यज्ञानानन्दात्मकपरशिवजन्यत्वाङ्गीकारे जगतोऽपि सच्चिदानन्दात्मकत्वं स्यात्। तदङ्गीकारे जगतो जन्मादिकं अनृतजडदुःखात्मकत्वं च न स्यात्, मृदादि-बद्विकारित्वप्रसङ्गश्च। किञ्च- कारणत्वं निमित्तत्वमुपादानत्वं वा? तदुभयत्वं वा?

---

[1] जगद्विलक्षणत्वेन कारणत्वं जगदन्तर्यामित्वेन वा साकारस्य निराकारस्य वा (ख, घ, ङ, ज).

[2] उत (ख, घ, ज).

किञ्च– तद्द्विविधकारणत्वं ब्रह्मणः? प्रधानस्य वा? **नाद्यः**– निमित्तत्वे **"सर्वं खल्विदं ब्रह्म" "सर्वो वै रुद्रः"** इत्याद्यद्वैतश्रुतिभङ्गप्रसङ्गात्। न **द्वितीयः**– **"एको हि रुद्रो न द्वितीयाय तस्थुः" "एकमेवाद्वितीयं"** इत्यादिश्रुतिसिद्धाधिष्ठात्रन्तर[1]निरासासम्भवात्। न **तृतीयः**– तमःप्रकाशवत्परस्परविरुद्धस्वभावत्वात्। प्रधानस्याङ्गीकारे अचेतनत्वादसत्वाच्च। कुलालादिवन्निमित्तोपादानत्वासम्भवः, विरुद्धत्वात्तदुभयत्वासम्भवः।

किञ्च– **"आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "न सन्नचासच्छिव एव केवलः"** इत्यदिश्रुतिसिद्धानन्दादीनां ब्रह्मत्वे विकल्पस्समुच्चयो वा? विकल्पत्वे कृतहानाकृताभ्यागमप्रसङ्गोऽव्यवस्था च। व्यवस्थाविकल्पे अनेकब्रह्मत्वप्रसङ्गश्च। समुच्चये तेषामानन्दादीनां धर्मरूपत्वात्, जगज्जन्मादिकारणत्वासम्भवः।

किञ्च– [2]क्षीरादिवत्परिणाम्युपादानत्वाङ्गीकारे ब्रह्मनिष्ठानन्दादिभङ्गप्रसङ्गः। सुवर्ण[3]कुण्डलादिवदारम्भोपादानत्वे पूर्ववद्विकारित्वप्रसङ्गः। प्रागसद्रूपप्रधानादिप्रपञ्चस्य रज्जुसर्पवद्विवर्तत्वाङ्गीकारे शशशृङ्गादीनां किं न स्यात्? अतः प्रपञ्चस्य नोत्पत्तिर्विधीयते। तथापि **"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते"** इति पूर्वाचार्योक्तन्यायमनुसृत्य शिष्यबोधार्थं वेदप्रामाण्यसिद्ध्यर्थं च **"अजामेकां लोहितशुक्लकृष्णां"** इत्यादिश्रुतावचेतनमायाया जगत्कारणत्वोपदेशात्तस्या एवोपादानकारणत्वं वक्तुं शक्यम्। ब्रह्माध्यस्तप्रकृतिसत्वगुणप्रतिबिम्बितकल्पितेश्वरस्य वा तत्कारणत्वं? इति **चेद्ब्रूमः**।

**सिद्धान्तस्तु**– सर्वाधिष्ठानसच्चिदानन्दपरस्थलपरशिवब्रह्मण एव जगज्जन्मादिकारणत्वं युक्तम्। **"अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः। अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम्" "आकाशशरीरं ब्रह्म। सत्यात्मप्राणारामं मन आनन्दम्" "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति" "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा"** इत्यादिश्रुतिकदम्बेन निरवयवस्यापि

---

[1] निरासो न स्यात् (ख, घ, ज). [2] क्षीरादिवदारम्भोपादानत्वाङ्गीकारे (ख, घ, ज).
[3] कुण्डलादिवत्परिणाम्युपादानत्वे (ख ज).

ब्रह्मणो बाह्यकरणनिरपेक्षतया सर्वकर्तृत्वं सूचितम् । "**आकाशशरीरं ब्रह्म**" इत्यत्र आकाशशब्देन तत्स्वाभाविकचिच्छक्तिरुच्यते ; न भूताकाशः ; जडस्य तस्य कारणत्वासम्भवात् । सत्यात्मा– सत्यस्वरूपः "**ऋतं सत्यं**" इति श्रुतेः, प्राणशब्देन सकलजगदधिष्ठानचिच्छक्तिर्व्यपदिश्यते । तस्यां रमते यः स प्राणारामः । मनश्शब्देन पराशक्तिरुच्यते, तस्यामानन्दो यस्य । अनेन बाह्यकरणनिरपेक्षता सूचिता । निरवयवस्य वायोर्वृक्षादिकम्पनशक्तिदर्शनात्, निरवयवस्य जीवस्य स्वाप्निकप्रपञ्चोत्पत्ति[1]दर्शनाच्च । अनन्तशक्तिविशिष्टस्याघटितघटनासामर्थ्यं किमु वक्तव्यम्? मूर्तस्य प्रभाकरस्य ह्यमूर्तकालकल्पनदर्शनात् । भक्तानुग्रहार्थं घृतकाठिन्यवद्दिव्यमङ्गलविग्रहधरस्य महेश्वरस्य मूर्तामूर्तप्रपञ्चकल्पनेऽप्यदोषः ।

"**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत**" इति श्रुतौ समुद्रोत्पन्नफेनतरङ्गादिवत् सर्वजगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वमिति श्रूयते । जगदुपादानपरमेश्वरशक्तेस्तु तदेकदेशवृत्तित्वं, "**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि**" इति श्रुत्या प्रदर्शितम् । तस्मान्महाकाशान्तर्भूतपवनादीनामिव परमेश्वरान्तर्भूतजगतां परमेश्वरकारणत्वम् । "**लिङ्गमध्ये जगत्सर्वं लिङ्गबाह्यात्परं नहि**" इति श्रुत्यापि तथा सूचितम् ।

[2]"**यतो वा इमानि भूतानि जायन्ते**" इत्यनेन शिवस्य ब्रह्मणो निमित्तकारणत्वं "**यत्प्रयन्ति**" इत्यनेन नोपादानकारणत्वं चोपदिश्यते । तस्मादविरुद्धमभिन्ननिमित्तोपादानकारणत्वम् । न त्वेककारणत्वं, नाध्यारोपत्वं, न मिथ्यात्वं च विधीयते ।

ननु– ज्ञाज्ञौ द्वावजावीशनीशौ इत्यादिना परमेश्वरवज्जीवस्याप्यजत्वोपदेशात्, "**यतो वा इमानि भूतानि जायन्ते**" इत्यादिश्रुत्या परमेश्वरस्य पञ्चमहाभूतमात्रकारणत्वमिति चेन्न । सृष्टेः प्राक् स्वात्मनि कुसूलधान्यवद्वर्तमानजीवानां बहिर्निर्गमनादिकर्तृत्वदर्शनात् जन्यत्वाजन्यत्वविधायकश्रुतीनां न विरोधः । "**मायां तु प्रकृतिं**

---

[1] दर्शनात् निरवयवस्य जीवस्य स्वाप्निकप्रपञ्चोत्पादनशक्तिदर्शनाच्च (ङ). [2] यतो वा इमानि भूतानि जायन्ते इत्यनेन शिवस्य ब्रह्मणः निमित्तकारणत्वं 'यत्प्रयन्ति' इत्यनेन उपादानकारणत्वञ्चोपदिश्यते । तस्मादविरुद्धमभिन्ननिमित्तोपादानकारणत्वं. न त्वेककारणत्वं, नाध्यारोपत्वं न मिथ्यात्वं च विधीयते । ननु ज्ञाज्ञौ द्वावजावीशनीशौ इत्यादिना परमेश्वरवज्जीवस्याप्यजत्वोपदेशात् (ख, घ, ज).

**विद्यान्मायिनं तु महेश्वरं। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" "ममैवांशो जीवलोके जीवभूतस्सनातनः"** इत्यादिश्रुतिस्मृतिदर्शनात्। शक्तिसंकोचतया सृष्टेः प्राक् परमेश्वरस्य निर्गुणत्वात् **"निष्कलं निष्क्रियं शान्तं"** इत्यादि निर्गुणश्रुतीनां तत्कालपरत्वम्। **"स ईक्षां चक्रे"** इत्यादि सगुणश्रुतीनां सृष्ट्युन्मुखपरमेश्वरशक्ति-विकासकालपरत्वम्। सत्यज्ञानानन्दस्वरूपस्य शिवस्य ब्रह्मणो जगत्कारणत्वे मृदादिवद्विकारित्वं स्यादिति चेत्– **"मायां तु प्रकृतिं विद्यात्"** इत्यादिश्रुतिषु मायाया जगदुपादानत्वं परमेश्वरस्य निमित्तत्वं चोपदिश्यत इति न विरोधः।

चिदात्मकपरशिवे कथं जडप्रपञ्चकल्पनमिति चेन्न– **"यथोर्णनाभिस्सृजते गृह्णते च"** इत्यादि-श्रुतौ चेतनोर्णनाभेरचेतनतन्तूत्पत्तिदर्शनात्। अघटितघटनाशक्तिविशिष्ट-परमेश्वरस्य किमु वक्तव्यम्? तस्माज्जडचेतनयोः प्रपञ्चपरशिवयोः कार्यकारणभावस्य, ऐक्यस्य च पूर्वोदाहृतैः **"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत"** इत्यादिश्रुति-वचनैः प्रतिपादितत्वात् स एव वैदिकसिद्धान्त इति घण्टाघोषः।

अध्यारोपापवादाङ्गीकारे– **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं" "तदैक्षत बहुस्यां प्रजायेयेति" "एकोऽहं बहुस्यां प्रजायेय द्यावापृथिवी जनयन् देव एकः" "द्वा सुपर्णा सयुजा सखाया" "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "सर्वो वै रुद्रः"** इत्यादि बहुश्रुतिविरोधात् बौद्धादिवद्वेदबाह्यमतप्रवेशः स्यात्।

जडाजडयोरेकत्वासम्भवात्प्रपञ्चस्याध्यासिकत्वेन मिथ्यात्वं सम्भवतीति यत् तत्तुच्छम्। तथा हि– अन्यत्रान्यधर्मारोपः खल्वध्यासः। तत्र आत्मन्यनात्मप्रपञ्चारोपो वा? अनात्मन्यात्मारोपो वा? **नाद्यः–** पूर्वदृष्टसत्यसर्पसंस्कारेण रज्जुसर्पभ्रान्तिरुपपद्यते। तद्वदात्मव्यतिरिक्तसत्यप्रपञ्चानङ्गीकारात्, तदतिरिक्तप्रदेशाभावाच्च। न **द्वितीयः**– अनात्म-न्यात्मारोपे आरोपितात्मस्वरूपस्य ब्रह्मणो मिथ्यात्वापत्तेः, जडत्वादिबहुदोषप्रसक्तेश्च। न च पूर्वदृष्टत्वमेव नियामकमिति वाच्यम्। **बीजाङ्कुरन्यायवत्पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यास-**हेतुत्वात् अध्यासस्सम्भवति इति चेत्, **तर्ह्यनवस्थाप्रसङ्गः**।

[1]किञ्च "**यत्र यद्दृष्टं तत्र न तस्यारोपः**" इति नियमात् तद्दृष्टप्रपञ्चस्य तस्मिन्नारोपः कथमुपपद्यते? सर्पे सर्पत्वारोपासम्भवादनुपपत्तिर्दुर्वारा। अपि च ब्रह्मप्रपञ्चयोरनादित्वे– "**यतो वा इमानि भूतानि जायन्ते**" इत्यादिबहुश्रुतिविरोधात् कार्यकारणत्वप्रयुक्तपौर्वापर्यनियमप्रतिपादकयुक्तिभङ्गप्रसङ्गश्च। दृश्यत्वेन प्रपञ्चस्य मिथ्यात्वाङ्गीकारे ब्रह्मणोऽपि मिथ्यात्वापत्तिः, दृश्यत्वाविशेषात्। दृश्यत्वानङ्गीकारान्नोक्तदोषः इति चेत्– लोके ब्रह्मानुभूतिर्न स्यात्। किञ्च– "**अस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्च। प्रत्यगात्मप्रसिद्धेः**" इत्युक्तिविरोधात् नाहम्प्रत्ययविषयो ब्रह्म, इति चेन्न। जीवब्रह्मणोः भेदानङ्गीकारात्। "**कश्चिद्धीरः प्रत्यगात्मानमैक्षत्**" "**तरति शोकमात्मवित्।**" "**आत्मा वा अरे द्रष्टव्यः**" "**दृश्यते त्वग्र्यया बुद्ध्या**" "**पश्य मे योगमैश्वरं**" "**शिवात्मकमिदं सर्वं सदा पश्यन्ति सूरयः**" इत्यादिश्रुतिस्मृतिपुराणवचनैर्ब्रह्मदृश्यत्वप्रतिपादनाच्च। ब्रह्मणो व्यावहारिकदृश्यत्वाङ्गीकारे निरधिष्ठानभ्रमप्रसङ्गः। तस्मान्नाध्यासोऽङ्गीकरणीयः।

ननु– "**मायाभासेन जीवेशौ करोति**" इति कल्पितश्रुत्या जगतो मिथ्यात्वमङ्गीक्रियते इति चेन्न। "**ज्ञाज्ञौ द्वावजावीशनीशौ**" "**ममैवांशो जीवलोके जीवभूतस्सनातनः**" इत्यादि श्रुतिस्मृतिविरोधप्रसङ्गात्, अचेतनस्य प्रधानस्य चेतनजीवेश्वरकर्तृत्वासम्भवाच्च। "**अन्तवत्वमसर्वज्ञता वा**" इति सूत्रविरोधः, कृतनाशाकृताभ्यागमप्रसङ्गश्च।

परमेश्वरसत्तावशात्प्रधानस्य जगत्कारणत्वमिति चेन्न– ईक्षत्यधिकरणे "**तदैक्षत**" इत्यादि श्रुतिप्रामाण्यमङ्गीकृत्य वेदबाह्यत्वेन प्रधानजगत्कारणत्वमतस्य निराकृतत्वात्।

किञ्च– मिथ्यात्वं नाम– असत्वं? अनिर्वचनीयत्वं? बाध्यत्वं वा? **नाद्यः**– वेदाप्रामाण्यप्रसङ्गात्। न **द्वितीयः**– मौनत्वापत्तेः। न **तृतीयः**– किमिदं बाध्यत्वं? त्रैकालिकनिषेधप्रतियोगित्वं? ज्ञाननिवर्त्यत्वं वा? **नाद्यः**– प्रपञ्चस्य विद्यमानत्वात्, अर्थसिद्धिक्रियासिद्धिसत्वाच्च। अनादित्वान्न पूर्वकालनिषेधः, अनुभुज्यमानत्वान्न वर्तमानकाल-

---

[1] **उत (ख, थ, ज)**.

निषेधः, सङ्कोचरूपेण वेदराशेः प्रलयेऽपि परमेश्वरे सत्वान्न भविष्यत्कालनिषेधः, न द्वितीयः– ज्ञानिनां पूर्ववत्प्रपञ्चस्य भासमानत्वात्, तेषां क्षुत्पिपासादिकस्य दृष्टत्वाच्च ।

न च– दग्धपटन्यायेन जीवन्मुक्तस्य देहेन्द्रियादिभेदज्ञानसम्बन्ध इति वाच्यम् । मरुमरीचिकादौ भ्रान्तिनाशेऽपि जलत्वेन प्रतीयमानत्वमिव । प्रकृते न वक्तुं शक्यं [1]यथा दग्धपटोऽपि पटवद्भासते शीतनिवारकत्वादि– क्रियासिद्ध्यभावात्, लोके मरुमरीचिका जलवद्भासते पिपासाशान्त्यादि– धर्माणामयोग्यत्वात्[1] तद्वज्जीवन्मुक्तानां भेदज्ञानसत्त्वेऽपि शरीर-कम्पनक्षुत्पिपासादिकं न सम्बध्येत । लोके दण्डनाशेऽपि तज्जन्यभ्रमणवदविद्यानाशेऽपि तत्कार्यप्रारब्धशरीरदेभोगैकनाश्यत्वमिति चेन्न । तन्तुपटादिवदविद्याया उपादानकारणत्वात्, तस्मात्तथा न युक्तम् । तथा दूर्वासीये—

"अनाद्यविद्यया बद्धं ब्रह्म तत्कालकारणम् ।
स्वाविद्यया संसरति मुक्तिः कल्पितवाक्यतः ॥

एवं प्रतारणं शास्त्रं सर्वमाहात्म्यनाशकम् ।
उपेक्ष्यं शिवभक्तैस्तु श्रुतिस्मृतिविरोधतः ॥

फलनाशादिदं तस्य फलं वै मुख्यतस्तमः ।
ज्ञाननाश्यत्व सिध्यर्थं तदेव हि निरूपितम् ॥

तदन्यथैव संसिद्धं विद्याऽविद्यानिरूपणैः ।
तन्मायिकत्वकथनं पुराणेषु प्रदृश्यते ।
तथेन्द्रजालपक्षेऽपि मतान्तरमिदं ध्रुवम् ॥

नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित् ।
वाचारम्भणवाक्यानि तदनन्यत्वबोधनात् ।
न मिथ्यात्वाय कल्पन्ते शिवोपादानकारणात् ॥

---

[1] तस्मात् (ख, घ, ज).

ज्ञानार्थमर्थवादश्चेज्जगत्सृष्टयादिकारिणि ।
शक्तेरनङ्गीकरणाद्विधिमाहात्म्ययोर्न तत् ॥

अपवादार्थमेवैतदारोपो वस्तुतो न हि ।
दृढप्रतीतिसिध्यर्थमिति चेत्तन्न युज्यते ॥

मुख्यार्थबाधकं नास्ति कार्यदर्शनतश्श्रुतेः ।
ऐन्द्रजालिकपक्षेऽपि तत्कर्तृत्वं तदीरितम् ॥

मायादीनां च कर्तृत्वं श्रुतिसूत्रैर्न बोध्यते ।
अकर्तृत्वं च यत्तस्य माहात्म्यज्ञापनाय वै ॥

विरुद्धमध्यारोपादि न युक्तिस्तस्य कारणम् ।
मायिकत्वं पुराणेषु मोहार्थमुपपद्यते ।
तस्मादविद्यामायात्वकथनं मोहनाय वै ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहेतुकम् ॥

(भ. गी. १६-८)

सेश्वराद्वैतभावे तु सर्वं शिवमयं जगत् ।
ज्ञानाद्विकल्पबुद्धिस्तु लीयते न स्वरूपतः ॥

भिन्नत्वं नैव युञ्जीत शिवोपादानतः क्वचित् ।
एवं वैदिकसिद्धान्तः सेव्यो नान्य इति श्रुतिः ॥ इति ।

एवमविद्यामायाप्रतिबिम्बितजीवेश्वरवादोऽपि न युक्तः । तथा हि— असत्प्रत्ययगोचरश्शारीरस्तु अविद्याप्रतिबिम्बितः ? अन्तःकरणप्रतिबिम्बितो वा ? अविद्यावच्छिन्नचैतन्यं ? अन्तःकरणावच्छिन्नचैतन्यं वा ? ईश्वरस्तु मायाप्रतिबिम्बितः ? मायावच्छिन्नो वा ? उभयोस्स्वाभाविकत्वं ? औपाधिकत्वं वा ? तदुपाधिस्तु माया ? अविद्या ?

अन्तःकरणं वा ? न तु स्थूलोपाधिः, परलोकगमनानुपपत्तेः । **"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"** इत्युक्तेः तत्प्रतिबिम्बपक्षोऽपि न युक्तः । ब्रह्मणो नीरूपत्वेन मायाया असत्पदार्थत्वेन तत्प्रतिबिम्बो न स्यात् । न च जलाकाशप्रतिबिम्बवत्, इति वाच्यम् । **"दृष्टानुसारिणी कल्पना"** इति न्यायेन नीरूपस्याकाशस्य प्रतिबिम्बासम्भवात् । तत्प्रतिबिम्बप्रतीतिस्तु, भ्रान्तिरेव । जलादौ मूर्तात्मकसूर्यादिप्रतिबिम्बदर्शनात् । अन्यथा वायोरपि प्रतिबिम्बापत्तेः । दर्पणरेखावद्यत्र यदस्ति तत्र तत्प्रतिबिम्बो नास्तीति नियमात्सर्वगतस्य ब्रह्मणस्सर्वगतमायायां प्रतिबिम्बः कथमुपपद्यते ?

न च विभुपदार्थयोस्संयोगासम्भवात्प्रतिबिम्बाभावोऽयुक्त इति वाच्यम् । संयुक्तस्यापि प्रभामण्डलस्य तथा तद्दर्शनात् । **"गुहां प्रविष्टौ परमे परार्धे"** **"गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्"** इत्यादिश्रुतिसूत्राभ्यां जीवेश्वरयोरेकत्र स्थितेर्निर्णीतत्वात्, बिम्बप्रतिबिम्बयोरेकत्र निवेशासम्भवात्तत्पक्षो न युक्तः ।

किञ्च– मायाऽविद्ययोर्ब्रह्मप्रतिबिम्बौ जीवेश्वरौ । मायाऽविद्यानाशस्तयोर्मोक्षः खलु ? तदङ्गीकारे जीवेश्वरनाश एव मोक्ष इति सम्पद्यते । अतः पाषण्डबौद्धमतप्रवेश आत्महननमपुरुषार्थ इति मोक्षस्यापुरुषार्थत्वमापद्येत । जीवेश्वरयोरलीकत्वं स्यात् । तथात्वे पारलौकिकप्रयत्नं कोऽपि न कुर्यात् । मुमुक्षुर्हि मोक्षार्थं न यतेत । उभयस्वरूपस्य मिथ्यात्वात् सर्वस्य हैहिकप्रवृत्तिरेव स्यात् । सर्वाप्रवृत्तौ प्रवृत्तिमात्रोच्छेदः स्यात् । सर्वेऽपि विधिनिषेधयोर्मिथ्यात्वाविशेषात् कुत्रापि न प्रवर्तेरन् । तथा सति सन्मार्गोच्छेदश्च स्यात् । जीवस्य प्रतिबिम्बत्वेनालीकत्वात्, **"ऐतदात्म्यम्"** इत्यारभ्य **"स आत्मा"** इत्यन्तेन तत्त्वम्पदार्थं निरूप्य **"न तत्त्वमसि"** इत्येव वदेत् । दर्पणप्रतिफलितवह्न्यादिवदर्थक्रियाकारित्वं न सम्भवत्येव ।

किञ्च– **"यो विज्ञाने तिष्ठन्"** इत्याद्यन्तर्यामिब्राह्मणविरोधः । निखिलोपाधौ प्रतिबिम्बस्यैकत्वेन जीवैक्याद्बन्धमोक्षसुखदुःखादिव्यवस्थानुपपत्तेः, तस्मात्प्रतिबिम्बपक्षोऽप्यनुपपन्नः । जडान्तःकरणावच्छिन्नचैतन्यस्य जीवत्वाङ्गीकारे घटपटावच्छिन्नचैतन्यस्यापि जीवत्वमुपपद्येत । तस्मादवच्छेदपक्षोऽपि पूर्वोक्तदूषणग्रस्तत्वान्न युक्तः । **"एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"** इति श्रुतिरसाधुरेव । पूर्वोदाहृतश्रुतीनां बलिष्ठत्वात् । **"न हि दृष्टान्ते सर्वसम्भवः"** इति न्यायेन ब्रह्मणः सर्वगतत्वे दृष्टान्त उपलभ्यते ।

**"मायाभासेन जीवेशौ करोति"** इति वाक्येन न जीवेशयोः कल्पितत्वमुपपद्यते **"ज्ञाज्ञौ द्वावजावीशनीशौ"** इत्यादि बहुश्रुतियुक्त्यनुभवविरोधात्। मं– शिवं अयतीति माया, **"अय-पय– गतौ"** इति धातोः प्राप्त्यर्थकत्वात्, **"मः शम्भौ धातृचन्द्रयोः"** इति निघण्टुश्रवणात्, प्रणवार्थविवरणे **"अकारो ब्रह्मा, उकारो विष्णुः, मकारो रुद्रः"** इति श्रुतेश्च। माया-परशिवशक्तिः आभासेन– परमेश्वरसमप्रकाशेन, जीवेशौ करोति– प्रकटीकरोतीत्यर्थः। अन्यथा सर्वश्रुतिभङ्गप्रसङ्गः। पूर्वोक्तसत्यानन्दादीनां जगत्कारणत्वे न दोषः। तेषां परमेश्वरस्वरूपत्वात्तद्धर्मत्वाच्च। अग्नेर्लौहित्यौष्ण्यप्रकाशवत्। तस्मात्प्रपञ्चस्य कर्तृजन्यत्वं घटादिवद्वक्तुं शक्यम्।

यद्यपि जन्मादिकं जगन्निष्ठं व्यधिकरणत्वान्न तद्ब्रह्म**स्वरूपलक्षणम्**। तथापि जगत्कारणत्वं परमेश्वरस्योपदेशा**त्तटस्थलक्षणम्**। स्वरूपभिन्नत्वे सति व्यावर्तकत्वं तटस्थलक्षणम्। यद्यप्यव्यभिचाराज्जगज्जन्मादिकं प्रत्येकं लक्षणं सम्भवति तथाप्युत्पादकत्वमात्र निमित्ते, अत उत्पत्तिस्थितिग्रहणं न लयग्रहणम्। कदाचिदपि निमित्तकारणे न कार्यस्य लयस्सम्भवति। न च तावतैवोपादानत्वलाभादुत्पत्तिस्थितिग्रहणं व्यर्थमिति वाच्यम्। न ह्युपादानत्वं सकलधर्मितयोच्यते। किन्तु प्रकृतिविकार**न्यायेना**भेदप्रतिपत्त्यै। भवतु ब्रह्म जगदुपादानं, उत्पत्तिस्थित्योरन्य एवाधिष्ठाता स्यात्, कुम्भकार इव कुम्भोत्पत्तौ [1]राज्यवच्च राजावस्थानमिति। प्राशंसिकमुत्पत्तिस्थितिग्रहणमिति।

**स्वरूपलक्षणं** तु **"सत्यं ज्ञानमनन्तं ब्रह्म"** इति श्रुतिप्रतिपादितं सत्यादिस्वरूपत्वम्। ननु सत्यत्वादेः परमशिवस्वरूपाद्भेदेन परमशिवस्वरूपलक्षणत्वं, अभेदे वाक्यार्थसिद्धिः; गुणप्रधानभावापन्नपदार्थसंसर्गो हि सर्वत्र वाक्यार्थः; न चाभेदे तत्सम्भवति, इति चेन्न। यत्र पदार्थप्रमितिः तत्र संयोगो वाक्यार्थः। यत्र पदार्थप्रमितिपरः पदसन्दर्भः, तत्राखण्डपदार्थ एव वाक्यप्रतिपाद्यः। यथा– **"अस्मिन् ज्योतिर्मण्डले कश्चन्द्रः"** इति प्रश्ने **"प्रकृष्टप्रकाशश्चन्द्रः"** इति वाक्यमखण्डचन्द्रस्वरूपप्रतिपत्तिपरम्। न च प्रकृष्टप्रकाशवैशिष्ट्यं, वाक्यप्रतिपाद्यं प्रमेयं, मानान्तरसिद्धत्वात्। नापि चन्द्रत्ववैशिष्ट्यं, एकव्यक्तिकतया चन्द्रत्वजातेरभावात्। न च चन्द्रशब्दवाच्यत्ववैशिष्ट्यं तस्याप्यदृष्टत्वात्। स्वरूपमात्रप्रश्ने तस्याभिधानानौचित्यात्।

---

[1] राजवच्च (ब, ङ, ज).

**वस्तुतस्तु**– वाक्यानां सर्वत्र श्रूयमाणपदार्थसंसर्गपरत्व[1]नियमोत्सादनाय पदार्थमात्रनिष्ठत्वमपि क्वचिदस्तीति व्युत्पाद्यम्। तच्च लक्षणावाच्यम्। तत्र लोके पदानां विशिष्टशक्तित्वेन पदार्थः सर्वोऽपि सखण्ड एव, तथापि न दृष्टान्तासिद्धिः। पदार्थमात्रनिष्ठत्वे वाक्यस्य दृष्टान्तत्वसम्भवात्। एवं चापि सत्यादिपदान्येकब्रह्मपदार्थनिष्ठानि, ब्रह्मपदार्थश्च न विशिष्टः, अभेदश्रुतिसहस्रात्।

ननु विशिष्टवाचकैस्सत्यादिपदैः कथमखण्डबोधः? इति चेत् तल्लक्षणयेति गृहाण। उक्तञ्च **शिवाद्वैतप्रकाशे**– "**उपायस्तु वैशिष्टचं अखण्डचन्द्रप्रतिपत्तौ, तच्च विरोधाचन्द्रे न ज्ञायते, सत्यादिवाक्ये त्वनन्तादिपदैर्वैशिष्टचं बाध्यते**" इति "ऐतेन सेनावनादिलक्षणस्य नाखण्डार्थकत्वम्, सेनावनादीनां समुदायरूपत्वेनाखण्डार्थत्वाभावादिति न लक्षणामात्रस्याखण्डार्थत्वम्" इति निरस्तम्। तत्रापि पदार्थमात्रनिष्ठत्वस्याविवादात्।

ननु लक्षणयैकत्वपरत्वे सत्यादिवाक्यानामेकेनैव तादृगर्थबोधात्पदान्तरवैय्यर्थ्यं पर्यायत्वप्रसङ्गश्च इति चेन्न। विशिष्टशक्तानां शक्यार्थेऽपर्यायाणामेव लक्षणयैकार्थपरत्वस्यार्थवादानांप्राशस्त्यपरत्वस्येवाविरोधात्। न च वैय्यर्थ्यं, व्यावृत्तिभेदात्। सत्यपदेनासत्यव्यावृत्तिः, ज्ञानपदेन जडव्यावृत्तिः, अनन्तपदेन परिच्छिन्नव्यावृत्तिरिति। सर्वत्र व्यावृत्तिभेदात् न पौनरुक्त्यम्।

ननु किं व्यावृत्तयोऽपि ब्रह्मभिन्ना अभिन्ना वा? आद्ये ब्रह्मैक्यश्रुत्यनुपपत्तिः, द्वितीये तदेव पदान्तरवैय्यर्थ्यं इति चेन्न। एकस्मिन् प्रतियोग्यनुयोगिकारणव्यापकादिशब्दवदवैय्यर्थ्योपपत्तेः। न हि कारणतादिकं धर्मान्तरम्। एवं व्यावृत्तीनां ब्रह्माभेदेऽपि प्रतियोगिभेदादवैय्यर्थ्यम्। एतदभिप्रायेणैव **शिवाद्वैतप्रकाशे** सङ्ग्रहः–

**अविशिष्टमपर्यायानेकशब्दप्रकाशितम्।**
**एकं वेदान्तनिष्ठितमखण्डं प्रतिपेदिरे॥** इति

तस्मात्सत्यत्वादिकं स्वरूपलक्षणमिति सिद्धम्।

---

[1] नियमोत्सादनाय (घ, ज).

ननु "आद्यस्य ब्रह्मणः चतुर्मुखस्य। यतो जन्म तद्ब्रह्म" इति चेन्न। श्रुतियुक्त्यनुभवविरोधात्। चतुर्मुखस्याद्यत्वं नाम सर्वकार्यापेक्षया? चेतनापेक्षया वा? **नाद्यः**— "**आत्मन आकाशस्सम्भूतः**" इति भूतसृष्टेः प्रथममभिधानात्। न च हिरण्यगर्भजननान्तरमेव भूतसृष्टिरिति वाच्यम्। समष्टिलिङ्गशरीराभिमानिनो हिरण्यगर्भस्य भूतसृष्ट्यनन्तरं जननावश्यकत्वेन ततः पूर्वमुत्पत्तौ मानाभावात्। तथापि जनकत्वेऽस्य ज्ञेयब्रह्मलक्षणत्वासिद्धेः, [1]रामकृष्णादेरिव चतुर्मुखस्यैव जनकापेक्षया उत्कृष्टतापत्तेश्च। विष्णोरेव हिरण्यगर्भोत्पत्तिरिति विनिगमकाभावात्।

"**यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु**"॥ **अस्यार्थः**— महर्षिः— वेदकर्ता यः— सर्वज्ञत्वादिना, विश्वस्मात्— चिदचित्प्रपञ्चात्, अधिको, रुद्रः— परमशिवः, सर्वेषां देवानामिन्द्रादीनां, प्रथमं हिरण्यगर्भं— चतुर्मुखं, स्वसङ्कल्पेन प्रकृतिरूपात्मना जायमानं, सकलवेदोपदेशार्थमनुग्रहदृष्ट्या पश्यन्, स शिवः नः— अस्मानपि, शुभया— संसारपाशमोचिकया परमानन्दस्वरूपया वेदवेदान्तागमसिद्धया, स्मृत्या— दीक्षया, संयुनक्तु— संयोजयत्विति तात्पर्यम्।

"**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु**" इत्यादिना महेश्वरोत्पन्नत्वं हिरण्यगर्भस्यावगम्यते, तस्मात्तदर्थो न विधीयते।

ननु **एको ह वै नारायण आसीत्, न ब्रह्मा, नेशानो, नापो, नाग्नीषोमौ, नेमे द्यावापृथिवी**" इति महोपनिषदि नारायणस्यैव सर्वातिशायित्वस्य सृष्टेः प्राक् सत्ताया दर्शनात्; "**नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते**" इत्यादिना सर्वकारणत्वदर्शनात्; "**अथ कस्मादुच्यते ब्रह्मबृहन्तो ह्यस्मिन् गुणाः**" इत्यादिना तस्यैव पूर्णगुणत्वावगमात् "**तदेव ब्रह्म परमं कवीनां**" [2]"**अन्तस्समुद्रे मनसा चरन्तं**" इत्यादिना समुद्रशायित्वादिधर्माणां त्रिद्ढ्व्या तस्यैव मुख्यत्वात्, "**न सन्नचा सच्छिव**

---

[1] रामकृष्णाद्यवतारजनकस्य दशरथवासुदेवादेरिव तथात्वे सर्वज्ञत्वासिद्धेः (घ ङ).

[2] अजस्य नाभावध्येक (ख, घ, ज).

**एव केवलः "ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" "सदेव सोम्येदमग्र आसीत्"** इत्यादिवाक्यानां छागपशुन्यायेन सामान्यविशेषयोरेकत्वसिद्धिवत्तत्परत्वस्यैव युक्तत्वात् **"गच्छतीति गौः"** इति व्युत्पत्त्या नानार्थबोधकत्वेऽपि गवि रूढिवत् ब्रह्मशब्दस्यापि चतुर्मुखब्रह्मप्रणवब्राह्मणादिषु प्रवृत्तत्वेऽपि अनन्तकल्याणगुणविशिष्टे नारायण एव योगरूढत्वाच्च जगज्जन्मादिकारणत्वं तस्यैव समुचितं– इति **चेद्ब्रूमः।**

विष्णोर्जगत्कारणत्वेऽपि न तद्ब्रह्मलक्षणं, सूक्ष्मसृष्ट्यनन्तरभाविदेवादिसृष्टेः पूर्वं तज्जन्मश्रवणात्। विष्णोरुत्पत्तिः ऋग्वेदे श्रूयते **"विष्णुरित्था परमस्य विद्वान् जातो बृहन्नभिपाति तृतीयम्"** इति। अस्यार्थः— अस्य– महेश्वरस्य, इत्था– इत्थम्भावेन, विद्वान्– वेत्ता, बृहन्– विष्णुः, आदिविष्णुः जातस्सन् तृतीयं– कैलासं, अभिपाति– रक्षति। बृहच्छब्देन आदिविष्णुरेव व्यपदिश्यते। **"नमो विष्णवे बृहते करोमि" बृहत्ते विष्णो सुमतिं भजामहे"** इत्यादिषु दर्शनात्, अजातपरमेश्वरमेवमुपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभावात्, **"अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते। रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्"** इति **श्वेताश्वतरोपनिषदि** महेश्वरस्यैवाजातत्वश्रवणाच्च शम्भोरादिविष्णुजनकत्वं युक्तमेव। **"ऋग्वेदे सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोऽत विष्णोः"** इति। **"ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते"** इत्यादिषु शिवस्यैव सर्वकारणत्वं श्रूयते **"शिव एव केवलः"** इति वाक्यस्य संनातनसृष्टिपरत्वं, **"नारायणाद्ब्रह्मा जायते"** इति वाक्यस्यावान्तरसृष्टिपरत्वमिति। तदुक्तं **वायवीयसंहितायां**—

> त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात्।
> चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः॥
>
> पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु।
> ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहारणे पुनः॥
>
> तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः।
> तपसा तोषयित्वा स्वं पितरं चन्द्रशेखरम्॥

लब्धा सर्वात्मना तस्य प्रसादात्परमेष्ठिनः ।
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥

कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ।
विष्णुश्च भगवान् रुद्रं ब्रह्माणमसृजत्पुनः ।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥

"स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वराट्" इत्यादिश्रुतिशतेन मूर्तित्रयव्यतिरिक्तस्यैव ब्रह्मत्वोपदेशात्, नारायणाद्युपनिषत्सु मूर्तित्रयातीतत्वेन नारायणस्य व्यपदेशाभावात्, "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते, स आत्मा स विज्ञेयश्शिवोऽद्वैतः" "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" इत्यादिषु शिवस्यैव त्रिमूर्त्यतीतत्वेन व्यवस्थापनाच्च तस्यैव ब्रह्मत्वम् । आनुशासनिकेऽपि—

सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥
हृदयात्कालरुद्राख्यं ………… ॥

इत्युपदेशात्, रुद्रोत्पत्तेः कालरुद्रोत्पत्तिपरत्वम् ? अन्यथा "अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते" इति श्रुतिविरोधात् । न च विष्णोरुत्पत्तिरवतारपरा । "विष्णुरित्था" इति पूर्वोक्तश्रुतिविरोधात् ।

किञ्च— अथर्वशिखायां "अकारणं कारणं तु ध्येयः" इति तुशब्देन पूर्वोक्तवैलक्षण्यं प्रतिपाद्य शम्भोः परमकारणत्वोपदेशात्, "नारायण आसीत्" इति लङन्तेन अनद्यतनभूतभवनक्रियावाचिना भगवतो नारायणस्य प्रथमोत्पत्तिमात्रं प्रतिपाद्यते। "शक्तेरासीत्पराशरः" इत्यादिवत् छागपशुन्यायेनैव सदात्मादिशब्दानां नारायणादि-शब्दानामपि शिवपरत्वमेव । "सर्वो वै रुद्रः" इति श्रुतेः "स एव विष्णुस्स प्राणः स कालोऽग्निस्स चन्द्रमाः इति कैवल्योक्तेः, "अहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यथर्वशिरोवचनात्;

यानि नामानि गोविन्द तव लोके महान्ति वै।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

इति हरिवंशे कृष्णं प्रति शिववचनात्, जैमिनिभट्टभास्कराचार्यादिभिर्वैदिकै- श्चतुर्वेदतात्पर्यानुसारेण शिवस्यैव परब्रह्मत्वव्यवस्थापनात्। भगवता व्यासेनापि सूत- संहितायां सर्ववेदान्ततात्पर्येण शिवे परब्रह्मत्वनिर्देशात्[1]। "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" "सोमः पवते जनिता मतीनां" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "ईशानस्सर्वविद्यानामी- श्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्" "एको हि रुद्रो न द्वितीयाय तस्थुः य इमाँल्लोकानीशत ईशनीभिः" "येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्" "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" "निधनपतये नमः। निधनपतान्तिकाय नमः" "सर्वभूत- दमनाय नमो मनोन्मनाय नमः" इत्यादिश्रुतिकदम्बेन परमशिवस्यैव जगज्जन्मादि- हेतुत्वव्यपदेशाच्च; ब्रह्मलक्षणं जगज्जन्मादिकारणत्वं शिवस्य निष्प्रत्यूहम्।

स्वशक्त्यवच्छिन्नराजसगुणविशिष्टेन भवाभिधानेन सर्वजगन्निर्माणं, सात्त्विकगुणास्पद- मृडाभिधानेन पालनं, तामसावच्छिन्नहराभिधानेन सर्वसंहारं च कुर्वन् शिवः त्रिगुणात्मकप्रकृतेः स्वचिच्छक्तौ लयं कृत्वा स्वयं स्वभावचिच्छक्त्या एक एव भासते। तदुक्तं महिम्नस्तवेऽपि– विपुलरजसे विश्वोत्पत्तौ भवाय नमो नमः" इति। अत एव शैवागमे—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥

यद्भक्तस्थलमित्याहुस्तत्सर्वज्ञत्वमुच्यते।
यन्माहेश्वरं नाम सा तृप्तिर्मम शाङ्करि ॥

---

[1] ब्रह्मलक्षणं जगज्जन्मादिकारणत्वं शिवस्य निष्प्रत्यूहं। तथा (घ).

यत्प्रसादादिदं नाम तद्बोधो मे निरंकुशः।
यत्प्राणलिङ्गकं नाम तत्स्वातन्त्र्यमुदाहृतम्॥

यदस्ति शरणं नाम ह्यलुप्ता शक्तिरुच्यते।
यदैक्यस्थलमूर्ध्वस्थं ह्यनन्ताशक्तिरुच्यते॥

एतदङ्गस्थलं देवी गुह्याद्गुह्यतरं परम्। इति।

सर्वज्ञत्वादिधर्माणां शिवस्यैव सम्भवान्नेतरेषां जगज्जन्मादिकारणमिति सिद्धम्।

इति जन्माद्यधिकरणम्

---

॥ शास्त्रयोनित्वाधिकरणम् ॥

जिज्ञास्यब्रह्मणो लक्षणं प्रसाध्य प्रमाणमाह—

## शास्त्रयोनित्वात् ॥ ३ ॥

"**अस्य महतोभूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेद**" इत्यादिवाक्यमस्य सूत्रस्य **विषयः**। शास्त्र— ऋग्वेदादि। तस्य योनिः— कारणं शिवः। "**शिवोमावेव पितरौ**" इति श्रुतेः। अत एव निगमागमानां प्रामाण्यम्। अतो जगज्जन्मादिहेतुः शिव एव। अत्र **श्रौतप्रतिज्ञासङ्गतिः**। "**शिवोमावेव पितरौ**" इत्यादौ वेदानां परमेश्वरकारणत्वं "**वाचा विरूपनित्यया**" इत्यादौ नित्यत्वं च दर्शितम्।

परशिवस्य ब्रह्मणो निगमागमकारणत्वं युक्तं न वेति **सन्दिह्यते**—

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या[1] यतस्सर्वाः प्रवृत्तयः॥**

इत्यादिस्मृतौ वेदस्य नित्यत्वश्रवणात्, परमेश्वरजन्यत्वे पौरुषेयत्वेनाप्रामाण्यानित्यत्वप्रसङ्गाच्च। तस्मात् परमेश्वरवद्वेदानामजन्यत्वम्, त्रैकालिकाबाध्यत्वं चेति **प्राप्ते** ब्रूमः—

वेदानां स्वयम्भवत्वे "**शिवोमावेव पितरौ**" इति श्रुतिविरोधात्, **सामशाखागतचरणव्यूहे** तेषां शरीरगोत्रवर्णादिनिरूपणात्, पूर्वपूर्वस्योत्तरोत्तरज्ञानविषयहेतुत्वात्, तेषां शब्दात्मकगुणत्वेन[2] व्योमकारणत्वात्, "**आत्मन आकाशस्सम्भूतः**" इत्यादिना आकाशादिपञ्चभूतानां परमेश्वरकारणत्वनिर्देशाच्च कथं वेदानां स्वयम्भवत्वम्? तथा च स्मृतिः—

---

[1] नित्या (ख, घ, च, ज). [2] तेषां शब्दगुणत्वेन (ख, घ, ज).

अष्टादशानामेतासां विद्यानां [1]ब्रह्मवर्त्मनाम् ।
आदिकर्ता शिवस्साक्षाच्छूलपाणिरिति श्रुतिः ॥

सद्योजातेन ऋग्वेदं वामदेवेन याजुषम् ।
अघोरेण तथा साम पुरुषेण त्वथर्वणम् ॥

ईशानेन मुखेनैव कामिकाद्यागमांस्तथा ।
जनयामास विश्वेशः सर्वसिद्धिप्रदायकः ॥

विमर्शरूपिणी शक्तिः शिवस्य परमात्मनः ।
निगमागमरूपा स्यात् सर्वतत्त्वप्रकाशिनी ॥

तस्माद्वेदागमार्थेषु यः कुर्याद्भेदभावनाम् ।
स सहस्रकुलं घोरे नरके पतति ध्रुवम् ॥

इति परमेश्वरस्य निगमागमादिसर्वविद्याकर्तृत्वप्रतिपादनात्, सृष्टेः प्राक् स्वात्मविलीनभूतस्वशक्त्यात्मकवेदागमादीन् निश्वसितवदयत्नेन [2]पूर्वपूर्वानुपूर्वीवर्णरूपरचनया बहिराविष्करोति । तस्मान्निगमागमादीनामपौरुषेयत्वमीश्वरकारणकत्वं[3] च युक्तमेव । जन्यत्वाजन्यत्वविधायकश्रुतीनामतो न विरोधः ।

ननु **"न सन्नचासच्छिव एव केवलः" "नान्यत् किञ्चनमिषत्" "नेह नानास्ति किञ्चन" "न तु तद्द्वितीयमस्ति"** इत्यादिश्रुतिषु द्वितीयवस्तुनिषेधव्यपदेशात्कथं वेदानां नित्यत्वं? इति चेन्न । **"सर्वं खल्विदं ब्रह्म" "सर्वो वै रुद्रः"** इत्यादिश्रुतिषु चराचरप्रपञ्चस्य ब्रह्मोपादानत्वेन ब्रह्मत्वव्यपदेशात् पूर्वोक्तश्रुतीनां न जगन्मिथ्यात्वपरत्वम् । सृष्टेः प्रागपि सङ्कुचितरूपेण निगमागमात्मकविमर्शरूपपराशक्तेबीजाङ्कुरवत्परमेश्वरे स्थितत्वात्, शक्तिशक्तिमतोरभेदाच्च । **"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"** इति श्रुत्या परमेश्वरस्य स्वाभाविकत्वेन शक्तेरुपदेशात्, जगन्मिथ्यात्वे श्रुत्यभावात्तदयुक्तम् ।

---

[1] भिन्न (ख). [2] पूर्वानुपूर्ववर्णरूपरचनया (ख, घ). [3] ईश्वरकार्यत्वं च(ख, घ ज).

ननु– शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वेन शब्दात्मकस्य वेदस्य कथं नित्यत्वं इति चेन्न। "कारणनित्यत्वे कार्यनित्यत्वं" इति न्यायेन कारणरूपसर्ववेदात्मकविमर्शशक्तेर्नित्यत्वात्, कार्यरूपवेदस्यापि नित्यत्वं निष्प्रत्यूहमेव।

किञ्च– नित्यमुक्तबुद्धशुद्धस्वभावस्य स्वतःप्रमाणभूतस्य परमाप्तस्य महेश्वरस्य वचनं प्रमाणमेव। "यत् पौरुषेयं तदप्रमाणं" इति नियमस्तु रागद्वेषादिपाशबद्धमानुषविषयक एव। किञ्च– वेदा अपि शाम्भवदीक्षां लब्ध्वा शिवप्रसादमहिम्ना परमेश्वरानन्तकल्याणगुणस्तुतिपाठककवय इव तन्महिमातिशयं विधिलक्षणमुखेन स्तुवन्ति[1] "जगतां पतये नमः" "नमो हिरण्यबाहवे" इत्यादिना स्तुतिं च कुर्वन्ति। तस्मात् परमेश्वरविमर्शात्मकशक्तितया वेदागमानां परशिवप्रामाण्ये मुख्यत्वमुपपद्यते।

ननु– "षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत। ऋचो यजूंषि सामानि" इत्यादिना चतुर्मुखादेरपि वेदकर्तृत्वावगमात्कथं महेश्वरस्यैव तत्कर्तृत्वम्[2]? इति चेन्न। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतौ हिरण्यगर्भोत्पत्तेः प्रागेव वेदसद्भावावगमात्, हिरण्यगर्भाय सर्ववेदोपदेशकत्वं परमेश्वरस्यैवेति दर्शनाच्च स एव सर्वाधिक इत्युच्यते। तथा च श्रुतिः–

"यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु" इत्यादिना चिदचित्प्रपञ्चाधिकत्वं हिरण्यगर्भोत्पादकत्वं च परमेश्वरस्यैव निर्दिशति।

---

[1] किञ्च वेदानामपि भस्मधारणं श्रूयते। त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं, यद्देवानां त्रियायुषं तन्मेऽस्तु त्रियायुषम्" त्रियायुषपदस्य तिर्यक्त्रिपुण्ड्रपरत्वे श्वेताश्वतरोपनिषदि श्रूयते। "मानस्तोके" इति मन्त्रेण मन्त्रितं भस्म धारयेत्। "ऊर्ध्वपुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च। अधः पुण्ड्रमृचः साक्षात् तस्मात् पुण्ड्रं त्रियायुषम्" इति। तानि वा एतानि रुद्राक्षाणि यत्त्रयोवेदा धारयन्ति। तस्माद्देवा धारयन्ति। तस्मात्तानि धारयन् गच्छन् तिष्ठन् खादन् स्वपन् उन्मिषन्निमिषन् हसन् सर्वाण्येनांसि तरति। "रुद्रो भूत्वा रुद्रो भवति" इति बोधायनशाखायां रुद्राक्षधारणं दृश्यते। "अयं मे हस्तो भगवान्" इत्यादिना ऋग्वेदे "या ते रुद्र शिवातनूरघोरापापकाशिनी" इत्यादिना वेदपुरुषाणां शिवलिङ्गधारणं दर्शितम्। किंच....... (ख, घ, छ, ज). [2] महेश्वरस्येति चेन्न (ख, घ, ज).

ननु— सर्ववेदवेदान्तोक्तसकलपदार्थाभिज्ञत्वरूपं हि सर्वज्ञत्वम्[1] उपमन्युदधीचि-गौतमदूर्वासादीनामपि तद्दर्शनात्, कथं परमेश्वरस्यैकस्यैव? इति चेन्न— परमेश्वरोपासनावशात् तत्कृपालब्धयत्किञ्चित्सर्वज्ञत्वस्य तेषां सत्वान्न विरोधः। खद्योतप्रभाकरयोस्तेजस्त्वेनैकत्वेऽपि प्रकाशवैलक्षण्यवत् सर्ववस्त्ववभासकश्रुतीनां परमेश्वरकर्तृकतया तस्यैव सर्वाधिकज्ञानमुपपद्यते। शास्त्रप्रवर्तकापेक्षया शास्त्रप्रणेतॄणां विशेषज्ञानदर्शनात्। किञ्च— सकलजगद्व्यापकत्वेन, सर्वान्तर्यामित्वेन सर्वज्ञत्वं नान्येषां सम्भवति। सर्वज्ञत्वादिषड्विधधर्माणामनन्यसाधारणत्वात्।

ननु— पूर्वसूत्रेणैव जगज्जन्मादिकारणत्वेन शास्त्रकारणत्वसर्वज्ञत्वादीनामपि सिद्धत्वात् किमस्य सूत्रस्य प्रयोजनम्? इति चेन्न। पूर्वसूत्रेण **"अङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत्,"** इत्यनुमानेन ब्रह्मप्रामाण्यद्योतनात्, तच्छङ्कानिरासार्थमेतत्सूत्रप्रवृत्तेस्सम्भवात् भगवता व्यासेन **"शास्त्रयोनित्वात्"** [2]इति सूत्रं निर्दिष्टम्।

**शास्त्र**— निगमागमादिकं, **योनिः**— प्रमाणं, यस्य तथात्वात्। न च पुनरधिकरणान्तरनिरूपणे वाक्यभेदादिदोष इति वाच्यम्। सूत्रस्य सूचनात्मकत्वेन श्लोककाव्यवत् वाक्यभेदादिदोषाभावात् पुनरधिकरणान्तरं युक्तम्। **"तं त्वौपनिषदं पुरुषं पृच्छामि" "नावेदविन्मनुते तं बृहन्तं" "नैषा तर्केण मतिरापनेया" "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" "सत्यं ज्ञानमनन्तं ब्रह्म"** इत्यादिवाक्यान्यस्य **विषयः**।

**"न चक्षुषा गृह्यते नापि वाचा "तंत्वौपनिषदं पुरुषं पृच्छामि" "यतो वाचो निवर्तन्ते"** इति विषयत्वाविषयत्वविधायकश्रुतिदर्शनाद्ब्रह्मणो वेदान्तवेद्यत्वं युक्तं न वेति **संशयः**।

**पूर्वपक्षस्तु**— न ब्रह्मणो वेदान्तवेद्यत्वं **"न चक्षुषा गृह्यते नापि वाचा" "यन्मनसा न मनुते येनाहुर्मनो मतं" "यतो वाचो निवर्तन्ते।** अप्राप्य

---

[1] सर्वज्ञत्वं हि तदुपमन्यु-दधीचि-गौतम-दूर्वास-रेणुक-दारुक-शंखुकर्ण-गोकर्णादीनामपि दर्शनात् (ख, घ, ज). [2] इत्यधिकरणं निर्दिष्टम् (ख).

**मनसा सह । आनन्दं ब्रह्मणो विद्वान् । "न बिभेति कुतश्चनेति"** इत्यादिश्रुतिदर्शनात् । प्रपञ्चः सकर्तृकः कार्यत्वात् घटवदित्यनुमानेन सर्वज्ञत्वादिषड्विधधर्मावच्छिन्नः परमेश्वरस्साध्यते; तस्य प्रमाणान्तरविषयत्वदर्शनान्न वेदान्तशास्त्रैकवेद्यं परं ब्रह्म इति प्राप्ते **ब्रूमः** ।

**सिद्धान्तस्तु**— जगज्जन्मादिकारणं ब्रह्म उपनिषच्छास्त्रप्रतिपाद्यमेव । **"नावेदविन्मनुते तं बृहन्तं" "नैषा तर्केण मतिरापनेया"** इत्यादिना ब्रह्मणो मानान्तरनिषेधदर्शनात्, ***"तं त्वौपनिषदं पुरुषं पृच्छामि"** इति श्रुत्या उपनिषन्मात्रवेद्यत्वशासनाच्च वेदान्तशास्त्रानुकूलत्वेन अनुमानस्य प्रामाण्यं* न तु स्वातन्त्र्येण रथमण्टपगोपुरप्रासादादिनिर्माणे नानाकर्तृकत्वदर्शनात् न चानुमानेन कर्त्रेकत्वसिद्धिः । ब्रह्मनिष्ठसत्यसङ्कल्पसत्यज्ञानानन्दादि स्वरूपधर्मज्ञानासम्भवप्रसङ्गात्, जगदुभयकारणत्वासम्भवाच्च ब्रह्मणो वेदान्तवेद्यत्वं निष्प्रत्यूहम् । **"यतो वाचो निवर्तन्ते"** इत्यादिवाक्यानां तन्माहात्म्यज्ञापनार्थं विवक्षितम् । अन्यथा **"ब्रह्मविदाप्नोति परम्"** इत्यादिवाक्यानां वैयर्थ्यप्रसङ्गः ।

**ननु**—

अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकल्प्यते ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥

इति मात्स्ये शिवपुराणानां तामसत्वप्रतिपादनात्, **"सत्त्वात्संजायते ज्ञानं"** इत्यारभ्य **"बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ सात्त्विकी"** इत्यन्तेन सात्त्विकबुद्धेरेव मुक्तिहेतुत्वदर्शनात् ।

अग्नेश्शिवस्य माहात्म्यं तामसं मोहकारकम् ।
तयोरुपासनादेव प्रत्यवायो भवेद्ध्रुवम् ॥

---

* एतच्चिन्हान्तर्गतो भागः 'ख' कोशे न दृश्यते (सं)

इति **पाञ्चरात्रागम**वचनदर्शनाच्च शिवतत्त्वप्रतिपादकपुराणानां तामसत्वं सिद्धम् । अतस्तत्पुराणानामप्रामाण्यात्, तत्प्रतिपाद्यस्य परमेश्वरस्य वेदान्तवेद्यत्वं कथमुपपद्यते? इति चेन्न । शिवपुराणानां तामसत्वे प्रात्यक्षिकश्रुत्यभावात्, कल्पितप्रच्छन्नबौद्धवाक्यानां प्रामाण्याभावाच्च । **किञ्च**– तमोगुणविशिष्टदेवताविषयकत्वेन, तमोगुणविशिष्ट**व्यास**कर्तृकत्वेन, तमोगुणावसरजन्यत्वेन वा शिवपुराणानां तामसत्वम्? **नाद्यः**– ऋगादिसर्ववेदवेदान्तानामपि रुद्राग्निप्रतिपादकत्वेन तेषामपि तामसत्वापत्त्या अप्रामाण्यप्रसक्तिसम्भवात् बौद्धागमत्वप्रसङ्गस्स्यात् । **न द्वितीयः**– व्यासप्रोक्तविष्णुपुराणादीनामपि तामसत्वं स्यात् । **न तृतीयः**– सात्त्विकेन विष्णुपुराणकल्पने तामसेन शिवपुराणकल्पने च मानाभावात्; सर्ववेदवेदान्तसारस्यैव पुराणरूपेण **व्यासेन** प्रपञ्चितत्वाच्च । **ननु**

**मात्स्ये–**

> मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।
> आग्नेयं च षडेतानि तामसानि निबोध मे ॥
>
> अग्नेश्शिवस्य माहात्म्यं तामसं मोहकारकम् इति ।
>
> यत्र यत्र जगन्नाथं मुकुन्दं विष्णुमव्ययम् ।
> वदन्ति तानि शास्त्राणि सात्त्विकानि मतानि वै ॥
>
> यत्र यत्र ह्युमानाथं शङ्करं भैरवं यमं ।
> दुर्गां गणपतिं कालं वदन्ति यानि तानि च[1] ।
> तामसानि मुनिश्रेष्ठ विविधानि फलानि वै[2] ॥
>
> पञ्च पूजांश्च देवांश्च तथा देवीं सरस्वतीम् ।
> वदन्ति यानि शास्त्राणि राजसानि मतानि वै ॥

इत्यादि**मात्स्य-हारीत-पाञ्चरात्रागमा**दिवचनेषु शिवपुराणानां तामसत्वव्यपदेशात् कथं तत्प्रतिपाद्यस्य परमेश्वरस्य परब्रह्मत्वम्? संहारस्य रुद्रधर्मत्वेन तामसत्वं तस्य

---

[1] यानि तानि वदन्ति च (ख). [2] फलानि विविधानि वै (ख).

निष्प्रत्यूहमिति चेन्न। "**अग्नेश्शिवस्य माहात्म्यं तामसं मोहकारकं**"। इत्यादि-वचनानां **मात्स्यपुराणोक्तत्वेन**, मत्स्यपुराणस्य तामसपुराणप्रकरणपठितत्वेन, तद्वाक्यानाम-प्रामाण्यात्। "**ब्रह्मेन्द्रसूर्यचन्द्राग्निपरा राजससम्भवाः**" इत्यादिना पाञ्चरात्रागमे अग्नेः राजसत्वनिरूपणात्, मात्स्यपाञ्चरात्रागमवचनानां परस्परविरोधदर्शनाच्च द्वयोरप्यप्रामाण्यं सिद्धम्।

किञ्च– ब्राह्मणानां "**अग्निरग्रे प्रथमो देवतानां**" "**यावज्जीवमग्निहोत्रं जुहोति**" "**अर्चत प्रार्चत**" "**त्र्यम्बकं यजामहे** "**अन्तरिच्छन्ति तं जने**" "**रुद्रं परो मनीषया गृभ्णन्ती जिह्वया**" "**यो वै स्वां देवतामतियजते**" इत्यादिना रुद्रवैश्वानरोपासनमेव कर्तव्यमिति चोदनादर्शनात्, अकरणे प्रत्यवायदर्शनात् "**त्वं देवानां ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपतिः**" इत्यादिना स्वदेवतोपास-नातिक्रमणे नरकप्राप्त्युपदेशात्, रुद्रवैश्वानरोपासनापरित्यागे वर्णचतुष्टयातीतत्वप्रसङ्गाच्च। एतत्कल्पितवाक्यानां वेदविरुद्धत्वेन वेदवादिभिस्तानि नाङ्गीकरणीयानि। "**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः**" "**अत्ता चराचरग्रहणात्**" इत्यादिश्रुतिसूत्रेषु संहारस्य परब्रह्मधर्मत्वेन निर्देशात्, तदनङ्गीकारे विष्णोरब्रह्मत्वप्रसङ्गाच्च। "**रुद्रो वा एष यदग्निः तस्यैते तनुवौ घोराऽन्या शिवान्या**" "**अघोरेभ्योऽथ घोरेभ्यः**" इत्यादिना तस्यैवाघोरमुखेन सृष्टिस्थितिकर्तृत्वस्य घोरमुखेन संहारकर्तृत्वस्य चोपदेशात् तस्यैव जगज्ज-न्मादिकारणत्वेन परब्रह्मत्वं सिद्धम्।

किञ्च– "**या ते रुद्र शिवा तनूरघोराऽपापकाशिनी**" इत्यादिना परमेश्वरस्य शुद्धसात्त्विकशिवशरीरप्रार्थनादर्शनात्, "**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते**" "**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं**" इत्यादिना शिवस्यैव परमशान्तत्वोपदेशाच्च केवलतामसत्वप्रतिपादकवाक्यानां कालरुद्रपरत्वमेव। कालरुद्रस्यापि शिवांशत्वेन विष्णोरधिकत्वं वेदशास्त्रेषु प्रसिद्धम्। तथा च श्रुतिः–

**परात्परतरो ब्रह्म यत्परात्परतो हरिः।**
**तत्परात्परतोऽधीशस्तन्मे मनश्शिवसङ्कल्पमस्तु॥** इति।

"**अजामेकां लोहितशुक्लकृष्णां बह्वीं**" इत्यादिश्रुतौ परमेश्वरप्राकृतशक्तेर्गुण-त्रयात्मकत्वं निर्दिष्टम्। अतस्सत्त्वगुणावलम्बनेन नारायणस्य ब्रह्मत्वे अयुक्तत्वप्रसङ्गात्

अप्राकृतब्रह्मत्वविधायकसर्व वैदिकशास्त्रभङ्गप्रसङ्गः स्यात्। "**शुक्लध्यानपरायणः**" इति जाबालोपनिषदि शुक्लशरीररुद्रध्यानस्यैव मुमुक्षूणां विधेयत्वेन दर्शनात्। **सूतसंहितायां सूतगीतासु**–

अस्ति रुद्रस्य विप्रेन्द्रा अन्तस्सत्वं बहिस्तमः।
विष्णोरन्तस्तमस्सत्वं बहिरस्ति रजोगुणः॥

अन्तर्बहिश्च विप्रेन्द्रा अस्ति तस्य प्रजापतेः।
रजसा तमसाऽऽक्रान्तौ ब्रह्मनारायणौ खलु॥ ३–४१॥

**शिवधर्मशास्त्रे**–

अन्तस्सत्वगुणोपेतो बहिस्तामससंयुतः।
शुद्धसात्विक इत्युक्तश्शङ्करो लोकशङ्करः॥

अन्तस्तामससंयुक्तो बहिस्सत्त्वगुणान्वितः।
शुद्धतामस इत्युक्तो विष्णुस्साक्षाच्छ्रियःपतिः॥

इति निर्देशात्तस्यैव ब्रह्मविष्ण्वादेरप्यधिकत्वम्।

**शङ्करसंहितायां शिवरहस्यखण्डे**–

दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः।
श्रद्धेयानि द्विजवरैस्तेषां धर्मास्तु तत्र यत्॥

सत्त्वं शुद्धं समादिष्टं सुखज्ञानास्पदं तु यत्।
विद्योपदेष्टा योगिभ्यः शुद्धः स्फटिकसन्निभः॥

न निद्राति शिवः क्वापि ब्राह्मणाधिपतिः शिवः।
ब्रुवन्त्येवं पुराणानि ब्राह्मणानां कथाः शुभाः॥

*दश शैवपुराणानि हिंसादोषपराणि च ।
वैष्णवानि च चत्वारि तामसानि मुनीश्वराः ॥
क्षत्रियाणां श्रुता धर्मास्तेषु तद्देवता हरिः ।
तमः कृष्ण उदासीनः कूटकर्मविशारदः ॥
निद्रालस्यप्रमादाद्यास्तद्गुणाः परिकीर्तिताः ।
कृष्णो विष्णुः स्मृतः शेषशायी भक्तविमोहकः ।
ब्राह्मे तु राजसे वैश्यधर्मैस्सर्वत्र सम्मते ।
दुःखास्पदं रक्तवर्णं चञ्चलं च रजः स्मृतम् ॥
गुणत्रयसमायुक्तमाग्नेयं सौरमेव च ।
तस्माच्छैवानि विप्राणां पुराणानि हितानि वै ॥

इति शिवपुराणानामेव सात्त्विकत्वोक्तेः ।

किञ्च– शिवपुराणानां कल्पान्तरप्रसक्तिरिति चेत् तदसङ्गतमेव । **मात्स्ये–**

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा कृतम् ।
अनन्तरन्तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।
पुराणमेकमेवासीच्छतकोटिप्रविस्तरम् ॥

इत्यादिना **ब्रह्मकृतब्राह्मपुराणमेव** द्वापरान्ते **वेदव्यासेन** सङ्क्षोच्य चतुर्लक्षात्मना संक्षेपितमिति प्रतिपादनात् ।

**धर्मसंहितायाम्–**

ब्राह्ममेव कृते चाद्ये पुराणं श्रुतिसम्मतम् ।
अष्टादशविधं तस्य कृतं कोटिप्रभेदतः ॥

---

* "दश शैवपुराणानि हिंसादोषपराणि च" इत्ययं श्लोकार्धः ७६ तमे पुटे "शङ्करसंहितायां शिवरहस्यखण्डे" इत्यनन्तरं विद्यमानस्य "दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः" इत्येतच्छ्लोकार्धस्य विरुद्धार्थप्रतिपादको दृश्यते । अयं चांशः चिन्तनीयः ।

इति दर्शनाच्च। अत एव शैवपुराणानां कल्पान्तरविषयत्वमित्यसङ्गतम्।

ननु नारायणस्यैव मत्स्यकूर्मवराहादिरूपेण सकलभूभारनिवर्तकत्वदर्शनात्परमसात्त्विकत्वं तस्यैवोपपन्नमिति चेन्न। कौर्मे—

एकादश्यां तु मध्याह्ने माघमासे महानटः।
सर्वलोकहितार्थाय विषं भुक्त्वा ततः शिवः॥

शिवयोगेन तद्रात्रौ स्थित्वा चन्द्रकलाधरः।
परिवेष्टितविष्ण्वादीन् दृष्ट्वा तत्पादसेवकान्॥

उपोषितमहाभक्तान् द्वादश्यां नीललोहितः।
समुद्रमंथनोद्भूतसुधापानार्थमादरात्।
आज्ञां चक्रे महादेवस्सर्वलोकभयावहः॥

इत्यादिना परमेश्वरस्य अनन्यसाधारणकालकूटभक्षणान्धकासुरजलन्धरासुरत्रिपुरासुरव्याघ्रासुरगजासुरशूरपद्मासुरादिमहादानवसंहारपूर्वकभूभारनिवर्तकत्वदर्शनात् [1] अत एव पुराणागमेषु शैववैष्णवानामेकादशीव्रतावश्यकत्वं दृश्यते। तदुक्तं शिवधर्मशास्त्रे—

शैववैष्णवयोर्ग्राह्यमेकादश्यामुपोषणम्।
नन्दीशविष्णुप्रमुखा यतो व्रतमथाचरन्॥

शेषं प्रधानं स्मार्तानामेकादश्यामुपोषणम्।
सायं प्रधानं शैवानां वेदमार्गैकवर्तिनाम्॥ इति।

तथा सिद्धान्तागमे—

प्रदोषव्यापिनी शैवी सम्यगेकादशी स्मृता।
नान्या शैवैः परिग्राह्या शैवशास्त्रैकशासनात्॥ इति।

---

[1] एकादशी निरूपणं (ख, ध, ज).

**वीरागमे च–**

**सर्वेषां वीरशैवानां श्रौतस्मार्तानुवर्तिनाम् ।**
**प्रदोषव्यापिनी ग्राह्या सम्यगेकादशी शिवे ॥**

**शैवव्रतानां सर्वेषां सायं प्राधान्यमेव हि ।**
**अन्यथाचरणे देवि प्रत्यवायो महान् भवेत् ॥** इति ।

किञ्च– पद्मपुराणादीनां विष्णुप्रधानत्वेऽपि तत्रापि शिवमाहात्म्यकथनात्तेषामपि तामसत्वं किं न स्यात् । **"त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन"** इति गीतावाक्येन वेदानामपि त्रिगुणात्मकत्वदर्शनान्मूर्तित्रयप्रतिपादकश्रुतीनां गुणत्रयात्मकत्वमुपपन्नमिति चेन्न । **"वाचा विरूपनित्यया"** इति श्रुतिदर्शनान्नित्यरूपस्य वेदस्य गुणत्रयात्मकत्वमयुक्तं श्रौतविधेर्बलवत्त्वात् । **"शिवं प्रशान्तममृतं ब्रह्मयोनिं"** इत्यादिना शिवस्य वेदेषु परमसात्त्विकत्वोपदेशात् । वेदानां गुणत्रयात्मकत्वकथनमधिकारिभेदेन स्थूलसूक्ष्मकारणात्मकपरमेश्वरोपासनापरत्वेन सांख्ययोगशास्त्रेषु विवक्षितत्वादन्यार्थो न युक्तः ।

किञ्च– किमिदं तामसत्वं, (१) तमोगुणजन्यत्वं ? (२) स्वेतरगुणासंसृष्टतमोगुणजन्यत्वं वा ? (३) इतरानभिभूततमोगुणजन्यत्वं ? (४) तमोगुणजन्यत्वविशिष्टत्वं ? (५) तमोविशिष्टकर्तृकत्वं ? (६) *तमोगुणविशिष्टप्रतिपाद्यत्वं ? (७) तमोगुणप्रधानप्रतिपादकत्वं ? अन्यद्वा ?

**नाद्यः–** गुणत्रयातीतपरमेश्वरनिश्वसितरूपाणां वेदानां अनित्यत्वमोहकत्वपौरुषेयत्वादिप्रसङ्गात् । सर्वचिदचित्प्रपञ्चस्य गुणत्रयात्मकप्रधानजन्यत्वेन विष्णुपुराणादीनामपि तामसत्वप्रसङ्गात् । न च तमोमात्रजन्यत्वं । एकस्य अनारम्भकत्वेनासिद्धेः ।

**न द्वितीयः–** सर्वस्य गुणस्य गुणान्तरयुक्तस्यैव जनकत्वेन इतरासंसृष्टतमोगुणजन्यत्वस्याप्रसिद्धत्वात् ।

---

* अन्त्यद्वयं 'ख' कोशे न दृश्यते । (सं).

**न तृतीयः**— **"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः"** इत्यादिश्रुतिसिद्धस्य शिवस्य नित्यशुद्धत्वेन प्रकृतेरसिद्धेः।

**न चतुर्थः**—

**अष्टादशपुराणानां कर्ता सत्यवतीसुतः।**
**आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः॥**
**पुराणसंहितां चक्रे पुराणार्थविशारदः।**

इति विष्णुपुराणवचनाद्व्यासकृतानां सर्वेषां पुराणानामपि तामसत्वाभावात्, अन्यथा त्वदभिमतानामपि तामसत्वप्रसङ्गात्, तुल्यन्यायत्वाच्च।

**न पञ्चमः**— रुद्रस्य संहारकर्तृत्वेन संहारस्य तमोगुणकार्यत्वेन सर्वशास्त्रप्रसिद्धत्वादिति चेन्नैवम्। विष्णोः [1] संहारकर्तृत्वाभावेनानीश्वरत्वप्रसङ्गात्, **"या ते रुद्र शिवा तनूः"** इति श्रुत्या शिवशरीरस्य तामसत्वनिषेधाच्च। **"त्रैगुण्यविषया वेदाः"** इत्यनेन त्रिगुणात्मकप्रवृत्तिधर्मप्रतिपादकत्वेन गुणवैशिष्ट्यं न युक्तम्।

ननु— "तमोगुणप्रचुरेषु कल्पेषु तद्विशिष्टत्वेन ब्रह्मकृतपुराणानि तामसानि, तत्प्रतिपाद्यत्वाच्छिवस्यापि तामसत्वं" इति चेन्न। तामसेषु कल्पेषु चतुर्मुखकृतानां पुराणानामस्मिन् वर्तमाने श्वेतवराहकल्पे अनुवर्तमानत्वे प्रमाणाभावात्, अस्मिन्नपि कल्पे अष्टाविंशतितमेन **व्यासेन** इदानीं पुराणकरणस्य श्रूयमाणत्वाच्च। तदुक्तं **विष्णुपुराणे**—

**वैवस्वतान्तरे तस्मिन् द्वापरेषु पुनः पुनः।**
**[2] वेदव्यासोऽवतीर्णोऽभूदष्टाविंशतिसत्तमः॥** इति।

---

[1] न च संहारं प्रति रुद्रादिशरीराद्याकारेण कारणत्वसंभवे तारतम्यकल्पनायां मानाभावेन तस्यापि तामसत्वप्रसङ्गात्। (ख, घ, ज). [2] "वेदव्यासव्यतीतायामष्टाविंशति सत्तमः" (ख. घ, ज).

वर्तमानस्य पराशरात्मजस्य व्यासस्य प्रवर्तमानसर्वपुराणकर्तृत्वं च तत्रैव श्रुतं- **"पुराणसंहितां चक्रे पुराणार्थविशारदः"** इति ।

तान्यष्टादशपुराणानि तत्रैव गमयित्वा उत्पत्तिक्रमापेक्षया क्रमः उक्तः— **"एतद्वैष्णवसंज्ञं वै पाद्मस्य समनन्तरं"** इति । एवं समस्ता अपि वर्तमानकल्पस्था रामकृष्णाद्यवतारा रघुवंशादिसम्भवत्वात्, दक्षाध्वरध्वंसादीनामेतत्कल्पमध्यस्थत्वात्, एतत्कल्पस्थशैववैष्णवप्रतिपादकानामेतत्कल्पजातेनाष्टाविंशतितमेन वेदव्यासेन कृतानां पुराणानां परस्परं बलाबलचिन्तायां बहुकालव्यवहितानां तामसादिब्रह्मकल्पनोपन्यासो निरर्थकः ।

ननु— "पुराणकाराणां पुराणकर्तृत्वं ब्रह्मणस्सकाशात्पुरुषार्थानधिगम्यैव" इत्युक्तं सत्यम् । तत्रातीतकल्पस्थाः पुराणार्था ब्रह्मणा पुराणकारैश्च तथैव प्रतिपाद्यन्ते यथा पद्मकल्पे मार्कण्डेयस्य परमेश्वरानुग्रहः । ये तु वर्तमानकल्पस्थाः पुराणार्था रामकृष्णवराहावतारप्रभृतयः तथा कालकूटभक्षणदक्षाध्वरध्वंसादयः तेऽपि एतत्कल्पस्थत्वेनैव ब्रह्मणोपदिश्यन्ते; पुराणकारैरपि तथैव प्रतिपाद्यन्ते । तेषां परस्परविरोधे स्वाभिमतपुराणाधिक्यनिर्णयहेतुत्वं निरर्थकम् । बहुकालव्यवहितानामतीतकल्पानां सात्विकतामसत्वाद्युपन्यासः कुत्र केन सङ्गत इति न जानीमः ।

**नापि षष्ठः**— रुद्रसम्बन्धिनो घोरशरीरस्य संहारकत्वेन तमोविशिष्टत्वेऽपि तच्छरीरिणः परमेश्वरस्य तमोऽतीतत्वात् । तथा च **कैवल्ये**—

**"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्"** इति ।

यद्यपि देवदत्तादौ तमोगुणप्रधानशरीरादिविशिष्टे तामसत्वव्यवहारो दृष्टः; तथापि तत्र तन्मात्रविशिष्टत्वेन तथा व्यवहारः । प्रकृते तु परमेश्वरसम्बन्धिनां तमोऽतीतानामलौकिकप्रकाशस्वरूपाणामनेकेषां विग्रहाणां प्रमाणसिद्धत्वाच्च तथा । **स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः"** इत्यत्र शुक्रेभिरिति शुक्लशब्देन सत्त्वमयत्वमुच्यते **"लोहितशुक्लकृष्णां"** इत्यादिवत् । अन्यथा विष्णवाधिक्यवादिनां मते तमोविशिष्टविष्णुप्रतिपादकत्वेन वैष्णवादिपुराणानामपि तामसत्वप्रसङ्गः । कथमन्यथा विष्णो-

भूभारहरणाय यादवकौरवदैत्यादिसंहारकत्वम्? कथं वा दैत्यव्यामोहनाय महामोहाख्य-पुरुषरूपेण दैत्यव्यामोहकबुद्ध-जिनादिशास्त्रप्रणेतृत्वम्? तदुक्तं **विष्णुपुराणे**–

> **इत्युक्त्वा भगवांस्तेभ्यो महामोहशरीरतः ।**
> **समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमाः ॥**
>
> **मायामोहोऽयमखिलान् दैत्यांस्तान् मोहयिष्यति ।**
> **ततो वध्या भविष्यन्ति वेदमार्गबहिष्कृताः ॥** इति ।

न हि स्वस्य तामसत्वाभावे महामोहाख्यं प्रति उपादानत्वमुपपद्यते; स्वस्य मोहिनीशरीरस्य तामसत्वात् ।

ननु– विष्णोः कार्यार्थं तमोगुणसाहित्येऽपि तस्य सत्त्वेनाभिभूतत्वान्न प्राधान्यम् । रुद्रस्य तु तमसाभिभूतत्वात्तद्विशिष्टतया संहारकर्तृत्वेन प्रतिपाद्यत्वमिति । **सप्तमः पक्षः** कक्षीक्रियतां– इति चेन्मैवम्– शत्रुसंहारमात्रप्रयोजनप्रवृत्तेषु नृसिंहाद्यवतारेषु तत्प्राधान्येन तामसत्वप्रसङ्गात् शिवस्य निरस्ततमस्कत्वाद्विपक्षे बाधकसत्वाच्च ।

**नान्त्यः**– यस्संहारकर्ता स तामसः– तस्यापि कश्चित्संहारकोऽस्ति न वा? अस्ति चेत्तामसत्वेऽपि स एव सर्वाधिकः [1]सर्वसंहारकः स्वतन्त्रत्वात् । नास्ति चेदयमेव तामसस्सर्वाधिक इति तामसत्वं, सर्वसंहारकर्तृत्वं सर्वाधिकत्वेन व्याप्तमिति विरुद्धो हेतुः । तस्मात् रुद्रः सर्वाधिकः सर्वसंहर्तृत्वात् । व्यतिरेकेण जीववत् । न चाप्रयोजको हेतुः । प्रबलदुर्बलभावं विना बाध्यबाधकभावस्यैवासम्भवात् । सात्त्विकस्य बाध्यत्वे प्राप्ते संहारं प्रति विरुद्धत्वात् । **"मृदुः सर्वत्र बाध्यते"** इति न्यायेन च साध्याप्रसिद्धिः; **"विश्वाधिको रुद्रः"** इति पक्षे प्रसिद्धेः । तदनुग्राहकत्वादनुमानस्य न सिद्धसाधनत्वम् ।

एवं सात्त्विकत्वमुक्तप्रकारेण विकल्प्य दूषणीयम् । किञ्च– विष्ण्वाधिक्यप्रतिपादकानां मार्कण्डेयादिपुराणानां सात्त्विकत्वप्रसङ्गः स्यात्, रुद्राधिक्यप्रतिपादकानां पद्मपुराणादीनां तामसत्वप्रसङ्गः स्यात् । पद्मपुराणे पूर्वोत्तरखण्डाभ्यां हरिहरयोराधिक्यवर्णनात्,

---

[1] सर्वसंहारस्वतन्त्रत्वात् (ख, घ, ज), व्यतिरेकेण जीववत् (ख).

तदंशे तामसत्वमिष्टमिति चेद् रामायणभागवतादावपि तदंशे तामसत्वप्रसङ्गात् । **रामायण-बालकाण्डे— "त्वां वै धारयितुं वीर नान्यं पश्यामि शूलिनः"** इति, **"उमापतिः पशुपतिः सर्वलोकनमस्कृतः"** इति **युद्धकण्डे, "एतदस्त्रबलं घोरं मम वा त्र्यम्बकस्य वा"** **इत्युत्तरकण्डे** च । कैलासयात्रारावणनिग्रहेन्द्रजिदनुग्रहादिवर्णनस्य बहुतरत्वात् रावणविनाशार्थस्य रुद्राग्निनिमित्तत्ववर्णनात्तस्यापि तामसत्वप्रतीतेः । तस्माच्छिवपुराणानां तामसत्वकल्पने वेदबाह्यबौद्धप्रसङ्गः स्यादित्यलमतिविस्तरेण ।

अत्र **प्रथमाधिकरणे** शैवदीक्षितानां परमैकान्तिनां भक्तानां जिज्ञासेति पदेन जीवब्रह्मणोर्भेदाभेदो निरूपितः । **"ब्रह्म वेद ब्रह्मैव भवति" "ईशं ज्ञात्वा तत्रैकीभवन्ति"** इत्यादिश्रुतावुपास्योपासकयोरभेदसिद्धिव्यपदेशात् । **द्वितीयाधिकरणे—** ब्रह्मणस्सविशेषत्वं, जगद्ब्रह्मणोः सृष्टिस्थित्यवसरे भिन्नत्वं लयावसरे नदीसमुद्रवदभिन्नत्वं निरूपितम् । **तृतीयाधिकरणे—** परमेश्वराविर्भूतभेदाभेदबोधकवेदवेदान्तागमशास्त्रमेव ब्रह्मसत्वे प्रमाणमिति [1] दर्शितम् ।

**इति तृतीयं शास्त्रयोनित्वाधिकरणम् ।**

---

[1] निरूपितम् (ख).

‘ समन्वयाधिकरणम् ’

षट्स्थलपरशिवब्रह्माविर्भूतवेदवेदान्तानामिन्द्रोपेन्द्रचन्द्रादिनानादेवताप्रतिपादकत्वेन सर्वदा न परशिवैकपरत्वमिति शङ्कायां तदतिव्याप्तिनिवारणाय सर्वस्य तत्रैव सिन्धुप्रवाहन्यायेन समन्वयादव्यभिचार इति चतुर्थाधिकरणमारभ्यते—

## तत्तु समन्वयात् ॥ ४ ॥

तच्छब्देन— सर्वाधिष्ठानं सर्वकारणं वेदान्तवेद्यं पूर्वनिर्दिष्टं षट्स्थलपरशिवब्रह्मैव व्यपदिश्यते । तु शब्देन प्रत्यक्षादिप्रमाणान्तरं निरस्यते । समन्वयशब्देन [1] तदन्तर्भूत-चन्द्रोपेन्द्रदिनेन्द्रादिप्रतिपादकवाक्यानां स्थूलारुन्धतीन्यायेन उपक्रमोपसंहारादि[2] षड्विधतात्पर्य-लिङ्गैः तत्रैव तात्पर्यमुपदिश्यते । तद्ब्रह्म प्रत्यक्षादि [3] प्रमाणान्तरनिराकरणपूर्वकं सर्ववेदान्तैः षड्विधतात्पर्यलिङ्गोपेतैः [4] प्रतिपाद्यत इति सूत्रार्थः ।

अत्र सर्ववेदवेदान्तागमवाक्यान्यस्य **विषयः— “सदेव सोम्येदमग्र आसीदेक-मेवाद्वितीयं एको हि रुद्रो न द्वितीयाय तस्थुः” “असङ्ख्याता सहस्राणि, स्मर्यते न च दृश्यते” “देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति ? सोऽब्रवीत्– अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोन्तरादन्तरं प्राविशत्” “ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः” “सर्वे वेदा यत्पदमामनन्ति”** इति ।

भेदाभेदविधायकसर्ववेदान्तवाक्यानां सर्वजगदुभयकारणषट्स्थलपरशिवब्रह्मपरत्वं कर्मशेष-भूतेन्द्रोपेन्द्रादिनानादेवतोपासनपरत्वं वा ? तदुपादानभूतप्रधानादिप्रतिपादकत्वं वा ? इति बहुधा **सन्दिह्यते ।**

---

[1] तदंशभूतेन (ख, घ, ज). [2] षड्विधलिङ्गैः (ख, घ, ज). [3] प्रमाणनिराकरण (ख, ग, ज).
[4] षड्विधलिङ्गतात्पर्येण (ख, घ, ज).

**पूर्वपक्षस्तु**— न सर्वथा ब्रह्मणः परशिवस्य सर्ववेदान्तप्रतिपाद्यत्वं सम्भवति, तेषां विधिपरत्वात्। उभयपरत्वे वाक्यभेदापत्तिः। जगद्ब्रह्मणोः कार्यकारणत्वदर्शनादनुमानेन ब्रह्मसिद्धिरुपपद्यते। तस्मान्न वेदान्तैकप्रतिपाद्यत्वम्।

किञ्च— नानादेवतोपासनापरत्वमपि युक्तम्। "**अग्निरग्रे प्रथमो देवतानां**" "**असावादित्यो ब्रह्म**" "**नारायणपरं ब्रह्म**" इत्यादिश्रुतिदर्शनात्। अपि च— "**सैषा विचित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्ना अंकुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी**" "**अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्**" इत्यादिना सर्वदेवतामयत्वस्य सर्वकारणत्वस्य च प्रधानस्यैव निर्देशात्तत्परत्वमपि युक्तम्।

किञ्च— "अयं घटः, अयं पटः इत्यादिलोकव्यवहारस्य परम्परावृद्धव्यवहारज्ञानसापेक्षत्वात् निरस्तसमस्तोपद्रवसर्वमङ्गलाधारसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वयोः प्रसङ्गात्तदुभयदोषवारणाय वेदान्तानां विध्युपासनपरत्वं विधीयते। अथवा कर्तृदेवताप्रतिपादनद्वारा कर्मपरत्वं सिद्धम्। इति प्राप्ते **ब्रूमः**—

**सिद्धान्तस्तु**— वेदान्तानां ब्रह्मपरत्वं ब्रह्मध्यानविधिपरत्वं चोपपद्यते। अतो न वाक्यभेददोषप्रसङ्गः। तदुभयविधेर्दर्शनात्। तथा हि— उपक्रमादिषड्विध[1]तात्पर्यलिङ्गेन ब्रह्मपरत्वम्, "**आत्मा वा अरे द्रष्टव्यः**" इत्यादिषु तद्ध्यानविधिपरत्वं च दृश्यते।

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥**

इति स्मृत्या उपक्रमोपसंहारादिभिर्वेदान्ततात्पर्यनिर्णयश्रवणमित्यभिधीयते।

**अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकम्।**
**सर्ववेदान्तवाक्यानां श्रवणं तत्प्रवर्तकम्॥**

---

[1] लिङ्गतात्पर्येण (ख, ब, ज).

श्रवणं नाम वाक्यानां वैदिकानां परात्परे ।
उपक्रमादिभिर्लिङ्गैः कृतस्तात्पर्य[1] निर्णयः ॥

इत्युपक्रमोपसंहारावेकं लिङ्गम् "सदेव सोम्येदमग्र आसीत्" इत्युपक्रमः । "स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्युपसंहारः । पुनः "तत्त्वमसि" इत्यभ्यासः । "तं त्वौपनिषदं पुरुषं पृच्छामि" इति मानान्तरागम्यत्वेनापूर्वत्वम् । "येनाश्रुतं श्रुतं भवति" इत्यादिना एकविज्ञानेन सर्वविज्ञानं फलम् । "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता । अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" इत्यादिसृष्टिस्थितिसंहारतिरोधानानुग्रहादिपञ्चकृत्यान्यर्थवादाः । "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति मृदादिदृष्टान्ता उपपत्तयः । एवमन्यत्रापि ।

नारायणीये– "अणोरणीयान् महतो महीयान्" इत्युपक्रमः । "सर्वो ह्येष रुद्रः" इत्युपसंहारः । "यः परस्समहेश्वरः" "अम्बिकापतय उमापतये पशुपतये नमो नमः" इत्याद्यभ्यासः । "विश्वाधिको रुद्रो महर्षिः" इत्यादौ विश्वाधिकत्वादेर्मानान्तराप्राप्तत्वादपूर्वता । "परामृतात्परिमुच्यन्ति सर्वे" इति फलम् । "सहस्रशीर्षं" इत्यर्थवादः । "यस्मात्परं नापरमस्ति किञ्चित्" इत्युपपत्तिः । एवं सर्ववेदान्तेषु द्रष्टव्यम् । तस्मात् स्वरूपव्यावर्तकतटस्थलक्षणत्रयेण सर्ववेदान्तानां ब्रह्मप्रतिपादकत्वं युक्तम् । रूपप्रत्यक्षकारणस्य नेत्रस्य द्रव्यसिद्धिवत्, विधिपरत्वेन वेदान्तानां सर्वाधिष्ठानपरशिवब्रह्मसिद्धिः । तस्मान्नोभयपरत्वविरोधः । "नैषा तर्केण मतिरापनेया" इति श्रुत्याऽनुमानप्रमाणस्य निरस्तत्वात्, अनुमानेन कर्त्रैकत्वसिद्ध्यभावाच्च ब्रह्मप्रामाण्येनानुमानं विधीयते ।

"विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु" इत्यादिना सर्वजगदुपादानकारणत्वाज्जगन्मयत्वम् । "उमासहायं परमेश्वरं प्रभुं" इत्यारभ्य "स एव विष्णुस्स प्राणस्स कालोऽग्निस्स चन्द्रमाः" "स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये" इत्यन्तेन परशिवस्य ब्रह्मणः सर्वदेवतामयत्व

[1] निश्चयः (ख).

मुक्त्वा तदुपासनस्यैव मोक्षहेतुत्वोपदेशदर्शनात्, **"यो रुद्रो अग्नौ"** इत्यादिना शिवस्यैव सर्वान्तर्यामित्वोपदेशाच्च सर्वदेवतामयत्वादिकं तस्यैव सिद्धम्।

उत्तममध्यमाधमाधिकारिभेदेन नानादेवतोपासनं न विरुद्धम्। **"भेदाभेदात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी"** इति स्मृतौ शक्तेर्वह्निशक्तेरिव ब्रह्माधिष्ठानत्वोपदेशात्, निरधिष्ठानशक्तेरभावात्, शक्तिशक्तिमतोरभेदाच्च तत्कर्तृत्वं, तदात्मकत्वं च तस्यैवोपपन्नमिति न प्रधानस्य सर्वकर्तृत्वम्।

पुत्रादिकुशलवार्ताश्रवणवत् सिद्धज्ञानस्यापि [1]प्रवृत्तिहेतुत्वदर्शनात् न वृद्धव्यापारस्यैव प्रवृत्तिहेतुत्वम्। बालानां मातृपित्रादिभिः **"अयं घटः, अयं पटः"** इति निर्देशेन सिद्धार्थज्ञानोत्पत्तेस्सम्भवात्; काव्यालङ्कारैस्तच्छिष्याणां तदुपदेशेन सर्वार्थज्ञानदर्शनात्। तस्माद्वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमिति सिद्धम्।

ननु– "सिद्धब्रह्मविषये शास्त्राणां प्रयोजनादर्शनाद्वेदान्तानां [2]कर्मविधिशेषत्वं युक्तम्; न च पाशनिवृत्तिः फलम्। स च पाशः तद्भिन्नो वा तदभिन्नो वा? पुनस्स सत्यो वा? मिथ्या वा? **नाद्यः**– शक्तिविशिष्टशिवाद्वैतहानेः। **न द्वितीयः**– मायापाशस्य सत्यत्वात्सर्वदा संसारापत्त्या मुक्तेरसम्भवात्। मायानिवृत्तौ न कोऽपि यत्नं कुर्यात्। अत एव **न [3]तृतीयः**। नान्त्यः– परमेश्वरस्य नित्यसिद्धत्वेन मुमुक्षुप्रवृत्त्यसम्भवात्, बन्धमोक्षदशायां वैषम्याभावाच्च। सर्वथा वेदान्तशास्त्रप्रवृत्तिर्न सम्भवति इति चेन्न।

गुणत्रयात्मकपाशस्तु परमेश्वराद्भिन्न एव। तस्मात्तन्निवृत्तौ स्वाभाविकचिच्छक्त्यवच्छिन्नशिवाद्वैतहानिर्न सम्भवति। मायापाशस्य सत्यत्वेऽपि नानिर्मोक्षप्रसङ्गः। द्वैताद्वैतमताङ्गीकारात्। न च तत्र मानाभावः– **"ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मभवनकामो ब्रह्मवेदनं कुर्यात्"** इत्यादिश्रुतिप्रमाणसद्भावात्। अविद्याया मोहकारित्वेन चिच्छक्तेर्भिन्नत्वात्तन्निवृत्तिश्शिवोपासनेनैव सम्भवत्येव। निवृत्तिर्नाम तत्कारणीभूतचिच्छक्तौ लयः, **"नाशः कारणलयः"** इति न्यायात्। चराचरप्रपञ्चस्योपादानकारणत्वादविद्यायास्तन्निवृत्तिः कदापि न सम्भवति। [4]अतः ब्रह्मविदामपि संसारप्रवृत्तिस्सम्भवति– इति चेन्नैवम्।

---

[1] प्रवृत्तिदर्शनात् (ख, घ, ज). [2] कर्मशेषत्वं (ख, घ ज). [3] इदं वाक्यं ख. घ, ज कोशेषु न दृश्यते (ख). [1] तस्मात्सदा (ख, घ. ज).

"अनीशया शोचति मुह्यमानः" "ब्रह्म वेद ब्रह्मैव भवति" "न च पुनरावर्तते न च पुनरावर्तते" इत्यादिश्रुतिशतेषु ब्रह्मविदां तदात्मकत्वस्य पुनरावृत्तिरहितत्वस्य चोपदेशात्। न च ब्रह्मवाचकपदेन तदज्ञानसम्भवान्न विधेः प्रयोजनमिति वाच्यम्। मन्त्राध्ययनमात्रेण होतव्यद्रव्यदेवताज्ञाने सिद्धेऽपि तद्धोमावसरे "मन्त्रैरनुस्मर्तव्यं" इति प्रयोगविधिदर्शनात्। तथात्र वेदान्तवाक्यविधेर्न विरोधः।

नन्वत्र उत्पत्तिविनियोगाधिकारविधीनामदर्शनात्कथं प्रयोगविधिस्सम्भवति? इति चेन्न। "अमृतस्य देवधारणो भूयासं" इत्यादौ प्रकरणादपरिहारेणोत्पत्तिविधेस्सिद्धत्वात् परशिवलिङ्गधारणदीक्षां लब्ध्वा परमात्मानं पश्येदिति विनियोगविधिरुपपद्यते। "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादौ परशिवध्यानधारणयुक्तो मोक्षाधिकारी विधीयते। तस्मान्मोक्षकामो भस्मरुद्राक्षशिवलिङ्गधारणात्मकशाम्भवदीक्षां लब्ध्वा षट्स्थलपरशिवब्रह्मज्ञानं सम्पादयेदिति रात्रिसत्रन्यायेन प्रयोगविधिरुपपद्यते।

ननु– "आत्मा वा अरे द्रष्टव्यः" इत्यादौ [1]ब्रह्मज्ञानस्य विधिर्न सम्भवति। निर्विकारस्य ब्रह्मणः कर्मकारकत्वप्रसङ्गात्। विधिसम्भवेऽपि उत्पत्तिप्राप्ति[2]विकृतिसंस्कार[3]भावो न युज्यते। किञ्च सक्तुन्यायेन स्वतन्त्रफलाय "[4]सक्तुभिर्जुहोति" इतिवत्– "आत्मना पश्येत्" इति कारणत्वविपरिणामेन वक्तुमयुक्तम्। निर्विकारस्य ब्रह्मणोऽवैषम्यान्न ब्रह्मज्ञानविधिरुपपन्नः– इति चेन्न। सर्वाधिष्ठानस्य परमात्मनः उत्पत्तिविनियोगाधिकारविधित्रयासम्भवेऽपि मुमुक्षोर्मोक्षफलाय विधिर्न विरुध्यते। अत्र को विधिराश्रीयत इति चेत्– विधित्रयमप्यूहनीयम्।

ननु– चक्षुषा घटसिद्धिवत् वेदान्तानां न तथा ब्रह्मसिद्धिः निरपेक्षतया चक्षुस्संयोगेन "अयं घटः" इति वस्तुज्ञानमुपपद्यते। शब्दानां तात्पर्यपर्यवसानेन प्रामाण्यम्। अतो वेदान्तवाक्यानां ब्रह्मज्ञानविधायकत्वं, ब्रह्मप्रमापकत्वं, चायुक्तमिति चेन्मैवम्। "समिधो यजति" इत्यादिवाक्यानां पञ्चप्रयाजविधायकत्वतदनुष्ठानविधायक[5]त्वयोरुभयोरपि विधिबलात्सिद्धिवद्वेदान्तानामपि ब्रह्मप्रमाकत्वं मोक्षोपकारकब्रह्मज्ञानं प्रति विधायकत्वं च सम्भवत्येव।

---

[1] ब्रह्मध्यानस्य (ख). [2] विकार (ख, ब, ज). [3] भावो युज्यते (ख, घ, ज). [4] सक्तुना जुहोति (ख, घ, ज). [5] त्वञ्चोभयबलादुभयसिद्धिवद्वेदान्तानामपि (ख, घ, ज).

ननु– वेदान्तवाक्यादेव [1] ब्रह्मज्ञानसिद्धिदर्शनात्तद्विधिना न किञ्चित्प्रयोजनं, तद्ज्ञानादेव विधिप्रयोजनसम्भवात् इति चेन्न। वेदान्तवाक्यैः परोक्षत्वेन तद्ज्ञाने सिद्धेऽपि तदपरोक्षज्ञानाय तद्विध्युपपत्तेः। वेदान्तशब्दजन्यज्ञानादेव न ब्रह्मसाक्षात्कारो विर्धायते। सद्गुरुकरुणाकटाक्षलब्ध [2] तदुपासनात्मकज्ञानादेव तत्साक्षात्कारसिद्धिः। अयमेव श्रौतमार्गः। "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" "श्रद्धाभक्ति[3]ध्यानयोगादवेहि" "ब्रह्मवेद ब्रह्मैव भवति" "ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" "ईशं तं ज्ञात्वा अमृता भवन्ति" "आत्मन्येवात्मानं पश्येत्" "शम्भुराकाशमध्ये ध्येयः" "तज्जलानिति शान्त उपासीत" "इति प्राचीनयोग्योपास्व" इत्यादिषु मोक्षफलाय परमेश्वरोपासनात्मकज्ञानं मुख्यकारणत्वेन विधीयते। तथा च स्मृतिः–

श्रोतव्यश्श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
ध्यात्वा च सततं ध्येयमेतद्दर्शन हेतुतः॥

ज्ञानं वस्तुपरिच्छित्तिर्ध्यानं तद्भावकारणम्।
तस्माज्जीवो भवेच्छम्भुः क्रिमिव[5]त्कीटचिन्तनात्॥

इत्यादिना श्रवणमननविशिष्ट[6]ध्यानानुगतनिदिध्यासनं पट्स्थलपरशिवसाक्षात्कारे तत्तादात्म्ये च परमकारणमिति निर्दिशति।

तस्मात् सर्वकाम्यकर्मनिषेधपूर्वकशिवमुखोद्गतनिगमागमोभय[7]वेदान्तचोदितवर्णाश्रमोचितशिवार्पितसकलकर्मानुष्ठानसम्पन्नचित्तशुद्धिलब्धाव्यभिचारपरमशिवभक्तिपरवशशांभवदीक्षितमुमुक्षूणां सर्वोपनिषत्प्रतिपाद्यसकलजगदुभयकारणपट्स्थलपरशिवोपासनस्य विधेयत्वात् "तदुपास्व" इत्यादिश्रुतिभिर्ज्ञानोपासनाविधिस्तेषामेवोपपद्यते। "शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" इत्यथर्वशिखायां मुमुक्षूणां शिवातिरिक्तोपासनं निरस्तम्। तस्मान्नान्यथा

---

[1] ब्रह्मध्यान (ख). [2] तदुपासनज्ञानादेव (ख, घ ज) [3] ज्ञानयो·गादवेहि (ख), [4] हेतवः (ख. घ, ज). [5] भृङ्गचिन्तनात् (ख). [6] ज्ञानानु·त (ख घ, ज). [7] वेदवेदान्तबोधित (ख, घ, ज).

संसारमायापाशनिवृत्तिस्सम्भवति । **"क्षरं प्रधानममृताक्षरं हरः क्षरात्मनावीशते देव एकः, तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥"** इत्यादिश्रुतिषु शिवध्यानधारणज्ञानादेव मोक्षरूपफलं विधीयते । तस्माच्छिव एव परब्रह्म मोक्षकामैर्धारणीयो ज्ञातव्यो ध्यातव्यः श्रोतव्यो मन्तव्योऽर्चनीय इति षड्विधलिङ्गतात्पर्येण ब्रह्मपरा वेदान्तास्तदुपासनपराश्चेति निर्णयः ।

ननु– **"ब्रह्म सत्यं जगन्मिथ्या"** इति न्यायेन सर्ववेदान्तविचारलब्धजगन्मिथ्यात्वज्ञानपूर्वकस्वस्वरूपज्ञानमेव मुक्तिरिति चेन्न– सर्ववेदवेदान्तबाह्यत्वप्रसङ्गात् । किं नाम जगन्मिथ्यात्वं ? ब्रह्मज्ञानबाध्यत्वं ? त्रैकालिकनिषेधो वा ?

**नाद्यः–** बाध्यबाधकभावस्यैव तयोरसम्भवात्, न ब्रह्मज्ञानेन प्रपञ्चनिषेधो विधीयते । **"सर्वो वै रुद्रः" "सर्वं खल्विदं ब्रह्म"** इत्यादिना सर्वप्रपञ्चस्य शिवात्मकत्वोपदेशात् ।

किञ्च– **"यत्र नान्यत्पश्यति नान्यच्छृणोति"** इत्यादिश्रुत्या मुक्तात्मनां इदन्तारूपघटपटात्मकप्रपञ्चत्वेन व्यवहृतमायापाश एव सर्वशिवात्मकताज्ञानेन तिरोधीयते । **"शिवो दाता शिवो भोक्ता शिवस्सर्वमिदं जगत्"** इत्यादिशास्त्रोक्तसर्वशिवात्मकतासम्पूर्णज्ञानेन घटपटादौ घटत्वादिबुद्धिर्निवर्तते, [1]न तु घटादिः, तस्य शिवात्मकत्वात् । तस्मान्न ब्रह्मज्ञाननिवर्त्यत्वं प्रपञ्चस्य । अतो मिथ्यात्वमयुक्तम् । तत्स्वीकारे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुतेर्दत्तजलाञ्जलित्वप्रसङ्गः । ब्रह्मोपादानकारणकत्वात्प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा श्रूयते । अत एव– **"सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वं" "सर्वो वै रुद्रः"** इत्यादिश्रुतिः सर्वस्य शिवात्मकत्वमुपदिशति । तस्मान्न ब्रह्मज्ञानेन प्रपञ्चबाधः । जनकादिब्रह्मविदामपि पूर्ववदेव व्यवहारो दृश्यते । तेषां न प्रपञ्चबाधः । जीवन्मुक्तानां शरीरधारणादिव्यवहारानुपपत्तिश्च । किञ्च–

**दूर्वासीये ।**

---

[1] न तु घटपटादि (ख)-

अखण्डाद्वैत[1]भावे तु सर्वं ब्रह्मैव नान्यथा।
ज्ञानादिकल्पबुद्धिस्तु लीयते न स्वरूपतः॥

भिन्नत्वं नैव युञ्जीत ब्रह्मोपादानतः क्वचित्।
वाचारम्भणमात्रत्वाद्भेदः केनोपजायते।
तस्मादविद्यामात्रत्वकथनं मोहनाय हि॥

इति जगन्मिथ्यात्ववादिनां निन्दा श्रूयते। "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इति गीतायां च श्रूयते।

न द्वितीयः— "अमूलमनाधारमिमाः प्रजाः प्रजायन्ते" "न कदाचिदनीदृशं जगत्" इत्यादिना [2]जगतो नित्यत्वप्रतिपादनात्।

ननु— "असद्वा इदमग्र आसीत्, ततो वै सदजायत" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतिशतेन सृष्टेः पूर्वं प्रपञ्चस्यासत्त्वोपदेशात् कथं तस्य त्रैकालिकसत्यत्वं? इति चेन्न—

"असद्वा इदमग्र आसीत्" इत्यत्र सृष्टेः पूर्वं प्रपञ्चस्य नामरूपविभागानर्हत्वेन ब्रह्मणि सूक्ष्मरूपेण स्थितत्वादसत्त्वं, "ततो वै सदजायत" इत्यनेन नामरूपविभागार्हत्वेन प्रपञ्चस्य जन्यत्वं चोपदिश्यते।

किञ्च— असत्पदेन गगनारविन्दवदभावत्वाङ्गीकारे वन्ध्यापुत्रादीनामपि जगत्कारणत्वं किं न स्यात्? सदेवेत्यवधारणेन न सविशेषत्वनिषेधः। किन्तु असतो भ्रान्तिप्रसक्तस्य तत्कारणत्वनिषेधः।

किञ्च— "सदेव सोम्येदमग्र आसीत्" इति श्रुतौ कथं सविशेषत्वनिषेधः? 'अग्रे' इति कालविशेषः, 'आसीत्' इति क्रियाविशेषश्च दृश्यते। एकमेवेत्यवधारणेना-

---

[1] भाने तु (ख, घ, ज). [2] जगतोऽनादित्वप्रतिपादनात् (ख, घ, ज).

धिष्ठात्रन्तरनिषेधः "**अद्वितीय**" पदेन ब्रह्मणो जगदुभयकारणत्वं विधीयते। "**एको हि रुद्रो न द्वितीयाय तस्थुः** ॥ इत्यादावप्येवं बोद्धव्यम्। अत एव "**विश्वाधिको रुद्रो महर्षिः**" इति श्रूयते। तस्मान्न त्रैकालिकनिषेध इति रहस्यम्।

## जगद्व्यावहारिकत्वखण्डनम्

ननु प्रपञ्चस्य व्यावहारिकमात्रसत्यत्वं न तु पारमार्थिकत्वमिति चेन्न। किमिदं व्यवहारसत्यत्वं? १) व्यवहारमात्रगम्यत्वं? २) बाधितव्यवहारगम्यत्वं? ३) त्रिचतुर-कक्ष्यास्वबाध्यत्वं वा? ४) तत्त्वावेदकप्रमाणविरुद्धत्वं? ५) अर्थक्रियाशून्यप्रतीतिगोचरत्वं? ६) करणदोषोपहितज्ञानविषयत्वं वा?

**नाद्यः**— ब्रह्मणोऽपि [1] व्यहारगम्यत्वेनातिव्याप्तेः। अन्यथा गुरुशिष्ययोर्मौनमौढ्यापत्तेः। "**अथातो ब्रह्मजिज्ञासा**" "**सदेव सोम्येदमग्र आसीत्**" "**सत्यं ज्ञानमनन्तं ब्रह्म**" इत्यादिरूपेण प्रवृत्तायाः श्रुतिसूत्रफक्किकाया अभित्तिचित्रकर्मतापाताच्च। "**सर्वापीयं फक्किका सविशेषविषया; निर्विशेषं न कस्यापि व्यवहारस्य गोचरं**" इति चेद्व्याहतमेतत्। "**न गोचरः**" इति व्यवहारं प्रत्येव गोचरत्वात्। वेदान्तानां निर्विशेषविषयत्वाभाव-समर्थनेन अस्मदनुकूलं च, तेषामपि व्यवहाररूपत्वात्।

नापि बाधितव्यवहारगम्यत्वमिति **द्वितीयः**— ब्रह्मण्यतियाप्तेर्दुर्वारत्वात्। सर्वोऽपि व्यवहारो बाधित एव प्रपञ्चान्तर्गतत्वात्। न च बाधितत्वं व्यवहारगम्यत्वस्य विशेषणमिति शङ्क्यम्। तर्हि बाधितत्वस्यैव लक्षणत्वे शेषवैयर्थ्यात्। न चेष्टापत्तिः। प्रातिभासि-केऽतिव्याप्तेः। न च ब्रह्मातिरिक्तविषयकज्ञानाबाधितत्वे सति बाधितत्वमिति परिष्कारस्साधुः; ज्ञानाबाधितत्वस्य ज्ञानजन्यध्वंसाप्रतियोगित्वरूपत्वे उत्तरज्ञानजन्यध्वंसप्रतियोगिषु पूर्वज्ञानेषु लक्षणाव्याप्तेः। ज्ञानानपहृतधीविषयत्वरूपत्वे तु "**घटो नास्ति पटो नास्ति**" इति ज्ञानापहृतधीविषयेषु घटपटादिष्वव्याप्तिः। तेषां ज्ञानानां ब्रह्मातिरिक्तविषय-कत्वात्। विस्तरेण चोपरिष्टान्निराकरिष्यामः।

---

[1] व्यवहारमात्रगम्यत्वे (ख, ज).

किञ्च– नीलपृष्ठत्वादिसत्ताया अपि ब्रह्मरूपतया तद्विषयकज्ञानबाध्येषु रजतादिष्वतिव्याप्तिर्दुर्वारैव। तेषामपि ज्ञानानां ब्रह्मातिरिक्तविषयत्वाभावात्। न च नीलपृष्ठत्वादीनामब्रह्मरूपाणां तद्ज्ञानविषयत्वान्नातिप्रसङ्गः इति वाच्यम्। तर्हि निर्विशेषत्वप्रपञ्चमिथ्यात्वादिब्रह्मातिरिक्तविषयकज्ञानस्यैव प्रपञ्चनिवर्तकतया व्यावहारिकमात्रे लक्षणासम्भवप्रसङ्गात्। निर्विशेषत्वादीनां सप्रतियोगिकानां निष्प्रतियोगिकब्रह्मस्वरूपमात्रत्वं दुस्साध्यम्। स्वरूपमात्रज्ञानस्याध्याससहस्वप्रकाशानतिरिक्तविषयतया निवर्तकत्वासम्भवेनासम्भवापादकं च। अनतिरिक्तविषयविज्ञाने वृत्तित्वं निवर्तकतावच्छेदकमित्यभ्युपगमे जडाया वृत्तेर्निवर्त्यत्वे ज्ञानबाध्यत्वसिद्धान्तव्याहतिः। कथंचित् ज्ञानत्वाङ्गीकारेऽपि स्वस्वरूपज्ञानसाधारणस्य ज्ञाननिवर्तकतानवच्छेदकत्वादपसिद्धान्तश्चेत्यास्तां विस्तरः।

नापि त्रिचतुरकक्ष्यास्वबाध्यत्वमिति **तृतीयः**– ब्रह्मण्येवातिव्याप्तेः। अबाध्यं हि ब्रह्म त्रिचतुरकक्ष्याऽबाध्यमेव। न च त्रिचतुरकक्ष्यास्वबाध्यत्वं, तथा सति प्रातिभासिकविशेषेऽतिव्याप्तेः। सम्भवन्ति हि [1]दीर्घकालानुवृत्तभ्रमविषयाणि प्रातिभासिकानि वस्तून्यलातचक्रगन्धर्वनगरादीनि।

किञ्च– कक्ष्याशब्दोऽयं युक्तिपरः? कालपरः? विपरीतप्रमापरो वा?

**नाद्यः– "प्रपञ्चो मिथ्या, दृश्यत्वात्"** इत्येकयैव। कक्ष्यया प्रपञ्चस्य बाधेनासम्भवात्। **"तत्परत्वापरत्वाच्च निर्दोषत्वाच्च वैदिकम्। पूर्वस्य बाधकम्"** इत्येकयुक्त्यनुसन्धानेनापि बाधेन तदापत्तेश्च।

**न द्वितीयः–** दीर्घकालभ्रमविषये प्रातिभासिकेऽतिव्याप्तेः।

न **तृतीयः**– विपरीतप्रमाविषयश्च भवत्यबाधितश्चेति। व्याघातात्। न च बाधः पदार्थनिवृत्तिरिति युक्तम्। मुद्गरादिनिवर्त्येषु घटादिषु त्रिचतुरविपरीतज्ञानानिवर्त्यत्वे सति विपरीतज्ञाननिवर्त्यत्वस्वभावेनाव्याप्तेः। अपि च– त्रिचतुरयुक्त्यबाध्यत्वे

---

[1] दीर्घकालानुभव (ख).

सति बाध्यत्वमिति प्रथमकल्पे ब्रह्मण्यतिव्याप्तिः, तस्यापि शुक्तिपाश्रितत्वात्। ज्ञानाज्ञानयो-रेकविषयत्वेन यद्विषयकमज्ञानं तद्विषयकमेव ज्ञानं तादृशज्ञाननिवर्तकम्। प्रकृते ब्रह्म-विषयकाज्ञानस्य ब्रह्मविषयकज्ञानेनैव निवृत्तिः। तथा हि— ब्रह्म दृश्यमदृश्यं वा? दृश्यत्वे मिथ्यात्वमवर्जनीयम्। अदृश्यत्वे ब्रह्मव्यवहारमात्रोच्छेदः तस्य दृगेकसाध्यत्वात्। अविद्यानिवृत्तिश्च न स्यात्, समानविषयकदृगभावात्। न च वृत्तिज्ञानेन व्यवहारादि-सर्वसमर्थनं सम्भवति। वृत्तेरज्ञानपरिणामभूताया अज्ञानत्वात्। न च ज्ञानत्वारोपमात्रेण वृत्तिः ज्ञानकार्याणि कर्तुमर्हति। गुञ्जाधिष्ठानवह्नेरपि दाहकत्वप्रसङ्गात्। न च ज्ञाना-वच्छेदकतया मुख्यमेव ज्ञानत्वमिति शङ्क्यम्। अवच्छेद्यावच्छेदकभावेन ज्ञानभेदस्यैव समर्थनेन व्याघातात्, घटेऽप्यवच्छेदकतापत्तेश्च। "**घटवद्ज्ञानं**" इत्यत्र घटोऽप्यव-च्छेदकः।

किञ्च— वृत्तेर्ज्ञानपदमुख्यार्थत्वे ब्रह्मणो ज्ञानभिन्नतैव स्यात्। न च ब्रह्मवृत्त्योरनु-गतं किञ्चित्प्रवृत्तिनिमित्तमस्ति। येनोभयत्र मुख्यं स्यात्। न च ज्ञानत्वं असिद्धे-रित्युक्तेः। न हि ज्ञानाज्ञानपरिणामानुगतं ज्ञानत्वं प्रामाणिकम्। स्वव्यापकस्वप्रकाश-त्वनिवृत्त्या ज्ञानत्वनिवृत्तेश्च। निर्विशेषे चिन्मात्रे तदभावे अज्ञानत्वप्रसङ्गाच्च। नाप्यविद्यानिवर्तकत्वं, ज्ञानत्वस्य [1]स्वव्यापकस्य निवृत्त्या स्वस्यापि निवृत्तेः। अध्याससहे चिन्मात्रे तदभावेनाव्याप्तेश्च। नापि प्रवृत्तिनिवृत्तिद्वयेनोभयमुख्यत्वं, अनेकार्थत्वकल्पना-प्रसङ्गात्। वृत्त्यवच्छिन्नचैतन्यस्य जगदाभासकल्पनावैयर्थ्यात्। ब्रह्मणो दृश्यत्वेन मिथ्यात्वा-पादनस्य वज्रलेपत्वापाताच्च। ज्ञानाज्ञानयोर्ज्ञानपदमुख्यार्थत्वसमर्थनाय प्रवृत्तिनिवृत्तिद्वयकल्पने घटपटयोर्घटपदमुख्यार्थत्वापत्तेश्च। एवञ्च वृत्तेर्ज्ञानत्वाभावेन ब्रह्मणो निर्विषयत्वस्वरूपप्रकाश-स्यापि स्वविषयत्वाद्ब्रह्मणस्तुच्छत्वं, सर्वेषां चैतन्यानां स्वाविषयब्रह्माभिन्नतया मिथो व्यवहारा-नुपपत्तेश्च। वृत्तेर्मुख्यज्ञानत्वे स्वप्रकाशस्वविषयत्वे वा ब्रह्मणो मिथ्यात्वमवर्जनीयम्। [2]*कल्पित-भेदमादाय देवदत्तादीनां मिथो व्यवहारे चैतन्यस्य चैतन्यविषयतया मिथ्यात्वमवर्जनीयम्*।

न च— "मिथ्याभूतभेदवच्चैतन्यविषयत्वं न मिथ्यात्वप्रयोजकं प्रपञ्चेऽपि तदसिद्धेः। जीवस्य विशिष्टरूपेण मिथ्यात्वमिष्टं निष्कृष्टरूपं तु न चिद्विषयं" इति वाच्यम्।

---

[1] **स्वव्यापकस्य निवृत्त्याऽन्यस्यापि निवृत्तेः (ख).** [2] **"ख" प्रतौ * चिह्नान्तर्गतं वाक्यं न दृश्यते (ख).**

तर्हि वृत्तिविशिष्टमपि ज्ञानं मिथ्यात्वान्न मुख्या दृगिति न प्रपञ्चेऽपि दृश्यत्वमिति जितमस्माभिः। विशिष्टान्यत्वे तस्यापि वृत्तिविषयत्वान्मिथ्यात्वं, अनन्यत्वे विशिष्टस्य मिथ्यात्वात्तस्य शुद्धाभिन्नत्वात्प्रपञ्चस्य सत्यत्वं ब्रह्मणो मिथ्यात्वमिति विपरीतवृत्तिः। [1]तस्माद्विशिष्टानन्यत्वान्यत्वाभ्यां प्रपञ्चब्रह्मणोः सत्यत्वमिथ्यात्वविपरीतवृत्तिर्दुर्वारैव।

किञ्च– निर्विशेषं ब्रह्म किमस्ति? उत नास्ति? **द्वितीये**– माध्यमिकमतप्रवेशः। **प्रथमे**– ब्रह्मास्तीति प्रतिज्ञायां प्रवृत्तिनिमित्तभेदे निर्विशेषत्वव्याहतिः। न च प्रतिज्ञा प्रवृत्तिनिमित्तयोः। [2]कल्पितत्वेन परिहारः; निर्विशेषं ब्रह्मास्तीति प्रतिज्ञायास्सविशेषविषय-कत्वाकथनस्य उन्मत्तप्रलापत्वात् अस्ति शब्दप्रवृत्तिनिमित्तभूतायाः सत्तायास्त्वन्मते मिथ्यात्वायोगाच्च। ब्रह्मत्वस्य कल्पितत्वे निर्विशेषस्याब्रह्मतापाताच्च। यत्र ब्रह्मत्वं प्रकल्पितं तदेव ब्रह्मेत्युक्तेर्व्याहतत्वाच्च। निर्विशेषस्य कल्पितसम्बन्धायोगाच्च। प्रवृत्ति-निमित्ताभेदे तु सामानाधिकरण्यायोगः। **“भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यं”** इति वृद्धाः। अभावरूपधर्मप्रवृत्तिनिमित्तकतायामप्ययमेव दोषः। अभावानां स्वरूपानतिरेके सामानाधिकरण्यहानेः, अतिरेके सिद्धान्तहानेः। एतेन निर्विशेषः प्रतिज्ञादीनामविषयोऽपि स्वतस्सिध्यतीति निरस्तम्। दुस्साध्येषु सर्वेष्वर्थेषु स्वतस्सिद्धेर्दुर्वारत्वापातात्। एतेन श्रुत्या निर्विशेषसिद्धिरपास्ता। प्रकृतिप्रत्ययभेदभिन्नायाः श्रुतेस्तत्र प्रामाण्यासम्भवात्। पूर्वोक्तदृश्यत्वानुमानग्रासाच्च।

अपि च– मिथ्यार्थब्रह्मणोर्भेदः परमार्थः? उतापरमार्थः? **प्रथमविकल्पे** भेद-सत्यत्वाङ्गीकारात्सिद्धान्तहानिः। **द्वितीये** सत्यस्य ब्रह्मणोऽपि मिथ्यात्वं दुर्वारम्। ययो-र्भेदो मिथ्या तयोरैक्यमिति व्याप्तेः। घटस्य स्वस्माद्भेदे मिथ्याभूते ह्यभेदः परमार्थः। न च भेदाभेदयोर्मिथ्यात्वान्न दोष इत्यपि साधु, परस्परविरोधे प्रकारान्तरानवस्थितेः। यद्येवं स्यात्तर्हि भेदाभेदयोरपक्षपातिना भवता जीवब्रह्मणोस्तदुभयमिथ्यात्वं किं न स्वीक्रियेत? न चाभेदश्रुतिप्राबल्यात्तदसम्भवः। **“सर्वं खल्विदं ब्रह्म”** इत्यादीना-मेव प्रपञ्चब्रह्माभेदश्रुतीनामत्रापि सत्त्वात्।

किञ्च– निर्विशेषं ब्रह्मज्ञानमज्ञानं वा? **द्वितीये** अपसिद्धान्तः। **प्रथमे** तु सविषयं निर्विषयं वा? निर्विषयत्वे त्वदभिमतज्ञानत्वव्याघातः। सविषयत्वे विषय-

---

[1] तस्माद्विशिष्टान्यत्वानन्यत्वाभ्यां (ख, घ, ज). [2] कल्पितविषयत्वेन (ख, घ, ज).

नित्यताप्रसङ्गः। नित्यज्ञानस्य नित्यविषयावश्यंभावात्। तथा च मुक्तावपि सप्रपञ्चताप्रसङ्गः। तदा विषयाणां निवृत्तत्वान्निर्विषयमिति चेत् तर्हि ज्ञानत्वमेव न स्यात्। निरालम्बनत्वज्ञानत्वयोर्व्याघातात्। न च– अतीतादिविषयज्ञानवद्विषयनित्यत्वपरिहारः। तद्वदतीतत्वादिकिञ्चित्प्रकारकत्वेन किञ्चिदालम्बनत्वेन वा? निर्विशेषत्वव्याघातात्। विषयसम्बन्धनित्यताया एवापाद्यत्वेन दोषापाताच्च। निर्विषया निराश्रया च संविदनुभवसिद्धेति तुच्छम्। **"घटमहं जानामि", "अयं घटः"** इति सानुबन्धत्वेनैवोपलम्भात्। अन्या तु संवित् त्वदभिमता गगनकुसुमादिसिद्धिकालं विना न सिध्यतीति दिक्।

अपि च– द्रव्यमद्रव्यं वा? द्रव्यं चेद्गुणाश्रयत्वप्रसङ्गः। उत्पत्तिकालावच्छिन्नघटवदुपपत्तिरिति फल्गु। आद्यक्षणसंयोगस्य तत्रापि सत्त्वात्। तद्वत्कदाचिद्गुणाश्रयत्वेऽपि अगुणाश्रयत्वव्याहतेः। गुणानां कल्पितत्वेऽपि निर्विशेषत्वव्याहतिः। अविद्योपादानं विना बुद्धेस्तदसिद्धेः। अद्रव्यं चेदद्रव्याश्रितत्वप्रसङ्गः। तथा च **"स्वे महिम्नि"** इत्यादिश्रुतिविरोधः। आश्रयसम्बन्धान्निर्विशेषत्वभङ्गाच्च। तस्मादेवंविधाभिः खण्डनयुक्तिभिः प्रथमद्वितीयकक्ष्यान्तराल एवाबाधितस्य ब्रह्मणोऽपि तदुपरितनकक्ष्यासु बाध्यत्वसम्भवात्तदतिव्याप्तिर्दुर्वारैवेति दिक्।

नापि तत्त्वावेदकप्रमाणविरुद्धत्वमिति **तुरीयः**– ताल्वादिषु श्रोत्रादिषु च तत्त्वावेदकप्रामाण्यव्यञ्जितेषु तत्स्वरूपविरोधादर्शनात्। अथ तत्प्रमेयविरुद्धत्वमित्यपि न, वेदत्वेनैव तत्त्वावेदकत्वे **"नेह नानास्ति"** इत्यादीनामपि **"यस्मिन् द्यौः"** इत्यादितत्त्वावेदकप्रमाणविरुद्धार्थकतया तदर्थप्रपञ्चाभावेऽपि व्यावहारिकत्वप्रसङ्गात्। प्रपञ्चाभावस्यातिरिक्तस्य सत्यत्वे द्वैतप्रसङ्गेन, मिथ्यात्वे तद्बोधकप्रमाणस्य तत्त्वावेदकत्वव्याघातेन च ब्रह्मभेदस्याङ्गीकार्यतया ब्रह्मण्यतिव्याप्तेश्च।

किञ्च– अत्र तत्त्वावेदकतदन्ययोर्भेदः सिद्धो वाऽसिद्धो वा? असिद्धौ स्वोक्तिव्याघातः, सिद्धौ तु अप्रमाणेन विषयासिद्धौ प्रमाणगोचरस्य भेदस्य सत्यत्वप्रसङ्गेन प्रपञ्चव्यावहारिकत्वभङ्गः। तदसत्वे तु स एव तत्त्वावेदकाभेदादुक्तिव्याघातः। यद्भेदस्य मिथ्यात्वं तदभेदस्सत्य इति ह्युक्तं प्राक्।

नापि— अर्थक्रियाशून्यप्रतीतिविषयत्वमिति **पञ्चमः**— तथा सति त्वदीयायाः प्रवृत्तेर्लोकवेदगोचरायाः सर्वस्या अपि गगनकुसुमायमानत्वप्रसङ्गेन स्वक्रियास्ववचनव्याघातदण्ड एव दुष्टफणिनमिव त्वां नर्तनान्निवर्तयिष्यति ।

**अथायमभिप्रायः**— नञः प्रश्लेषेण अर्थक्रियाशून्यत्वं अर्थक्रियाशून्यत्वाभावः इति । तथासति सर्वार्थमूलकन्दे ब्रह्मण्यतिव्याप्तिः । न च अविद्यावच्छिन्नस्य ब्रह्मणोऽर्थक्रियाकारित्वं न शुद्धस्येति अविच्छिन्नस्य च व्यावहारिकत्वमिष्टमिति वाच्यम् । विशिष्टस्य ज्ञानेन निवर्त्यत्वं तर्हि प्रसज्येतेति विशेषस्यापि निवृत्तौ शून्यवादसाम्राज्यप्रसङ्गः । न हि विशिष्टं विशेषणविशेष्यसम्बन्धेभ्योऽतिरिच्यते । अपि चाविद्यानिवृत्तिरूपार्थक्रियाहेतौ चरमान्तःकरणवृत्तिविषयशुद्धब्रह्मण्यतिव्याप्तेः । प्रकाशत्वेनाविद्यानिवृत्तित्वेन कार्यकारणभावः । अनात्मविषयप्रकाशत्वेन अनात्मविषयाविद्यानिवृत्तित्वेन चापरः । तथा च सति स्वविषयतां विनापि ब्रह्मणः स्वरूपप्रकाशः अविद्यां निवर्तयतीति त्वत्सिद्धान्तः ।

किञ्च— प्रातिभासिके रज्ज्वधिष्ठानसर्पादौ भयकम्पाद्यर्थक्रियाकारिण्यतिव्याप्तिः । उत्पन्नप्रध्वस्तेषु घटादिषु चाव्याप्तिः । प्रचयाव्यवहितपूर्वक्षणोत्पन्नेषु तेषु च क्षणेष्वव्याप्तिः । अर्थक्रियायास्तेष्वदर्शनात् । स्वप्नेषु च शुभाशुभसूचकेषु तत्कालीनार्थक्रियाहेतुष्वतिव्याप्तिः । व्यावहारिकार्थक्रियाविवक्षायां त्वात्माश्रयदोष एव । न च कटकमुकुटादिपरिणामोऽर्थक्रियादिपदार्थ इत्युक्तावपि दोषपरिहारः । स्वाप्नेष्वतिव्याप्तेरुत्पन्नध्वस्तेषु चाव्याप्तेर्दुष्परिहरत्वात् ।

अथ— कारणतावच्छेदकजातीयत्वेनातिव्याप्तिपरिहारः । तथा सति प्रातिभासिकेऽतिव्याप्तेः । न च तत्र [1]तादृशजात्यभावः । तथा सति तत्र त्वदीयरजतादि[2]व्यवहारस्याकस्मिकत्वप्रसङ्गात् । स्वप्नेष्वर्थक्रियाया अभावप्रसङ्गाच्चेत्यन्यत्र विस्तरः ।

नापि करणदोषोपहितज्ञानविषयत्वमिति **षष्ठः**— शुक्तिरजतादिष्वतिव्याप्तेः अबाधितसर्वजनप्रतीतिविषयेष्वदुष्टेन्द्रियगोचरेषु घटादिष्वसम्भवात् । **"यतो वा इमानि भूतानि जायन्ते" "आत्मन आकाशस्सम्भूतः" "यस्मिन् द्यौः पृथिवी"** इत्याद्यदुष्टश्रुतिजन्यज्ञानविषयत्वाच्च प्रपञ्चे लक्षणासम्भवः ।

---

[1] तादृशताद्यभावः (ख, घ, ज). [2] व्यवहारस्याकस्मिकत्वप्रसङ्गात् (ख, घ, ज).

अथ अविद्यादोषमूला श्रुतिरपि, तस्मान्नासम्भवः इति मनुषे? तर्हि ब्रह्मण्यतिव्याप्तिः; तादृशश्रुतिजन्यज्ञानविषयत्वात्तस्य। न च ब्रह्मणः प्रमाणान्तरैरबाधान्न तद्विषयश्रुतिजन्यज्ञाने करणदोषो हि तमिति वाच्यम्। "अथात आदेशो नेति नेति" "नासदासीन्नो सदासीत्तदानीं" "न सन्नासन्न सदसत्" इत्यादिश्रुतिभिः पूर्वप्रपञ्चितकर्त्रनुगृहीताभिर्ब्रह्मणोऽपि बाधात्। श्रुतीनां ब्रह्मनिषेधं विनाऽर्थान्तरवर्णनं प्रपञ्चनिषेधं विनाऽर्थान्तरस्य तत्रापि वर्णनादकिञ्चित्करम्।

किंच— अधिष्ठानसत्तारूपे सर्वप्रत्ययवेद्ये ब्रह्मण्यतिव्याप्तिः। न च ज्ञानप्रकारत्वमिति विवक्षितुं शक्यं घटादिष्वव्याप्तेः। तेषां ज्ञानविशेष्यत्वात्। सद्रूपस्यापि ब्रह्मणः "घटस्सन्" इत्यादि प्रतीतौ प्रकारित्वात्। "ब्रह्मणि प्रपञ्चः" इति ज्ञाने प्रकारत्वाच्च। न चाध्यस्तत्वं विषयविशेषणमिति युक्तम्। तावन्मात्रस्यैव सम्यक्त्वे शेषवैयर्थ्यात्। प्रातिभासिके अतिव्याप्त्यवारणाच्च। तस्माद्व्यावहारिकमेव विश्वस्य सत्यत्वमिति यत्— तस्य श्रुतियुक्त्यनुभवविरुद्धत्वात् [1]प्रच्छन्नबौद्धवाद एवायं मायावाद इति श्रौतशैवघण्टाघोषः।

किंच— तत्त्वमस्यादिमहावाक्येषु च न निर्विशेषब्रह्मैक्यमुपदिश्यते। [2]त्वन्तत्पदयोस्सविशेषजीवब्रह्मपरत्वव्यपदेशात्। "तदैक्षत बहुस्यां" इत्यादिषु तच्छब्दवाच्यस्य जगत्कारणस्य परमेश्वरस्य ब्रह्मणः सविशेषत्वोपदेशाच्च।

ननु मायाऽविद्यावच्छिन्नसर्वज्ञत्वकिञ्चिद्ज्ञत्वधर्मानुगतेश्वर[3]जीवयोर्गोश्वानोरिव एकत्वासम्भवात् जहदजहल्लक्षणोक्तत्यागात्यागविधायकसोऽयंदेवदत्तवन्मायाविद्योपाधिनिराकरणपूर्वकाधिष्ठानैक्ये बाधकाभावाल्लक्षणाङ्गीक्रियते इति चेन्न।

**"ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्म कामो ब्रह्मवेदनं कुर्यात्" "परञ्ज्योतिरुपसम्पद्य स्वेन रुपेणाभिनिष्पद्यते" शिव एको ध्येयः शिवङ्करस्सर्वमन्यत् परित्यज्य" "ध्यात्वा मुनिर्गच्छति भूतयानि समस्तसाक्षिं तमसः परस्तात्"**

---

[1] प्रच्छन्नबौद्धमायावाद इति (ख, घ, ज). [2] तत्त्वं पदयोः (ख, घ, ज). [3] गोश्वानयोरिव (ख, घ, ज).

**श्रद्धाभक्तिध्यानयोगादवेहि "** इत्यादौ भ्रमरकीटवत्परमेश्वरोपासनात्मकध्यानज्ञानवशात् जीवस्य शिवत्वप्राप्त्युपदेशात्। **"एष एव साधु कर्म कारयति"** इत्यादिश्रुतिषु सर्वकर्मकारयितृत्वसालोक्यादिचतुर्विधमुक्तिप्रदायकत्वयोः परमेश्वरस्यैवाभिधानात्। **"तदैक्षत बहुस्याम्"** इत्युपक्रमवाक्यविरोधात्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गप्रसङ्गाच्च।

ननु– उपासनाविधिना परमेश्वरसाक्षात्कारो नोपपद्यते। **"यद्दृश्यं तन्नश्यं"** इति न्यायेन [1]घटवन्नाशप्रसङ्गात्। तदभावे ध्यानस्य निष्प्रयोजनत्वात् किञ्च सर्वज्ञत्वादिषड्विधधर्मावच्छिन्नस्य परशिवस्य ब्रह्मणः शिवशर्वशङ्करानन्दज्ञानानन्तादिशब्दानां हस्तकरपाण्यादिशब्दवत्पर्यायत्वात् अखण्डज्ञानस्वरूपपरमशिवावलोकी शुद्धजीवस्तु तद्भिन्नस्तदभिन्नो वा? **नाद्यः–** प्रभाकरप्रभाभासमानस्य घटपटादिप्रपञ्चस्य स्वभासकप्रभाकरप्रकाशकत्वासम्भववत् परमशिवप्रेरितस्य तद्वेत्तृत्वासम्भवात्। **न द्वितीयः–** चक्षुरिन्द्रियवत् स्वसाक्षात्कारासम्भवात्। जीवस्य तद्भिन्नज्ञानस्वरूपत्वेन तत्साक्षात्कारसिद्धिरिति चेन्न। *जीवस्य तत्साक्षात्कारकर्तृत्वं [2]तदुत्कृष्टज्ञानात्मकत्वेन तत्समानज्ञानात्मकत्वेन तदपकृष्टज्ञानात्मकत्वेन वा? **नाद्यः** श्रुतियुक्त्यनुभवविरोधात्। **न द्वितीयः–** तदुपासनासम्भवात्। पूर्वोक्तदोषापत्तेश्च। **न तृतीयः– "ज्ञाज्ञौ द्वावजावीशानीशौ" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां"** इत्यादिश्रुतियुक्त्यनुभवसिद्धत्वेन तदपकृष्टत्वं सम्भवति। तथापि प्रभाकरप्रभामध्यस्थदीपवत् तत्साक्षात्कारासम्भवात्। तस्मादुपासनाज्ञानेन न ब्रह्मसाक्षात्कारसिद्धिरिति चेन्न।

प्रभाकरांशचक्षुर्मात्रेणैव प्रभाकरसाक्षात्कारसिद्धिवत् गुरुदीक्षाशुद्धस्य जीवस्यैव परमेश्वरानुग्रहात्तत्साक्षात्कारसिद्धेरविरोधात्। नो चेत् **'ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "ब्रह्म वेद ब्रह्मैव भवति" एषोऽणुरात्मा चेतसा वेदितव्यः"** इत्यादिश्रुतिशतभङ्गप्रसङ्गः। लोके गुरुशिष्यबोधप्रचारोऽपि न स्यात्। तस्मात्पूर्वोक्तार्थ एव सर्ववेदान्ततात्पर्यमिति सिद्धान्तः।

**इति चतुर्थं समन्वयाधिकरणम्।**

---

[1] घटवन्नष्टप्रसङ्गःस्यात् (ख, ब, ज). [2] तदुत्कृष्ट तत्समानतदपकृष्टज्ञानात्मकत्वेन वा (ख, ब, ज)

## ईक्षत्यधिकरणम् ॥ ५ ॥

न चाध्यायचतुष्टयतात्पर्यं तु सूत्रचतुष्टयेन द्योतनात् कथमन्येषां सूत्राणां प्रयोजनमिति वाच्यम्। उक्तब्रह्मलक्षणस्य प्रधानादावतिव्याप्तिमाशंक्य भगवान् बादरायणः परिशेषसूत्राणां प्रयोजनं दर्शयति।

"*[1] निर्विकारस्य ब्रह्मणः जगज्जन्मादिकारणत्वासम्भवात् अयस्कान्तसूचीन्यायेन ब्रह्मसत्तावशात्तत्प्रधानस्य जगज्जन्मादिकारणत्वं समुचितम्? उत स्वतन्त्रेण वा प्रधानस्येति साङ्ख्याद्वैतमतपूर्वपक्षमाशङ्क्य तन्मतं निराकरोति*–

# ईक्षतेर्नाशब्दम् ॥ ५ ॥

**अशब्दं**– साङ्ख्याद्वैतकल्पितं जडं प्रधानं जगत्कारणं न भवति। कुतः? – **ईक्षतेः**– ईक्षणपूर्वकजगज्जन्मादिकारणत्वस्य सच्छब्दवाच्ये परमेश्वरे एव दर्शनादिति सूत्रार्थः। छान्दोग्ये श्रूयतेऽस्य **विषयः**। **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं-ब्रह्म" "तदैक्षत बहु स्यां प्रजायेयेति"** इत्यादि। अन्यत्र– **"आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्। तदैक्षत लोकान्नुसृजा इति स इमान् लोकान-सृजत"** इति। तथा– **"[2]सैषा लोकानसृजत"** इति। तथा **षोडशकलं पुरुषं प्रकृत्या क्वचित्" "स ईक्षां चक्रे" "स प्राणमसृजत"** इत्यादिश्रुति-कदम्बे परमेश्वरस्य वीक्षणपूर्वकजगज्जन्मादिकारणत्वदर्शनात्।

अत्र जगत्कारणत्वं सच्छब्दवाच्यत्वं च प्रधानस्य वा ब्रह्मणो वेति **संशयः**।

**पूर्वपक्षस्तु– "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"** इत्यादिषु परमेश्वरस्य निष्क्रियस्य निर्विकारत्वोपदेशात्। जगज्जन्मादेरीक्षितृत्वस्य च विकारधर्म-रूपत्वात्। **"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां [3]जनयन्तीं सरूपाम्। अजो**

---

[1] एतच्चिह्नान्तर्गतो भागः 'क' कोशे न दृश्यते। [2] नास्तीयं श्रुतिः क, घ कोशयोः।
[3] सुषमानां (श्लो. ४-५).

ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।" "सैषा विचित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्ना अङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी" इत्यादिश्रुतिषु प्रधानस्य बहुप्रजाजनकत्वोपदेशात् स्वत एव वा तत्सत्ताप्राधान्येन वा प्रधानस्य जगत्कारणत्वमुपपद्यते। सत्त्वरजस्तमोगुणात्मके ज्ञानक्रियाशक्तिसम्बन्धावच्छिन्नं सर्वज्ञत्वं विधीयते। "सत्त्वात्सञ्जायते ज्ञानं" इति स्मृत्या ज्ञानहेतुत्वं तस्यैव सूचितम्। मृदादिव त्परिणामस्याचेतनप्रधानधर्मत्वात्। चेतनस्य तदसम्भवाच्च। जगत्प्रधानयोः कार्यकारणत्वं युज्यते। तस्मात् "सदेव सोम्येदमग्र आसीत्" इत्यत्र सच्छब्दवाच्यत्वेन तदेव व्यवह्रियते। कार्यकारणयोरनन्यत्वमत एव सत्यम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च।

किञ्च— "यथा सोम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिना सत्यमृत्पिण्डादितत्कार्यदृष्टान्तदार्ष्टान्तिकयोरेकरूपत्वं प्रतिपाद्यते। अत एव कपिलौडुलोम्यादयः प्रधानस्य प्रतिज्ञादृष्टान्तश्रुत्युपपत्त्या जगत्कारणत्वं व्यवस्थापयन्ति। तस्मात्तद्भिन्नस्य सच्छब्दवाच्यत्वं जगत्कारणत्वं च नोपपद्यते इति प्राप्ते ब्रूमः।

सिद्धान्तस्तु— "ईक्षतेर्नाशब्दम्" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं" "तदैक्षत बहुस्यां प्रजायेयेति" इति श्रुतिसूत्राभ्यां सच्छब्दवाच्यस्य परब्रह्मणश्शिवस्यैव ईक्षतिधातोः श्रवणादचेतनस्य प्रधानस्येक्षितृत्वासम्भवात्। "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। उर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः।" "सत्यं ज्ञानमनन्तं ब्रह्म" "सत्यात्मप्राणारामं मन अनन्दं" इत्यादिश्रुतिषु सर्वज्ञस्य परमशिवस्य ब्रह्मणस्सच्छब्दवाच्यत्वं सकलजगदुपादाननिमित्तकारणत्वं च श्रूयते। [1] गुणत्रयसाम्यावस्थात्मकस्य प्रधानस्य सत्पदवाच्यत्वं जगत्कारणत्वं च नोपपद्यते। "यन्मोहात्मकमचेतनं तदेव प्रधानमिति" तदेव "जडं मोहात्मकं प्रधानमिति" च तापनीयादिषु प्रधानस्य जडत्वव्यपदेशात्। "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इत्यादि श्रुतिशतेन प्रधानपरमेश्वरयोर्नियाम्यनियामकत्वकथनात्।

---

[1] गुणत्रयसामान्यावस्थात्मक (घ ज).

किंच– उपक्रमे "**तदैक्षत**" इत्यनेन उपादानस्य चेतनत्वं "**बहु स्यां**" इत्यनेन तस्य जगदुपादानत्वं च निर्दिश्यते। "**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च**" इति श्रुतिदर्शनात्सर्वज्ञस्य परमेश्वरस्य ज्ञानक्रियादिसर्वशक्तिवैशिष्ट्यं स्वभावसिद्धमेव। अतो जगत्कारणवाक्यानि न प्रधानपराणि।

प्रतिज्ञादृष्टान्तयोगात्प्रधानस्य जगत्कारणत्वमिति यदुक्तं तत्तुच्छम् [1]ईक्षणस्य [2]चेतनैक-धर्मत्वात्। "**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत।**" इति वाक्ये सर्वं ब्रह्मेत्युपदेशात् नेतरस्य कारणत्वम्। गुणत्रयसाम्यावस्थायां प्रकृतेः सर्वज्ञानशक्ति-मत्वेन सत्वधर्मावच्छिन्नं सर्वज्ञत्वं सम्भवतीति चेत् तदसंगतं, [3]गुणत्रयसाम्यात्मकस्य प्रधानस्य तमःपृथक्त्वेन रजस्सत्त्वगुणसम्बन्धाभावात्। "**गुणत्रयसाम्यावस्था प्रकृतिः**" इत्यङ्गीकाराच्च।

जगदुपादानकारणत्वे परमशिवस्य ब्रह्मणो विकारित्वापत्तिरिति यदुक्तं तन्न रमणी-यम्। परमशिवचिच्छक्त्यंशभूतस्य मायापाशस्य कार्यत्वं, चिच्छक्त्यवच्छिन्नपरमशिवस्य कारणत्वं चेति निर्देशान्न विकारित्वशंकाकलङ्कः। सृष्टिकामस्य रजस्तमोव्यपाश्रयत्वात् किञ्चिज्ज्ञत्वं प्रसज्येत इति चेत्– यथाग्निसिद्धस्य तद्दाहकत्वभयाभावः तद्वद्वशीकृतमायाशक्तेः परशिवस्य तत्कृतदोषानुपपत्तिः।

ननु– "**अप्राणोह्यमनाश्शुभ्रः**" इत्यादिना परमशिवस्य ब्रह्मणश्शरीरेन्द्रियमनः-प्राणसंबन्धस्य निरस्तत्वात्कथमीक्षितृत्वं सम्भवति? इति चेन्न। साधनान्तरनिरपेक्षतया प्रभाकरस्य स्वयं प्रकाशत्ववच्छिवस्य ब्रह्मणश्शरीरेन्द्रियादिसाधनान्तरनैरपेक्ष्येण सर्वेक्षितृत्व-सम्भवात्। तथा च श्रुतिः– "**अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स-शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्**" "**अपाणिपादोऽहमचिन्त्यशक्तिः। पश्याम्यचक्षुस्स शृणोम्यकर्णः। अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाऽहम्**" इति श्वेताश्वतरकैवल्याद्युपनिषत्सु श्रूयते।

---

[1] ईक्षणलक्षणस्य (घ, ज). [2] चेतनधर्मत्वात् (घ, ज). [3] गुणत्रयात्मकप्रधानस्य (घ, ज).

न च– "**नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता**" इत्यादिश्रुतिदर्शनात्परमेश्वरव्यतिरिक्तशारीरसद्भावे प्रमाणाभाव इति वाच्यम्। "**द्वा सुपर्णा सयुजा सखाया**" "**ज्ञाज्ञौ द्वावजावीशनीशौ**" इत्यादिश्रुतिषु जीवब्रह्मणोर्भेदव्यपदेशात्। "**नान्योऽतोऽस्ति द्रष्टा**" इति श्रुतौ तद्व्यतिरिक्तब्रह्मविष्ण्वादिजीवानां तत्समानद्रष्टृत्वश्रोतृत्वादिनिषेधमात्रमेवोपदिश्यते। अन्यथा पूर्वोक्तशिवजीवभेदप्रतिपादकश्रुतिभङ्गप्रसङ्गः स्यात्। अत एतदेव रमणीयम्।

"**तत्तेज ऐक्षत**" "**ता आप ऐक्षन्त**" इत्यादिश्रुतिषु अचेतनयोरप्तेजसोरीक्षितृत्वश्रवणात् तद्वदेव प्रधानस्यापि गौणेक्षितृत्वमङ्गीकृत्य जगज्जन्मादिकारणत्वं युक्तं इत्याशङ्क्य निराकरोति—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

प्रधानस्याप्तेजसोरिव ईक्षणं गौणमिति चेन्न। कुतः? आत्मशब्दात्। "**सदेव सोम्येदमग्र आसीत्**" इत्युपक्रम्य "**तदैक्षत**" "**तत्तेजोऽसृजत**" इत्यादिना तेजःप्रभृति चेतनाचेतनकारणत्वं निर्दिश्य "**ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा**" इति सच्छब्दप्रतिपादितस्यात्मशब्देन व्यपदेशात्।

किञ्च– "**ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा**" इति जडाजडप्रपंचात्मकत्वेन स्वत आत्मनोपदेशाज्जडप्रधाने तदसंभवाच्च गौणार्थोऽपि न संगच्छते। अप्तेजःप्रभृतीनां शब्दानामष्टमूर्त्यात्मकपरमशिववाचकत्वमेवोपदिश्यते। अतो न विरोधः।

नन्वात्मशब्दस्य चेतने जीवे मुख्यत्वात्तस्यैवेक्षितृत्वपूर्वकं जगत्कारणत्वं इति चेन्न। "**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति**" इति श्रुतावात्मना सहानुप्रवेशदर्शनात्। "**स आत्मा तत्त्वमसि श्वेतकेतो**" इत्यत्र चेतनाचेतनप्रपञ्चात्मकपरमशिवे जीवानामैक्योपदेशाच्च। न जीवस्य जगत्कारणत्वं सर्वेक्षितृत्वं चोपपद्यते। एकविज्ञानेन सर्वविज्ञानभङ्गप्रसङ्गश्च। "**नामरूपे व्याकरवाणि**" इत्यत्र परमेश्वरकर्तृत्वदर्शनात्।

न च– चेतनत्वाज्जीवस्य आत्मशब्दप्रयोगदर्शनाद्यत्किंचिन्मुख्यकारणत्वं इति वाच्यम्। "**प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः**" इत्यादिश्रुतौ–

**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥**

इति स्मृतावपि च जीवस्य परमेश्वरमायापाशपराधीनत्वव्यपदेशात्।

ननु– अचेतनेन्द्रियभूतशरीरादावात्मशब्दप्रयोगदर्शनात्, "**कूलं पिपतिषति**" इत्यत्र चेतनधर्मपतनेच्छायाः कूले सम्भवाच्च [1]मुख्येऽक्षणपूर्वकजगत्कर्तृत्वं जडप्रधानस्यापि सम्भवति इति चेन्न। "**ममात्मा सोमभद्रः**" इत्यादावात्मशब्दप्रयोगेऽपि भृत्यस्य न यथा सर्वस्वातन्त्र्यं, तथा प्रधानस्यात्मशब्दप्रयोगेऽपि न स्वातन्त्र्यम्। "**कूलं पिपतिषति**" इत्यत्रापि पतनौन्मुख्यमात्रात्प्रतीतिमात्रमेव कूलस्य पतनेच्छाया न पारमार्थिकत्वम्। अत्र चेतनस्य परशिवस्य मुख्येक्षणपूर्वकजगत्कारणत्वोपदेशाद्गौणार्थत्वमपि न सम्भवति।

किञ्च– "**श्रोत्रं शृणोति, शस्त्रं छिनत्ति**" इत्यादिप्रयोगाणां यथा चेतनविषयत्वं तथा प्रधानकर्तृत्वप्रतिपादिकानां "**अजामेकां**" इत्यादिश्रुतीनां परमेश्वरकर्तृत्वपरत्वमेव। ज्योतिश्शब्दस्य [2]क्रतुज्वलनादिविषये मुख्यत्ववत् आत्मशब्दस्यापि चेतनाचेतनविषयत्वेऽपि परमात्मनि मुख्यत्वमेव।

पुनर्हेत्वन्तरमाह–

## तन्निष्ठस्य मोक्षोपदेशात्॥ ७॥

"**स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो**" इत्यत्र सदणिमानमादाय "**तत्त्वमसि श्वेतकेतो**" इति चेतनश्वेतकेतोरेव

---

[1] मुख्यत्वेन ईक्षणपूर्वक (घ.ज) [2] क्रतुज्वलनमुख्यविषयत्ववत् (ब, ज).

ब्रह्मतादात्म्यमुपदिश्य "**तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति**" इति शरीरपातानन्तरं भ्रमरकीटन्यायवत् ब्रह्मप्राप्तिलक्षणो मोक्ष इत्युपदेशात्, न प्रधान-शारीरयोः "**तत्त्वमसि**" इति वाक्ये तादात्म्यनिर्देशः । "**यथा क्रतुरस्मिन् लोके पुरुषो भवति तदेतः प्रेत्य भवति**" इति श्रुत्या जडप्रधाननिष्ठस्य तत्सम्पत्तिरेव स्यात् । ब्रह्मात्मैक्योपदेशशास्त्रस्य सर्वस्य वैरुध्यं स्यात् ।

ननु– "**आग्नीध्रशालान्यायेन** शालास्थितऋत्विगादीनामप्याग्नीध्रशब्दवत् प्रधानेप्या-त्मशब्दप्रयोगदर्शनात् स्थूलारुन्धतीन्यायेन तद्ध्यानानन्तरमेव परशिवध्यानान्मुक्तिः ।"

इति चेन्न– "**नोपास्यौ प्रकृतिजीवौ**" "**ज्ञात्वा शिवं शान्तिमत्यन्तमेति**" "**तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः**" "**शिव एको ध्येय-श्शिवङ्करस्सर्वमन्यत्परित्यज्य**" इत्यादिना शिवेतरध्यानस्य मुमुक्षूणां निषिद्धत्वात् शिव-ध्याननिष्ठस्यैव मायापाशनिवृत्तिपूर्वकमुक्त्युपदेशात् । विश्वप्रकाशकविभाकरावलोकनस्य यथा न दीपिकासापेक्षत्वं, तद्वत् "**स्थूलारुन्धतीन्यायेनापि**" परशिवध्यानसाक्षात्कारस्य न [1]प्रधानध्यानापेक्षा युक्ता ।

अथवा– जडप्रधानस्य सच्छब्दवाच्यत्वे "**तत्त्वमसि श्वेतकेतो**" । इति चेतन-श्वेतकेतोरचेतनत्वसिद्धिस्स्यात् । तथात्वे पाशनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपमुक्तिर्हन्येत । शास्त्र-स्यानर्थक्यं उन्मत्तप्रलपितत्वं चानिष्टं स्यात् । तस्मादत्रात्मशब्दश्चेतनपरशिववाचक एव ।

ननु– स्वाभाविकजीवत्वस्य निवृत्त्यसम्भवात् "**तत्त्वमसि**" इति वाक्ये "**तस्मा-त्त्वमसि**" इति "**तत्प्रकारकोऽसि**" इति ज्ञातव्यम्, अथवा स्थूलसूक्ष्मचिदचित्प्रपञ्च-विशिष्ट[2]कार्यकारणयोरभेद इति वा वक्तव्यम् ।

इति चेन्न– मोक्षदशायामपि पारतन्त्र्यसद्भावात्पारतन्त्र्यस्य दुःखहेतुत्वात् । "**अभयं वै जनक प्राप्तोऽसि**" "**न बिभेति कुतश्चनेति**" इत्यादिना मुक्तस्याभयत्वोपदेशात् मुक्तिसंसारयोर्वैलक्षण्याभावाच्च । "**ऐतदात्म्यमिदं सर्वं**" इत्युपक्रम्य जडप्रपञ्चस्य ब्रह्मात्मकत्वमुक्त्वा "**तत्त्वमसि**" इति तच्छब्देन [3]पूर्वपरामर्शिना "**पूर्वनिर्दिष्टं ब्रह्म**

---

[1] प्रधानध्यानसापेक्षा (ब, ज). [2] कार्यकारणब्रह्मणोः (ब, ज). [3] पूर्वपरामृष्ट ब्रह्मैव (ब, ज).

च श्वेतकेतो त्वमसि" इति निर्देशात्नान्यार्थो वैदिकैर्ग्राह्यः। "ततस्मात्त्वमसि" इति निर्देशे सर्वात्मकत्वोपदेशकपूर्ववाक्यार्थवैपरीत्यप्रसङ्गस्स्यात्। शारीरस्य शारीरत्वे ब्रह्मणो ब्रह्मत्वे निष्फलत्वप्रसङ्गो न युज्यते।

केचित्— "तत्त्वमसि" इत्यत्र "अतत्त्वमसि" इत्यूचुः। तदपि "ऐतदात्म्यमिदं सर्वं तत्सत्यं" इत्याद्युपक्रमवाक्यविरोधान्न मुमुक्षुभिर्ग्राह्यम्।

किञ्च— "[1]ब्रह्म वेद ब्रह्मैव भवति" "तत्त्वमसि" "त्वं तदसि" "आवयोरन्तरं न विद्यते" इत्यादिश्रुतिशतभङ्गप्रसङ्गोऽपि स्यात्। एतेन दण्डदण्डिवत् अङ्गाङ्गिवत् संसृष्टभेदवादिमतं घटपटवदसंसृष्टभेदवादिमतं च निरस्तम्।

प्रधाननिराकरणे पुनर्हेत्वन्तरमाह—

## हेयत्वावचनाच्च ॥ ८ ॥

हेयत्वस्य निषेधस्य अवचनात् अनुक्तेरित्यर्थः। जगदुभयकारणत्वे ध्येयत्वे च ब्रह्मणः हेयत्वावचनात्, "नोपास्यौ प्रकृतिजीवौ" इत्यादिना प्रधानस्य हेयत्ववचनात् न प्रधानस्येक्षणपूर्वकजगदुभयकारणत्वमुपपद्यत इति सूत्रार्थः।

"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इति वाक्ये सर्वजगदात्मकपरशिवतादात्म्यं मुमुक्षोः श्वेतकेतोः ध्येयत्वेन विधेयम्। अतो नात्र प्रधानं सच्छब्दवाच्यम्। यथा अरुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलतारामरुन्धतीं प्रथमं ग्राहयित्वा तां निषिध्य पश्चादरुन्धतीमेव ज्ञापयति। तथा मुमुक्षोः प्रधानोपासनं वक्तुमयुक्तम्। तथाविधप्रमाणाभावात्। "शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" "ब्रह्मविदाप्नोति परम्" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा

---

[1] ब्रह्म वेद ब्रह्मैव भवति, तत्त्वमेव त्वमेव तत् (ग्र, च).

विद्यतेऽयनाय" इत्यादौ मोक्षस्य शाखाचन्द्रन्यायमात्रेणापि प्रधानस्यास्य हेतुत्वादर्शनान्नेतरस्य जगत्कारणत्वम्।

ननु- "अजामेकां" इत्यादिश्रुतिषु प्रधानस्य जगत्कारणत्वकथनात् तस्यैव तत्कारणत्वमुपपन्नम् इत्याशङ्क्य निराकरोति।

## प्रतिज्ञाविरोधात् ॥ ९ ॥

कारणविज्ञानात्सर्वं कार्यं विज्ञातमिति प्रतिज्ञा "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवस्स आदेशो भवतीति। यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं एवं सोम्य स आदेशो भवतीति" इति वाक्ये एकविज्ञानात्सर्वविज्ञानोपक्रमश्श्रूयते। प्रधानकारणत्वे प्रतिज्ञाविरोधस्सम्भवति। जडस्य प्रधानस्य चेतनकारणत्वासम्भवात्। अतः प्रधानं न सच्छब्दवाच्यम्।

पुनरपि हेतुं दर्शयति-

## स्वाप्ययात् ॥ १० ॥

स्वस्मिन्नप्ययः स्वाप्ययः, अप्ययो लय इत्यर्थः। अपिपूर्वस्य यतेर्लयार्थकत्वात्। जडाजडयोः प्रधानजीवयोर्लयासम्भवात्, प्रधानस्य जीवाकर्षणसत्ताभावाच्च नात्र प्रधानं सच्छब्दवाच्यम्। "यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" इति श्रुतावपि सच्छब्दवाच्यं तदेव सर्वकारणं साक्षात्परशिवब्रह्मेति व्याचक्षते। तथा हंसोपनिषदि- "एषोसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति।

पूर्वदले पुण्ये मतिः, आग्नेये निद्रालस्यादयो भवन्ति, याम्ये क्रूरे मतिः[1], नैरृते पापे मनीषा, वारुण्यां क्रीडा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः, ईशाने द्रव्यादानं, मध्ये वैराग्यं, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीयम्" इति हृदयपुण्डरीकावच्छिन्नान्तरप्राणलिङ्गे सर्वेषा जीवानां सुषुप्तौ लय इति स्पष्टमुक्तम्। "सुषुप्तौ शङ्करे लयः" इति स्मृतिरपि श्रूयते।

किञ्च– "यथा सुषुप्तः स्वप्नं न कथं चन पश्यति अथास्मिन् प्राण एवैकधा भवति तस्माद्वा आत्मनः प्राणा यथाऽऽयतनं संप्रतिष्ठन्ते यथा त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति" इति। "तथा सुषुप्तो जीवः प्राज्ञेनात्मना सम्परिष्वक्त इति च सच्छब्दवाच्यत्वं सर्वजीवलयाधिष्ठानत्वं च तस्यैव निर्दिष्टम्" "सर्वातीतं परानन्दं सत्तामात्रन्तु चिन्मयम्" इत्यादिश्रुत्यन्तरेष्वपि प्रधानादीनां सतस्सत्वं प्रतिज्ञातम्। "यथोर्णनाभिस्सृजते गृह्णते च" इति श्रुतौ परशिवस्य ब्रह्मणोऽपि स्थूलसूक्ष्मचिदचित्प्रपञ्चाविर्भावतिरोधानयोर्दर्शनात्।

किञ्च– "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं" इति श्रुत्यन्तरे च सुषुप्तिदशायां जीवानां स्वान्तःकरणेन सह परशिवब्रह्मानुप्रवेशदर्शनात्सच्छब्दवाच्यः सर्वातीतः सर्वज्ञः सर्वनियन्ता परशिव इति [2] सिद्धम्।

ततः रज्जुसर्पवत् जगज्जीवमिथ्यात्वबोधकं शुद्धाद्वैतं, जडप्रधानस्य जगत्कारणत्वबोधकं साङ्ख्यमपि च पूर्वोक्तश्रुतिस्मृतिविरुद्धत्वान्मुमुक्षुभिर्नाङ्गीकरणीयम्।

प्रधानस्य जगत्कारणत्वाभावे तद्गुणत्रयावच्छिन्नब्रह्मेन्द्रोपेन्द्रादीनां जगत्कारणत्वविधायकश्रुतीनां का गतिः? इत्याशङ्कायामाह–

---

[1] क्रौर्ये मति (ब, ज)। [2] स्थितं (घ, ज)

# गतिसामान्यात् ॥ ११ ॥

गतिः— सर्वेषां ब्रह्मेन्द्रोपेन्द्रचन्द्रदिनेन्द्रादिजगत्कारणत्वप्रतिपादकवेदान्तानां भेदाभेदबोधकानां मूर्तित्रयातीतसद्रूपपरमशिवे ब्रह्मणि पर्यवसानम्। तस्य सामान्यात्— समन्वयादित्यर्थः। तस्मान्न क्वचिदपि प्रधानकारणत्वविधायकश्रुतीनां ब्रह्मादिनानादेवताकारणत्वप्रतिपादकश्रुतीनां च विरोधः।

"यथाऽग्नेर्ज्वलतस्सर्वा दिशो विस्फुलिङ्गाः प्रतिष्ठेरन् एवमेवैतस्मादात्मनस्सर्वे प्राणाः यथायतनं संप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" "आत्मा वा इदमेवाग्र आसीन्नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत" "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम्" "प्रजापतिर्वा इदमेक एवाग्र आसीत्" "नारायणाद्ब्रह्मा जायते" "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी" "अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति" "पुरुषो ह वै नारायणः"— "अमूलमनाधारमिमाः प्रजाः प्रजायन्ते" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिश्रुतीनां सच्छब्दवाच्ये परशिवे ब्रह्मण्येव समन्वयो ह्यविरुद्धः। "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु।" "देवा ह वै स्वर्गं लोकमायन् ते रुद्रमपृच्छन् को भवानिति, सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशत्" इत्यारभ्य "यो वै रुद्रस्सभगवान् यश्च ब्रह्मा तस्मै वै नमो नमः। यो वै रुद्रस्सभगवान् यश्च विष्णुस्तस्मै वै नमो नमः।" इत्यादिना अथर्वशिरसि ब्रह्मविष्णुरुद्रेन्द्रचन्द्रदिनेन्द्रादिशब्दानां परशिववाचकत्वेन व्यवस्थापनात्। कैवल्ये— "उमासहायं परमेश्वरं प्रभुं" इत्यारभ्य "स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः

परमस्स्वराट्। स एव विष्णुस्स प्राणस्स कालोऽग्निस्स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्॥" इत्यादिना शिवस्यैव सर्वात्मकत्वोपदेशाच्च।

"शिवोऽद्वैतः" "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" इत्यादिश्रुतिषु मूर्तित्रयातीतत्वं [1]कारणत्वं च तस्यैवोपदिश्यत इति नेतरस्य तद्विधीयते।

ननु– क्वचिदवान्तरप्रळये चतुर्मुखादीनां जगत्कारणत्वप्रतिपादकपुराणवचनानां[2] का गतिरिति चेन्न। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि"

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥

इति श्रुतिस्मृतिषु सर्वभूतानुप्रविष्टतया सर्वनियामकत्वं तस्यैव दृश्यत इति तत्कर्तृत्वं तदन्तर्यामितयावस्थितस्य परशिवपरमेश्वरस्यैव।

किञ्च– [3]विश्वामित्रादिवत् परशिवोपासनालब्ध सृष्ट्यादिशक्तिमत्वान्न विरोधः। तस्मात्सर्वदेवताजगत्कारणत्वबोधकश्रुतीनां[4] परशिवबोधकत्वं सिद्धम्। तथापि भवशर्वेशान-पशुपतिरुद्रोग्रभीममहादेवाभिधानानि शिवस्य परब्रह्मणो मुख्यानि।

तथाहि– "ऋतुं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "सदेव सोम्येदमग्र आसीत्" इत्यादिना भवशब्दवाच्यत्वं, भूधातोस्सत्तार्थक-त्वात्, सर्वत्र सदा भवतीति– भवः। परशिवस्यैव सर्वोपादानत्वात् "घटस्सन्, पटस्सन्" इति चराचरप्रपञ्चे सदात्मकत्वं दृश्यते "नमस्सर्वभूतदमनाय नमो मनो-

---

[1] कारणकारणत्वं च (ब, ज). [2] पुराणानां (घ, ज). [3] विश्वामित्रवत्परशिवोपासनालब्धत्वान्न विरोधः (ब, ज). [4] जगत्कारणत्वश्रुतीनां (घ, ज).

न्मनाय नमः" "[1] ………………… महाग्रासाय नमः" "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः" इत्यादिना सर्वसंहर्तृत्वं च तस्यैवोपदिश्यत इति शर्वशब्दाभिधेयत्वम्। "शॄ— हिंसायां" इति धातोः। "इमान् लोकानीशत ईशनीभिः" "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानाम्" इत्यादिना सर्वनियामकत्व-श्रवणादीशानशब्दवाच्यत्वम्। ईशधातोः शिक्षार्थकत्वात्। "येषामीशे पशुपतिः" पशूनां चतुष्पदामुत च द्विपदाम्" "वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः" "उमापतये पशुपतये नमो नमः" इत्यादिना मायापाशबद्ध ब्रह्मविष्ण्विन्द्रादि-पशूनामधिपतित्वेन पशुपतिशब्दवाच्यत्वम्। "क्षरं प्रधानममृताक्षरं हरः क्षरात्मा-नावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारबन्धस्थितिमोक्षहेतुः" "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इत्यादिना परशिवोपासनयैव सर्वमायापाशनिवृत्तिदर्श-नात् ब्रह्मविष्ण्विन्द्रादिभक्तपशुत्वहेतुभूतमायापाशात्मक "रुदं द्रावयतीति" रुद्रशब्द-वाच्यत्वम्।

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय-मग्निः" "तं देवा ज्योतिषां ज्योतिः" इत्यादिना तदितरतेजोनभिभूतत्वप्रतिपाद-नादुग्रशब्दवाच्यत्वम्।

"भीषास्माद्वातः पवते" इत्यादिना सकलभयहेतुत्वोपदेशाद्भीमशब्दवाच्यत्वम्। "अथ कस्मादुच्यते भगवान्महेश्वरः[2] यस्माद्भक्ता ज्ञानेन भजन्ति; अनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान्महेश्वरः" इत्यथर्वशिरसा ज्ञानैश्वर्यमहिमातिशयितत्वेन निर्देशान्महादेवशब्दवाच्यत्वम्। तस्मादष्टाभिधानानि परशिवस्यैव मुख्यानि अतश्शिव एव जगज्जन्मादिकारणम्।

---

[1] तदुपसंहारे (घ. ज). [2] भगवान्महादेवः (घ, ज).

पुनर्हेत्वन्तरमाह—

## श्रुतत्वाच्च ॥ १२ ॥

"यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" "अस्मिन् कामास्समाहिताः एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" "सोऽन्वेषितव्यस्स जिज्ञासितव्य" इति। श्वेताश्वतरे— "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्॥ पतिं पतीनां प्रथमं परस्ताद्विदाम देवं भुवनेशमीड्यम्" इत्यादिना सर्वज्ञत्वसर्वनियामकत्वसर्वाधिष्ठानत्वसर्वोपास्यत्वानि महेश्वरस्य परब्रह्मणश्श्रूयन्ते। "अथातो ब्रह्म जिज्ञासा" इत्यारभ्य जिज्ञास्यस्य ब्रह्मणः सर्वशक्तिमत्वेन सर्वकारणत्वादिधर्मान्निर्दिश्य "ईक्षतेर्नाशब्दम्" इत्यादिना प्रधानस्य जगत्कारणत्ववादिमतं निरस्य ब्रह्मणश्शिवस्यैव स्वशक्तिसङ्कोचेन निर्गुणत्वं शक्तिविकासेन सगुणत्वं च प्रसाधितम्।

गतिसामान्योपन्यासेन सकलनिष्कळप्रतिपादकयावद्वेदान्तवाक्यानि परमकारणपराण्येवेति व्याख्यातम्। तस्मात्परिशिष्टब्रह्ममीमांसायां सर्वाधिष्ठानस्य सर्वकारणस्य परशिवस्य सावयवत्वनिरवयवत्वोपासनं फलं च निर्णीयते।

ननु— तमः प्रकाशवत्परस्परविरुद्धस्वभावसावयवत्वनिरवयवत्वप्रतिपादनं कथमेकस्य परशिवस्य सम्भवति ?

इति चेन्न— "सच्चत्यच्चाभवत्— निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः" "तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं

**नीलकण्ठं प्रशान्तम्" द्वावेतौ ब्रह्मणो रूपे मूर्तं चामूर्तमेव च"** इत्यादिना परब्रह्मणशिवस्य पवनवन्मूर्तामूर्तत्वव्यपदेशात्तदुभयं युक्तमेव। **"वयं श्रुतिप्रमाणवादिनः न युक्तिं बहु मन्महे"** इति **पूर्वाचार्योक्तेः**।

नामरूपविभागार्हत्वं सत्त्वम्। नामरूपविभागानर्हत्वे सति सद्गुरुकरुणाकटाक्षलब्ध-सूक्ष्मदृष्टिगोचरत्वं असत्त्वमिति। **"असद्वा इदमग्र आसीत्; ततो वै सदजायत"** इत्यादिषु वेदितव्यम्। **सामवेदप्रथममन्त्रे "तपश्च ते"** इत्युपक्रम्य **"कर्माधिपतये नमः"** इत्यन्तेन **"विरूपाक्षोऽसि"** इति स्तुत्वा **"त्वां प्रपद्ये त्वया सूत इदं करिष्यामि तस्यै समृध्यतां तस्मादुपपद्यतां"** इत्यादिना सर्ववैदिककर्माणि रुद्राज्ञावशेनैव कुर्या-दित्युपदेशाद्वैदिकैस्सर्वकर्मारम्भे तद्वदेव कर्तव्यम्। अन्यत्र च **"एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च" "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम्"** इति मूर्तामूर्तत्वं कर्माध्यक्षत्वं इत्यादीनि परमेश्वरधर्मा इति श्रूयते।

किञ्च– **सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः। सर्वव्यापी स भगवांस्तस्मात्सर्व-गतश्शिवः॥" "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्।** इत्यादि श्रुतिषु तमःपरत्वसाक्षित्वसर्वगतत्वसर्वान्तर्यामित्वादिलिङ्गानां परशिवासाधारणधर्मत्वावगमान्नान्यपरत्वम्। तथा **स्मृतिरपि**–

> **वैदिकस्सर्वकर्माणि शिवमुद्दिश्य कारयेत्।**
> **तान्त्रिकस्सर्वकर्माणि विष्णूद्देशेन कारयेत्॥** इति।

तस्माद्भेदाभेदविधायकसर्ववेदान्तवाक्यानां आराध्याराधकलक्षणो व्यवहारः। तेषु स्थूलारुन्धतीन्यायेन कानिचिद्वाक्यानि सालोक्यसामीप्यादिमुक्तिप्रदर्शकानि। कानिचिच्छिवो-पासनापराणि। कानिचित्परमशिवस्थूलोपासनात्मकज्योतिष्टोमादिकर्मपराणि। कानिचित्परमेश्वर-सूक्ष्माराधनात्मकदहरशाण्डिल्यादिविद्याविधायकानि। तासामधिकारिभेदेन फलविशेषोपाधि-भेदाद्भेदः। **प्रवाहसमुद्रन्यायेन** सर्वाणि वेदान्तवाक्यानि ऋजुकुटिलमार्गेण परशिवप्रति पादकान्येव। तथापि शिवोपासकानामेव सद्योमुक्तिः। तदंशभूतेन्द्रोपेन्द्राद्युपासकानां निष्कामानामनेकजन्मार्जितपुण्यफलेन शिवोपासनद्वारा मुक्तिः। तथा **शिवगीतायां**–

**कोटिजन्मार्जितैः पुण्यैश्शिवे भक्तिः प्रजायते ।**
**तेनैव मुक्तिमाप्नोति नान्यथा जन्मकोटिभिः ॥** इति ।

तथा **महिम्नस्तवे**–

**त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।**
**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥** इति ।

सौरगाणापत्यवैष्णवादिनानादेवतोपासकानां तत्तद्देवतान्तर्यामित्वेन तत्तत्फलानि शिव एव दास्यति ।

तथा च **शैवपुराणे**–

**अहं हि सर्वहविषां भोक्ता सर्वफलप्रदः ।**
**सर्वदेवतनुर्भूत्वा सर्वात्मा सर्वसंस्थितः ॥** इति ।

तस्मान्निर्विशेषचिन्मात्रब्रह्मवादिमतं श्रुतिसूत्रविरुद्धत्वान्न मुमुक्षुग्राह्यम् । जिज्ञास्यब्रह्मणः पारमार्थिकमुख्येक्षणपूर्वकजगत्कारणत्वादिधर्मोपदेशात्तन्मते उपनिषत्प्रतिपाद्यसर्वसाक्षित्वमप्यपारमार्थिकम् । तथापि चेतनमिति वदन्ति ; तदप्यविचारितरमणीयम् । चेतनत्वं नाम चैतन्यगुणविशिष्टत्वम् । तस्मादीक्षणगुणरहितत्वेन प्रधानवज्जडत्वमुपपद्यते ।

किञ्च– निर्विशेषप्रकाशमात्रब्रह्मवादकस्य प्रकाशत्वं च न सम्भवति । प्रकाशस्तु स्वपरव्यवहारानुकूलतासम्पादकपदार्थविशेषः । निर्विशेषस्य वस्तुनः स्वपरप्रकाशकत्वासम्भवाद्घटादिवज्जडत्वमेव । तदुभयत्वाभावेपि तस्य प्रकाशत्वमस्तीति चेन्न– तत्प्रकाशत्वं हि तत्सामर्थ्यमेव । सामर्थ्यवतोऽपि सगुणत्वेन निर्विशेषवादभङ्गप्रसङ्गः । वेदप्रामाण्याद्यश्च कश्चन गुणोऽङ्गीक्रियत इति चेत् तर्हि सर्वज्ञत्वसर्वशक्तिमत्त्वसर्वेश्वरत्वसत्यसङ्कल्पत्वादि-

धर्माणामपि, श्रुतिविहितत्वेन सर्वेप्यङ्गीकर्तव्याः। कारणत्वं हि [1] कार्यविशेषानुकूलशक्तिविशिष्टत्वम्। तच्च कार्यैकनिरूपणीयम्। कार्यविशेषस्य प्रपञ्चस्य मिथ्यात्वे कारणत्वमपि निष्प्रमाणमेव।

किञ्च– प्रत्यक्षानुमानोपमानशब्दानुभवानां सविशेषगोचरत्वेन वस्तुवादिनो वस्तुत्वमपि निष्प्रमाणकम्। तस्माज्जगदुभयकारणमहेश्वर एव जिज्ञास्यं ब्रह्मेति सिद्धम्।

इति ईक्षत्यधिकरणं समाप्तम्।

---

"उत्तमाधिकारिणं प्रति ईक्षत्यन्तैव ब्रह्मविद्या"

(शिवाद्वैतमञ्जरी)

---

[1] कार्यविशेषशक्तिविशिष्टत्व (घ, ज).

ब्रह्ममीमांसासूत्राणां

श्रीपतिपण्डितभगवत्पादाचार्यप्रणीतं

# श्रीकरभाष्यम्

## पञ्चपादिका

### द्वितीयो भागः

## आनन्दमयाधिकरणम् ॥ ६ ॥

अवान्तरसृष्टिकर्तृब्रह्मादीनां जगज्जन्मादिहेतुत्वं मास्तु। समष्टिस्थूलसूक्ष्मकारणशरीरावच्छिन्नविराड्ढिरण्यगर्भाव्याकृतानां जगज्जन्मादिहेतुत्वं भवेत्– इत्याशङ्कायां अधिकरणान्तरेण निराकरोति–

# आनन्दमयोऽभ्यासात् ॥ १३ ॥

**"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः इत्यारभ्य "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः"** इति तैत्तिरीये श्रूयतेऽस्य **विषयः**। अत्रानन्दमयशब्देन किं शारीरोऽभिधीयते? उत परशिव एवेति **सन्दिह्यते**। तदुभयधर्मबाहुल्यद्योतनात्। **"अधीहि भगवो ब्रह्मेति"** इति [1]**भृगोरेवात्र** ब्रह्मज्ञानाय प्रश्नप्रतिवचननिरूपणात्। **"यतो वा इमानि"** इत्यारभ्य **"तद्विजिज्ञासस्व-तद्ब्रह्मेति"** इति जगज्जन्मादिकारणत्वस्य ब्रह्मलक्षणतयाऽत्रोपदेशाच्च। **"पृथिव्या ओषधयः, ओषधीभ्योऽन्नं, अन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमयः"** इत्यादिना सावयवत्वोपदेशात् अन्नमयादिपञ्चकोशान्तर्वर्तित्वेन पञ्चकोशमयत्वस्य जीवे एव समुचितत्वाच्चेति।

**पूर्वपक्षस्तु**– अत्रानन्दमयश्शारीर एव। **"तस्यैष एव शारीर आत्मा"** इत्यानन्दमयस्य शारीरत्वद्योतनात्। आनन्दमयस्याप्यन्नमयाद्यमुख्यात्मप्रकरणपठितत्वात्। **"अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्"** इति शुद्धिप्रार्थनादर्शनाच्च। मयट्प्रत्ययस्य विकारार्थकत्वात् त्यागभोगयोगाज्ञावच्छिन्नमायापाशबद्धस्य शारीरस्य संसारिणो निरतिशयानन्दासम्भवात्। **"आनन्दो ब्रह्म"** इति श्रुतौ [2]परमेश्वरस्य निरतिशयानन्दश्रवणात् आनन्दमयस्तत्कार्यभूतश्शारीर एव आनन्दमय इति व्याचक्षते।

---

[1] भृगुरेवात्र (घ, ज). [2] परमेश्वरस्यानन्दश्रवणात् (घ, ज).

"**अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः**" इति श्रुतौ प्रियाप्रियविलक्षणत्वमशरीरत्वं च परशिवब्रह्मणो व्यपदिश्यत इति तस्यानन्दमयत्वं न सम्भवति।

ननु- "जगत्कारणस्य परशिवस्यैव सुलभप्रतिपत्त्यर्थं "**अन्नं ब्रह्म**" इत्युपक्रम्य "**आनन्दो ब्रह्मेति व्यजनात्**" इत्यन्तेन आनन्दमयत्वं विश्वकारणत्वं चोपदिशति। तस्मान्न जीवप्रकरणम्"

**इति चेन्न-** जीवव्यतिरिक्तेश्वरस्याप्रामाणिकत्वात्। "**अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्यांकरवाणीति**" "**तत्त्वमसि श्वेतकेतो**" इत्यादिना जीवब्रह्मणोः "**सोऽयं देवदत्तः**" इतिवदभेदनिर्देशात् "**तदैक्षत**" इति श्रुतिनिर्दिष्टेक्षणपूर्वकं जगत्कारणत्वं चेतनस्य जीवस्य समुचितमेव। "**सत्यं ज्ञानमनन्तं ब्रह्म**" इति अचिद्व्यतिरिक्तस्वरूपलक्षणमुच्यते। तस्मात् "**ब्रह्मविदाप्नोति परं**" इति श्रुतौ जीवस्य स्वस्वरूपज्ञानमेव मोक्ष [1] इत्युपदिश्यते।

किञ्च- **शाखाचन्द्रन्यायेन** आत्मस्वरूपनिर्देशार्थं "**अन्नमयः पुरुषः**" इति स्थूलशरीरं निर्दिश्य "**अन्योऽन्तर आत्मा प्राणमयः अन्योन्तर आत्मा मनोमयः, अन्योन्तर आत्मा विज्ञानमयः**" इति स्थूलशरीराधारप्राणकोशं तदन्तर्भूतत्वेन निर्दिश्य तस्यान्तर्भूतं मनस्तदन्तर्गतं विज्ञानं बुद्धिं **निश्श्रेणीन्यायेन** निरूप्य सर्वान्तर्भूतं जीवात्मानं "**अन्योन्तर आत्माऽऽनन्दमयः**" इति निर्दिश्य [2] तस्यैवोपसंहारात् "**ब्रह्मविदाप्नोति परं**" इत्युपक्रान्तं ब्रह्म जीव एव, तत्स्वरूपज्ञानमेव मुक्तिः, स एवानन्दमय इत्युपदिष्टम्।

ननु- "**ब्रह्म पुच्छं प्रतिष्ठा**" इत्यत्र तस्य पुच्छत्वोपदेशात् निरवयवस्य पुच्छत्वासम्भवात् आनन्दमयव्यतिरिक्तस्यैव ब्रह्मत्वम्।

इति चेन्न- "**ब्रह्मविदाप्नोति परम्**" इत्युपक्रम्य "**ब्रह्मपुच्छं प्रतिष्ठा**" इत्युपसंहृतत्वात् उपक्रमोपसंहारयोरेकलिङ्गत्वात् पुरुषविधत्वं ब्रह्मणस्स्वभावसिद्धम्। अतः शिरःपक्षपुच्छात्मना व्यपदेशो युक्तः। अन्नमयशरीरावयववत् ब्रह्मापि स्वस्मादनतिरिक्त-

---

[1] इत्युपपद्यते (घ, ज). [2] तस्योपसंहरणदर्शनात (घ, ज).

प्रियमोदप्रमोदावयवानामखण्डाश्रयतया **आनन्दमयं पुच्छं प्रतिष्ठेति** स्मर्यते। **"ब्रह्मविदाप्नोति परं"** इत्युपक्रान्तं ब्रह्म **"सत्यं ज्ञानमनन्तं ब्रह्म"** इतीतरव्यावर्तकलक्षणद्वारा प्रसाध्य **"तस्माद्वा एतस्मादात्मनः"** इत्यात्मशब्देन व्यपदिश्य तस्य सर्वात्मकत्वेन आत्मत्वं प्रतिपाद्य **"अन्योऽन्तर आत्माऽऽनन्दमयः"** इत्यात्मशब्देन निर्दिश्यमानस्यानन्दमये उपसंहृतत्वादानन्दमयशब्देन जीवादनतिरिक्तं ब्रह्मैवानन्दमय इत्युच्यत इति प्राप्ते [2]प्रचक्ष्महे **आनन्दमयोऽभ्यासात्** इति।

**सिद्धान्तः—**

अत्रानन्दमयशिव एव। कस्मात्? अभ्यासात्। पुनः पुनः श्रवणमभ्यासः। शिवस्य परब्रह्मणः एव बहुशो वेदान्तेष्वानन्दशब्दप्रयोगदर्शनात्, नेतर आनन्दमयशब्दवाच्य इति सूत्रार्थः। आनन्दमयं प्रस्तुत्य **"रसो वै सः"** इति रसत्वव्यपदेशात् **"रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति, सैषाऽऽनन्दस्य मीमाँसा भवति एतमानन्दमयमात्मानमुपसंक्रामति, आनन्दं ब्रह्मणो विद्वान्, आनन्दो ब्रह्मेति व्यजानात्"** इति। श्रुत्यन्तरे च— **"आनन्दमयो ह्यानन्दभुक् आनन्दं ब्रह्मैव"** इति ब्रह्मणशिवस्यैवानन्दशब्दो निर्णीतः।

किञ्च— **"सैषानन्दस्य मीमाँसा भवति"** इत्युपक्रम्य मानुषादिप्रजापतिपर्यन्तं [3]शतगुणितमानन्दातिशयमुपदिश्य **"स एको ब्रह्मण आनन्दः"** इति परमानन्दातिशयित्वं ब्रह्मणशिवस्यैवेति व्यवस्थापनात्। मलत्रयविशिष्टतनुत्रयावच्छिन्नस्य शारीरस्य निरतिशयानन्दशिरस्कत्वासम्भवादानन्दमयशिव एव। आनन्दमयस्य ब्रह्मणशिरःप्रभृत्यवयवनिरूपणं भक्तोपासनार्थमेव।

**हंस हंसेति यो ब्रूयात् हंसो नाम सदाशिवः।**
**यावत्पश्येत्खगाकारं तदाकारं विचिन्तयेत्॥**

---

[1] आत्मशब्देन (घ. ज). [2] आनन्दमय इति प्राप्ते (घ, ज). [3] शतगुणमानन्दातिशयं (घ, ज).

इत्यादिश्रुतिस्मृतिषु परब्रह्मणश्शिवस्य हंसरूपत्वव्यपदेशाच्च अवयवकल्पनमविरुद्धम्। श्रोतृबुद्ध्यनुसारेणान्नमयादिसर्वान्तरत्वादानन्दमयस्य उत्तरोत्तरमात्मत्वेनानन्दमयान्तमुपदेशात्; अन्नमयाद्यमुख्यात्मविज्ञानाभावे आनन्दमयमुख्यात्मविवेकासम्भवाच्च, **स्थूलारुन्धतीन्यायेन समक्षशवाहन्यायेन** च [1]मुख्यात्मप्रबोधार्थममुख्यात्मविवेकोऽविरुद्धः। जडत्वादन्नमयप्राणमय-मनोमयपर्यन्तमेव मयट्प्रत्ययस्य विकारार्थकत्वम्। चेतनत्वाद्विज्ञानमयो विज्ञानप्रचुरो जीवः। आनन्दमय आनन्दप्रचुरः परमेश्वरः।

"[2]**गोश्वाग्निब्राह्मणान् स्पृष्ट्वा अपस्स्पृशेत्**" इत्यापस्तम्बसूत्रे—

**रजस्वलाग्निगोविप्रान् पातिव्रत्यस्त्रियं तथा।**
**शवामेध्यब्रह्मबन्धून् स्पृष्ट्वा स्नानं समाचरेत्॥**

इति **वृद्धशातातपे** च पवित्रापवित्रपदार्थानां साहचर्योपदेशान्न प्रकरणैकत्वं दोषः। "**सुषुप्तिकाले सकले [3]विलीने तमोऽभिभूतस्सुखरूपमेति**" इत्यादिश्रुतौ सुषुप्तावा-नन्दमयपरमेश्वरे तत्साक्षात्कारप्रतिबन्धकतमोरूपपाशेन सह शारीरस्य विलीनत्वात्तन्निवृत्तिरूप-प्रार्थनायास्समुचितत्वान्न विरोधः।

"**ज्ञाज्ञौ द्वावजावीशनीशौ**" इत्यादि श्रुतिदर्शनात् "**मृन्मयो घटः**" इत्यादिवदानन्दमय-आनन्दविकारो जीव इति वादो न श्रौतः। "**विद्याविद्ये ईशते यस्तु सोऽन्यः**" "**क्षरात्मानावीशते देव एकः**" "**पृथगात्मानं प्रेरितारं च मत्वा**" "**द्वासुपर्णा सयुजा सखाया**" "**द्वे ब्रह्मणी वेदितव्ये, परं चापरं च**" "**नित्यो नित्यानां चेतनश्चेतनानां**" "**अन्तः प्रविष्टश्शास्ता जनानां**" "**अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः**" "**जुष्टं यदा पश्यत्यन्यमीशम्**" "**प्रधानक्षेत्रज्ञपतिर्गुणेशः**" **ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां**" "**येषामीशे पशुपतिः पशूनां**" "**यः आत्मनि तिष्ठन्**" "**यस्यात्मा शरीरं**"

---

[1] मुख्यात्मप्रबोधार्थममुख्यार्थं (घ, ज). [2] गोश्वानाग्नि (घ, ज). [3] विहीने (घ, ज).

इत्यादिश्रुतिशतेषु जीवब्रह्मणोः परस्परवैलक्षण्यव्यवस्थापनात्, नानाशरीरप्रवेशनिर्गमनव्यापारः सांसारिकस्य शारीरस्यैव न ब्रह्मत्वमुपपद्यते ।

किन्तु– "**ब्रह्म वेद ब्रह्मैव भवति**" "**तत्त्वमसि**" इत्यादिश्रुतिषु स्वभावसिद्धजीवस्य **भ्रमरकीटन्यायेन** परमेश्वरोपासनया तदात्मत्वमुपदिश्यते नो चेत् श्रुतियुक्त्यनुभवविरोधप्रसङ्गः ।

किञ्च– "**नोपास्यौ प्रकृतिजीवौ**" इत्यादिश्रुतिषु शारीरोपासनाया निन्दाश्रवणात् न जीवस्य स्वस्वरूपज्ञानेन मुक्तिः । "**ज्ञात्वा शिवं शान्तिमत्यन्तमेति**" "**ब्रह्मविदाप्नोति परं**" "**तमेवं विदित्वाऽतिमृत्युमेति, नान्यः पन्थाविद्यतेऽयनाय**" इत्यादिश्रुतौ जीवस्य परमेश्वरोपासनयैव मुक्तिव्यपदेशात् प्रधानस्य [1]ब्रह्मत्ववादवत् जीवस्य ब्रह्मत्ववादोऽप्यवैदिकः ।

"**विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च**" इति श्लोकवशात् विज्ञानशब्देन न [2]बुद्धिरुच्यते । [3]अचेतनाया बुद्धेः कर्मकर्तृत्वासंभवात् । धर्मवाचकशब्दो हि [4]गवादिशब्दवत् धर्मिग्राहकोऽपि भवति । अतो विज्ञानशब्दस्य [5]धर्मिग्राहकत्वाज्जीववाचकत्वम् ।

किञ्च– "**विज्ञानं चाविज्ञानं च**" इति विज्ञानशब्देन विज्ञानगुणकं चेतनमुपदिशति । तथाऽन्तर्यामिब्राह्मणे– "**यो विज्ञाने तिष्ठन्**" इति **काण्व**पाठगतस्य पर्यायस्य स्थाने **माध्यंदिनाः**– "**य आत्मनि तिष्ठन्**" इति काण्वशाखापाठगतविज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति । विज्ञानमिति च नपुंसकलिङ्गत्वं वस्तुत्वाभिप्रायकम् ।

---

[1] जीवब्रह्मवादो ह्यवैदिकः (घ, ज). [2] बुद्धिरुच्यते (घ, ज). [3] जडात्मकबुद्धेः कर्मकर्तृत्वाभावात् (घ, ज). [4] गवादिशब्दवत् धर्मिशब्दो हि धर्मिग्राहकत्वात् (घ, ज). [5] धर्मिग्राहकत्वाज्जीवात्मवाचकत्वं (घ, ज).

तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तर्गतः परमात्माऽऽनन्दमयः "**कृत्यल्युटो बहुलं**" इति कर्तरि ल्युडाश्रीयते। अत एव "**विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च**" इति यज्ञादिकर्तृत्वं विज्ञानस्यैव श्रूयते। [1]तस्मान्न भावल्युटोऽङ्गीकारः।

ननु– जीवस्य चेतनत्वात् "**तदैक्षत बहु स्यां प्रजायेयेति**" इत्यादि श्रुतिनिर्दिष्टजगत्कारणत्वस्योपपत्तेः कारणस्य परमेश्वरस्य जीवात्मत्वासम्भवे "**अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति**" इत्यादिश्रुतिविरोधः–

इति चेन्न–। "**सत्यकामस्सत्यसङ्कल्पः**" इत्यादिश्रुतिसिद्धानां सत्यकामत्वादिधर्माणां तापत्रयबद्धे किञ्चिज्ज्ञे जीवे असम्भवान्न तस्य जगत्कारणत्वं "**सदेव सोम्येदमग्र आसीत्**" इत्यादिना सृष्टेः पूर्वकाले नामरूपविभागशून्यत्वं "**बहुस्यां**" इत्यादिना विश्वोत्पत्तौ जगदुभयकारणत्वं च सच्छब्दवाच्यस्य परमेश्वरस्यैव निर्दिष्टम्। प्रळये स्वान्तर्गुप्तबद्धजीवानां स्वांशत्वात् स्वात्मनानुप्रवेशेन नामरूपव्याकरणकर्तृत्वं च युक्तमेव। निर्विशेषस्योपासनाऽसंभवात्। "**ब्रह्मपुच्छं प्रतिष्ठा इदं पुच्छं प्रतिष्ठा अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा महः पुच्छं प्रतिष्ठा**" इत्यादौ परमेश्वरस्योपासनार्थमधिकारिभेदेन सावयवत्वमुपदिश्यते। सावयवोपासनाया अपि निरवयवप्राप्तिरेव फलम्। तथा **कैवल्ये**– "**उमासहायं**" इत्यारभ्य "**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्**" इत्यन्तेन सावयवोपासकस्य निरवयवोपासनफलसिद्धिमाचक्षते। अतो न विरोधः।

अन्नमयादिमयट्प्रत्ययप्रवाहप्रकरणपठितत्वादानन्दमयस्यापि "**मृन्मयो घटः**" इत्यादिवत् विकारार्थकत्वमेवेत्याशङ्कायामाह–

## विकारशब्दान्नेतिचेन्न प्राचुर्यात् ॥ १४ ॥

अन्नमयादौ मयट्प्रत्ययस्य विकारार्थकत्वादानन्दमय इत्यत्रापि विकारार्थकत्वमेव समुचितमिति चेन्न। कुतः? प्राचुर्यात्। ब्रह्मण आनन्दप्राचुर्यात्। "**अन्नमयो**

---

[1] तस्मान्न कृत्यल्युटोऽङ्गीकारः (घ, ज)

**यज्ञः अंशुमयस्सूर्यः, विप्रमयो ग्रामः, विहङ्गममयो वृक्षः"** इत्यादौ प्राचुर्यार्थेऽपि मयट्प्रत्ययस्य दर्शनादत्रानन्दमयशब्देनानन्दप्रचुरः परमेश्वर एवोच्यते **"सैषानन्दस्य मीमाँसा भवति"** इत्युपक्रम्य मानुषविशेषाद्प्रिजापतिपर्यन्तमुत्तरोत्तरानन्दस्य शतगुणमतिशयिता-नन्दत्वमभिधाय **"स एको ब्रह्मण आनन्दः"** इति ब्रह्मानन्दो निरतिशयत्वेनाभ्यस्यते। तस्मात्प्राचुर्यार्थे मयडिति सिद्धम्।

ननु- मयट्प्रत्ययस्य **"अन्नमयो यज्ञः"** इत्यादिवत् प्राचुर्यार्थकत्वाङ्गीकारेऽपि न जीवादन्यत्रमुपपद्यते। आनन्दप्रचुरत्वे दुःखाल्पत्वस्यार्थसिद्धत्वात् जीवस्यैव सुखदुःखाश्रय-त्वात्। तस्माद्विकारार्थकत्वमेव समुचितम्। **"अन्नमयः"** इत्युपक्रमे विकारार्थकत्व-दर्शनात्, लोके **"मृन्मयः, दारुमयः, रजतमयः, ताम्रमयः"** इत्यादिषु वेदे **"पर्णमयी जुहूः, शमीमय्यस्स्रुचः" "दर्भमयी रशना"** इत्यादिष्वपि मयटो विकारार्थत्वदर्शनात् जीवस्यैवात्रानन्दमयत्वमुभयथापि सम्भवति"-

इति चेन्न- आनन्दप्रचुरत्वं हि प्रभूतानन्दत्वम्। तच्च त्रैकालिकदुःखात्यन्ता-भाववत्त्वं, तापत्रयविशिष्टस्य जीवस्य तदसम्भवान्नानन्दमयत्वम्। चेतनस्य मृदादिवत् परिणामित्वाङ्गीकारे श्रुतिस्मृतिविरोधप्रसङ्गः स्यात्। अतो न [1]विकारार्थत्वं मयटः।

पुनर्हेत्वन्तरमाह-

## तद्धेतुव्यपदेशाच्च ॥ १५ ॥

**"को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति"** इति [2]सर्वजीवानन्दहेतुत्वेनानन्दमयो व्याख्यायते। लोके विद्वानेव विद्वांसं करोति, धनवानेव धनवन्तं करोति, स्वयंप्रकाशस्सूर्यादिरेव स्वान्यान् प्रकाशयति, तद्वदानन्दमयः परमेश्वरस्सर्वजीवान् सुषुप्तौ स्वकीयानन्दं दत्वा आनन्दयति। तस्मादानन्दमयो नेतरः। तस्य जीवानन्दस्य आनन्दमयः परमेश्वरो हेतुरिति व्यपदेशाच्च कीर्तनाच्च। जीवानन्दं

---

[1] न विकारार्थो विधीयते (घ ज). [2] आनन्दमयो व्याचक्षते (घ, ज, झ).

प्रति तस्य प्रकृत्यानन्दस्य हेतुत्वव्यपदेशाद्वा। यद्वा सः आनन्दमयः हेतुः यज्जीवानन्दस्य सः तद्धेतुरिति सूत्रार्थः।

ननु– ब्रह्मणो निर्विशेषत्वादानन्दमयत्वमानन्दप्रदायकत्वं चानुपपन्नम्। **"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चितम्"** इति पूर्वाचार्योक्तन्यायमनुसृत्य प्रपञ्चस्य व्यवहारमात्रसत्यत्वाङ्गीकारादौपचारिकत्वे[1]नानन्दमयत्वमङ्गीकर्तव्यम्–

इति चेन्न– व्यावहारिकसत्यत्वं नाम कालान्तरानवस्थायिवस्तुत्वं? सदसद्विलक्षणत्वं वा? सत्त्वासत्त्वाभ्यां निर्वक्तुशक्यत्वं वा?

**नाद्यः–** यत्किञ्चित्कालान्तरानवस्थायिवस्तुत्वस्य घटपटादावस्माभिरङ्गीकारादंशतस्सिद्धसाधनात् **"गौरनाद्यन्तवती"** इत्युक्तायाः प्रकृतेस्सर्व[2]कालावस्थायितया अव्याप्तेश्च। कालान्तरावस्थायित्वावच्छिन्नसामान्याभावविवक्षायां द्वितीयक्षणस्यापि कालान्तरतया तदनवस्थायित्वसाधनेन वैभाषिकाङ्गीकृतं क्षणिकत्वमेव साधितं स्यात्। न तु स्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वमिति स्वसिद्धान्तविरोधः; प्रातिभासिके अतिव्याप्तिश्च।

न **द्वितीयः–** सदसदात्मकस्य प्रतियोगिनोऽप्रसिद्ध्या तद्विलक्षणस्याप्रसिद्धेः। नापि सत्त्वावच्छिन्नासत्त्वावच्छिन्नाभ्यां भिन्नत्वं, सति असति चातिव्याप्तेः। **"एको न द्वौ"** इति प्रतीत्या सदसद्भ्यां भिन्नत्वात्। नापि सत्त्वावच्छिन्नभिन्नत्वे सति असत्त्वावच्छिन्नभिन्नत्वम्। सत्त्वावच्छिन्नस्य कस्यचित् सत्त्वावच्छिन्नकिञ्चिद्भिन्नत्वेनातिव्याप्तेः। नापि सत्त्वावच्छिन्नप्रतियोगिताकभेदवत्वे सतीत्यादिविवक्षा युक्ता। तथापि निर्धर्मके ब्रह्मण्यतिव्याप्तेः। न च निर्धर्मकत्वादेव नातिव्याप्तिरिति वाच्यम्। हेतुसाध्ययोरपक्षधर्मत्वप्रसङ्गात्। अथ सद्रूपभिन्नत्वम्? तदपि न। सदन्तरमादाय सिद्धसाधनात्। यावत्सद्रूपान्यत्वविवक्षायामप्येकैकस्य यावत्सद्रूपान्यत्वेन सैव सिद्धसाधनता। अथ सद्रूपावच्छिन्नसामान्योन्याभावो विवक्षितः– इति मतम्? तदपि ब्रह्मण्यतिव्याप्तेरेव दुष्टम्। अथ यावन्तस्सद्रूपास्तावत्प्रतियोगिकतत्तद्धर्मावच्छिन्नान्योन्याभावकूटाश्रयत्वं विवक्षितं, एवमसद्विलक्षणत्वमपि निर्वाच्यमिति निरुच्येत तदनिवारितम्। यावतां सद्रूपाणां भवन्मते अप्रसिध्यां तत्प्रतियोगिक-

---

[1] आनन्दमयत्वं ब्रह्मण्यङ्गीक्रियते (घ, ज, झ). [2] कालान्तरावस्थायितया (घ, ज, झ).

भेदकूटाप्रसिद्धेः। ब्रह्मणि प्रातिभासिके चातिव्याप्तेश्च। न च ब्रह्मान्यत्वे सति असद्विलक्षणत्वम्। सिद्धसाधनताया दुर्वारत्वात्।

किञ्च– "**सन् घटः**" इत्यादिप्रतीत्या घटादीनां न सद्विलक्षणत्वं युक्तमित्यसम्भवो लक्षणस्य।

न च– "**नेह नानास्ति किञ्चन**" इति श्रुत्या प्रत्यक्षबाधः। "**यजमानः प्रस्तरः, आदित्यो यूपः, सोमेन यजेत, कृष्णलं ..........., यजमान एककपालः तत्त्वमसि**" इत्यादिषु शतशः, प्रत्यक्षविरुद्धानां श्रुतीनामेव प्रतिज्ञातार्थबाधदर्शनात्।

ननु– सद्घटयोरभेदे, घटे कलशवत् सामानाधिकरण्यासम्भवः भेदेऽपि "**घटः पटः**" इतिवत्सामानाधिकरण्यासंभव एव। तस्मात्तादात्म्यमेव सद्घटयोः प्रतीतिरियं विषयीकरोति। तच्च– भिन्नत्वे सत्यभिन्नसत्ताकत्वम्। तस्मात्सद्भेद एव घटादीनां प्रतीतिसिद्धः **इति चेत् अत्र ब्रूमः**–

यदि भिन्नत्वे सत्यभिन्नसत्ताकत्वं तादात्म्यम्? तर्हि "**नेदं रजतं**" इति बाधानन्तरं "**इदं रजतं**" इति प्रतीत्यापत्तिः विशेषणप्रतीतेर्विशिष्टप्रतीतिं प्रत्यबाधकत्वात्।

ननु– "**इदं रजतं**" इत्यत्र यत्तादात्म्यं प्रतीतं, तस्य नेति निषेधे सति कथं पुनस्तादात्म्यप्रतीतिः?

इति चेत्– त्यज [1]तर्हि भेदस्य तादात्म्यशब्दार्थे प्रवेशम्। न हि "**इदं रजतं**" इति बुद्धेस्संस्पर्शितया तादात्म्यविषयत्वे "**नेदं रजतं**" इत्यस्य प्रकारतया तादात्म्यैकदेशविषयत्वेऽपि बाध्यबाधकभावोऽस्ति। प्रत्युत मानान्तरसंवादरूपतया भ्रान्तिदार्ढ्यापादकत्वमेव। अन्यथा– "**रूपवान् रूपसमवायवान्**" इत्यादि प्रतीतीनां मिथो

---

[1] न हि तर्हि (ञ).

बाध्यबाधकभावप्रसङ्गात्[1]। न चेष्टापत्तिः, अपसिद्धान्तात्; तादात्म्यव्याघाताच्च। अधिष्ठानभिन्नसत्ताकप्रतियोगिक एवाभावोऽधिष्ठानाद्भिद्यते, अन्यस्तु न भिद्यते। तस्मात् "**रजतस्याभावोऽधिष्ठानान्न भिद्यते**" इत्युक्तिव्याहतिश्च "**नेदं रजतं**" इति शाब्दबुद्धौ शब्दादुपस्थिताभिन्नसत्ताकत्वनिषेधाभावेन प्रत्यक्षबुद्धावपि तन्निषेधायोगाच्च। न च पदद्वय-सामानाधिकरण्यबलात्तत्रापि तदुपस्थितिरिति वाच्यम्। निर्विशेषं ब्रह्मेत्यत्रापि तदापत्तेः।

किञ्च– अत्यन्ताभावप्रतीतिरियं, नान्योन्याभावप्रतीतिरपि– "**इदं रजतं न**" इति प्रतीतेः। अभिन्नसत्ताकत्वनिषेधरूपत्वे "**रूपं घटो न**" इति बुद्धेरपि तथा स्यात्। तदा च तन्मते तस्यां दशायां "**नीलो घटः**" इति बुद्धिर्न स्यात्।

किञ्च– अभिन्नसत्ताकत्वनिषेधेऽपि पुरोवर्तिनिष्ठाभेदस्य इष्टतावच्छेदकसंसर्गस्य वा निषेधाभावात् भ्रान्तिप्रयुक्तं कार्यं दुर्वारं स्यात्। नहीष्टतावच्छेदकवैशिष्ट्यादिकं अबाधितत्वात्प्रवृत्तिं निरोद्धुं [2]शक्नोति। न च– अभिन्नसत्ताकत्वनिषेध एवाभेदनिषेधकः। तर्ह्यभिन्नसत्ताकत्वमभेद एव स्यादिति भिन्नत्वे सतीति विशेषणविरोधः। [3]अभिन्नसत्ता-कत्वमित्यत्र किमभिन्नसत्ताकत्वम्? सत्तावत्सत्ताकत्वम्? मत्वर्थे बहुव्रीहिविधानेन मत्वर्थस्य "**दण्डवान् पुरुषः, दण्डी**" इत्यनुरोधेन भेदरूपतया स्वभिन्नसत्ताकत्वस्य [4]तत्राबाधात्। नापि तादात्म्यं मत्वर्थ इति वक्तुं युक्तम्। [5]अत्राश्रयदूषणतल्लक्षणे तत्प्रवेशायोगात्। सत्तान्तराध्यासं विना प्रथमसत्तायास्तादात्म्यानुपपत्त्या घटाधिष्ठानसत्तायाः मिथ्यात्वे अप-सिद्धान्तश्च। न हि पदार्थान्तरेण सम्बध्यमानाधिष्ठानता तां व्यभिचरति?

न च– सत्तावत्त्वं सत्तया साकमभेदः। मत्वर्थस्याभेदत्वायोगात्। अन्यथा दण्डपुरुषयोरभेदापत्तेः। घटाकाशे पटभेदस्य सत्तासम्बन्धरूपत्वे जडाजडयोरैक्यप्रसङ्गाच्च। न च– अत एव सत्तायामभेदसत्तासम्बन्धो घटभेद इति वाच्यम्। वैरूप्यप्रसङ्गात्। तादात्म्यस्य घटे सत्तासम्बन्धत्वपरित्यागेन **घट्टकुटीप्रभातन्यायाच्च**। अभिन्नसत्ताकत्वघटकं

---

[1] तस्मात् "नेदं रजतं" इति प्रतीतेः बाधकत्वानुगुण्यात् "इदं रजतं" इति प्रतीतावपि तादात्म्यं वक्तव्यम्। तच्च अभेद एव पर्यवस्यति। एतेन अभिन्नसत्ताकत्वं रजतशुक्त्योर्निषिध्यते नेदमित्यनेनेति निरस्तम्। तथासति प्रातिभासिकस्याधिष्ठानभिन्नसत्ताकत्वप्रसङ्गात्। (घ, ज झ)
[2] शक्यते (ज, झ). [3] भिन्नसत्ताकत्वमित्यत्र (घ, ज). [4] स्वभिन्नसत्ताकत्वसत्तां च बाधात् (घ, ज). [5] आत्माश्रयदोषेण (घ, ज).

सत्तावत्त्वं क्वचिदभेदेन क्वचिदधिष्ठानतयेति प्रतिपादनेऽप्यननुगमाच्च। अभेदस्य मत्वर्थ-त्वायोगेन बहुव्रीह्यनुपपत्तेरुक्तत्वाच्च। तादात्म्यावगाहिन्योः **"नीलो घटः, सन् पटः"** इति प्रतीत्योस्तादात्म्याश्रय एव वैरूप्यकल्पनायोगाच्च।

अपि चैवं **"घटः पटः, रसो घटः"** इत्यादिप्रयोगास्त्वन्मते दुर्वारास्स्युः। अभिन्नत्वे सत्यभिन्नसत्ताकयोस्तथा प्रतीत्यभावानुपपत्तेः। न हि– यत्त्वेऽपि यन्न ज्ञायते तदेव तस्य नियामकमित्यसत्तो ब्रवीषि? न च **"घटः पटः"** इत्यादि-प्रतीत्यभावात्तादात्म्यमेव नेति वाच्यम्। घटपटयोर्भेदस्य भिन्नसत्तासत्ताकत्वस्य त्वयापह्नोतु-मशक्यत्वात्। यद्येवमप्यपह्नवः तर्हि लाघवाद्भिन्नत्वमात्रमेव समानाधिकरणप्रतीतिनियामकम्; **"घटः पटः"** इत्यादिप्रतीत्यभावस्तु भेदस्य कथंचिदप्यभावादित्येव किमिति नोच्यते?

यदि तु प्रत्यक्षादिसिद्धापलापायोगेन न भेदमात्रस्य प्रतीतिनियामकत्वम्? तर्हि सिद्धान्तस्य त्वदीयस्य त्वयैव त्यागायोगेन तादात्म्यस्य निह्नवं परित्यज्य तस्य सामानाधि-करण्यप्रतीतिनियामकत्वमेव त्यज्यताम्। अथ अन्वयव्यभिचारो नियाम्यनियामकयोरयुत-सिध्यादिनियामकान्तरकल्पनेनोद्ध्रियेत? तर्हि त्यज्यतामजागळस्तनायमानं तादात्म्यरूपं नियामकम्। तत एव तादृक्प्रतीत्युपपत्तेः।

अथ– अध्यस्यमानाभ्यां घटपटाभ्यामधिष्ठानसत्ता भिद्येत? तर्हि भिद्येत गुणगुणि-भ्यामपीति। किञ्च– **"सन् पटः"** इत्यत्र तादात्म्यभाने **"इदं रजतं"** इत्यत्रापि भासेतैव तत्। तथा च इष्टभेदघटिते तादात्म्ये ज्ञाते कस्यापि रजतार्थिनश्शुक्तौ प्रवृत्तिर्न स्यात्। इष्टभेदज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वात्। न च अभिन्नसत्ताकत्वज्ञानं पृथगेव प्रवर्तकमिति वाच्यम्। प्रवृत्तिनिवृत्त्योर्यौगपद्यस्य विरुद्धकारणयौगपद्येन परस्परप्रति-बन्धे कार्यमात्रानुपपत्तेर्दुर्वारत्वात्। अभिन्नसत्ताकत्वज्ञानस्य प्रवर्तकत्वे घटपटयोस्तद्दशायां घटार्थिनः पटप्रवृत्तिप्रसङ्गाच्च।

अथ अभिन्नसत्ताकत्वविशेषणान्तरदाने तत्परिहारस्याप्यज्ञातस्य तस्य प्रवर्तकत्वेऽति-प्रसङ्गात्। ज्ञात(न)स्य प्रवृत्तिदशायामवर्जनीयत्वं स्यात्। अपि च इष्टपुरोवर्तिविशिष्टज्ञाने भेदाग्रहः कारणमिति निर्विवादम्। साक्षिरूप्यभ्रमवादिनामपि **"इमाविष्टपुरोवर्तिनौ**

**भिन्नौ"** इति ज्ञाने सति प्रवृत्तिदर्शनेन कश्चिदुपयोगोऽस्य वक्तव्यः। तथाचापेक्षित-भेदाग्रहविरोधिना भ्रमेण कथं भवन्मते प्रवृत्तिर्निवृत्तिर्वा स्यात्।

अपि चैवं **"वह्निव्याप्यधूमवान् पर्वतः, पर्वते वह्निव्याप्यो धूमः"** इति प्रतीतिरपि समानाधिकरणप्रतीतित्वेन तादात्म्यमवगाहमाना वह्निव्याप्यधूमयोर्भेदं विषयीकुर्यात्। तथा च नानुमितिर्जायते किन्तु प्रतिबध्यत एव। अपि च **"इदं रजततया जानामि"** इत्यनुव्यवसायवत् **"इदं रजतभिन्नतया जानामि" "इदं रजतभिन्नसत्ताकतया जानामि"** इत्यपि कदाचिदनुव्यवसायस्स्यात्। न हि ज्ञातं कदाचिदपि नानुसन्धीयते। **"एतावन्तं कालं रजतभेदज्ञानं वृत्तं; इदानीं बाधेन निवृत्तं"** इत्यपि प्रतीयेत। **"इदं रजतं"** इति वाक्यात् शाब्दबोधोऽपि न स्यात् अयोग्यज्ञानादिति दिक्। तस्मान्न घट इति प्रतीतिबलात्सदसद्विलक्षणत्वसिद्धिः।

नापि– **"सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत"** इति ख्यातिबाधान्यथानुपपत्या, तस्या विपरीतसाधकत्वात्। बाधो हि नास्तीति प्रतीतिः। सा तु असत्त्वमेव साधयेत्। ख्यातिरप्यस्तीकारा सापि सत्तामेव साधयेत्। ततश्च सदसदात्मकं वस्तु सिध्येत् न सदसद्विलक्षणम्।

ननु– सदसदात्मकत्वं [1]विरोधात्साधयितुमशक्ता, अर्थात् सदसद्विलक्षणत्वं साधयिष्यति, इति चेत्– तर्हीदमपि विरोधादेव न साधयेत्। सदसदात्मकत्वस्येव सदसद्विलक्षणत्वस्यापि विरुद्धत्वात्। **"परस्परविरोधे हि न प्रकारान्तरस्थितिः"** इति हि **नीतिविदः**। न हि घटाघटोभयविलक्षणं वस्तूपलभ्यते। घटभिन्नस्य सर्वस्य अघटत्वेन क्रोडीकारात्। कोटिद्वयविनिर्मुक्तानुपलम्भ इति चेत् सद्भिन्नस्य सर्वस्यासत्त्वेन क्रोडीकारात्कोटिद्वयविनिर्मुक्तासम्भवः प्रकृतेऽपि तुल्यः।

अथ सच्छब्दस्तद्विशेषपर इति शङ्क्येत? तर्हि किञ्चित्सद्विलक्षणत्वं सत्यसद्विलक्षणत्वं सदन्तरेऽप्युपपन्नमित्यस्मदिष्टसिद्धिरेव।

---

[1] विरोधार्थं साधयितुं (घ, ञ).

ननु– "बाधेन असत्वं सिध्यतीति भवद्भिरेवाभ्यधायि, तदेव सद्विलक्षणत्वम्। सदर्थासंस्पर्शितौल्यात्। ख्यातिरपि सत्तां साधयन्ती सत्ताया एवासद्वैलक्षण्यरूपतया तद्व्यापकतया तुच्छाद्वैलक्षण्यं साधयति। तथा च प्रमाणसिद्धेऽर्थे विरोधोऽपि कथंचित्स-माधीयते" इति चेत् भ्रान्तिप्रलपितमेतत्। बाधेनाधिकरणान्तरे सत्त्वविरहिणोऽपि वस्तुनोऽधिकरणान्तरे सत्ताया निष्प्रत्यूहत्वात्। "[1] **सिद्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते**" इति सार्वजनीनम्। अतो बाधस्सत्तामेव साधयेत्। प्रतीतिरपि ख्याति-पदाभिधेयतया तामेव प्रथयति। **"संविदेव हि भगवती विषयसत्त्वोपगमे शरणम्"** इत्युक्तेः। तथा च सदसद्विलक्षणे प्रमाणानुपलम्भात्तद्बलेन सद्विलक्षणत्वासद्विलक्षणत्वयोर्वि-रोधशान्तिप्रयत्नः अजागळस्तनोपलम्भजनितः क्षीराभिपातसम्भ्रमः।

यदत्रोक्तम्– "सत्त्वासत्त्वे पदार्थधर्मौ? स्वरूपं वा? **नाद्यः**– असत्वकाले पदार्थसद्भावप्रसङ्गात्। अनित्यधर्मस्य आश्रयादृते अनवस्थानात्। नित्यधर्मत्वे सत्त्वव्या-घातात्। **न द्वितीयः**– एकस्य सदसदात्मकत्वविरोधात्। ननु कालभेदादविरोध इति चेन्न। धर्मस्य हेतुसमाजाद्व्यत्ययो न तु स्वरूपस्य। न चाभावः कालभेदेन भावो भवति। इतः पूर्वमसदित्यसतोऽप्यनुपपत्तेश्च। तस्य निस्स्वभावस्य अवच्छेदककालासम्भ-वात्। तस्मात् यत्किञ्चित्कालमसत्सर्वदा असदेव, यत्सत् तत् सदा सदेव" इति।

तदप्यसत्। पक्षद्वयेऽपि दोषाभावात्। न च– अनित्यधर्मस्याश्रयं विनाऽनव-स्थानादसत्ताकालेऽपि सत्तारूपस्य धर्मस्याश्रयाक्षेपकत्वप्रसङ्गः। तदानीं सत्तारूपधर्मस्याप्य भावेन आश्रयं विनाऽनुपपत्त्यभावात्। अन्यथा स्वाश्रयध्वंसशब्दस्य ध्वंसप्रतियोगिनां रूपादीनां घटे सत्ताऽऽपादकताप्रसङ्गात्। त्वन्मतेऽपि मुक्तिकाले अविद्यमानानां अन्तः-करणादीनामविद्याक्षेपकत्वप्रसंगाच्च।

अथ– अविद्यमानानामाश्रयं विनानुपपत्तिर्हीयते? तर्हि प्रकृतेऽपि दीयतां दृष्टिः। एतेन सत्त्वधर्मित्वे असत्त्वव्याघातो निरस्तप्रायः। सत्त्वस्य तदानीमभावेन तद्धर्मत्वाभा-वात्। अन्यथा श्यामधर्मिणः तद्विरुद्धरक्तधर्मगुणधर्मित्वाभावेन श्यामरक्तयोर्धर्मिद्वय-गतत्वप्रसङ्गात्। यदि श्यामनाशकालघटितं तद्धर्मत्वं? तुल्यमितरत्रापि सत्वधर्मित्वमन्यथ

---

[1] शब्दरूपे (घ. ज).

नेति सुवचत्वात्। ननु सत्त्ववदसत्त्वमपि धर्मः। असावप्याश्रयं विना कथमवतिष्ठते? तथा च असत्त्वदशायामाश्रयसत्ताप्रसङ्ग इति चेत्– स्यादेवं, यद्यसत्त्वमभावातिरिक्तं, न तु तत्तथा। तथाचाभाव एव, स च कालदेशाद्यधिकरण एवेति शान्तायामाश्रयाकांक्षायां कथं प्रतियोगिसत्तां तदर्थमाक्षिपेत्। अन्यथा त्वदभिमतयोर्विद्यमानत्वाविद्यमानत्वयोः का गतिः? तावपि सत्त्वासत्त्वरूपावेव द्विविधसत्तायामिति धात्वर्थानुस्मृतेः। उक्तं हि त्वया व्याघातमजानता सत्ताशून्यस्यापि प्रतियोगिनो विद्यमानतामात्रेणाभावसत्यत्वोपपत्तिरिति।

एतेन– प्रतियोगित्वस्याश्रयं विना कथमवस्थानमित्यपि शङ्का गळहस्तिता। अविद्यमानत्वप्रतियोगितायामाश्रयं विनानुपपत्तेः। पूर्वकाले विद्यमानतामात्रेण चेत्तस्या उपपत्तिः? तर्हि सैवोपपत्तिरिति।

**वस्तुतस्तु–** अतीतत्वभविष्यत्वादिकं स्वभावादविद्यमानपदार्थाश्रयमेव न विद्यमानाश्रयं, अनुभवानुरोधित्वात्कल्पनायाः। विरोधाविरोधावप्यनुभवानुरोधेनैव व्यवस्थाप्यौ। तथा च यदाऽविद्यमानत्वादनाश्रयत्वमतीतत्वादीनां, तदा ज्ञानविषयता न स्याच्च ज्ञानकर्मत्वम्। एवमुत्पत्त्यादिषु कर्मभूतानां घटादीनां कारणता, न स्याच्चाविद्यानिवृत्तिप्रतियोगित्वमविद्यायाः, निराश्रयस्य प्रतियोगित्वस्यानवस्थानात्।

**वस्तुतस्तु–** असत्त्वात्प्रतियोगितां प्रत्यनाश्रयत्वे जगत एव सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगिनोसत्वात्पदार्थमात्रेणाश्रयत्वप्रसङ्ग इत्यलं आस्तां विस्तरेण। तस्मान्न प्रपञ्चस्य व्यावहारिकमात्रसत्यत्वम्। अतः परमेश्वरस्यानन्दमयत्वं स्वाभाविकमेव।

तथापि– "**ब्रह्म पुच्छं प्रतिष्ठा**" इति श्लोके ब्रह्माधारत्वेन शारीरस्य निर्देशात् तद्भिन्नत्वेन तस्यास्स्वातन्त्र्याज्जगज्जन्मादिहेतुत्वविरोधः, तस्माच्छारीर एवायमानन्दमय इत्याशङ्क्याह–

**मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥**

अत्रानन्दमयः परमेश्वर एव। "ब्रह्मविदाप्नोति परं" इत्युपक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामांत्सह ब्रह्मणा विपश्चितेति" इत्यन्तेन ब्रह्मविदामेव सर्वकामावाप्तिं प्रदर्श्य "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यादिना तस्य स्थूलसूक्ष्मचिदचित्प्रपञ्चकारणत्वमभिधाय "तत्सृष्ट्वा, तदेवानुप्राविशत्" इत्यादिना तदन्तर्यामित्वमुपदिश्य "अन्योऽन्तर आत्मा प्राणमयः" इत्यादिकोशपञ्चकान्तरत्वं व्यवस्थाप्य तत्राप्यानन्दमयस्य मुख्यात्मत्वोपदेशादुपक्रमोपसंहारयोरेकलिङ्गत्वेन "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोपक्रान्तः परशिव एवानन्दमय इति "अन्योन्तर आत्माऽऽनन्दमयः" इत्यत्र च व्याचक्षते। मन्त्रब्राह्मणयोरुपजीव्योपजीवकत्वादेकार्थत्वं युक्तम्।

"ब्रह्म पुच्छं प्रतिष्ठा" इति वाक्ये ब्रह्मपदस्य प्रणवार्थकत्वेन तदाधारत्वं तत्प्रतिपाद्यत्वं तदात्मकत्वं च परमेश्वरस्योपदिश्यते। ननु– "ओं तद्ब्रह्म" इत्यादिना प्रणवस्यैव सर्वात्मकत्वेन परब्रह्मत्वोपदेशात्तदाधारत्वादिकं तस्य कथमुपदिश्यत इति चेन्न– "ईशानस्सर्वविद्यानां" इत्युपक्रम्य "सदाशिवोम्" इत्यन्तेन परमेश्वरस्यैव प्रणवात्मकत्वोपदेशात् "यो वेदादौ स्वरः प्रोक्तः" इत्यारभ्य "यः परस्स महेश्वरः" इत्यन्तेन शिवस्यैव प्रणवप्रतिपाद्यत्वावगमात्। तस्मात्परमेश्वरश्चिच्छक्त्यात्मकः परमाकाशरूपो ह्यानन्दमय इति निर्दिश्यते। "को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्" इत्यादिना परमाकाशरूपत्वमानन्दमयस्यावगम्यते। तस्मात् "स एको ब्रह्मणः" इति निरतिशयानन्दस्य ब्रह्माश्रयत्वदर्शनात् "आनन्दो ब्रह्मेति व्यजानात्" इत्यनेनानन्दस्य ब्रह्मात्मकत्व जगदुभयकारणत्वोपदेशाच्च आनन्दब्रह्मणोर्भेदाभावात् "आनन्दमयोऽभ्यासात्" इति सूत्रं व्यासेन निर्दिष्टम्।

ननु– आनन्दशब्दस्य ब्रह्मण्येव बहुशः प्रयोगदर्शनाद्युक्तं *तत्परत्वम्। आनन्दमयशब्दस्य ब्रह्मण्यभ्यासादर्शनात् कथं तत्परत्वम्?* इति चेन्न– "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र ज्योतिश्शब्दस्य ज्योतिष्टोमपरत्ववदानन्दपदस्याप्यानन्दमयपरत्वान्न दोषः। किञ्च– "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता" इत्युपसंहारे

---

* चिह्नाङ्कितं वाक्यं घ, ज, झ कोशेषु न दृश्यते।

परमाकाशरूपचिच्छक्त्यपरपर्याये ब्रह्मधर्मस्वरूपे वारुणविद्यासमाप्तिदर्शनादानन्दमयः परमेश्वर इति निष्प्रत्यूहम् ।

ननु– **"अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसंक्रम्य"** इत्यादावन्नमयादीनां पृथक्चेतनवाचकश्रुतिबला[1] द्देहोत्क्रान्तस्य तदुपासकस्य क्रममुक्तेर्योग्यत्वान्मुमुक्षूणां स्वान्नमयकोशाद्युपासनमेवात्र विधीयते ।

इति चेन्न– **"नोपास्यौ प्रकृतिजीवौ"** इत्यादिश्रुतिशतेषु जीवस्य स्वोपासननिषेधात् । किन्तु अन्नमयादिकोशपञ्चकाधिष्ठानदेवतात्मकब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञिकपरशिवांशाद्युपासनेन स्थूलशरीरावसाने परमशिवकैलासनिश्श्रेणिमार्गात्मकसद्योजातादिपञ्चव्यूहातीतपरशिवाख्ये ब्रह्मणि जीवानां सायुज्यमुक्त्युपदेशान्न विरोधः । तस्मादन्नमयाद्यात्माधारस्य सदाशिवस्यानन्दमयस्यापि कारणं परमशिवाख्यं ब्रह्म **"तत्प्रतिष्ठा"** इत्युपदिश्यते । सदाशिवपरशिवयोरेकत्वादानन्दमयस्य ब्रह्मत्वव्यपदेशः । अत आनन्दमयो नेतर इति सिद्धम् ।

**"सहस्रशीर्षा पुरुषः"** इत्यादिना विराट्पुरुषस्य सर्वस्थूलशरीरात्मकत्वोपदेशात्तस्यैव जगज्जन्मादिहेतुत्वं किं न स्यादित्याशंक्य निराकरोति–

## नेतरोऽनुपपत्तेः ॥ १७ ॥

इतरः– परमशिवादन्यः विराट्पुरुषः नानन्दमयः, कस्मात् ? अनुपपत्तेः, **"सोऽकामयत बहु स्यां प्रजायेयेति, स तपोऽतप्यत, स तपस्तप्त्वा, इदँ सर्वमसृजत"** इत्यादिना सृष्टेः पूर्वं ईक्षणपूर्वकतत्कर्तृत्वहेतुत्वधर्माणां स्थूलप्रपञ्चात्मकविराट्पुरुषस्यासम्भवादिति सूत्रार्थः ।

किञ्च– **"तस्माद्विराडजायत"** इत्यादौ विराट्पुरुषस्य परमशिवादुत्पन्नत्वदर्शनात् विराट्पुरुषस्य शरीरसाध्यत्वाच्च सृष्टेः प्रागीक्षणानुपपत्तिर्बोध्या । श्रुतौ तपश्शब्द ईक्षणपरः । तस्मादानन्दमयः परशिव एव नेतर इति सिद्धम् ।

---

[1] देहाक्रान्तस्य (घ, ज झ)

"यतः प्रसूता जगतः प्रसूती
तोयेन जीवान् व्यससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान् पशूँश्च
विवेश भूतानि चराचराणि ॥"

इति [1]महानारायणीयोपनिषद्वाक्ये जगत्कारणत्वं हिरण्यगर्भस्यैव व्यपदिश्यते । किञ्च– "अन्तः समुद्रे कवयो निचिक्युः" "प्रजापतिश्चरति गर्भे अन्तः" इत्युपक्रमे तस्यैव सर्वानुप्रविष्टत्वमवगम्यते । तदुपसंहारे "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुवः" इत्यादिना तस्यैव विश्वकारणत्वव्यवस्थापनात् । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इत्यादिना सृष्टेः प्रागवस्थानदर्शनाच्च तस्यैवानन्दमयत्वं इत्याशङ्क्य निराकरोति–

## भेदव्यपदेशाच्च ॥ १८ ॥

"यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः, हिरण्यगर्भं पश्यत जायमानँ स नो देवश्शुभया स्मृत्या संयुनक्तु, यस्मात्परं नापरमस्ति किञ्चित्" इति महानारायणीये "यो देवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वं" इति श्वेताश्वतरे च हिरण्यगर्भकारणत्वं शिवस्यैवोपदिश्यते । "अजात इत्येवं कश्चिद्भीरुः प्रपद्यते" "रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्" "एक एव रुद्रो न द्वितीयाय तस्थे" इत्यादिना श्वेताश्वतरे अजन्यत्वाद्वितीयत्वादिधर्माणां परमेश्वरस्यैव श्रवणात् पूर्वोक्तश्रुतिनिविष्टप्रजापत्यादिशब्दप्रतिपाद्यत्वं परशिवस्यैव समुचितम् । तद्धर्मबाहुल्यात् । भेदेन व्यपदेशो भेदव्यपदेशः जीवसमष्टिरूपहिरण्यगर्भपरशिवयोः जन्यत्वाजन्यत्वभेदनिर्देशादत्रानन्दमयो न हिरण्यगर्भः ।

किञ्च– "रसो वै सः– रसँ ह्येवायंलब्ध्वाऽऽनन्दी भवति" इति सकलजीवसमष्ट्यात्मकहिरण्यगर्भपरमेश्वरयोर्भेदमुपदिशति ।

---

[1] महोपनिषद्वाक्ये (घ, ज. झ).

ननु– "अन्योऽन्तर आत्मा प्राणमयः" इत्यादिवाक्यनिविष्टान्यशब्दानां कथं हिरण्यगर्भादन्यत्वप्रतिपादकत्वम्? आनन्दमयादन्यस्य ब्रह्मत्वं कथं नोपपद्यते।

इति चेन्न– जीवसमष्टिरूपहिरण्यगर्भात्मकविज्ञानमयादन्यत्वस्यानन्दमयस्यैवोपदेशात्, भृगुवल्ल्यानन्दवल्ल्योरानन्दमयादन्यस्य ब्रह्मत्वव्यवस्थापनादर्शनात्। तदन्यत्वांगीकारे अनवस्थादोषप्रसङ्गाच्चानन्दमयस्साक्षात् परशिव एवेति सिद्धम्।

निर्धर्मकस्य परमेश्वरस्य जगज्जन्मादिहेतुत्वासंभवादयस्कान्तसूचीन्यायेन तत्रारोपितप्रधानस्यैव [1]तत्सत्तावशत्कारणत्वं सम्भवतीत्याशङ्कायामाह–

## कामाच्च नानुमानापेक्षा ॥ १९ ॥

"अजामेकां लोहितशुक्लकृष्णां" "प्रजापतिरकामयत प्रजास्सृजेयेति" "एको ह वै नारायण आसीत्" "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यादिश्रुतिषु प्रधानस्य तत्त्रैगुण्यात्मकचतुर्मुखादीनां च जगत्कारणत्वावगमेऽपि परमेश्वरस्य जगत्कारणत्वे अनुमानापेक्षा युक्त्यपेक्षा नास्ति। तत्प्रधानादिकामस्य अवान्तरसृष्टिविषयत्वात् शिवस्य परब्रह्मणः प्रधानहिरण्यगर्भादिसर्वात्मनाऽवान्तरसृष्टिकर्तृत्वमप्युपदिश्यते। "संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" इत्यत्र "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" इति प्रधानहिरण्यगर्भादिसर्वात्मना जगदनुस्यूतस्य परशिवस्य नामरूपकर्तृत्वश्रवणात्।

किञ्च– "सोऽकामयत बहु स्यां प्रजायेयेति, तत्सृष्ट्वा तदेवानुप्राविशत्" "मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं; तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः" "एक एव रुद्रो न द्वितीयाय तस्थुः" "तुरीयमिमां लोकमीशत ईशनीयं जनयेयुर्यस्सर्वान् लोकानीशत ईशनीभिः परमशक्तिभिः" "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां" इत्यादिश्रुतिशतेषु

---

[1] जगत्कारणत्वं (व, ज, झ)·

परब्रह्मणश्शिवस्यैव निरपेक्षतया सर्वकर्तृत्वासर्वनियामकत्व सर्वान्तर्यामित्वासर्वज्ञत्वादिधर्माणामनन्यसाधारणत्वेन व्यपदेशात्स एवानन्दमय इति सिद्धम्। प्रधानादिकारणत्वमीक्षत्यधिकरणनिराकृतमपि प्रधानप्रसङ्गात् गतिसामान्यप्रपञ्चनार्थं पुनर्निराकृतमिति वेदितव्यम्।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन्नानन्दमये परशिवे अस्य जीवस्य, च शब्देन प्रधानप्रपञ्चयोरपि तद्योगं—सिन्धुसैन्धववदैक्यं शास्ति— शास्त्रं प्रतिपादयतीति भावः। **"यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥" "ब्रह्म वेद ब्रह्मैव भवति" "तत्त्वमसि" "अहं ब्रह्मास्मि"** इत्यादि श्रुतिषु तद्भावापत्तिर्मुक्तिरित्युपदिश्यते। इहोपनिषदि **"ब्रह्मविदाप्नोति परं"** इत्युपक्रमे ब्रह्मणो वेद्यत्वं प्राप्यत्वं न जीवस्य वेदितव्यत्वं प्राप्तृत्वं चोपदिश्यते तस्मात् जीवब्रह्मणोर्भिन्नत्वाराध्याराधकत्वव्यापकत्वाल्पत्वकिञ्चिज्ज्ञत्वसर्वज्ञत्वादिधर्माणां परस्परविरुद्धस्वभावत्वेऽपि मोक्षदशायां तद्भावापत्तिस्सम्भवतीति सिद्धान्तः।

ननु— "स्वाभाविकस्य **निम्बकषायन्याय**वन्निवृत्तिस्सर्वदा न सम्भवति। तदङ्गीकारेऽपि जलौष्ण्यवदागन्तुकत्वस्यानित्यत्वमेव स्यात्। तस्मान्मोक्षस्याप्यनित्यत्वमेव स्यात्"

इति चेन्न— भ्रमरकीट-शुक्तिसलिलादिषु स्वाभाविकस्य सर्वथा निवृत्तिदर्शनात् भेदाभेदमतमेव वैदिकमिति सिद्धम्।

किञ्च— **"यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते— अथ सो भयं गतो भवति— यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते— अथ तस्य भयं भवति"** इति मुक्तदशायां यदा एतस्मिन्नानन्दमये परशिवे अन्यमन्तरं अतादात्म्यरूपं पश्यति तदाजन्मभयान्न निवर्तते, यदा ह्येतस्मिन्नानन्दमये उपासनाकाले तादात्म्यो नपश्यति, तदा संसारभयाद्विमुच्यते।

ननु– आनन्दमयस्य ब्रह्मत्वे **अर्धजरतीन्यायेन** अन्नमयादीनामपि ब्रह्मत्वं किं न स्यात्? इति चेन्न– "**स वा एष पुरुषोऽन्नमयः। तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः। *तस्माद्वा एतस्मात्प्राणमयात्। अन्योन्तर आत्मा मनोमयः। *तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः। तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्मानन्दमयः**" इति सर्वान्तरत्वेन निरतिशयत्वेन चानन्दमयस्यैव व्यपदेशात् नेतरत्वब्रह्मत्वं सिध्यति।

केचिद्भ्रान्ताः रज्वारोपितसर्पवत् ब्रह्मणि जीवत्वभ्रान्तिमारोपयन्ति। मुक्तिदशायां जीवभावमापन्नस्य ब्रह्मणः कण्ठाभरणदर्पन[1]विवेकसन्धानादिवत् स्वस्वरूपज्ञानमेव मोक्षइति वदन्ति। श्रुत्युक्त्यनुभवविरुद्धत्वेन तन्मतं श्रौतैर्मुमुक्षुभिर्नाङ्गीकरणीयम्।

**स्मार्तान् सर्वमतभ्रष्टान् जगन्मिथ्यात्वसाधकान्**
**गणिकामार्गसञ्चारान् पाषण्डान् परिवर्जयेत्।**
**दुर्वासोगौतमव्यासदधीच्यादिमहर्षिभिः**
**शप्तान् शैवैकविद्वेषान् पाषण्डान् परिवर्जयेत्॥**

इति **पूर्वाचार्योक्तेः**।

किञ्च– "**ब्रह्मविदाप्नोति परं**" इत्याद्युपक्रमादिसिद्ध वेद्यत्वप्राप्यत्वादिविरोधः। "**सोऽश्नुते सर्वान् कामान् सह**" इति तदुपासकानामवाप्तसकलकामत्ववैरुध्यं च। सर्वज्ञस्य ब्रह्मणः भ्रान्त्यारोपणे सर्वज्ञत्वादिभङ्गप्रसङ्गश्च। "**ज्ञाज्ञौ द्वावजावीशनीशौ**" इत्यादिश्रुतिशतविरोधश्च स्यादिति न विद्वद्रमणीयम्।

अत्र **केचित्**– अस्मिन्नानन्दमये ब्रह्मणि जीवस्यास्य तद्योगं शेषत्वसबन्धं शास्ति-शास्त्रं प्रतिपादयतीति विशिष्टाद्वैतमेव मुख्यमिति जल्पन्ति; तत् अवैदिकत्वान्नमुमुक्षुग्राह्यम्। वैदिकमीमांसाकर्तृभिर्भट्टभास्करादिपूर्वाचार्यैः स्वसिद्धान्तस्थापनावसरे पूर्वपक्षस्याप्त्ययोग्यत्वेनो-पेक्षितत्वात्। विशिष्टमद्वैतमित्युक्तिविरोधात्। विशिष्टस्य दुर्निरूपत्वेन मिथ्यात्वाच्च।

---

* वाक्यमिदं घ, ज, झ कोशेषु न दृश्यते (सं).

विशिष्टं नाम विशेषणविशेष्यसम्बन्ध एव वा? तदतिरिक्तं वा? **नाद्यः,** त्रयाणामनेकत्वेन अद्वयत्वासम्भवात्। "एते दण्डपुरुषसम्बन्धाः" इति समूहालम्बनस्य दण्डीति विशिष्टप्रत्ययत्वानतिरिक्तविषयत्वात्। **न द्वितियः–** विशेष्यरूपपरमात्मनोऽप्यन्यत्वेन विशिष्टाभिमतपरमात्मनो विशिष्टाद्वैतासिद्धिः? केवलपुरुषाद्दण्डिपुरुषस्यान्यत्वाङ्गीकारात्। अन्यथा केवलपुरुषे दण्डीति प्रत्ययस्य वा दण्डिनि पुरुषे केवलपुरुष इति प्रत्ययस्य वा प्रसङ्गात्। त्रितयातिरिक्तस्य विशिष्टस्य एतद्दण्डविशिष्टत्वं वा? एतदतिरिक्तदण्डविशिष्टत्वं वा?

**नाद्यः–** त्रितयातिरिक्तत्वासिद्धेः। विशेषणस्यापि विशिष्टशरीरत्वात्। **न द्वितीयः–** अनुपपत्तेः, अनवस्थापनाच्च।

किञ्च—दण्डिपुरुषस्यान्यत्वे **कलल**शुक्लशोणितादिसामग्रीं विना जातस्य स्थाणुपुरुषवन्मिथ्यात्वापत्तेः। अजन्यत्वे च तस्य नित्यत्वेन दण्डापनयनेऽपि दण्डीपुरुष इति प्रतीतिप्रसङ्गाच्च। विशिष्टस्य नित्यत्वात् विशिष्टस्य त्रितयादन्यत्वेन देहादिविशिष्टस्यैवात्मनस्सुखदुःखादिकारणत्वेन केवलस्यात्मनस्सुखदुःखादिगुणकत्वं न सिध्येत्। त्रितयादन्यस्य विशिष्टस्यानुपलब्धिपराहतत्वाच्च। उपलब्धौ वा तस्य स्थाणुपुरुषतुल्यत्वाच्च। विशिष्टस्य त्रितयाभेदे च दण्डपुरुषयोरभेदप्रसङ्गाच्च। तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्। दूरस्थवनस्पतित्रितयगोचरैकत्वबुद्धिवत् त्रितयगोचरैकत्वबुद्धेरपि भ्रान्तित्वेन विशिष्टस्याप्यप्रामाणिकत्वापत्तेः। तस्माद्विशिष्टस्य विशेषणविशेष्यसम्बन्धेभ्यः सत्त्वासत्त्वाभ्यां दुर्निरूपकत्वेन मिथ्यात्वात् **तच्छिवाद्वैतमेव** ग्राह्यम्।

अत एव मुख्यवेदान्तिभिः जगदुभयकारणत्वं परमेश्वरस्याङ्गीकृतम्। अत एवारम्भणाधिकरणे भगवता **व्यासेन** वाचारम्भणश्रुतीनां कारणादन्यत्वं कार्यस्य **"तदनन्यत्वमारम्भणशब्दादिभ्यः"** इति सूत्रे निर्दिष्टम्। तस्मात् **"शूद्रब्राह्मणः"** इतिवत् **"विशिष्टाद्वैतं"** इति मतमविदुषामेव शोभते।

किञ्च- विशेषणविशेष्यत्वादेरपि दुर्निरूपत्वं च। न तावद्व्यावृत्तिबुद्धिजनकत्वं विशेषणत्वं विशेष्यादावपि तत्सम्भवात्। अनेककारणस्य दण्डादेस्तन्मात्रासाधारणकारणत्वासम्भवाच्च। अत्र हि किं विशेषणम्? किं विशेष्यम्? को वा सम्बन्ध? इति विवेचनीयम्। न तावज्जीवो विशेषणम्; परमात्माविशेष्यमिति शक्यं वक्तुम्।

तन्मते अणुजीवानामेकत्वे एकजीवभावप्रसङ्गः, अनेकत्वे अनेकजीवविशिष्टस्य परमात्मनो दण्डकुण्डलादिद्विशिष्टस्याद्वयानुपपत्तेः। न हि दण्डविशिष्ट एव कुण्डलविशिष्टः। दण्डकुण्डलविशिष्टत्वाकारेण भेदात्। तयोरभेदे च कुण्डलाभावे दण्डिनि कुण्डलीत्यपि विशिष्टप्रतीतिप्रसङ्गात्। विशेषणभेदाद्विशिष्टभेदांगीकारे च अनन्तजीवविशिष्टस्य परमात्मनः कथं विशिष्टाद्वैतत्वम्?

किञ्च– विशेषणविशेष्ययोस्सम्बन्धो वक्तव्यः। असम्बद्धस्य विशेषणत्वानुपपत्तेः। न तावज्जीवपरमयोस्समवायसम्बन्धः युतसिद्धत्वात्। नापि स्वरूपसम्बन्धः, स्वरूपद्वयात्मकस्य स्वरूपसम्बन्धस्य सम्बन्धिरूपत्वात्सम्बन्धसम्बन्धिनोरेकत्वानुपपत्तेः। स्वरूपद्वयात्मकसम्बन्धस्य स्ववृत्तित्वे आत्माश्रयप्रसङ्गात्। स्वरूपद्वयस्य स्ववृत्तित्वासम्भवात् अन्यवृत्तित्वासम्भवाच्च। तस्मान्न जीवपरयोः स्वरूपसम्बन्धः। नापि संयोगसम्बन्धः। व्याप्यवृत्तिसंयोगांगीकारे तादात्म्यापत्त्या जीवपरयोरभेदप्रसङ्गात्। निष्प्रदेशयोस्तयोरव्याप्यवृत्तिसंयोगस्यासम्भवात्। तत्रौपाधिकप्रदेशाङ्गीकारे उपाधिसम्बन्धस्याप्युपाध्यन्तरसम्बन्धापेक्षतयाऽनवस्थापातात्। आत्मत्वावच्छेदेनापि संयोगतदभावयोः वृत्त्यङ्गीकारे च भावाभावविरोधस्य दत्तजलाञ्जलित्वप्रसङ्गात् संयोगस्य मिथ्यात्वापत्तेश्च। तस्माज्जीवपरमयोः सम्बन्धानिरूपणाद्विशेषणविशेष्यभावप्रेर्यप्रेरकभावासम्बन्धेन जीवविशिष्टस्य परस्याद्वैतप्रसक्तिरेव नास्ति। तस्मात्सर्वश्रुतिसिद्ध**विशेषाद्वैतमेव** पुनरावृत्तिरहितमुक्तिप्रदायकमिति सिद्धम्।

केचित्तु– "**ब्रह्म पुच्छं प्रतिष्ठा**" इत्यत्र पुच्छवत् पुच्छं– प्रतिष्ठा परायणं– लौकिकसर्वानन्दानामधिष्ठानमिति वदन्ति। "**स एको ब्रह्मण आनन्दः**" इति ब्रह्मानन्दस्यैव सर्वाधिकत्वेन व्यपदेशात् राजमार्गे विशेषाद्वैतपक्षे मदीयसिद्धान्ते न विरोधः।

**इत्यानन्दमयाधिकरणं समाप्तम्॥**

---

## अथ षड्लिङ्गस्थलनिरूपणम्

### अन्तरधिकरणम् ॥ ७ ॥

जगज्जन्मादिहेतुभूतस्य सर्वज्ञत्वादिषड्विधधर्मावच्छिन्नस्य सर्वव्यापकस्य पवनादिवन्मूर्तामूर्तस्य शिवस्य परब्रह्मणः आनन्दमयत्वं प्रसाध्य निखिलभक्ततारणार्थमस्य सर्वब्रह्माण्डातीतमहाकैलासवासस्य पञ्चोऽपनिषन्मयाप्राकृतदिव्यमङ्गळविग्रहस्य भक्तपरिवेष्टितस्य हिरण्मयस्य सदाशिवस्य प्रकारमुख्यशरीरत्वं प्रसाधयितुमधिकरणान्तरमारभते—

### अथ शिवस्य परब्रह्मणः महालिङ्गात्मकत्वप्रतिपादनम्

## अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

**छान्दोग्ये** दृश्यते अस्य विषयः—

**"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्यर्क्साम च गेष्णौ तस्मादुद्गीथस्तस्मात्वेवोद्गीतैतस्य हि गाता स एष येचामुष्मात्प्राञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतं, अथाध्यात्मम्"**

**"अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्साम तदुक्तं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्यरूपं यावदमुष्यगेष्णौ तौ गेष्णौ यन्नाम तन्नाम"** इति। अत्र **संशयः**— विद्यातिशयकर्मोत्कृष्टत्वप्राप्तातिशयः कश्चिद्देवताविशेषो वा नारायणो वा साक्षात्परशिवोवेति।

**पूर्वपक्षस्तु**— प्रभाकरमण्डले चक्षुषि च सर्वोपास्यत्वेन व्यपदिष्टः पुरुषो न महेश्वरः। कस्मात्? **हिरण्यश्मश्रुरित्यादिना** सशरीरत्वश्रवणात्। **"अपाणिपादोऽह-**

**मचिन्त्यशक्तिः पश्याम्यचक्षुस्सशृणोत्यकर्णः" "अशब्दमस्पर्शमरूपमव्ययम्" "आकाशवत्सर्वगतश्च पूर्णः" "खं वायुर्ज्योतिरापःपृथिवी विश्वस्य धारिणी"** इत्यादिश्रुतिशतेषु परमेश्वरस्य शिवस्य स्वाधिष्ठानत्वसावयवत्वनिषेधो दृश्यते। **"य एषोन्तरादित्ये" "य एषोन्तरक्षिणी"** इति तस्यादित्याधारत्वोपदेशात्। देवतान्तरपरत्वमेव युक्तम्। परमेश्वरस्य भक्तोपासनार्थं रूपवत्वाङ्गीकारे स्वेच्छया जीववच्छरीरवत्वेन दुःखानुभूतिर्व्यपदिस्यते।

किञ्च— आदित्यमण्डले चक्षुषि च उपास्यः पुरुषो नारायण एव। पुण्डरीकाक्षत्वलोचनद्वयवत्वादिधर्माणां तस्यैव समुचितत्वात्। **साङ्ख्यस्मृतौ—**

> **ध्येयस्सदा सवितृमण्डलमध्यवर्ती**
> **नारायणस्सरसिजासनसन्निविष्टः।**
> **केयूरवान्मकरकुण्डलवान् किरीटी**
> **हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥**

इत्यादिना भगवता कपिलाचार्येण महर्षिणा सौरमण्डलान्तर्वर्तित्वहिरण्मयत्वादिधर्माणां नारायणस्यैव व्यपदेषात्। परमेश्वरपरत्वे **"अक्षिणी"** इति द्विवचनबाधापि दृश्यते।

अपि च— **"कप्यासं पुण्डरीकमेवमक्षिणी"** इति तस्य निकृष्टमर्कटासनतुल्यपुण्डरीकसादृश्यस्याक्ष्णोर्व्यपदेशात्सर्वथा न परमेश्वरपरत्वं इति प्राप्ते **ब्रूमः—**

**सिद्धान्तस्तु— "अन्तस्तद्धर्मोपदेशात्"** अन्तः— "य एषोऽन्तरादित्ये" "य एषोन्तरक्षिणि" इत्यादित्याक्ष्णोरन्तः श्रूयमाणः पुरुषः साक्षात्परशिव एव। कुतः? तद्धर्मोपदेशात्। तस्य महेश्वरस्य ये धर्माः इहोपदिष्टाः तेषामस्मिन् वाक्ये उपदेशात्। तद्यथा **"तस्योदिति नाम— स एष सर्वेभ्यः पाप्मभ्यः उदितः उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद"** इति वाक्ये तस्योदितिनामेति दर्शयित्वा सर्वकिल्बिषरहितत्वेन तद्धर्मश्रवणात्, तस्मात्तदेव निर्वचनमक्षिपुरुषस्याप्युपदिशति। **"य आत्माऽपहतपाप्मा"** इत्यादौ च सर्वकिल्विषशून्यत्वं परमेश्वरस्यैव श्रूयते। तथाक्षिपुरुषे **"सैवर्क्साम तदुक्तं तद्यजुस्तद्ब्रह्म"** इति वाक्ये तस्यैव ऋक्सामाद्यात्मकत्वं व्यपदिशति।

किञ्च– **"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय"** इत्याद्यावनितरसाधारणाः परमेश्वरधर्मा बहवो निर्दिष्टाः। भक्तानुग्रहार्थं सर्वव्यापकस्य शिवस्य परब्रह्मणो हिरण्यश्मश्रुत्वादिधर्मविशिष्टदिव्यमङ्गळविग्रहात्मकत्वेन दुःखक्लेशप्रसङ्गः? त्रिगुणातीतशुद्धसत्त्वप्रधानचिच्छक्त्यात्मकत्वात्। जलाग्निस्तम्भनशक्तिमतां तत्प्रतिबन्धकत्वादर्शनाच्च सर्वशक्तिविशिष्टस्य वशीकृतमायाशक्तेः परमेश्वरस्य किमुवक्तव्यम्?

तस्माच्छरीरसम्बन्धेऽपि सर्वपापराहित्यं भगवती श्रुतिरेव प्रतिपादयति। नारायणस्य प्रभाकराक्ष्यन्तर्वर्तित्वं न सम्भवति। सूर्यस्य अष्टमूर्तेश्शिवस्य मुख्यशरीरत्वेन श्रुतिस्मृतिप्रसिद्धत्वात्। रुद्राध्याये– **"असौ योऽवसर्पति नीलग्रीवो विलोहितः, उतैनं गोपा अदृशं न दृशन्नुदहार्यः"** इत्यादिना, यो विलोहितस्सन् रुद्रः अर्कमण्डलवर्ती भूत्वा अवसर्पति– उदयास्तमये सम्पादयितुं प्रवर्तते। तत्राभिव्यक्तं पुरुषं रुद्रं श्रुतिपारगा उपासते। तथा च स्मृतिः–

**सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्।**
**नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम्॥**

**सूर्यो मुख्यशरीरंस्याच्छिवस्य परमात्मनः।**
**तस्मात्तदन्तरे नित्यं ध्यायेद्योगी सदाशिवम्॥**

**सूर्याक्षिदहरेष्वेव साम्बं चन्द्रकळाधरम्।**
**फुल्लाब्जनयनद्वन्द्वं ध्यायेद्योगी निरन्तरम्॥**

इत्यादि **गौतमबृहच्छातातपादिषु** सूर्यमण्डलान्तर्वर्तित्वस्य परमेश्वरस्यैव निर्देशान्नान्यार्थो युक्तः।

किञ्च– सूतसंहितायां ज्ञानयोगखण्डे भगवता **व्यासेन** परमेश्वरपरत्वं स्पष्टमुक्तम्।

वेदार्थोऽयं स्वयं ज्ञात्वा तत्राज्ञानं प्रचक्षते ।
श्रुतिस्मृतिपुराणेभ्यो वेदार्थमुपबृंहयेत् ॥

इत्यादिस्मृतिषु वेदार्थस्य स्वयं वेत्तृत्वनिषेधव्यवस्थापनात् ।

अथवाऽऽकाशमध्यस्थे भ्राजमाने सुशोभने ।
आदित्यमण्डले पूर्णे लक्षयोजनविश्रुते ॥

सर्वलोकविधातारमीश्वरं हेमरूपिणम् ।
हिरण्मयश्मश्रुकेशं हिरण्मयनखं तथा ॥

कप्याद्यासनवन्नेत्रं नीलग्रीवं त्रिलोचनम् ।
आगोपादिप्रसिद्धान्तमम्बिकार्धशरीरिणम् ॥

सोऽहमित्यादरेणैव ध्यायेद्योगी महेश्वरम् ॥

इति वृद्धशातातपे—

सौरमण्डलमध्यस्थं विष्णुवल्लभमव्ययम् ।
ऊर्ध्वरेतं विरूपाक्षं सर्वकारणकारणम् ॥

हिरण्मयश्मश्रुकेशं हिरण्मयनखान्वितम् ।
कं जलं किरणैस्सम्यक्पिबतीति प्रभाकरः ॥

कपिशब्देन निर्दिष्टो वेदवेदान्तपारगैः ।
आसं विकसनं प्रोक्तं योगिभिः पारमार्थिकैः ॥

तस्मादुत्फुल्लवनजनयनद्वयशोभितम् ।
चिदचिद्विश्वरक्षार्थं कृपया पद्मकोशवत् ॥

**मुकुळीकृतसद्वह्निनेत्रं शूलधरं विभुम् ।**
**ध्यायेद्योगी महादेवं जगज्जन्मादिकरणम् ॥**

इत्यादिना शिवस्यैव सौरमण्डलान्तर्वर्तित्वदर्शनात् । **नीलकण्ठभगवत्पाद-भट्टभास्कर-घण्टानाथ-ज्योतिर्नाथादिपूर्वाचार्यैश्छान्दोग्यभाष्ये**– "**कप्यासं पुण्डरीकमेवमक्षिणी**" इति वाक्ये तस्य परमेश्वरस्य लोकानुग्रहार्थं सूर्यचन्द्रात्मकनेत्रद्वयं विकसितं, मुकुळीकृतं तृतीयलोचनमिति व्याख्यातम् ।

तद्यथा– कं– जलं रश्मिभिः पिबतीति कपिः– सूर्यः, तेन आसं– आसितं– विकसितमित्यर्थः । पुण्डरीकं यथा स्फुरति तथा महेश्वरस्य लोचनद्वयम् । तृतीयलोचनन्तु मुकुळीकृतस्वभावं विकसितपुण्डरीकसदृशं न भवति ; किन्तु मुकुळीकृतपुण्डरीकसदृशमित्यभिप्रायेण "**अक्षिणी**" इति द्विवचनस्य न तृतीयलोचनाभावपरत्वम् । पुत्रत्रितयवन्तं ब्राह्मणं प्रति "**द्वौ पुत्रावस्याग्निकल्पौ**" इत्युक्ते द्विपुत्रसङ्ख्याग्रहणं न शेषपुत्रनिषेधपरम् , किन्तु पुत्रद्वयस्याग्निसादृश्यपरं, एवं लोके बहुशो वेदितव्यम् । परमशिवासाधारणानां हिरण्मयत्वादिलिङ्गानां नारायणस्यानुपपत्तेः । "**सन्दिग्धेषु वाक्यशेषात्**" इति न्यायेन सूत्रविषयस्य सन्दिग्धत्वादत्र वाक्यशेषोऽङ्गीक्रियत इति चेत्– महोपनिषदि स्पष्टमुक्तम्– "**आदित्यो वा एष एतन्मण्डलं तपति**" इत्यनुवादवाक्येन प्रभाकरमण्डलं निर्दिश्य "**य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते**" इत्यादिनाऽऽदित्यमण्डलप्रभामुपदिश्य "**य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषः**" इति मण्डलाभिमानिप्रभाकरं प्रदर्श्य "**य एषोऽन्तरादित्ये हिरण्मयः पुरुषः**" इत्यादिनान्तर्यामिणं निर्दिश्य, पुनः "**आदित्यो वै तेज ओजो बलं यशः**" इत्यादिना तस्य प्रभाकरस्य विभूतिमभिधाय "**य एष पुरुष एष भूतानामाधिपतिः**" इति भूतपतित्वेन व्यपदिश्य "**पुनः कीदृशः पुरुषः**" इत्याकाङ्क्षायां "**नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः**" इत्युपसंहृतम् ।

**शतरुद्रीये**– "**नमो हिरण्यबाहवे सेनान्ये**" इत्यादिश्रुतिसिद्धहिरण्मयत्वोमावेपतित्वपशुपतित्वादिधर्माणामनन्यसाधारणत्वात् नारायणादन्यत्रापि पुण्डरीकाक्षत्वं साधारणलिङ्गम् । "**कमललोचना नारी**" "**कमलाक्षः पुरुषः**" इति लोके प्रयोगदर्शनात् ,

सामान्यविशेषलिङ्गयोः परस्परविरोधे विशेषलिङ्गानुसारेण व्याख्यानं निर्णेतव्यमिति न्यायात्, श्रुतिविरुद्धस्मृतेः प्रामाण्याभावात् साङ्ख्यस्मृतेरवैदिकत्वेन **स्मृत्यनवकाशाधिकरणे** भगवता **व्यासेन** निरस्तत्वाच्च, अत्रोद्गीथविद्योपास्यो हिरण्मयः पुरुषः परमशिव एवेति सिद्धम् ।

**मृत्युञ्जयं परित्यज्य येऽन्यदैवमुपासते ।**
**ते मृत्युमुखमाविश्य जायन्ते च पुनः पुनः ॥**

**कदन्नमप्यनन्नस्य पायसान्नमितीर्यते ।**
**अदृष्टशिवपादस्य तद्विष्णोः परमं पदम् ॥**

इत्यादिस्मृतिषु शिवान्यदेवतोपासनस्यैव निरस्तत्वात् सर्वदा सूर्यमण्डलाक्ष्यादिस्थानेषु साक्षाच्छिव एव मुमुक्षूणां ध्येय इति राद्धान्तः ।

"**असावादित्यो ब्रह्म**" इत्यादिश्रुतौ प्रभाकरस्यापि ब्रह्मत्वोपदेशादादित्यमण्डलान्तर्वर्ती हिरण्मयः पुरुषो ह्यादित्य एवेत्याशङ्कायामाह—

## भेदव्यपदेशाच्चान्यः ॥ २२ ॥

प्रभाकरचक्षुरन्तश्श्रूयमाणः पुरुषो ह्यादित्यशरीराभिमानिजीवादन्य एव । **कस्मात्?** **भेदव्यपदेशात्** । *अन्तर्यामिब्राह्मणे आदित्यपरमेश्वरयोर्भेदेन व्यपदेशात्* । आदित्यहिरण्यगर्भनारायणादिपशुपाशबद्धजीवानां सदा परब्रह्मत्वं नोपपद्यते । "**य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः**" इत्यादिना सर्वान्तर्यामित्वेनात्र परमशिव एव व्यपदिश्यते । "**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो**

---

* अयं पाठः "ज" कोशे न दृश्यते (सं).

**न विदुर्यस्यापश्शरीरं योऽपोन्तरो यमयति"** इत्यादिना पृथिव्याद्यष्टमूर्त्यन्तर्यामित्व-मष्टमूर्त्यात्मकत्वं नेतरेषां, असम्भवात्।

किञ्च– **"अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चि-न्मत्तोव्यतिरिक्तः सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं प्राविशत् सोऽहं नित्या-नित्योऽहं व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं"** इत्यादिना **आथर्वणश्रुतौ** रुद्रस्य परब्रह्मणः ब्रह्मविष्णुकालरुद्रादिसर्वात्मकत्वस्य सर्वान्तर्यामित्वस्य च व्यवस्थापनात्; **"यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनान्याविवेश तस्मै रुद्राय नमो अस्तु"** इत्यादौ च तथा व्यपदेशात्, परमशिवासाधारणामृतत्वादि-लिङ्गानामनितरसाधारणत्वात्; **शतरुद्रीयप्रशंसापरजाबालोपनिषदि "एतानि वा अमृतस्य नामधेयानि"** इत्यमृतपदस्य शिवपरत्वेन निर्देशाच्च अक्ष्यादित्यान्तः पुरुषः परमशिव एवेति सिद्धम्।

**"असावादित्यो ब्रह्म"** इत्यादिश्रुतीनां **"अन्नं ब्रह्मेति व्यजनात्"** इत्यादि-वदौपचारिकत्वम्। लोके शरीरवाचकपदानां शरीरिबोधकत्वान्न दोषः। **"न तत्र-सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु-भाति सर्वं तस्य भासा सर्वमिदं विभाति"** इत्यादिश्रुतिषु सूर्यादीनां परमेश्वर-प्रकाशेन प्रकाश्यत्वं स्पष्टमुक्तम्। **"भीषाऽस्माद्वातः पवते"** इत्यादौ पवनसूर्याग्नीन्द्र-मृत्युप्रभृतीनां परमेश्वराज्ञाभयात् स्वस्वव्यापारप्रवृत्तिदर्शनात्, सूर्यादीनां जीवानां स्वतो ब्रह्मत्वं नोपदिश्यते।

ननु– **सुबालोपनिषदि "यस्यात्मा शरीरं यस्यापश्शरीरं, यस्याव्यक्तं शरीरं"** इत्यारभ्य **"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको। नारायणः"** [1]इत्यादिना नारायणस्य सर्वात्मकत्वावगमात्, रुद्रेश्वरमहेश्वरपरमेश्वरशिवादिशब्दानां नारायण-परत्वेनैव समञ्जसत्वात् **नारायणोपनिषदि** तस्यैव परमकारणत्वव्यदेशाच्च नेतरस्य परब्रह्मत्वम्। **"यज्ञदत्त उत्पन्नो घटो नष्टः"** इत्यादिवदतिप्रसङ्ग इति चेत् न, प्रकरणादिविशेना-

---

[1] इत्यादिना सर्वात्मकत्वं नारायणस्य (ब, ज).

न्यार्थकत्वात् । शरीरवाचकानां शरीरिवाचकत्वव्याप्तौ शरीरपदे व्यभिचार इति चेत्— निष्कर्षकेतरपदत्वेन विशेषणात् ।

किञ्च— **अयुतसिद्धप्रकारवाचकानां "शुक्लः पटः, नीलमुत्पल"** इत्यादीनां पदानां प्रकरणे मुख्यत्वावगमात् जगत्प्रकाशकं ब्रह्म सर्वपदवाच्यं, इति चेतनाचेतन-सर्वजगदुपादानस्य ब्रह्मणः सर्वपदवाच्यत्वम्, घटाद्युपादानपृथिव्यादिवाचकत्ववत् इति चेत्—

**अत्र ब्रूमः**— **"यो यच्छरीरवाचकत्वेन सङ्केतितः स शरीरवाचकः"** इति विशेषव्याप्तिर्विवक्षिता ? उत सामान्यव्याप्तिर्वा ? **नाद्यः**— शरीरपदे व्यभिचारात् । न च निष्कर्षकेतरपदत्वे सतीति विशेषणं देयम् । निष्कर्षकेतरत्वस्य वक्तुमशक्यत्वात् । तत्किं विशेषवाचकभिन्नत्वं वा ? शरीरवाचकभिन्नत्वं वा ? विशेषणमात्रवाचकत्वं वा ? **नाद्यः**— शरीरपदस्यापि शरीरत्वविशिष्टशरीरवाचकत्वात् । न **द्वितीयः** अप्रसिद्धेः । शरीरशब्दस्यापि तव मते सर्वशब्दवाच्येश्वरवाचकत्वात् । अत एव न **तृतीयः**— शरीरपदस्यापि शरीरत्वविशिष्टशरीरवाचकत्वेन विशेषणमात्र-वाचकत्वासम्भवेन व्यभिचारतादवस्थ्यात् । नापि सामान्यव्याप्तिः, "[1] **सन्धिकाशरीर-वाचकाशरीरवाचक"** इति व्याप्तौ शरीरपदस्य "[2] **शरीरान्त्यावयविचेष्टा भोगे-न्द्रियाश्रयः"** इति न्यायशास्त्रोक्तशरीरलक्षणानुसारेण घटादावप्रवृत्तेरीश्वरशरीरत्वासिद्धिः । न च नियम्यत्वमेव शरीरत्वं वक्तव्यम् । स्वामिनियम्यभृत्यवाचकभृत्यादिपदे स्वामि-वाचकत्वाभावेन व्यभिचारात् । न चान्तःप्रविश्य नियम्यत्वं शरीरत्वं, अन्तःप्रविष्टेन शिल्पिना नियम्ये दारुप्रतिमादौ व्यभिचारात् । न चापृथक्सिद्धत्वं नियामकविशेषणं, अन्तःपदवैयर्थ्यात् । न च तावदेवास्तु साधकमिति वाच्यम् । अपृथक्सिद्धदेवदत्तनिय-म्यहस्तादि वाचकेषु हस्तादिपदेषु व्यभिचारात् । न चापृथक्सिद्धप्रकारत्वं, रूपादिपदे घटादिवाचकत्वाभावेन व्यभिचारात् । एतेन अपृथक्सिद्धप्रकारवाचकानां प्रकारिवाचकत्वं इति व्याप्तिः प्रत्युक्ता । प्रकारत्वस्य निर्वक्तुमशक्यत्वात् । घटादिधर्मवाचकेषु व्यभि-चारात् । अनिष्कर्षपदत्वस्यात्रापि विशेषणत्वे पूर्वोक्तदोषापत्तेश्च ।

---

[1] "अवयवसन्धिबोधकाः शरीरवाचकाः इति" (झ). [2] "अन्त्यावयविचेष्टाभोगेन्द्रिया-श्रयः" (झ).

ननु घटादिपदानां पक्षत्वात् देवमनुष्यादिपदानां दृष्टान्तत्वात् शरीरवाचकत्व-साध्यतायां सामान्यव्याप्तौ कथं व्यभिचारः ? शरीरादिपदानामपि ईश्वरवाचकत्वेन पक्षतुल्यत्वात् ।

इति चेन्नैवम्— व्याप्तिग्रहणं प्रत्येव व्यभिचारज्ञानस्य प्रतिबन्धकत्वात् । अन्यथा कार्यत्वेन शरीरजन्यत्वे साध्ये घटादौ व्याप्तिग्रहे सति अङ्कुरादावपि शरीरजन्यत्वसिद्धिः स्यात् ? अङ्कुरादिव्यभिचारस्थलस्य पक्षतुल्यत्वेन अतीन्द्रियशरीरस्य कल्पयितुं शक्यत्वात् । व्यभिचारहेतुत्वाभासमात्रोच्छेदापत्तेः । व्याप्तौ व्याप्तभागे शरीरपदवैयर्थ्यात् व्याप्यत्वासिद्धिः सर्वपदानां भगवद्वाचकत्वेन व्यभिचारस्थलाभावात् । एतेन तद्वारणाय शरीरपदस्या-प्रयोजकत्वं च स्यात् । पृथिव्यादिपदानां शरीरवाचकत्वेऽपि शरीरिपर्यन्तत्वे विपक्षबाधकत्वा-भावात् । न च ब्रह्मणि मुख्यत्वानुपपत्तिर्विपक्षबाधिका, नानार्थगवादिपदानामिव स्वतन्त्रशक्त्यन्तरकल्पनेऽपि मुख्यत्वोपपत्तौ विशिष्टशक्यसिद्धिः । न चेष्टापत्तिः, अप-सिद्धान्तात् ।

किञ्च— पदार्थमात्रशक्तिवादिना त्वया यथा व्यवहारकाले भावेन गृहीतापि कार्यान्विते शक्तिः अन्यलभ्यत्वप्रतिसन्धाने सति परित्यक्ता । यथा त्वया गृहीतापि सर्वपदानां शरीरविशिष्टात्मशक्तिर्गौरवान्यलभ्यत्वाभ्यां परित्याज्या ! अन्यथा कार्यान्विते शक्तिरपि न त्याज्या स्यात् । किञ्च— यथा शरीरवाचकानां शरीरिपर्यन्तत्वं कल्पितं एवं शरीरिवाचकानामपि शरीरवाचकत्वं कुतो न कल्प्यते ? देवमनुष्यादिपदेषु तथात्वदर्शनात् । अभेदवाक्येषु मुख्यसमानाधिकरण्योपपादानरूपफलस्य तुल्यत्वात् ।

ननु— विष्णोस्सर्वपदवाच्यत्वं पुराणेषु श्रुतं इति चेन्न । **"यतो वाचो निवर्तन्ते"** इति ब्रह्मणि वाच्यत्वनिवृत्तेरपि प्रत्यक्षश्रुतिसिद्धत्वात् । एतैरेव दोषैः प्रकारवाचकानां प्रकारिपर्यन्तत्वमिति व्याप्तिर्निरस्ता वेदितव्या ।

किञ्च— **अन्तर्यामिब्राह्मणे "यस्यात्मा शरीरं"** इति वाक्यं न शरीरत्वविधाय-कम् । **"यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् । तच्छब्द एवकारश्च स्यादुपादेय-लक्षणम्"** इति न्यायेन विधिशक्तिप्रतिबन्धात् । न च— **"यदाग्नेयोऽष्टाकपालः"**

इतिवद्विधायकत्वं युक्तम्. तस्य लोकप्राप्तार्थत्वात्। अन्यस्य विधेयस्याभावाच्च। इह तु **"एष त आत्माऽन्तर्याम्यमृतः"** इति विधिभागस्य विद्यमानत्वात् दळद्वयेनापि स्वप्रतिपादने अनेकार्थविधाने वाक्यभेदापत्तेः। जामितार्थवादयोगेन **"उपांशुयाजमन्तरा यजति"** इत्यस्य विधित्ववत् **"तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति"** इत्यर्थवादयोगादन्तर्यामित्वस्य ज्ञेयतया विधेयत्वात्। तथा चान्यतः प्राप्तं शरीरत्वमनुवाद्यम्, तच्च न लोकप्रसिद्धम्, भोगायतनत्वं, पृथिव्यादौ तदभावात्। किन्तु नियम्यत्वमात्रम्। तच्च व्यभिचारित्वादसारमित्युक्तम्। **वस्तुतस्तु— अन्तर्यामिब्राह्मणे** अन्तर्यामित्वविधानममृतपदवाच्यस्य शिवस्यैव न तु विष्णोरित्युक्तम् प्राक्। **"एतानि ह वा अमृतस्य नामधेयानि"** इति शतरुद्रीयविषयकजाबालवाक्येन अमृतपदस्य रुद्रवाचकत्वावधरणात् **"किं जप्येनामृतत्वं ब्रूहीति, सहोवाच याज्ञवल्क्यश्शतरुद्रीयेणेति"** इत्युपक्रमात्।

ननु— **"एष सर्वभूतान्तरात्मा"** इति विष्णोरेवान्तर्यामित्वं विधीयत इति चेन्न। **"सोऽन्तरादन्तरं प्राविशत्" "यो रुद्रो अग्नौ"** इत्यादिना रुद्रस्यैव परब्रह्मणः अन्तर्यामित्वप्रतिपादनात्। तस्य बहुश्रुतिसंवादित्वात्। विष्णोरपि रुद्रशरीरत्वात्। तथा हि—

**"ब्रह्मवादिनो वदन्ति, यन्न देवतायै जुहोति........। वसोर्धारेति अग्निर्वै वसुस्तस्यैषा धारा, विष्णुर्वसुस्तस्यैषा धारा आग्नावैष्णव्यर्चा वसोर्धारां जुहोति भागधेयेनैवैनौ समर्धयति अथो एतामेवाहुतिमायतनवतीं करोति यत्काम एनां जुहोति तदेवावरुन्धे प्राप्नोति। रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या। यच्छतरुद्रीयं जुहोति, यैवाऽस्य घोरा तनुस्तां तेन शमयति यद्वसोर्धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणाति"** इति। यजुस्संहितायां श्रूयते। तत्र प्रीतिवाचकेन समर्धयति। अत्राग्नेर्विष्णोश्च रुद्रशरीरत्वाभावे तदुभयदेवताकवसुधाराहुत्या रुद्रतनुः कथं प्रीता भवति? विनियुक्तविनियोगविरोधात्। तदुक्तं शैवपुराणे—

**घोरा तनूस्तव ब्रह्मन्नापो धर्मश्च चन्द्रमाः।**
**शिवा तनूस्तव ब्रह्मन् सूर्यो विष्णुर्हुताशनः॥** इति।

कैवल्ये– "**उमासहायं परमेश्वरं प्रभुं**" इत्यारभ्य "**स एव विष्णुस्सप्राणस्स कालोऽग्निस्स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्**" इत्यन्तेन सर्वात्मकत्वं शिवस्यैव व्यवस्थापितम्।

"**विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु**" इत्यादिश्रुत्यन्तरेष्वपि स्पष्टमुक्तम्।

ननु– शिवातनूरिति शब्दान्तराल्लोकव्यवहारसिद्धनामधेयभेदाच्च। अग्निविष्णुभ्यां शिवातनूर्भिन्ना इति चेन्मैवम्, ताभ्यां सह शिवा तनूर्भिन्नेत्यङ्गीकारे वसुधाराऽऽहुत्या रुद्रतनुप्रीतिः कथमुपपद्यते? विनियुक्तविनियोगविरोधात्, निराकाङ्क्षत्वात् मन्त्रलिङ्गविरोधात् वाक्यभेदापत्तेश्च। अभेदाङ्गीकारे न कश्चिद्दोषः। अन्यथा "**तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं**" इत्यत्र द्रव्यरूपगुणात्कर्मभेदवत् देवतारूपगुणादपि कर्मभेदापत्त्या वसुधाराहोमभेदोऽपि स्यात्। अपूर्वार्थत्वात्, द्रव्यदेवतयोः कर्मस्वरूपत्वाविशेषात्। "**रुद्रो वा एष यदग्निः**" इत्यादेर्वसुधारार्थवादत्वेऽपि **देवताधिकरणन्यायेन** मानान्तरसंवादप्रतिसंवादयोरभावे मन्त्रार्थवादयोः स्वार्थे प्रामाण्याङ्गीकारात्। अत्यन्तपरोक्षार्थत्वपरिहाराय निरालम्बनस्तुत्ययोगाच्च सर्वोत्कृष्टरुद्रशरीरत्वेनैवाग्निविष्णुस्तुतिसम्भवात्तद्द्वारा वसुधाराहुतिस्तुतिरिति सिद्धं। विष्णोरपि रुद्रशरीरत्वम्।

कौर्मे **ईश्वरगीतासूक्तम्**—

> **यो हि नारायणोऽनन्तो लोकानां प्रभुरव्ययः।**
> **ममैषा परमा मूर्तिः करोति परिपालनम्॥** इति।

तत्रैव च **विष्णुवाक्यम्**—

> **अस्यैव चापरां मूर्तिं विश्वयोनिं सनातनीम्।**
> **वासुदेवाभिधानां तां मामवेहि पितामह॥** इति।

तस्माद्विष्णुर्न सर्वशब्दवाच्यः। तथा च प्रयोगः– "**विवादाध्यासितास्सर्वे शब्दास्ते विष्णुवाचकाः**" इत्युभयवादिसिद्धविष्णुवाचकशब्दत्वावच्छिन्नभिन्नत्वात्, घटवत्। न चाप्रयोजकत्वं सर्वेषां विष्णुवाचकत्वे सर्वेषां शब्दानां पर्यायत्वप्रसङ्गात्।

न च विशिष्टशक्तिभेदेन अपर्यायत्वं विशिष्टशक्त्यसंभवस्योक्तत्वात् इत्यलमतिविस्तरेण। तस्मादक्ष्यादित्यान्तर्वर्तित्वं नेतरस्य सम्भवति।

इति सप्तमं अन्तरधिकरणम्

---

## अथ परमशिवस्य प्रसादलिङ्गात्मकत्वप्रतिपादनम् ।

एवं परमशिवस्य ब्रह्मणः नामरूपादिवशादन्यत्रातिव्याप्तिमाशङ्क्याह—

### आकाशाधिकरणम् ॥ ८ ॥

# आकाशस्तल्लिङ्गात् ॥ २३ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः– "अस्य लोकस्य का गतिरित्याकाश इति होवाच– सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्" इति। अत्राकाशशब्देन भूताकाशः परमशिवो वा विवक्षित इति सन्दिह्यते। कुतः ? उभयोरपि श्रुतिनिर्देशात्। तथापि भूताकाशे लोके वेदेषु चाकाशशब्दस्य पङ्कजादिवद्रूढत्वात्। परमशिवैकपरत्वे विनिगमकाभावात्। मुख्यार्थपरित्यागे ईक्षत्यधिकरणविरोधापत्तेश्च, मानाभावाच्च। "आकाशाद्वायुः" इत्यादौ आकाशस्यैव जगत्कारणत्वव्यपदेशात्। "खं ब्रह्म" "आकाश आत्मा" "यदेष आकाश आनन्दो न स्यात्" इत्यादावकाशस्यैव ब्रह्मत्वोपदेशात्। "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतिविहितजगज्जन्मादिकारणत्वमाकाशस्यैवावगम्यते। "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिना तस्यैव स्पष्टमुक्तत्वात्। "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिश्रुतिसिद्धसदात्मशब्दवाच्यत्वं तस्यैवेति "आत्मन आकाशस्सम्भूत" इत्यादिनाऽऽकाशस्यात्मजन्यत्वकथनमौपचारिकमेव। आप्नोतीत्यात्मेति व्युत्पत्त्या तस्यैवात्मशब्दवाच्यत्वं निष्प्रत्यूहम्। तस्मादाकाशएव सर्वकारणं परं ब्रह्मेति प्राप्ते ब्रूमः–

"आकाशस्तल्लिङ्गात्" अत्र आकाशस्साक्षाच्छिव एव, कुतः ? तल्लिङ्गात्– तस्य परमेश्वरस्य लिङ्गात् जगज्जन्मादिकारणत्वलिङ्गात् न भूताकाश इत्यर्थः। "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यादौ परमेश्वरजन्यत्वनिर्देशादाकाशस्य "खं

**वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" "यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्" "न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च"** इत्यादिना पञ्चमहाभूतविलक्षणत्वनिर्देशादात्मनः परशिवस्य अचेतनभूताकाशे ईक्षणपूर्वक जगत्कारणत्वादिचेतनधर्मासम्भवात्। **"आकाशाद्वायु"** इत्यादि श्रुतावपि तदनुप्रविष्टईशानादिसद्योजातान्तपञ्चब्रह्मात्मकपरशिवकारणत्वं श्रूयते।

किञ्च— **"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते"** इत्यनेन निमित्तकारणत्वं; **"आकाशं प्रत्यस्तं यन्ति"** इत्यनेनोपादानकारणत्वं चाभिधीयते। अतो जडभूताकाशे जगदुभयकारणत्वरूपपरमेश्वरलिङ्गासम्भवात्, **"ज्यायान् पृथिव्याज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः"** इति श्रुतौ **परब्रह्मणशिवस्येतरानपेक्षतया सर्वकारणत्वपरायणत्वव्यपदेशात्**, उपक्रमे **"सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयं" "तदैक्षत बहु स्यां प्रजायेयेति" "सोऽकामयत बहुस्यां प्रजायेयेति"** इत्यादिवाक्यगत[1] सत्यसंकल्पत्वादिलिङ्गानां भूताकाशे समन्वयासंभवात। परमशिव एवाकाशशब्दवाच्य इति सिद्धम्।

**इत्यष्टममाकाशाधिकरणम्**

---

[1] वाक्यगत सर्वज्ञत्वसत्यसङ्कल्पत्व (घ, ज, झ)

## अथ शिवस्य चरलिङ्गात्मकत्वनिरूपणम्

### अथ प्राणाधिकरणम् ॥ ९ ॥

ननु आकाशस्य परब्रह्मत्वे उपक्रमोपसंहारविरोधात् मास्तु ब्रह्मत्वमाकाशस्य, प्राणस्य जगज्जन्मादिकारणत्वव्यपदेशाद्ब्रह्मत्वमस्तु इत्याशङ्कायामाह—

## अत एव प्राणः ॥ २४ ॥

छान्दोग्ये पठ्यते[1]ऽस्य विषयः "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इति प्रस्तुत्य— "कतमा सा देवतेति, प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यः मूर्धा ते व्यपतिष्यति" इति। अत्रोद्गीथविद्योक्तप्राणशब्दस्य प्राणवायुः परमेश्वरो वा वाच्य इति संशयः। तदुभयविधलिङ्गदर्शनात्। "प्राणबन्धनं हि सौम्यमनः" "प्राणस्य प्राणः" "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते, प्राणेन जातानि जीवन्ति, प्राणं प्रयन्त्यभिसंविशन्तीति" "नमस्ते वायो, त्वमेव प्रत्यक्षं ब्रह्मासि" [2]विजिज्ञासीत, वक्तारं विद्यात्" "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" "यदा वै पुरुषस्स्वपिति तत्प्राणस्तर्हि वागप्येति" "प्राणश्चक्षुः प्राणश्श्रोत्रं प्राणो मनः स यदा बुध्यते जीवः प्राणादेवाथ पुनर्जायते" इति प्रत्यक्षश्रुतिशतेन। भूतप्राणवायोरेव सर्वकारणत्व सर्वाधिकत्वव्यवस्थापनात्, श्रुतिस्मृतिपुराणशतेषु प्राणशब्दस्य भूतवायुपरत्वनिर्देशदर्शनात्तस्यैव साक्षात्परब्रह्मत्वम्।

इति चेदुच्यते— प्राणशब्देनात्र षट्स्थलात्मकपरशिव एव व्यपदिश्यते, पूर्ववदत्रापि परमशिवलिङ्गबाहुल्यदर्शनात्। परमशिवधर्मावच्छिन्नभूतसंवेशनोद्गमनकर्मत्वं वाक्यशेषे दृश्यते।

[1] कथ्यते (घ. ज.) [2] न वाचां विजिज्ञासीत (घ, ज.)

"यदा वै पुरुषस्स्वपिति प्राणं तर्हि वागप्येति" इति वाक्ये सर्वव्यापारशून्य-सुषुप्तिदशायां प्राणव्यापारसद्भावेऽपि पुरुषव्यापारदर्शनात् अचेतनस्य प्राणस्य जाग्रदवस्थायां सर्वेन्द्रियनियामकत्वं, सुषुप्तौ कारणशरीरानुप्रवेशित्वं सर्वथा न सम्भवति तस्मात्प्राण-शब्दस्य परमशिवपरत्वं निष्प्रत्यूहम्। तथा कैवल्ये– "उमासहायं परमेश्वरं प्रभुं" इत्यारभ्य "स एव विष्णुस्स प्राणस्स कालोऽग्निस्स चन्द्रमाः" इत्यादिना परम-शिवस्यैव सर्वात्मकत्वनिर्देशात्प्राणशब्देनात्र नेतरोऽभिधीयते।

इति नवमं प्राणाधिकरणम्

---

## अथ परमशिवस्य शिवलिङ्गात्मकत्वप्रतिपादनम्

### ज्योतिरधिकरणम् ॥ १० ॥

"अन्तस्तद्धर्मोपदेशात्" इत्यनेन परशिवस्य ब्रह्मणस्सर्वान्तरत्वेन महालिङ्गात्मकत्वं प्रसाध्य "आकाशस्तल्लिङ्गात्" इत्यनेन तस्यैवाकाशान्तरत्वेन प्रसादलिङ्गत्वं निर्दिश्य" "अत एव प्राणः" इति सूत्रे तस्यैव प्राणरूपत्वेन चरलिङ्गत्वमुपदिश्य पुनस्सूत्रत्रयेण शिवलिङ्ग-गुरुलिङ्गाचारलिङ्गानि दर्शयति–

### ज्योतिश्चरणाभिधानात् ॥ २५ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः– "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु लोकेष्विदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति। अत्र ज्योतिश्शब्देन वैश्वानर–सूर्यचन्द्रादिदेवतान्तरं निर्दिश्यते? उत प्रभाकरादिस्थूलसूक्ष्मचिदचित्प्रपञ्चप्रकाशकः परमेश्वरः इति विशयः। तदुभयविधलिङ्गबाहुल्यात्। तथापि सूर्यचन्द्रादिज्योतिषां ज्योतिष्ट्वं युक्तम्। तमोनिवारकत्वदर्शनादादित्यादिज्योतिषः। तथा "दीप्यते" ज्योतिश्शब्देन प्रभाकरादितेजोनिर्देशाच्च। निर्विशेषस्य शिवलिङ्गात्मकस्य परब्रह्मणः न मुख्यत्वेन दीप्यमानत्वं संभवति। श्रुत्युक्तद्युमर्यादायास्तेषामेव सिद्धत्वात्। सर्वात्मकस्य सर्वाधिष्ठानस्य सर्वकारणस्य सर्वथा द्युमर्यादाविरोधात् पूर्वोक्तमेव समंजसम्।

ननु "परो दिवो ज्योतिर्दीप्यते" इति वाक्येन परज्योतिर्व्यपदेशात् कार्यभूतज्योतिषां तथात्वाभावात् सर्वव्यापकतया ब्रह्मण एव द्युमर्यादावत्त्वं समञ्जसत्वाद्भक्तोपासनाप्रयोजनत्वाच्च व्यपदिश्यते न तु त्रिवृत्कृतज्योतिःपरत्वम्–

इति चेन्न– "अग्निरग्रे प्रथमो देवतानां" "असावादित्यो ब्रह्म" इत्यादिश्रुतिषु वैश्वानराद्युपासनस्य सप्रयोजनत्वदर्शनात् "तासां त्रिवृतं त्रिवृतमेकैकां

करवाणीति" इति श्रुतौ त्रिवृत्ज्योतिषो ह्यखण्डत्वदर्शनाल्लोके व्योमान्तरत्वम्। तस्यैव मुख्यत्वात् नान्यार्थकत्वम्। सर्वत्र प्रकाशमानस्य वैश्वानरादिज्योतिः परदिव्यशब्दौ मुमुक्षूपासनार्थमुपदिष्टौ। तस्मान्नान्तरविशेषविरोधः। सर्वाधिष्ठानस्य शिवलिङ्गात्मकस्य परब्रह्मणः प्रादेशमात्रविशेषकल्पनायोगात्। "सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इति प्रदेशविशेषकल्पनाश्रुतिः कार्यरूपवैश्वानरादिज्योतिःपरत्वमेव निर्दिशति।

ननु "इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" "इति कौक्षेयज्योतिषि-परज्योतिष्ट्वपरमात्मत्वोपदेशादत्रापि ज्योतिश्शब्दः परमात्मपरः" इति चेन्न। सारूप्यमात्रं ह्यत्रोपदिश्यते। किञ्च— यथा "तस्य भूरिति शिरः एकँ हि शिरः एकमेतदक्षरं" इति श्रुतौ सावयवत्वोपदेशात् कौक्षेयस्य तेजसः प्राकृततेजःपरत्वं निष्प्रत्यूहम्। "तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति, तस्यैषा श्रुतिर्य-त्रैतत्कर्णावपि गृह्य निनदमिव नदथुरिवाग्नेर्ज्वलत उपशृणोति। तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यश्श्रुतो भवति य एवं वेद य एवं वेद इति औष्ण्यघोष दर्शनश्रवणादिधर्माणां परमशिवपरत्वासम्भवात्। अथवा "परो दिवो ज्योतिः" इति वाक्ये पुरुषान्तर्वर्तित्वेन निर्दिश्यमानो जाठराग्निर्वा स्यात्। सर्वथा परमेश्वरपक्षो न विधीयते।

इति चेत्— अत्रोच्यते— "ज्योतिश्चरणाभिधानात्"

अत्र ज्योतिश्शब्देन शिवलिङ्गात्मकषट्स्थलब्रह्मैव व्यपदिश्यते। कस्मात् चरणा-भिधानात्। पादाभिधानादित्यर्थः। "एतावानस्य महिमा, अतो ज्यायाँश्च पूरुषः, पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति पूर्वस्मिन् वाक्ये "पादोऽस्य विश्वा भूतानि" इत्यनेन ज्योतिषः परमशिवस्य एकांशतया विश्वभूतात्मककार्यविभूति-र्व्यपदिश्यते। "त्रिपादस्यामृतं दिवि" इत्यनेन चतुष्पादस्येत्यत्र[1] त्रिपादमृतं द्युसंबन्धिरूपं नित्यैश्वर्यं कारणविभूतिर्निर्दिश्यते। द्युशब्दस्याकाशवाचित्वात् परो दिवो ज्योतिरित्याकाशान्तर्वर्तित्वस्य सूर्यादीनां सम्भवेऽपि निरतिशयदीप्तिमत्वस्यासंभवात्, तत्परि-ग्रहे प्रकृतहानाप्रकृतप्रक्रियादोषप्रसङ्गात् ज्योतिश्शब्देन ब्रह्मैव निर्दिश्यते।

---

[1] 'चतुष्पादस्य' इति पाठः (क, ख, ज) कोशेषु दृश्यते।

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं। तस्य भासा सर्वमिदं विभाति" "हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलं तच्छुभ्रं ज्योतिषां ज्योतिर्यत्तदात्मविदो विदुः" "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इत्यादिश्रुतिशतेन परमशिवस्यैव परज्योतिष्ट्वव्यवस्थापनात्।

किञ्च– शाण्डिल्यविद्यायां परज्योतिस्स्वरूपत्वं परमेश्वरस्यैवोपदिश्यते। कार्यज्योतिषि द्युमर्यादत्वसम्भवेऽपि अस्य ब्रह्मप्रकरणत्वात् जाठराग्निसूर्यादिपरिच्छिन्नकार्यज्योतिषां सर्वद्युसम्बन्धित्वं सर्वान्तरत्वं च सर्वथा न सम्भवति।

ननु "येन सूर्यस्तपति तेजसेद्धः" इति श्रुत्या चक्षुर्ग्राह्यप्रत्यक्षज्योतिष्येव ज्योतिश्शब्दो ह्यनुवर्तते।

इति चेन्न– तथा विनिगमकाभावात्। "वा चैवायं ज्योतिषाऽऽस्ते" "मनो ज्योतिर्जुषतां" इत्यादौ ततोऽन्यत्रापि प्रयोगदर्शनात्। यत् स्थूलसूक्ष्मचिदचित्प्रपञ्चावभासकं, तत् ज्योतिर्वाच्येन बोध्यते। निरवयवस्यापि परब्रह्मणो भक्तोपासनार्थं हृदयादिप्रदेशेषु सावयवत्वोपासनं न विरुध्यते। तदुभयस्यापि ब्रह्मणस्स्वाभाविकत्वात्। द्वेवावो ब्रह्मणो रूपे इति। श्रुतिदर्शनात्।

किञ्च– "हृत्पुण्डरीकं विरजं विशुद्धं" इत्यादिना हृदयपुण्डरीकं प्रदर्श्य "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" इत्यन्तेन सावयवपरमेश्वरोपासनस्य निरवयवसाक्षिचैतन्यप्रापकत्वोपदेशात्, कौक्षेयश्रुतिविहितज्योतिः प्रतीकोपासनमप्यविरुद्धम्। जाठराग्निसूर्यादीनां पादचतुष्टयवत्वादर्शनात् परमेश्वरपरत्वे श्रुत्युक्तयावद्धर्मसंभवात् ज्योतिश्शब्दस्य तत्परत्वं निष्प्रत्यूहम्।

## अथ शिवस्य गुरुलिङ्गात्मकत्वनिरूपणम्

"गायत्री वा इदं सर्वं" इति श्रुतौ सर्वात्मकत्वपादचतुष्टयवत्त्वयोर्गायत्रीदेवतायां दर्शनात्सैवात्र ज्योतिश्शब्देन व्यपदिश्यते इत्याशंक्याह–

## छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पण-निगमात्तथा हि दर्शनम् ॥ २६ ॥

पूर्वसूत्रे ज्योतिश्शब्देन **शिवलिङ्गाख्यं** परं ब्रह्म प्रसाध्य परमशिवविमर्शशक्त्यात्मकगायत्रीवाक्यद्वारा **गुरुलिङ्गमुपदिशति**। "**गायत्री वा इदं सर्वं**" इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीर-हृदय-वाक्प्राणि-भेदैर्व्याख्याय "**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तं तावानस्य महिमा**" इत्यादिना तस्यास्सर्वात्मकत्वादिधर्मान्निर्दिश्य "**यद्वै तद्ब्रह्म**" इति चन्दसो ब्रह्मशब्दव्यवस्थापनात् पूर्वसूत्रोक्तः परमशिव एवात्र न व्यपदिश्यते इति तेन्न- "**तथाचेतोर्पणनिगमात्**" चेतोऽर्पणस्य चित्ताविक्षेपस्य निगमात् कथनात् गायत्रीशब्देनात्र न हि छन्दोमात्रगायत्र्युपदिश्यते। छन्दोमात्रगायत्र्याः सर्वात्मकत्वासम्भवात् परमशिवस्यैव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणः परशिवस्य गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः।

सम्भवति च **पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि**" इति चतुष्पदो ब्रह्मणश्चतुष्पदया गायत्र्या सादृश्यम्। चतुष्पादा गायत्री च क्वचिद्दृश्यते तद्यथा "**तथाहि दर्शनं**" अन्यत्रापि बाह्याभ्यान्तरेषु दहरपुण्डरीकसूर्यादिस्थानेषु सावयवत्वेन लिङ्गरूपेण अण्वादिरूपेण च परब्रह्मोपासनं दृश्यत इति दर्शनं दृष्टमिति भावः। **कैवल्ये- हृत्पुण्डरीकं विरजं विशुद्धम्**" इत्यारभ्य हृदयपुण्डरीकं परमात्मस्थानत्वेन निरूप्य "**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं। ध्यात्वा मुनिर्गच्छति**" इत्यादिना परमेश्वरस्य सावयवात्मकं रूपं मुमुक्षूणां ध्येयमिति निरूपितम्। **यजुश्शाखायां** "**निधनपतये नमः**" इत्यारभ्य "**एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्**" इत्यन्तं लिङ्गस्य परब्रह्मात्मकत्वेन सर्वैरुपास्यत्वप्रकटनाय प्रतिपदं नमस्कारपूर्वकं श्रुतिर्हि प्रतिपादयति। अतःशिवलिङ्गाराधनमपि श्रोत्रियैर्वैदिकैर्ब्राह्मणैरवश्यं कर्तव्यम्। "**अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं**" इत्यनेनाणुरूपोपासनमपि परमेश्वरस्य बहुधान्यत्र दृष्टम्। तस्मात् "**गायत्री वा इदं सर्वम्**"

---

[1] निगदात् (ध, ज)

इति श्रुतौ नाक्षरावच्छिन्नमात्रगायत्र्याः सर्वात्मकत्वमुपदिश्यते किन्तु गायत्र्यवच्छिन्नजगत्कारणं ब्रह्मैवेह "सर्वं" इति व्यपदिश्यते।

### अथ गायत्र्याः गुरुलिङ्गात्मकत्वनिरूपणम्।

ननु–

> यो देवस्सवितास्माकं धियो धर्मार्थगोचराः।
> प्रेरयेदस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥

इति स्मृतौ तस्यास्सूर्यप्रतिपादकत्वदर्शनात् कथं शिवप्रतिपादकत्वम् इति चेन्न–भर्गपदस्य तेजसि प्रयोगस्य काप्यदर्शनात्। "हरः स्मरहरो भर्गः" इति निघण्टुवशाद्भर्गपदस्य शिवे रूढत्वात् सवितुर्वरेण्यमिति सूर्यादिदेवतात्वस्य "आसत्येन" "अग्निं दूतं" "कद्रुद्राय" इत्यादेर्ग्रहयज्ञे बोधायनोक्तस्य विवक्षितत्वात्। वरेण्यपदस्य ससम्बन्धिकत्वेन सम्बन्धिसाकाङ्क्षत्वात्, सन्निहितेन सवितृपदेन जनितान्वयबोधकत्वात्। यच्छब्दस्यापि विशेषणपदत्वेन समानलिङ्गविभक्तिवचनविशेष्यसाकाङ्क्षत्वात् भर्गपदस्य तादृशत्वेन तदन्वययोग्यत्वात्। तत्र नपुंसकत्वस्य यो भर्गः– सः धियः धर्मादिगोचराः प्रेरयेत्। सवितुर्वरेण्यं तद्धीमहीति वाक्यान्वयसम्भवात्। अन्यथा यच्छब्दस्य विशेष्याध्याहारं विनाऽनन्वयादध्याहारस्य च जघन्यत्वादस्य मन्त्रस्य सूर्यतेजःपरत्वे ब्रह्मविद्यात्वाभावात् वरेण्यपदेन ब्रह्मतेजो लाभे षष्ठ्यन्तसवितृपदविरोधात्, अधिष्ठानत्वविवक्षायां अधिकरणत्वस्योपयुक्तत्वादन्यत्वाभावेन शेषषष्ठ्यापि संग्रहाभावात् सप्तम्यन्तेन सवितृपदो न सम्मतः; किन्तु तदधिदैवशिवपरः। तस्यैवानादिप्रज्ञाप्रेरकत्वात्। तदुक्तं मन्त्रोपनिषदि–"यदा तमस्तं न दिवा न रात्रिर्न सन्नचासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" इति। गीतासु च–"तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी" इति– स्मृतिवाक्यार्थस्तु सविता– "षूङ्–प्राणिप्रसवे" इति धातोः सकलप्राणिजनकः दीव्यतीति देवः, सकलपापभञ्जकत्वाद्भर्गो हरः, अस्माकं धियः– बुद्धीः धर्मादिगोचराः प्रेरयतु। यस्य भर्गस्य वरेण्यं विश्वाधिकं यत्स्वरूपं हिरण्मयं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" "असौ योऽवसर्पति नीलग्रीवो विलोहितः" इति श्रुतेश्च नीलग्रीवत्वादिविशिष्टमुपास्महे इति। तदुक्तं कूर्मे व्यासगीतासु व्यासेन–

**प्रपद्येतत्परं तत्त्वं वरेण्यं सवितुश्शिवम् ।**
**प्रपद्ये त्वां विरूपाक्षं भूर्भुवस्स्वस्स्वरूपिणम् ॥"** इति ।

न च सवितृपदरूढित्यागदोषः । मन्त्रपदरूढित्यागापेक्षया स्मृतिवाक्यस्य पदरूढित्यागस्य श्लाघ्यत्वात् । तत्पक्षे मन्त्रस्थसवितृपदरूढिलक्षणे ब्रह्मविद्यात्वानुपपत्तेरुक्तत्वात् । ससम्बन्धिकवरेण्यपदस्याविवक्षितार्थत्वं त्वत्पक्षे श्रुतिस्मृत्योस्समानमित्येवैको दोषः ।

**अत्र केचित्–** गायत्रीमन्त्रस्थपदानामेवं पदयोजनां कुर्वन्ति । देवस्य दीप्यमानस्य सवितुस्सूर्यस्य मध्ये यो भर्गः परमशिवः सः अस्माकं धियः धर्मादिगोचराः बुद्धीः प्रचोदयात्– प्रेरयति, वरेण्यं वरणीयं उपास्यमित्यर्थः । ब्रह्म धीमहि ध्यायेमेत्यन्वयो बोध्यः । अत्र सवितुर्मध्य इति मध्यपदमध्याहर्तव्यम् । श्रुत्यन्तरे तथा दर्शनात् । **"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"** इत्यादि ।

**अपरे–** प्राभाकरस्यापि शिवोपासकत्वमतं मन्त्रे व्याचक्षते । यो भर्गः परमशिवः नोऽस्माकं धियः धर्मादिगोचराः शेमुषीः प्रचोदयात् प्रेरयति, तत् तमित्यर्थः, छान्दसत्वान्नदोषः, सवितुस्सूर्यस्य वरेण्यं वरणीयं उपास्यमित्यर्थः । परमशिवं धीमहि ध्यायेम ।

**"आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।**
**कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥**
**एतदिच्छाम्यहं श्रोतुं"** (रामा. बाल. १, ४) ।

इति रामायणादिषु लिङ्गव्यत्ययस्य दृष्टत्वात् ; प्रभुसंमिते वेदे लिङ्गव्यत्ययवचनव्यत्ययादीनां किमु वक्तव्यम् इति ।

**अन्ये केचित्–** रुढिर्योगमपहरतीति न्यायमुल्लंघ्य रूढ्या अकुण्ठितशक्तिकं मूकशङ्खतुल्यं योगमाश्रित्य शिवपरमिव ईश्वरे रूढं भर्गपदं अशिवे अपरमेश्वरे वर्णयन्ति ? गोपङ्कजादिशब्दानां खरशैवालादिवाचकत्ववत् । अन्यथा अर्थान्तरकल्पने गायत्र्युपासनाया विपरीतफलापत्तेः ।

किञ्च– **"यथेन्द्रशत्रुस्स्वरतोऽपराधात्"** इतिवत् स्वरभङ्गप्रसङ्गस्स्यात् । तदुक्तं **चतुर्वेदवेदान्तभाष्यकारेण हरदत्ताचार्येण–**

श्रीकण्ठभर्गपदमप्यनघं तवाद्यं
तेजः परं भवति चेध्द्रुवमाद्युदात्तम् ।
तस्माददन्त इति कोशवशादवैमि
मार्ताण्डमण्डलगतशिव एव नान्यः ॥ इति ।

हे श्रीकण्ठ ! तव अनघं पापरहितं आद्यं भर्गपदमपि तेजः परं भवति चेत् "भर्गो देवस्य" इत्याद्युदात्तं ध्रुवं किल ! तत्प्रेरकत्वोदात्तत्वे सति शिष्टस्वरेण गकारात्परस्याकारस्यानुदात्तत्वे च श्रूयमाणस्वरभङ्गापत्तेः । भर्गशब्दस्याकारन्तत्वे तु भकारात्पराकारस्य अनुदात्तत्वे सति शिष्टस्वरेण अनुदात्तत्वे उदात्तस्य परानुदात्तस्य स्वरितत्वे च श्रूयमाणस्वरस्सिद्धः । तस्माददन्त इति । तस्मात् उदात्तत्वकारणात् अदन्त इति कोशवशात् अभिधानशास्त्रादवैमि । अतो मार्ताण्डमण्डलगतशिव एव ।

किञ्च मैत्रावरुणशाखायां–भर्गो देवस्य धीमहि "सविता वै देवः– यस्य भर्गाख्या तं चिन्तयामि" इति । तथैव "एषरुद्र भर्गाख्यो ब्रह्मवादिनो वदन्ति" इति श्रुत्यन्तरेपि "कस्सविता, का सा गायत्री" इति प्रश्नमुपक्रम्य "तस्यैष प्रथमः पादः, द्वितीयः पादो भर्गमयः" इत्यत्राप्यदन्त एव बोध्यते । तस्मात्प्रात्यक्षिकसर्वश्रुतिविरुद्धा "योदेवस्सविताऽस्माकं" इति । सांख्यस्मृतिस्तु सूर्यपरत्वेऽपि मुख्यवृत्या परशिवबोधिकेति न दोषः । तथापि सांख्यस्मृतिस्त्वाचान्त्रिकपरिग्राह्यैव ।

किञ्च– "भर्गो देवस्य रुद्रात्मने शिखायै वषट्" इत्यादौ तत्प्रकरणे परशिवपरत्वं स्पष्टमुक्तम्

ननु–

"आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥"

इत्यादौ नारायणस्य सर्वदेवताधिपतित्वदर्शनात् भर्गपदवाच्यत्वे तस्यैवेति चेन्न । "पञ्चशीर्षोपनयने विनियोगः" इति सन्ध्यावन्दनस्य पञ्चशीर्षविशिष्टे उपनयने उपरि नयनं यस्य तस्मिन् त्रिलोचने परमशिवे विनियोगदर्शनात् तदुपक्रमे परमेश्वरप्रीत्यर्थमिति तदुद्देश-

विन्यासाच्च। किञ्च— गायत्र्यात्मकशक्तेः परमशिवाभिन्नशक्तित्वात्परमेश्वरधर्माणामत्र भूयस्त्वाच्च भर्गशब्दवाच्यो नेतरः। किञ्च— "सर्वदेवनमस्कारः केशवं प्रति गच्छति" इति स्मृतिरपि सांख्यस्मृतिप्रकरणपठितत्वान्नाङ्गीकरणीया। स्मृत्यनवकाशाधिकरणे भगवता व्यासेन निराकृतत्वात् विनियोगानुसारेणार्थगौरवं युक्तम्। तद्भिन्नदेवतान्तरपरत्वे—

"मुक्ताविद्रुमनीलहेमधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकशाश्शुभ्रं कपालं गदां
शङ्खं चक्रमथारविन्दयुगळं हस्तैर्वहन्तीं भजे॥"

इति गायत्रीध्यानश्लोकविरोधो दुर्निवारः। गायत्र्याः भर्गपदवाच्यत्वे सावित्रीति कुतः प्रसिद्धिः? इति चेत्— सवितृपदप्रयोगात् प्रभाकरस्यापि शिवात्मकत्वं "असौ योऽव-सर्पति" इत्यादिना पूर्वमेवोक्तम्। "स्तोमं वो अद्य रुद्राय सिक्वसे क्षयद्वीराय नमसा विधिष्टना" इति सामश्रुतौ सर्वदेवतानमस्कारस्तोत्रयोः परशिवपरत्वेन निर्देशात् "स एव विष्णुस्स प्राणः" इति कैवल्ये तस्यैव सर्वात्मकत्वोपदेशाच्च न नमस्काराधि-पतित्वं नारायणस्य। नोचेच्छ्रुतिविरोधप्रसङ्गः। श्रौतविधेर्बलीयस्त्वात्। लोके अमात्यादि-समर्पितद्रव्याधिपतित्वं प्रभोरेव दृश्यते। तद्वन्नमस्काराधिपतित्वं शिवस्यैव निष्प्रत्यूहम्। 'उपनयने विनियोगः' इत्यत्र केचित् उपसृत्य नयति प्रापयतीत्यर्थान्तरं कल्पयन्ति। तदसङ्गतं, पूर्ववाक्ये पञ्चशीर्ष इति तदुत्तरत्र च "नेत्रत्रयाय वौषट्" इत्यनन्यसाधारण-धर्मश्रवणात्। गायत्रीप्रकरणे भर्गशब्दस्य रुद्रवाचकत्वं अदन्तत्वं च श्रुतिसंमतम्। तस्माद्गायत्रीप्रतिपाद्यत्वं द्युसम्बन्धित्वं च तस्यैवेति सिद्धम्।

### अथ शिवस्य अचारलिङ्गात्मकत्वनिरूपणम्

एवं गायत्रीप्रतिपाद्यत्वेन गुरुलिङ्गात्मकत्वं परमेश्वरस्य प्रसाध्य तद्वदाचारलिङ्गात्म-कत्वं सूत्रान्तरेणाह—

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

अत्र गायत्रीवाक्योद्दिष्टगुरुलिङ्गात्मकपरशिव एवाचारलिङ्गात्मत्वेन व्यवह्रियते। कुतः? भूतादिपादव्यपदेशोपपत्तेः। न ह्यक्षरसन्निवेशात्मकगायत्र्याः भूतादिपादव्यपदेशो-

पपत्तिरुपपद्यते। "एता [1]एते पञ्चब्रह्मपुरुषाः" इति श्रुतिः– पूर्वं परब्रह्मणश्शिवस्य-प्रकरणत्वेन सङ्गच्छते। तद्यथा गायत्र्यात्मकस्य परशिवस्य हृदयपुण्डरीकावच्छिन्नोपास-नाङ्गत्वेन सद्योजातादिपञ्चब्रह्मव्यूहविध्यर्थं "तस्य वा एतस्य हृदयस्य पञ्च देवसुषयः" इत्यादिवाक्यं तत्र "ते वा एते पञ्च ब्रह्मपुरुषाः" इति श्रुतम्। तथाचोपासनाङ्गान सद्योजातादिपञ्चब्रह्मपुरुषाणां दहरपुण्डरीकसुषिरेषु स्थितानां पञ्चब्रह्मत्वोक्तेः। दहरच्छिद्रेष्वपि तेषां परब्रह्मसम्बन्धोऽवगम्यते। पञ्चप्राणपञ्चभूतात्रिदैवसद्योजातादिपञ्चब्रह्मव्यूहेभ्यः परं ब्रह्म परशिव इत्युच्यते। स एव पशुपाशविमोचनस्सर्वोपास्यः। गायत्रीमात्रपरत्वे तदङ्गानां पञ्चब्रह्मपुरुषाणां ब्रह्मात्मकत्वविरोधो दुर्निवारः। तस्माद्दहरसुषिरेषु पञ्चब्रह्मसम्बधारत्रस्थपञ्चब्रह्मणां परमशिवसम्बन्धसद्भावात् पञ्चब्रह्मपुरुषश्रुत्युपपत्तिः। हृदयपुण्डरीकस्य **प्राग्दक्षिणपश्चिमो-त्तरोर्ध्वमुखस्थास्सद्योजातादिपञ्चब्रह्मपुरुषाः।** तस्माद्गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यते। ज्योतिर्वाक्ये द्युसंबन्धात्तदेव प्रत्यभिज्ञायत इति सिद्धम्। भूतादीनां पादानामवयवानां व्यपदेशस्य ब्रह्मण्योपपत्तेः उपपन्नत्वाच्च। एवं गायत्रीशब्देन गायत्र्यवच्छिन्नं ब्रह्मैवोच्यत इति सूत्रार्थः।

ननु– "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति पुरुषसूक्तेऽपि भूतादिपादचतुष्टयवत्त्वं **नारायणस्यैव** व्यपदिश्यत इति तस्मिन्नपि द्युसम्बन्धित्वद्योतनात्, "वेदाहमेतं पुरुषं महान्तम्" इत्यादिना तस्यैव तमःपरत्वनिर्देशात् "नान्यः पन्था विद्यतेऽयनाय" इत्यादिना तज्ज्ञानस्यैव मोक्षकारणत्वोपदेशाच्च तत्परत्वमेव युक्तम्.

ननु– "पुरुषो वै रुद्रः" इत्यादौ रुद्रस्यापि पुरुषशब्दव्यपदेशात्तत्परत्वं किं न स्यादिति चेन्न। "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ अहो रात्रे पार्श्वे" इति वाक्ये अनितरसाधारणलक्ष्मीपतित्वलिङ्गदर्शनात्। छान्दोग्यब्राह्मणे "इदं [2]विषुः पक्षः सविष्णुः प्रकाव्यमुशनेव ब्रुवाणः" इति "वाराहमन्त्यं पुरुषं व्रतेतत्" इति च। "एषा वैष्णावी नाम संहिता एतां प्रयुञ्जन् विष्णुः प्रीणाति" इति वैष्णव-संहितात्वनिर्देशेन आथर्वणाष्टादशमहाशान्तिषु तत्तद्देवरवमन्त्रविनियोजनावसरे "वैष्णव्यां पुरुषसूक्तम्" इति वैष्णव्यां शान्तौ विनियोजनेन शौनकबोधायनादिस्मृतिषु बहुधा

---

[1] ते वा एते (ज. झ.) [2] विष्णुः (घ. ज.)

नारायणसमाराधने विनियोजनेन, विष्णुपुराणादिषु पुरुषसूक्तार्थप्रक्रियया नारायणस्तुतिदर्शनेन च तदर्थप्रकाशकछांदोग्यस्यापि तत्परत्वमेव युक्तं इति चेत्।

## अथ पुरुषसूक्तस्य शिवपरत्वप्रतिपादनम्ः

अत्रोच्यते– उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैः पुरुषसूक्तमपि शिवैकपरत्वेन निर्दिश्यते। "पुरुषो वै रुद्रः" पुरुषं कृष्णपिङ्गलं पुरातनोऽहं पुरुषोऽहमीशः इत्यादिश्रुतिशतेन पुरुषशब्दस्य शिवपरत्वेन व्यवस्थापनात्, तत्रेशानपदस्य शिवे रूढत्वाच्च। किञ्च– शिवकेशवयोः पुरुषत्वप्रकृतित्वे श्रुतिस्मृतिपुराणागामसिद्धे सामाम्नायरुद्रसूक्ते "एकैव शक्तिः परमेश्वरस्य प्रयोजनार्थाय चतुर्विधाऽभूत्। भोगे भवानी पुरुषेषु विष्णुः क्रोधे च काळी समरेच दुर्गा॥" इति आदित्यपुराणे विष्णुं प्रति शिववचनम्–

"प्रकृतिस्त्वं सुरश्रेष्ठ पुरुषोऽहं न संशयः।
त्वन्मयं मन्मयं सर्वमव्यक्तपुरुषात्मकम्॥ इति

स्कान्दे– "पुरुषो नाम सम्पूर्णस्साम्बमूर्तिस्सनातनः।
वासुदेवः पराशक्तिरिति वेदे प्रपञ्चितम्॥ इति

गीतायां– "वासुदेवः परा प्रकृतिः इति "प्रकृतिः परमो विष्णुः पुरुषः परमः शिवः" इति कूर्मे।

किञ्च– शिवरहस्यखण्डान्तर्भूतासुरकाण्डादिषु नारायणस्य स्त्रीरूपत्वं, शिवस्य पुरुषत्वं [1]तयोः शास्तृभैरवविधातॄणामुत्पत्तिश्च बहुधा प्रपञ्चिता। अतः "सहस्रशीर्षा पुरुषः" इत्युपक्रमवाक्यस्थ पुरुषशब्दस्य शिवपरत्वम्। "यज्ञेन यज्ञमयजन्त देवा" इति मध्यगतवाक्येनापि तत्परत्वमेवावगम्यते। 'यज्ञो वै विष्णुः' इति श्रुतौ नारायणस्य यज्ञात्मकत्वनिर्देशात्। यज्ञेन– यज्ञशब्दवाच्यविष्ण्वात्मकपश्वाद्युपकरणेन, यज्ञं– परशिवाराधनात्मकसवनं, देवाः– ब्रह्मादयः, अयजन्त– यजन्तीत्यर्थः। 'आवोराजानमध्वरस्य होतारं रुद्रं' इति श्रुतौ यज्ञेश्वरत्वं परमेश्वरस्यैव स्पष्टम् दर्शितम्। ऋग्वेदेऽपि "गाथपतिं मेधपतिं रुद्रं जलाषभेषं" इत्यादिना स्पष्टमुक्तम्। तथा सूतसंहितायाम्–

---

[1] तयोः शास्तृभैरवविधात्रोरुत्पत्तिश्च (ख)

"यज्ञरूपं महाविष्णुं यज्ञे पश्यन्ति ये द्विजाः ।
प्राधान्येन महादेवो यज्ञदेवो न चापरः ॥" इति
'ज्ञात्वा यजन्ते ये ते वै विज्ञानमाप्नुयुः ॥' इति ।

अत एव परमेश्वराष्टमूर्तीनां मध्ये यज्वन एकमूर्तित्वं निर्दिष्टम् । **नृसिंहपुराणे**–

**'वियज्ज्वलनभूवायुचन्द्रसूर्योदकानि च ।
दीक्षितश्चेति गौरीश तवाष्टतनवः क्रमात् ॥ इति ।**

किञ्च– यज्ञकर्तृत्वयज्ञभोक्तृत्वयज्ञपतित्वादिकं तस्यैव । यावद्वैदिकाग्निहोत्रादिकर्मणां रुद्रशेषत्वेनैव दर्शनात् । अष्टमूर्तेः परमेश्वरस्य वह्नेरेकाङ्गत्वात् । अन्तर्यामित्वेन वह्निमण्डले परमेश्वरसद्भावान्नेतरस्याग्निहोत्रादिसर्वकर्मशेषित्वम् । यजुर्वेदे–**"रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या"** इति । **"यो रुद्रो अग्नौ योऽप्सु य ओषधीषु"** इति तथा च **स्मृतौ**–

**"अग्नौ ज्वालावृतं रुद्रं वह्निमण्डलमध्यगम् ।
ध्यायेत्कलादशयुतं शक्तिस्वस्तिकधारिणम् ॥"**

इति रुद्रस्य वह्न्यात्मकत्ववह्निमण्डलान्तर्यामित्वदर्शनात् । किञ्च– यागीयपुरोडाशादिद्रव्याणि देवाश्शिवानुज्ञया पश्वालम्भनं कृत्वा[1] शिवापरिशेषमेव भुञ्जन्ति । तथा यजुर्वेदे–**"इमं पशुं पशुपते ते अद्य बध्नाम्यग्रे सुकृतस्य मध्ये । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥"** इति । **"अयं सोमः कपर्दिनः"** इत्यादिषु बहुशः स्मरणात् ।

किञ्च– **सामवेदप्रथममन्त्रे "तपश्चते जपश्च ते"** इत्युपक्रम्य **"कर्माधिपतये नमः"** इत्यन्ते तत्र **"विरूपाक्षोऽसि"** इति सर्ववैदिककर्माधिदैवत्वं परब्रह्मणश्शिवस्य प्रसाध्य **"स्तुत्वा त्वां" प्रपद्ये त्वया स्यूतमिदं करिष्यामि तस्यै समृध्यतां**

---

[1] शिवार्पित शेषमेव भुञ्जन्ति (ज.)

**तस्मादुपपद्यताम्"** इत्यादौ सकलवैदिककर्मणां रुद्रानुज्ञया कर्तव्यत्वेन विधिश्रवणात् यज्ञादिसकलवैदिककर्मणां मुख्यदैवत्वं परमेश्वरस्यैवेति सिद्धम्।

किञ्च– श्रुत्यन्तरे **"आखुस्ते रुद्र पशुस्तं जुषस्वैषते रुद्र भागस्सह स्वस्राम्बिकया"** इति अस्यार्थः– आखुः आसमन्तात् खनतीत्याखुः– महावराहरूपो विष्णुः, हे रुद्र, ते– तुभ्यं, पशुः यागीयपशुरूपः अभूत्। तं पशुं स्वस्रा– प्रागभावाभावसहजसिद्धानुस्यूतया, अम्बिकया– पार्वत्या सह, जुषस्व– भुङ्क्ष्व। ते– तुभ्यं, भागः– यागभाग इत्यर्थः। तथा **वृद्धशातातपे–**

**'आखुरूपं महात्मानं हिरण्याक्षप्रभञ्जनं।**
**यागीयपशुरूपं तं महायज्ञवराहकम्॥**
**पार्वत्या सह देवेश विश्वनाथ सदाशिव**
**जुषस्व कृपया विष्णुं शंखचक्रगदाधरम्॥'**

इति श्रवणात्। एष एवाभ्यासः **"तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः तेन देवा अयजन्त, साध्या ऋषयश्च ये" इत्यर्थवादः**। अस्यार्थः– यज्ञं– यज्ञरथात्मकं विष्णुं, बर्हिषि-सवने, प्रौक्षन् आलम्भनार्थं असिंचन, अग्रतः– सृष्टेः पूर्वकाले, जातं विद्यमानं, पुरुषं-रुद्रं तेन पशुना, देवाः ब्रह्मादयः साध्याः ऋषयश्च- अयजन्त- यजन्ते इत्यर्थः। **"स्कान्दे– तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम्"** इति। तथा **भागवत द्वितीयस्कन्धे** तद्वदुपदिष्टम्। अत एव लोके **आदिवराह** इति प्रसिद्धम्। **"आदित्यवर्णं तमसः परस्तात्" इत्यपूर्वता**। आदित्यवर्णत्वं हिरण्मयत्वं तद्धिरण्मयत्वं **अन्तरधिकरणे** स्पष्टमुक्तं। कैवल्येऽपि **"उमासहायं"** इत्यारभ्य **"तमसः परस्तात्"** इत्यन्तेन तस्यैव तमःपरत्वस्य विवक्षितत्वात् **"तमेवं विद्वानमृत इह भवति"** इति वाक्ये **फलमुपदिष्टम्**। अत्रामृतशब्दः **जाबालाग्रुपनिषत्सु** परशिवपरत्वेन निर्दिष्टः। **तस्मादतिसामान्यन्यायेन षड्विधलिङ्गैः पुरुषसूक्तस्य** परशिवपरत्वमेव ज्ञेयम्।

किञ्च– सर्वात्मकस्य शिवस्य सहस्रशीर्षत्वं सहस्राक्षत्वं सहस्रपादत्वं सहस्रबाहुत्वं च युक्तम्। **"सहस्राक्षाय मीढुषे" "सहस्राणि सहस्रधा बाह्वोस्तव हेतयः"** इति रुद्रसूक्त्या सहस्राक्षत्वसहस्रबाहुत्वादिकं रुद्रस्यैव निर्दिष्टम्।

ननु– "**प्रजापतिश्चरतिगर्भे अन्तः**" इति श्रुतौ नारायणस्यैव ब्रह्मजनकत्वव्यपदेशात्। "**मोक्षमिच्छेज्जनार्दनात्**" इति मोक्षप्रदत्वस्याऽपि तस्यैव समुचितत्वात् कथं पुरुषसूक्तप्रतिपाद्यत्वं शिवस्य इति चेन्न– "**विश्वाधिको रुद्रो महर्षिः**" "**हिरण्यगर्भं जनयामास पूर्वं**" इत्यादि श्रुत्यन्तरेष्वपि मुख्यवृत्या हिरण्गर्भजनकत्वं शिवस्यैव व्यपदिश्यते। अथर्वशिखायां च "**शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य**" इति शिवङ्करत्वं मुक्तिप्रदत्वमेव। तच्च तस्यैव नान्यस्य, अशिवत्वात्। "**तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति**" "**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्**" "**ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये। तमीशानं पुरुषमीड्यं निचाय्योत्तारं शान्तिमत्यन्तमेति॥**" "**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्।**" इत्यादिश्रुतिषु शिवस्यैव मोक्षप्रदत्वप्रतिपादनात् "**गातुं यज्ञाय गातुं यज्ञपतये**" इति यज्ञेश्वरे परमशिवे उपसंहारात् पुरुषसूक्तं शिवस्यो[1]क्तमित्यवगम्यते ;

> **रुद्रं पुरुषसूक्तं च जपेत्तिर्यक् त्रिपुण्ड्रकः।**
> **रुद्रप्रीत्यर्थमनिशं वैदिको वेदपारगः॥**

इति रुद्रसूक्तसहपाठात्।

ननु– "**ह्रीश्च ते लक्ष्मीश्च पत्न्यौ**" इति वाक्ये लक्ष्मीपतित्वासाधारणलिङ्गस्योपसंहारे दर्शनादुपक्रमवाक्यस्थपुरुषशब्दस्यापि विष्णुपरत्वमेव इति चेन्न। सामान्यशक्त्यैव प्रयोगोपपत्तेः। "**ह्रीश्चते लक्ष्मीश्च पत्न्यौ, अहोरात्रे पार्श्वे**" इति वाक्यद्वयसिद्धं गङ्गापतित्वं पार्वतीपतित्वं च शिवस्यैव घटते। तदुक्तं **स्कान्दे**–

> **"हिमाद्रेरपतन्मौळौ गङ्गा रुद्रस्य वेगतः।**
> **तदीयभारसंभ्रान्तो ह्यवादीत्तां सदाशिवः॥**
>
> **ह्रीमती भव नात्युच्चैर्वर्तस्व प्राप्य मामिह।**
> **पुरुषं पुरुषश्रेष्ठं ब्रह्मविष्णादिकारणम्।**

---

[1] शिवसूक्तम् (ज.)

सा तं नत्वा महादेवं तदा प्रभृतिभक्तितः ॥
ह्रिया जटासु मिळिता ह्रीरिति प्रोच्यते बुधैः ॥ इति ।

रुद्रयामळे-

तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा ।
महालक्ष्मीति विख्याता श्यामा सर्वमनोहरा ।

तस्मात्तेजःकणाज्जाता लक्ष्मीवाक्कोटयः पुरा ॥
शिवतेजस्समुद्भूता हरिब्रह्मादिकोटयः ॥
क्षीयन्ते पुनरेवैते तत्र येऽनुगतास्सदा ॥ इति ।

कूर्मे-

"ह्रीशब्देन भवेद्गङ्गा सर्वपापप्रभञ्जिनी ।
लक्ष्मीर्गौरीति विख्याता महालक्ष्मीर्महेश्वरी ॥

गङ्गालक्ष्मीपतित्वं च शिवस्य परमात्मनः ।
साधारणं त्रिलोकेषु प्रसिद्धं वेदचोदनात् ॥

तस्मात्तद्दक्षिणः पार्श्वो ह्यहरसाम्यं प्रपद्यते ।
वामभागस्तु तस्यैव देवी पार्श्वोतया सदा ।
रात्रिसादृश्यमाप्नोति महादेवस्य शूलिनः ॥ इति ।

तथा स्कान्दे-

ह्रीरश्रगा सरिदुभे शिवधर्मपत्न्यौ
गङ्गा च शैलतनयेति हिमाद्रिकन्या ।

गङ्गापतित्वमपि साधयितुं समर्थैः
द्वैमातुरादिगणनाथपदेन शास्त्रैः ॥ इति ।

ननु– वाजसनेयके **"ह्रीश्चते लक्ष्मीश्च पत्न्यौ"** इति पठ्यते इति चेत्– किं ततः ? श्रीशब्दस्यापि समानप्रकरणाम्नातह्रल्लेखात्वेन पर्यवसानात्। न च वैपरीत्यं शंक्यम्। ह्री शब्दस्य कमलायां प्रयोगस्यादृष्टत्वात्। श्रीशब्दस्य **"श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः"** इत्यायुष्यसूक्ते गौर्यां दृष्टप्रयोगत्वात्; ह्रीश्च ते इति मन्त्रस्य ग्रहयज्ञे सामाद्यवीतायाः गौर्याः पूजायां विनियोगस्य समृत्पर्णवादिषूक्तत्वेन ह्रीशब्दस्य गौरीपरत्वावश्यंभावाच्च। तस्मात् प्रथमश्रुतानुगुण्येन "लक्ष्मीश्च पत्न्यौ" इत्यस्य **"तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा। महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा॥"** इति शिवपुराणोक्तशिवाङ्कस्थिताम्बिकात्मकलक्ष्मीपरत्वमेव। सूक्तस्य नारायणपरत्वेन तत्पूजादौ विनियोगेऽपि शिवपरत्वे बाधकं नास्त्येव। **"अग्निर्मूर्धा दिवः ककुत्पतिः"** इत्यादिमन्त्राणामभिधानश्रुतिबलादाग्नेयादीनामेव सतां ग्रहयज्ञे तत्रत्याराधने तत्तद्देवत्यमन्त्रविनियोगावसरे भौमादिपूजायां विनियोगस्य बहुशस्तत्प्रीणनजपादौ विनियोगस्य च संप्रतिपत्तेः। अन्यथा—

**यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणम्।**
**अथ नारयणाख्यां वा पूजयेद्भक्तिमान्नरः॥**

इत्यादौ विनियोगान्तरेणाप्यन्यतरत्वौपपत्तेः ? **लिङ्गपुराणेऽपि—**

**द्यौर्मूर्धा तु विभोस्तस्य खं नाभिः परमेष्ठिनः।**
**चन्द्रसूर्याग्नयो नेत्रं दिशश्श्रोत्रं पिनाकिनः॥**

**तदा लोका मुखाद्वेदाः प्राणाद्वायुरजायत।**
**वक्त्राद्वै ब्राह्मणा जाता ब्रह्मा च भगवान् प्रभुः॥**

**इन्द्रविष्णू भुजाभ्यां च क्षत्रियाश्च महात्मनः।**
**वैश्याश्चोरुप्रदेशे तु शूद्राः पादात्पिनाकिनः॥"**

इति भगवता **बादरायणेन** शिवपरत्वेन व्याख्यानात्। तद्वच्छान्दोग्येऽपि परमेश्वरलिङ्गबाहुल्यात्तत्परत्वमेव निर्णीयते।

ननु- "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यत्र द्युसम्बन्धित्व-प्रत्यभिज्ञानात् "परो दिवो ज्योतिर्दीप्यते" इत्यत्र दिवःपरत्वनिर्देशात्कथमुभयोर्वाक्ययोः परमेश्वरपरत्वं ? इत्याशङ्कायामाह—

## उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

यत्पूर्वमन्त्रे— "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि" इति सप्तम्या द्यौरधिष्ठानत्वेन निर्दिश्यते, तत्पुनः "यदतः परो दिवो ज्योतिर्दीप्यते" इति पञ्चम्या व्योमातीतत्वमुपदिश्यते ; किञ्च– "यदतः परो दिवो ज्योतिः" इति वाक्ये जगदन्तर्यामित्वजगद्विलक्षणत्वोपदेशात् ज्योतिर्वाक्येन परमेश्वरप्रत्यभिज्ञानं न सम्भवति इति चेन्न । कस्मात्– उभयस्मिन्नप्यविरोधात् । विभक्तिव्यत्ययार्थव्यत्ययोभयसम्भवेऽपि पर-मेश्वरप्रत्यभिज्ञाया अविरोधात् पूर्वापरमध्यपरार्शविरोधाभावादित्यर्थः । "सौधाग्रे मयूरः, सौधाग्रात्परतो मयूरः" इत्यादौ यथा तद्वद्वाक्यद्वयेन दिवः परत्वमेव प्रत्यभि-ज्ञायते ।

किञ्च— जगद्विलक्षणत्वं जगदन्तरत्वमपि व्योमवद्व्यापकस्य परमेश्वरस्यैवोपपद्यते । "अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः"

> सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः ।
> सर्वव्यापी स भगवांस्तस्मात्सर्वगतश्शिवः ॥

"खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्यादौ परशिवस्य जगद्विलक्ष-णत्वं जगदन्तर्यामित्वं च घण्टाघोषेण स्पष्टमुक्तम् । तस्माद्व्यापकस्य परशिवस्य महा-लिङ्गाद्याचारलिङ्गान्तषड्विधलिङ्गात्मकत्वं चरमशरीरकभक्तोपासनार्थं समुचितम् । तस्मान्निजकांशविशिष्टस्थूलसूक्ष्मचिदचित्प्रपञ्चप्रकाशकं साधनान्तरनिरपेक्षस्वयंप्रकाशपरंज्योतिः परशिव एव ।

इति दशमं ज्योतिरधिकरणम् ॥

### अथ शिवस्य बाह्येष्ट (प्राण) लिङ्गात्मकत्वप्रतिपादनम्

#### प्राणाधिकरणम् ॥ ११ ॥

पूर्वं जगज्जन्मादिहेतुभूतस्य सर्ववेदान्तप्रतिपाद्यस्य निरतिशयानन्दात्मकस्य शिवस्य षड्विधलिङ्गात्मकत्वं पूर्वत्र प्रसाध्य तस्यैव सर्वमुमुक्षूपास्यबाह्यप्राण (इष्ट) लिङ्गात्मकत्वमधिकरणान्तरेण दर्शयति—

## प्राणस्तथाऽनुगमात् ॥ २९ ॥

कौषीतकीब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिकायां श्रूयतेऽस्य विषयः—"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च" इत्याम्नाता; तस्यां श्रूयते। "सहोवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति। तथोत्तरत्र—"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति। तथा—"न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति। अन्तेच—"स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति। अत्र प्रतर्दनविद्यायामुपास्यः प्राणो वा? इन्द्रशब्दाभिधेयश्शरीरो वा? उत परमेश्वरो वा? इति सन्दिह्यते। "मामेव विजानीहि" इतीन्द्रस्य वचनं देवतात्वलिङ्गं जीवविषयम्। "इदं शरीरं परिगृह्योत्थापयति" इति प्राणासाधारणलिङ्गात्प्राणविषयम्। "आनन्दोऽजरोऽमृतः" इत्यादिपरशिवलिङ्गधर्मबाहुल्यश्रवणात् गुरुकरुणादत्तपरमशिवकळाधिष्ठितबाह्यप्राण (इष्ट) लिङ्गमेवेति सूच्यते।

पूर्वपक्षस्तु—नात्र सर्वथा परमेश्वरो निर्दिश्यते। "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतं" इति। "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति च भूतवाय्वसाधारणधर्मश्रवणात्, लोके वेदेषु च शरीरान्तर्गतस्य वायोरेव प्राणत्वस्य मुख्यत्वेन व्यवस्थापनात् प्राणशब्देन प्राणवायुरेवात्राभिधीयते।

अथवा इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव प्रवृत्तेः प्राणशब्देनेन्द्र एवात्राभिधीयते। अयमिन्द्राभिधानो जीवः प्रतर्दनेन "त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तो "मामुपास्व"

इति स्वात्मोपास्त्यं हिततममुपदिदेश । तस्माद्भूतप्राणजीवयोरन्यतरस्यैव प्रतर्दनविद्योपास्यत्वम्– इति चेत्–

अत्रब्रूमः– "प्राणस्तथानुगमात्"– अत्र प्राणः परमशिवकळाधिष्ठितबाह्यप्राणलिङ्गमेव । कुतः? तथानुगमात् । यथा ज्योतिर्वाक्ये ब्रह्मैव निर्दिष्टं तथा प्राणपदस्यापि परशिवपरत्वे अनुगमात् अवगमादित्यर्थः । उपक्रमे "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इति मध्ये च "स यो मां विजानीयात् नास्य केन च कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया" इत्यादिना परमशिवविज्ञाने हि सुकृतदुष्कृतसर्वकर्मसंक्षयो दृश्यते । तथोपसंहारेऽपि "आनन्दोऽजरोऽमृतः" इत्यानन्दादीनि ब्रह्मात्मकपरशिवधर्मलिङ्गानि श्रूयन्ते । तस्मादचेतनमारुतस्य प्रज्ञात्वानन्दत्वादिधर्मासम्भवात्, प्राणशब्देन परमशिवकळाधिष्ठितस्थूलशरीरावच्छिन्नबाह्यप्राणलिङ्गमेवोपदिश्यते । न सर्वव्यापकपूर्णब्रह्मपरत्वम् । उत्तरवाक्ये यावदस्मिम् शरीरे प्राणो वसति तावदायुः इत्यायुश्शब्दसामानाधिकरण्यव्यपदेशात् । केवलभूतवायुपरत्वे पूर्वोक्तश्रुतिसिद्धसर्वपापभंजनानन्दत्वामृतत्वाजरत्वादिधर्मवैरूप्यप्रसङ्गात् । "स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयानेष ह्येवैनं साधुकर्म कारयति तं यमन्वानुनेषत्येष एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सत एष लोकपाल एष लोकाधिपतिरेष सर्वेश्वरः" इत्यादिश्रुतिसिद्धधर्माणां परमशिवस्यैव संभवाच्च । तथा श्रुत्यन्तरेच– "यश्छन्दसां वृषभो विश्वरूपः, छन्दोभ्योऽध्यमृतात्संबभूव, समेन्द्रो मेधया स्पृणोतु, अमृतस्य देवधारणो भूयासं, शरीरं मे विचर्षणं, जिह्वा मे मधुमत्तमा, कर्णाभ्यां भूरिविश्रुवं ब्रह्मणः कोशोऽसि मेधया पिहितः श्रुतं मे गोपाय" इतीन्द्रात्मकपरमशिवलिङ्गधारणेन मोक्षोपदेशात् । "भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिः । व्यशेम देवहितं यदायुः" इति श्रुतावायुः परिमाणपर्यन्तं स्थूलशरीरे परमशिवलिङ्गव्यवस्थापनव्यपदेशात्प्राणशब्दस्य साक्षात्परमशिवलिङ्गपरत्वमेव ।

ननु प्रतर्दनविद्यायां "मामेव विजानीहि" इतीन्द्रशब्दसामानाधिकरण्येन जीवविशेषपरत्वमेवोपदिश्यते, "आनन्दोऽजरः" इत्यादिना सर्वव्यापकब्रह्मधर्माणां निर्देशात्कथं

स्थूलशरीरावच्छिन्नप्राणलिङ्गमेव ग्राह्यम्? इति चेन्न। "मामेव विजानीहि" इत्यादिना न हीन्द्रशरीरमेवोपदिश्यते। किन्तु तज्जीवाधिष्ठानांतरप्राणलिङ्गमेव भक्तोपासनार्थं निर्दिश्यते। "एष लोकाधिपतिरेष लोकपाल एष लोकेशः" इत्यादिना सर्वव्यापकजगदुभयकारणभावलिङ्गपरत्वम्। "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्यादिना इष्टलिङ्गात्मकबाह्यप्राणलिङ्गपरत्वं च निर्णीयते। इन्द्रशरीरेन्द्रप्राणेन्द्रजीवानां सर्वथा न मुमुक्षूपास्यत्वं परब्रह्मत्वं च सम्भवति। इदं च एतदधिकरणोपसंहारसूत्रे स्पष्टमुक्तं बादरायणेन।

अस्मिन्नर्थे हेत्वन्तरमाह—

## नवक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

"मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्युपक्रमे जीवविशेषलिङ्गस्यैवात्र द्योतनात्, "आनन्दोऽजरोऽमृतः" इत्याद्युपसंहारेऽप्यानन्दादिधर्माणां जीवे समुचितत्वात् उपक्रमोपसंहारयोरेकलिङ्गत्वात् अत्र वक्तुरिन्द्रस्य स्वात्मत्वेनोपदेशादिन्द्र एव प्राणशब्देनोच्यते—

इति चेन्न— कस्मात्? "अध्यात्मसम्बन्धभूमा ह्यस्मिन्" हि— यस्मात्, अस्मिन् वाक्ये अध्यात्मसंबन्धस्य परमशिवसम्बन्धस्य, भूमा बाहुल्यं विद्यत इत्यर्थः। तथाह्युपक्रमे "यं त्वं मनुष्याय हिततमं मन्यसे" इत्यादिना तदुपासनस्यैव मोक्षसाधनत्वेन हिततमत्वोपदेशात् श्रुत्यन्तरेष्वपि "ईशं ज्ञात्वा अमृता भवन्ति" "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिषु मोक्षस्य परमशिवोपासनालभ्यत्वोपदेशात् मनुष्याणां हिततमत्वेनोपास्यं परमेश्वरलिङ्गमेव। मध्येऽपि "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषते" इति सर्वकर्मकारयितृत्वं परमेश्वरलिङ्गमेव श्रूयते। उपसंहारे च "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता

एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति परमशिवधर्माः प्रतिपाद्यन्ते। "एष लोकाधिपतिरेष सर्वेश्वरः" इति च परमशिव एव बोध्यते।

ननु "त्रिशीर्षाणं त्वाष्ट्रमहनं" इति "प्राणो वै बलं" इति "इन्द्रो वै राजा जगतो य ईशते" इति च प्राणत्वमिन्द्रस्य बलवत्वादुपदिश्यते। वृष्ट्या चेतनाचेतनप्रपञ्चपोषकत्वात्तस्यैव प्राणत्वं व्यवह्रियते। तस्माद्धिततमत्वादिवचनानि तत्परत्वेन योजनीयानीति प्रतर्दनं प्रति "मामेव विजानीहि" इत्युक्तत्वात् स्वविषयकोपासनमेवात्रोपदिश्यते। इत्याशंकायामाह—

## शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ ३१ ॥

"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति शास्त्रदृष्ट्या सर्वात्मकत्वात्सर्वशब्दवाच्यं परमेश्वरं; मामेव विजानीहीत्युपदिष्टवानिन्द्रः। यथा वामदेवः "अहं मनुरभवं सूर्यश्च" इत्यादिना सर्वात्मकत्वं स्वस्योपदिष्टवान्, तद्वदित्यर्थः। किञ्च "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति" इति श्रुतौ भ्रमरकीटवच्छिवोपासनया शिवत्वापन्नभक्तानां शिवातिरिक्तशून्यत्वं दृश्यते। तस्माद्दण्डकारण्ये भगवता परमशिवेन श्रीरामः "सर्वो वै रुद्रः" "एको हि एव रुद्रो न द्वितीयाय तस्थुः" "शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य" "मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं" "तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्"

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

इत्यादिसर्ववेदान्तसारश्शिवज्ञानेनोपदिष्टस्सन् कृष्णावतारे अर्जुनं प्रति "वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः" "ममैवांशो जीवलोके जीवभूतस्सनातनः" इत्यादिवाक्यानि शिवात्मदृष्ट्या यथोपदिदेश तद्वदिन्द्रोपदेशोऽपीन्द्रस्य परशिवब्रह्मत्वेन न विरुध्यते। तच्च "ब्रह्म वेद ब्रह्मैव भवति" इत्यादौ स्पष्टमुक्तम्। अत एव

"प्राणोऽस्मि प्रज्ञात्मा" इति वाक्ये परमशिवकलानुस्यूतबाह्यप्राणलिङ्गमेवोपदिश्यते स्वकीयार्चनया भक्तानां प्राणनहेतुत्वात्तस्यैव प्राणशब्दो निगमागमेषु निर्णीयते।

"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्यादौ बाह्यप्राणलिङ्ग-निर्देशात्किमन्योपासनम्? इत्याशंक्याह—

अथ शिवस्य इष्ट-प्राण-भावलिङ्गात्मकत्रिविधोपास्यत्वप्रतिपादनम् :—

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व। यावदस्मिन् शरीरे प्राणो वसति तावदायुः, प्राणो वै बलम्" इत्यादिवाक्येषु स्थूलशरीरावच्छिन्नपरिच्छिन्नजीवमुख्यप्राणलिङ्गस्यैवात्रोपदेशात् निर्देशात् जगदुभयकारणसर्वव्यापकपरशिवोपासनं नेति चेन्न। इष्टापत्तेः कुतः? उपासात्रैविध्यात्। इष्ट-प्राण-भाव-संज्ञिकपरशिवब्रह्मोपासनात्रैविध्यस्यांगीकृतत्वात्। इहास्मिन् वाक्ये तद्योगात् उपासात्रयस्य स्थूलारुन्धतीन्यायेन प्रत्यगभिन्नपरिपूर्णषट्स्थलपरशिवसाक्षात्कारसाधनत्वेन आश्रितत्वात् उपयुक्तत्वादित्यर्थः। उपक्रमवाक्ये "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतम्" इत्यादिना स्थूलशरीरावच्छिन्नमुख्येष्टलिङ्गधर्मबाहुळ्यादिष्टलिङ्गोपासनं मध्ये— "एष एव साधु कर्म कारयति" इति सर्वकर्मकारयितृत्वादिप्राणलिङ्गधर्मबाहुळ्यात् प्राणलिङ्गोपासनं, उपसंहारे— "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः स एष प्राण एव प्रज्ञात्मा" इत्यादिना भावलिङ्गधर्मभूयस्त्वात् भावलिङ्गोपासनं च विधीयते। परमशिवादन्यपरत्वे पूर्वापरमध्यवाक्यपरामर्शविरोधप्रसङ्गः। तस्मान्नान्योऽर्थो युक्तः।

अत्र केचित्— उपासात्रैविध्यादित्यत्र प्राणजीवनिर्विशेषब्रह्मोपासनापरत्वं इति वदन्ति। तद्यथा "अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थाप-

यति" इति प्राणधर्म एवात्रोपदिश्यते। शरीरधारणस्य मुख्यप्राणधर्मत्वात्। प्राणसंवादे वागादीन् प्राणान् प्रकृत्या "तान् वरिष्ठः प्राण उवाच" इत्यादिना प्राणस्य चेतनत्वं सर्वोपास्यत्वं चोपदिश्यते।

किञ्च– "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यत्र वक्तृत्वादिकार्यकारणधर्माणां जीवपरत्वात्स एवोपदिश्यते। चैतन्यात्मकत्वाज्जीवे प्रज्ञात्मकत्वमप्युपपद्यते। "आनन्दोऽजरः" इत्यादिना निर्विशेषब्रह्मपरत्वं सूच्यत इति। तथापि जीवप्राणनिर्विशेषोपासनात्रैविध्यमत्र न घटते। सविशेषब्रह्मप्रकरणत्वात्। "मामेव विजानीहि" इत्युपक्रम्य "प्राणोऽसि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्युक्त्वा "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इत्युपक्रमोपसंहाराभ्यां परशिवासाधारणानन्दत्वादिधर्माणां शिवे रूढत्वात् भूतात्मकप्राणात्मकवशानां च परमेश्वरादन्यत्रार्पणानुपपत्तेः। "स एव विष्णुस्स प्राणः" इत्यादिना कैवल्ये विष्णुप्राणादिशब्दानां परशिवपर्यायत्वेन निर्देशात्।

यिञ्च– "नोपास्यौ प्रकृतिजीवौ" इत्यादौ जीवाद्युपासनस्य निरस्तत्वात् निर्विशेषब्रह्मण उपासनाऽसंभवात् सविशेषपरशिवब्रह्मोपासनपरमेव त्रिविधोपासनमिति निर्णीयते। "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादावभिध्यानादित्यनेन प्राणलिङ्गोपासनं, योजनादित्यनेनेष्टलिङ्गोपासनं, तत्त्वभावादित्यनेन भावलिङ्गोपासनं च स्पष्टमुक्तम्। "इदं शरीरं परिगृह्योत्थापयति" इति वाक्येन प्राणधर्म उपदिश्यते। प्राणव्यापारस्यापि परमशिवाधीनत्वात्। कुतः? "न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति, यस्मिन्नेतावुपाश्रितौ" इति श्रुतेः। "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति वाक्येन जीवधर्मो दर्शितः। "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्मत्वं विद्धि, नेदं यदिदमुपासते" "एष एव साधु कर्म कारयति" इत्यादौ वागादिव्यावृत्तस्य शारीरस्य ब्रह्माधीनत्वेन धारणार्चनार्पणात्मकोपासनार्हत्वेन सकलाभीष्टप्रदत्वेन च जीवमुख्यत्वं स्वेष्टलिङ्गस्यैव विधीयते। जीवमुख्येष्टशब्दयोः घटकुम्भकलशादिशब्दवत् पर्यायत्वम्।

"यो वामहस्तार्पितलिङ्ग[1]मिदं
परात्परं धारयते सततं विप्रः क्षत्रियो वा ।
तस्यैव लभ्यः परमेश्वरोऽसौ
निरञ्जनः परमं साम्यमुपैति दिव्यम् ॥"

"त्यक्ते तस्मिन्न भुञ्जीत प्राणानेव परित्यजेत्" इति सामजैगीषीयशाखायां सदानन्दोपनिषदि जीवस्य प्राणलिङ्गमुख्यत्वं सूचितम् । तथा शङ्करसंहितायां भगवता व्यासेनापि निर्दिष्टम्--

"शिष्यदेहे ततश्शक्तिपातं कृत्वा स्वविद्यया ।
पीठस्थशिवलिङ्गे तु शिष्यप्राणं निधाय च ।
लिङ्गं संस्थाप्य तत्प्राणे प्राणलिङ्गं भवेत्ततः ॥

दत्वा शिष्याय तल्लिङ्गं श्रद्धाभक्तियुताय सः ।
न त्यज प्राणलिङ्गं त्वं यावज्जीवं प्रतिज्ञया ।
पुनर्भवो न ते वत्स विद्यते मातृयोनिषु ॥" इति ।

तथा सिद्धान्तागमे- सिद्धान्तशिखामणौ च-

शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् ॥ २२ ॥

तल्लिङ्गन्तु सुतप्राणे स्थापयेदेकभावतः ॥
एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत् ॥ २३ ॥

प्राणवद्धारणीयन्तु प्राणलिङ्गमिदं तव ॥
कदाचित् कुत्रचिद्वापि न वियोजय देहतः ॥ २४ ॥

---

[1] मेकं

यदि प्रमादात्पतिते लिङ्गे देहान्महीतले ॥
प्राणान् विमुञ्च सहसा प्राप्तये मोक्षसम्पदाम् ॥ २५ ॥ इति ।

"स उ प्राणस्य प्राणः इति श्रुत्यन्तरेऽपि तथा निर्दिष्टम् । श्रुत्यन्तरेऽपि परमेश्वरस्य लिङ्गत्रयात्मकत्वमुपदिष्टम् ।

"सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवांस्तस्मात्सर्वगतश्शिवः ॥

"इष्टमूर्जं तु तपसामनुयच्छति सर्वदा ।
तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः ........ ॥"

भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥

इत्यादि श्रुतिशतेन इष्टप्राणभावात्मकलिङ्गत्रयोपासनस्य व्यवस्थापनादिहाप्युपक्रमोपसंहारमध्यपरामर्शेन परमशिवैकपरत्वनिर्णयादितरेषां मुक्तिप्रदत्वादर्शनात् परमशिवप्रकरणाच्च नान्यार्थो विधीयते । तस्मादत्र प्राणशब्देन परशिवब्रह्मैवाभिधीयत इति राद्धान्तः ।

इत्येकादशं प्राणाधिकरणम् ॥

इति श्रीमन्निराभारवीरशैवयतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्य-कृतद्वैताद्वैताभिधान-विशेषाद्वैतसिद्धान्तस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

### समन्वयाभिधानस्य प्रथमाध्यायस्य प्रथमः पादः

---

## प्रथमाध्याये द्वितीयः पादः

### सर्वत्रप्रसिध्यधिकरणम् ॥ १ ॥

प्रथमे पादे परशिवस्य ब्रह्मणो जगदुभयकारणत्वसर्ववेदान्तप्रतिपाद्यत्वसर्वज्ञत्वसर्वशक्तिमत्वनित्यतृप्तत्वनिरतिशयानन्दत्वादिधर्मान् प्रतिपाद्य, केषांचिदर्थान्तरावबोधकशब्दानां परमशिवपरत्वं च प्रसाध्य, पुनः केषांचिदस्पष्टलिङ्गानां पदानां ब्रह्मप्रतिपादकत्वं अर्थान्तरबोधकत्वं वेति सन्देहे तन्मुख्यार्थावबोधार्थं द्वितीयः पादो ह्यारभ्यते ।

## ॥ ३३ ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

यजुरारण्यकनारायणानुवाके– **"दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थं, तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ॥"** [1]इति ज्योतिर्लिङ्गानुसन्धानविधिं [2]निर्दिश्य तद्वस्तुस्वरूपं **"यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः"** इत्यादिना स्पष्टमुक्त्वा **"निधनपतये नमः"** इत्यादिना लिङ्गस्य परब्रह्मणस्सर्वात्मकत्वमुपदिश्य **"एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम् ॥"** इति श्रूयतेऽस्य विषयः ।

ननु– प्रथमाधिकरणे प्राणाधिकरणे **बाह्यलिङ्गोपासनस्य** प्रसाधितत्वात् पुनः [3]किमर्थमिदं ? इति चेन्न– प्रथमाधिकरणे अधिकारिनिरूपणप्रस्तावद्वारा किञ्चिन्निरूपितम् । प्राणाधिकरणे **त्रिविधलिङ्गोपासनाविधिरेव** साधितः । अत्र पुनरपि स्पष्टार्थं ईक्षत्याधिकरणे प्रधानजगत्कारणत्वस्य निरस्तत्वेऽपि **"चमसवदविशेषात्"** इत्यादिना पुनर्निराकरणवत् बाह्यलिङ्गधारणं साधयिष्यामः ।

### बाह्यलिङ्गधारणसिद्धान्तप्रतिपादनम्

**"एतत्सोमस्य सूर्यस्य"** इत्यत्र सोमसूर्यशब्दयोश्चन्द्रप्रभाकरवाचकत्वात्पूर्वानुवाके प्रभाकरप्रशंसादर्शनात् उत्तरत्र परशिवैकप्रतिपादकपञ्चब्रह्मपुरुषप्रशंसाद्योतनादत्रोपास्यः प्रभाकरः परशिवो वेति **संशयः** ।

---

[1] हृदयपुण्डरीकं प्रदर्श्य तत्रोपासितव्यमिति (ज.) [2] प्रदर्श्य (ग). [3] किमर्थमिदमिति चेन्न (ग).

पूर्वपक्षस्तु– “श्रुतिपथगलितानां तन्त्रमार्गे प्रवेशः” इति सूतसंहितायां तान्त्रिकवैदिकविभागे वेदमूलकत्वाभावेन पाञ्चरात्रादिवत् पाशुपताद्यागमानां निरस्तत्वात् धर्मस्य चोदनात्मकप्रमाणशब्दैकमूलकत्वात् तत्प्रामाण्यस्वीकारे “देव पवित्रं वा एतत्तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता। यस्तित्याज सखिवदँ सखायं। न तस्य वाच्यपि भागो अस्ति यदीँ शृणोत्यलकँ शृणोति। न हि प्रवेद सुकृतस्य पन्थानमिति” इत्यादिश्रुतिविरोधात् “शास्त्रयोनित्वात्” “नावेदविन्मनुते तं बृहन्तम्” “नैषा तर्केण मतिरापनेया” इत्यादिश्रुतिसूत्राभ्यां ब्रह्मणो वेदान्तप्रतिपाद्यत्वव्यवस्थापनाच्च। [1]अतस्तन्त्रागमानां धर्मब्रह्मव्यवस्थापने नैव किञ्चित्प्रामाण्यम्। तस्मात् “सर्वलिङ्गं स्थापयति” इत्यत्र न स्वेष्टलिङ्गधारणमुपपद्यते। किन्तु पूर्वप्रकरणवशादत्र–

“प्रातः काले स्वयं ब्रह्मा मध्याह्ने तु महेश्वरः।
सायंकाले स्वयं विष्णुस्त्रयीमूर्तिर्दिवाकरः॥”

इति स्मृतौ प्रभाकरस्य मूर्तित्रयात्मकत्वव्यवस्थापनात्। “एतत्सोमस्य सूर्यस्य” इत्यत्र सोमस्य शिवात्मकस्य सूर्यस्य प्रभाकरस्य सर्वप्रपञ्चे लिङ्गं तल्लांछनं पाणिना अभिमन्त्रितं पाणिमन्त्रं स्थापयति इत्यर्थलाभात् सर्वेषां वैदिकानां प्रभाकरोपासनस्यैव मुख्यत्वात्, पूर्वानुवाकगतानां “सहस्रशीर्षं” इत्यादीनां नारायणप्रतिपादकवाक्यानां, उत्तरमन्त्रानुवाकगतानां सद्योजातादिवाक्यानां च प्रभाकरपरत्वमेव व्यपदिश्यते। तस्मात् तत्परत्वमेव युक्तम्।

किञ्च– “निधनपतये नमः” इत्यादिना [2]शिवलिङ्गात्मकस्य सर्वात्मकत्वोपदेशेन “एतत्सोमस्य सूर्यस्य” इति एतच्छब्देन प्रकृतसोमसूर्यनमस्कारपरामर्शकशब्दायोगात् “नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च” इति चतुर्थ्यन्तत्वाभावेन षष्ठ्यन्तपदनिर्देशात् “सर्वलिङ्गं स्थापयति” इति शब्दस्वारस्येन भूनिक्षेपणलिङ्गपरत्वमेवात्र विवक्षितम्। “पाणिमन्त्रं पवित्रं” इत्यत्र पाणिना अभिमन्त्रितं पाणिमन्त्रं इत्यर्थसमन्वयात् बाह्यलिङ्गधारणं सर्वथा न घटते इति चेन्न।

---

[1] अतः तन्त्रागमाभ्यां (ग).  [2] शिवस्य लिङ्गात्मकस्य (ग).

**सिद्धान्तः**– "**सर्वत्र प्रसिद्धोपदेशात्**" सर्वत्र वेदवेदान्तागमस्मृतिपुराणेतिहासादिषु यत्प्रसिद्धं षट्स्थलपरशिवात्मकं ब्रह्म तस्यैवात्र "**दहरं विपाप्मं**" इत्यारभ्य "**सर्वलिङ्गं स्थापयति**" इत्यन्तेन बाह्याभ्यन्तरधारणोपास्यत्वेन उपदेशात् व्यवस्थापनादित्यर्थः । विभूतिरुद्राक्षशिवलिङ्गधारणविधायकं शैवमतं तन्त्रागममूलकत्वेन न वैदिकपरिग्राह्यमिति यत् तदविचारितरमणीयम्; कुतः ? वेदवेदान्तस्मृतिपुराणेतिहासप्रसिद्धत्वात् । कर्त्रैकत्वेन वेदमूलकत्वेन वा कामिकादिशिवागमानां वेदवत्प्रमाणत्वाच्च । तदुभयप्रतिपाद्यत्वेन शैवमतं वैदिकमेव । तदुक्तं **सिद्धान्तागमे**–

**"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।**
**एतानि मानभूतानि नोपहन्यानि युक्तिभिः ॥**

**वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने ।**
**वेदानुसरणादेषां प्रामाण्यमिति निश्चितम् ॥**

**पाञ्चरात्रस्य सांख्यस्य योगस्य च महामुने ।**
**वेदैकदेशवर्तित्वं शैवं वेदमयं मतम् ॥**

**वेदकदेशवर्तिभ्यस्सांख्यादिभ्यो महामुने ।**
**सर्ववेदानुसारित्वाच्छैवं तन्त्रं विशिष्यते ।**
**सर्ववेदानुसारित्वात्प्रमाणं वेदवत्सदा ॥"** इति ।

किञ्च– **सूतसंहितायाम्**–

**"अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।**
**कामिकादिप्रभेदानां यथा देवो महेश्वरः ॥"**

इत्यादिना कामिकादिशिवागमानामिव व्यासोक्तपुराणानां प्रामाण्यं महर्षिणा सूतेन साधितम् ।

तस्मात्तन्नैव–

[1] "द्विपदार्थं चतुष्पादं महातन्त्रं जगत्पतिः ।
प्रोक्तवान् हिमवत्पुत्र्यै धर्ममोक्षैकसाधनम्" ॥

इति शिवागमानां धर्मब्रह्मसाधनत्वं निर्दिष्टम् ।

अपि च वेदवेदान्तवत् केचन शैवागमाः पति-पाश-पशुरूपतत्त्वत्रयप्रतिपादकाः, केचन पञ्चब्रह्मप्रतिपादनपराः, केचन ज्योतिष्टोमाद्यङ्गकुण्ड-मण्टपविधायकाः, केचन शिवपूजाप्रतिपादकाः, केचन भस्मरुद्राक्ष-शिवलिङ्गधारणप्रतिपादकाः, केचनालयोत्सवप्रतिष्ठाप्रतिपादकाः । तथा हि– **"एतावन्तो वै पशव उत द्विपादश्चतुष्पादश्च"** इति, **"येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदां"** इति । तस्मात् **"रुद्रः पशूनामधिपतिः" "ज्ञात्वा देवं सर्वपाशापहानिः" "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः"** इत्यादिवाक्यानां प्रात्यक्षिकवेदवेदान्तेषु दर्शनात्पतिपाशपशुपदार्थत्रयप्रतिपादकशैवागमानां वैदिकत्वघण्टाघोषः । चिदचिदीश्वरपदार्थत्रयपरिभाषाश्रयपाञ्चरात्रागमस्य वैदिकपरिभाषामूलत्वाभावादवैदिकत्वम् ।

**किञ्च**– मुण्डक-माण्डूक्य-छान्दोग्य-बृहदारण्यक-कठवल्ल्यादिसर्वोपनिषत्सिद्धजीवब्रह्मैक्यव्यवस्थापकत्वेन, षडक्षरत्र्यम्बकगायत्र्यादिसर्वमन्त्राणां कराङ्गन्यासध्यानविधायकत्वेन, गौतमभारद्वाज-शौनकाद्याचारविषयस्थावरलिङ्गानां कर्षणादिप्रतिष्ठान्तोत्सवादिविधायकत्वेन **"भूत्यै न प्रमदितव्यं" "अग्निरिति भस्म"** इत्यादियजुराथर्वण-बृहज्जाबाल-कालाग्निरुद्र-रुद्राक्षोपनिषदादिप्रतिपादितभूतिरुद्राक्षविधायकत्वेन, यजुरारण्यान्तर्गतसद्योजातादिपंचब्रह्ममन्त्रप्रतिपादकत्वेन, *"**या ते रुद्र शिवा तनूरघोरा पापकाशिनी" "यश्छन्दसामृषभो विश्वरूपः" "सोमारुद्रा"** इत्यादिश्रुतिसिद्धशिवलिङ्गधारणविधायकत्वेन, **"अर्चत प्रार्चत" "तमुष्णुहि"** इति मन्त्रार्थावबोधकबोधायनस्मृतिमूलकशिवपूजाविधायकत्वेन च श्रुत्यागमानां समानार्थत्वात् साक्षाद्वैदिकत्वमागमानां निष्प्रत्यूहमेव । तस्माच्चत्प्रतिपादितलिङ्गधारणस्यापि तथात्वं सिद्धम् । तथा कूर्मे–

---

[1] त्रि (ज). * "अव अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमसीय" इति श्रुतिसिद्धवर्णपदमन्त्रकलाभुवनतत्त्वात्मकषडध्वप्रतिपादकत्वेन इति ज ग प्रत्योः अधिकः पाठः दृश्यते ।

"निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् ।
गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥

एष पाशुपताचारस्सेवनीयो मुमुक्षुभिः ।
तान्त्रिकं वैदिकं मिश्रं त्रिधा पाशुपतं स्मृतम् ॥

तप्त लिङ्गाङ्कशूलादिधारणं तान्त्रिकं [1]मतम् ।
लिङ्गरुद्राक्षभस्मादिधारणं वैदिकं भवेत् ॥

रविं शम्भुं तथा शक्तिं विघ्नेशं च जनार्दनम् ।
यजन्ति समभावेन मिश्रपाशुपतं हि तत् ॥

वेदमार्गैकनिष्ठानां मुमुक्षूणां निरन्तरम् ।
श्रौतं पाशुपतं ग्राह्यं न ग्राह्ये मिश्रतान्त्रिके ॥ इति ।

तथाच स्मृतौ–

यानि शास्त्राणि दृश्यन्ते युगेऽस्मिन् विविधानि तु ।
वेदमार्गविरुद्धानि तेषां निष्ठा हि तामसी ॥

विप्राणां शिवदैवत्वं श्रुतिस्मृतिषु गीयते ।
शिवैकोपासनं तस्मात्कर्तव्यं जीवितावधि ॥"

इति श्रवणान्नान्योपासनं ; वेदागमानामङ्गाङ्गित्वेन निगमागमत्वं चोभयोस्समञ्जसम् ।

### अन्तर्लिङ्गधारणप्रतिपादनम् :–

"नारायणानुवाके "दहरं विपाप्मं" इत्यादिना भावलिङ्ग-प्राणलिङ्गात्मकपर-शिवब्रह्मणोऽन्तर्धारणं "नमो ब्रह्मणे धारणं मे अस्तु" इत्यादिना प्रसाध्य "ऊर्ध्वाय नमः" इत्यादिना लिङ्गस्य सर्वात्मकत्वं निर्दिश्य सर्वलिङ्गवाक्येन बाह्यलिङ्गधारणं

---

[1] स्मृतम् (ग)

निर्दिष्टम् । "**निधनपतये नमः**" इत्यारभ्य "**एतत्सोमस्य सूर्यस्य**" इत्यन्तमर्थवादः । तत्र समुच्चयविधायकचकाराभावात् नमस्कारविधायकचतुर्थ्यन्तपदाभावात् उपक्रमोपसंहारयोः परमशिवपरत्वेन मध्यगतसोमसूर्यपरत्वे सामञ्जस्यासम्भवात्, सूर्यस्य सूर्यमण्डलान्तर्वर्तिनस्सोमस्य शिवस्य लिङ्गं परशिवेष्टरूपं पञ्चसूत्रघटितं सद्गुरुकरुणाकटाक्षलब्धं सर्वं सर्वजन इत्यर्थः । स्थापयति धारयतीति "**सर्वलिङ्गं स्थापयति**" इत्यनेन वाक्येन लिङ्गस्थापनं निर्दिश्य तस्य लिङ्गस्थापनस्य अधिकरणं किमित्याशंकायां "**पाणिमन्त्रं पवित्रम्**" इति लिङ्गविशेषात्याण्बादौ तद्धारणं विधीयते । पाणौ मननात्पूजनात्त्रायत इति पाणिमन्त्रं पवित्रमित्यनेन "**यज्ञोपवीतं परमं पवित्रं**" इतिवत् शौचाचमनाद्यपावित्र्यप्रसक्तिकाले पवित्रत्वविधानाद्यज्ञोपवीतवत्सर्वदा धार्यत्वं प्रतिपाद्यते । "**यदाग्नेयोऽष्टाकपालः**" इतिवन्नचात्र वाक्यभेददोषः । तदुक्तं—

> "**धारयेद्यस्तु हस्तेन लिङ्गाकारं शिवं सदा ।**
> **तस्य हस्तस्थितं [1]सिद्धं मत्पदं सम्पदां पदम् ॥**"

इति **वातूले** । तथा **लैङ्गे** भगवता **व्यासे**नैतन्मन्त्रार्थः स्पष्टमुक्तः ।

> "**वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च ।**
> **ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम् ॥**

इत्युपक्रम्य—

> **यजुरप्याह लिङ्गं वै सर्वं स्थापयतीति च ।**
> **तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः ॥**
>
> **पाणौ लिङ्गं विनिक्षिप्य दीक्षाकाले गुरुश्शिवम् ।**
> **येन स्मरति तन्मत्रं पाणिमन्त्रं वदन्ति हि ॥**
>
> **पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् ।**
> **पवित्रीकरणात्पुंसां पवित्रमिति कथ्यते ॥**

---

[1] विद्धि (ग)

तस्मात्सर्वेषु कालेषु धारयेल्लिङ्गमुत्तमम् ।
गच्छंस्तिष्ठन् स्वपन् जाग्रदुन्मिषन्निमिषन्नपि ॥

शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् ।
लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोहरम् ॥

अर्चयेद्गन्धपुष्पाद्यैः करपीठे समाहितः ।
नित्यानि कर्मवृन्दानि तथा नैमित्तिकानि च ।
शिवार्पणधिया कुर्यात्सम्यग्-ज्ञानाभिवृद्धये ॥ इति ।

परशिवस्य ब्रह्मणः दशविधलिङ्गात्मकत्वप्रतिपादनम्–

किञ्च– "**निधनपतये नमः**" इत्यत्र निधनस्य चराचरप्रपञ्चसंहारस्य पतिः कर्ता– सर्वलयाधिष्ठानमिति यावत् । तस्मै नम इत्युच्यते । "**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः– शिवोऽद्वैतः**" इति माण्डूक्य-श्रुतेः । एतत् स्थितेरप्युपलक्षणम् । एतेन जगज्जन्मस्थितिलयकारणनिष्कळशिवतत्त्वमुप-दिश्यते । "**निधनपतान्तिकाय नमः**" इति वाक्येन अवान्तरकल्पसंहारकारणकाल-रुद्रादीनां संहारकर्तृत्वं निर्दिश्यते । "**सर्वभूतदमनाय नमो मनोन्मनाय नमः**" इत्युत्तरत्र विष्ण्वादिसर्वभूतसंहारकत्वं श्रूयते । "**एको विष्णुर्महद्भूतं**" इत्यादिना विष्णुब्रह्मेन्द्रा-दीनां भूतत्वं "**हरिँ हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनां**" इत्यादौ विष्ण्वादिभूतसंहारकत्वं, "**ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां**" इत्यादौ सर्वविद्याधिपतित्वं सर्वभूताधिपतित्वं च तस्यैव निर्दिष्टम् ।

१) "**ऊर्ध्वाय नमः ऊर्ध्वलिङ्गाय नमः**" इत्यत्र महदादिसर्वातीतशुद्धमाया-शक्त्यात्मकत्वविशिष्टः सदाशिव एवोपदिश्यते ।

२) "**हिरण्याय नमः हिरण्यलिङ्गाय नमः**" इत्यत्र पश्चिमचक्रस्थितगुणत्रय-समष्ट्यात्मकमहातमोरूपाविद्याशक्त्यवच्छिन्नस्वयम्प्रकाशात्मकभावलिङ्गं [1]उच्यते ।

---

[1] उपपद्यते (ग, ज, झ)

३) "**सुवर्णाय नमः सुवर्णलिङ्गाय नमः**" इत्यत्र शिखाचक्रानुगतरजश्शक्त्यवच्छिन्नचित्कळात्मक**प्राणलिङ्गं** निर्णीयते ।

४) "**दिव्याय नमः दिव्यलिङ्गाय नमः**" इत्यत्र सहस्रारचक्रप्रविष्टगुणत्रय-प्राचुर्यात्मकमहाशक्त्यवच्छिन्न**स्वेष्टलिङ्ग**मुच्यते ।

५) "**भवाय नमः भवलिङ्गाय नमः**" इत्यत्राज्ञाचक्रस्थितशुद्धान्तःकरणात्मक-चिच्छक्त्यवच्छिन्न**महालिङ्गं** श्रूयते ।

६) "**शर्वाय नमः शर्वलिङ्गाय नमः**" इत्यत्र विशुद्धचक्रस्थितव्योमतत्त्वा-नुगतपराशक्त्यवच्छिन्न **प्रसादलिङ्गं** निरूप्यते ।

७) "**शिवाय नमः शिवलिङ्गाय नमः**" इत्यत्र अनाहतचक्रस्थितपवनतत्त्वा-त्मकादिशक्त्यवच्छिन्न**चरलिङ्गं** कथ्यते ।

८) "**ज्वलाय नमः ज्वललिङ्गाय नमः**" इत्यत्र मणिपूरकचक्रस्थिततेजस्तत्वा-त्मकेच्छाशक्त्यनुगत**शिवलिङ्गं** व्यवह्रियते ।

९) "**आत्माय नमः आत्मलिङ्गाय नमः**" इत्यत्र स्वाधिष्ठानचक्रस्थितजल-तत्त्वात्मकज्ञानशक्त्यवच्छिन्न**गुरुलिङ्गं** [1] व्याख्यायते ।

१०) "**परमाय नमः परमलिङ्गाय नमः**" इत्यत्राधारचक्रस्थितक्षित्यात्मक-क्रियाशक्तिविशिष्ट**आचारलिङ्गं** [2] उच्यते । "**एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति**" इत्यनेन एतद्दशविधलिङ्गात्मकस्य सूर्यस्य सूर्यमण्डलान्तर्वर्तिनः सोमस्य शिवस्य लिङ्गरूपशरीरं स्थापयतीति भूमि-शरीरसाधारण्येन पवित्रक्षेत्रेषु प्रतिष्ठापयतीति गीयते । तस्माद्द-शविधलिङ्गात्मकपाण्यधिकरणकस्वेष्टलिङ्गस्य पञ्चब्रह्मात्मकत्वं षट्त्रिंशत्तत्त्वात्मकत्वं च निरूप्यते ।

## लिङ्गधारणस्य वैदिकत्वनिरूपणम्

किञ्च– वेदवेदान्तस्मृतिपुराणेतिहासागमादिषु शिवलिङ्गधारणं श्रूयते । यजुर्वेदे–

---

[1] व्याचक्षते (ग). [2] उपयुज्यते (ग).

[1] "भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिः, व्यशेम देवहितं यदायुः ॥ "

"चरणं पवित्रं विततं पुराणम् । येन पूतस्तरति दुष्कृतानि तेन पवित्रेण शुद्धेन पूताः, अतिपाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रं, ज्योतिष्मद्भ्राजमानं महस्वत्, अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितां दधातु" "हिरण्यशृङ्गं वरुणं प्रपद्ये" "पवमानस्सुवर्जनः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । पुनन्तु मा देव जनाः" इत्यादिना सर्वदेवानां लिङ्गधारणमुपदिश्यते ।

सामवेदे च– "विश्वेदेवं विदुषा वेदितव्यं श्रद्धाभक्त्या शैवलिङ्गं प्रधृतं सर्वदेवैः, तदात्मसिध्यै मुनिभिर्मुक्तिकामैः कण्ठे हस्ते मस्तके वा भवतु धार्यम्" "लिङ्गं बिभर्ति वपुषा परमं पवित्रं विरजं विशोकं देवानाममितस्य शम्भोः । स याति मुक्तिं चरमं वेदवेद्यं शैवं दिव्यं शाश्वतं वै पुराणम्"

आथर्वणे च– "परात्मसिध्यै परमं कालकालं तनूषु लिङ्गं शाम्भवं बिभृयान्मुक्तिकामः । महामहद्भिर्मौनिभिर्योगिभिर्वा धार्यं भवेत्सर्वदा शाङ्करं देवदेवम् । शिवलिङ्गं धृत्वा ब्रह्मणस्सायुज्यं सलोकतामाप्नोति, तेन सर्वान् कामानभियाति, न स पुनरावर्तते न स पुनरावर्तत इति" इति ।

तथा वेदान्तेषु– "आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुश्श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु" "यश्छन्दसामृषभो विश्वरूपः" इत्यादि।

[1] ऋग्वेदे (ग).

अन्तर्धारणशक्तैर्वा ह्यशक्तैर्वा द्विजोत्तमैः ।
संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरस्थले ॥
धार्यं विप्रैर्विमुक्त्यर्थमेवं वेदविदो विदुः ॥

"कण्ठे करे मस्तके सन्निवेश्य चोभे तत्पाणिमन्त्रं पवित्रम् । यो वामहस्तार्चितलिङ्गमेकं परात्परं सततं धरते विप्रः क्षत्रियो वा । तस्यैव लभ्यः परमेश्वरोऽसौ निरञ्जनः परमं साम्यमुपैति दिव्यम्" इत्येतान्युपबृंहणवाक्यानि लैङ्गे भगवता बादरायणेन निर्दिष्टानि ।

"सौवर्णं राजतं शैलं कृत्वा ताम्रमयन्तु वा ।
पञ्चसूत्रकृतं लिङ्गमखण्डं धारयेद्द्विजः ॥" इत्युपक्रम्य

अयं मे हस्तो भगवानिति मन्त्रेण सर्वदा ।
पाणौ लिङ्गधृतिः प्रोक्ता ऋगित्याह सनातनी ॥

भद्रं परशिवं भक्त्या शृणुयाम सुरर्षभाः ।
भद्रं नेत्रैः प्रपश्यामो लिङ्गरूपं सदाशिवम् ॥

भद्रं यजामस्सततं तुष्टुवांसो यथाविधि ।
यावदायुः प्रवर्तेत तावद्देवहितं शिवम् ॥

तनूभिस्सततं भक्त्या स्थापयामो यथाविधि ।
स्वस्त्याख्यं शाम्भवं लिङ्गमिन्द्रो वृद्धश्रवास्तथा ॥

पूषा च विश्वेदेवाश्च तार्क्ष्योविष्णुस्तथैव च ।
बृहस्पतिस्तथालिङ्गं दधातु परमेश्वरम् ॥

चरणं लिङ्गमाख्यातं पवित्रं पापनाशनम् ।
चरं जीवं परात्मानं नयति प्रापयत्यतः ।

विततं व्यापकं नित्यं पुराणं ब्रह्म शाश्वतम् ।
येन लिङ्गेन पूतस्सन् पापान् सर्वांस्तरिष्यति ॥

तेन लिङ्गेन शुद्धेन पूताः पाप्मानमाणवम् ।
मायामलं कार्मिकं चाप्यरातिं ते तरेम हि ॥

लोकस्य भक्तलोकस्य द्वारं तत्प्राप्तिसाधनम् ।
अर्चिमत्त्वप्रकाशं हि पवित्रं लोकपावनम् ॥

ज्योतिष्मद्दीप्तिमद्भ्राजमानं चिद्रूपभावतः ।
महत्त्वगुणसंयुक्तं महत्त्वपरिकीर्तितम् ॥

चरणं लिङ्गमाख्यातं जगत्संहारहेतुतः ।
अमृतस्य धारा मोक्षस्य सालोक्यादिविभेदतः ॥

बहुधा दोहमानं यत्तन्नोऽस्माकं विशेषतः ।
लोके देहे सदा देवास्सुधितां वासमन्वहम् ॥

दधातु कुरुतात्प्रीत्या भवरोगैकभेषजम् ।
पवमानानुवाकेन सर्वेषां लिङ्गधारणम् ॥

यजुषा गीयते यस्मात्तस्मात्पाशुपतं शुभम् ।
पवमानोऽनिलस्सम्यग्व्रजनः पापवर्जितः ॥

सपवित्रेण लिङ्गेन शैवज्ञानविचक्षणः ।
वर्तते त्रिषु लोकेषु यः पूता स पुनातु माम् ॥

पावनात्सर्वजीवानां पवित्रं लिङ्गमुच्यते ।
हिरण्यं लिङ्गमाख्यातं विश्वरूपं महेश्वरम् ॥

शृङ्गे शिरसि तल्लिङ्गं धृतं वरुणमव्ययम् ।
प्रपद्ये मनसा वाचा शिवभक्तं सनातनम् ॥

तीर्थं देहीति वचसा प्रार्थितं [1]वेदपूरुषैः ।
सर्वं सर्वात्मकं ब्रह्म लिङ्गरूपं सनातनम् ॥

तदौपनिषदं दिव्यं ममाङ्गानि विशेषतः ।
स्थूलसूक्ष्मादिदेहानि ज्ञानकर्मेन्द्रियाणि च ॥

भावादिलिङ्गरूपेण स्थित्वा सर्वत्र सर्वदा ।
आप्याययन्तु सततं परमानन्दसम्पदा ॥

तदहं मा निराकुर्यां न त्यजामि कदाचन ।
मा मां ब्रह्म सदालिङ्गं न त्यजेन्मा निराकरोत् ॥

मे ममात्मनि देहे तु तद्ब्रह्मास्तु निरन्तरम् ।
अनिराकरणं सम्यगनिराकरणं भवेत् ॥

उपनिषत्सु ये धर्मा भस्मरुद्राक्षसंज्ञकाः ।
मयि ते सन्तु ते नित्यं सन्तु ते मयि सर्वदा ॥

इत्यादिकानि । तत्रैवाकरणे प्रत्यवायजनकत्वं च दृश्यते—

लिङ्गस्य धारणं यस्य स्थूलदेहे न विद्यते ।
तद्देहं निष्फलं ज्ञेयं जीवत्यक्तशरीरवत् ॥

यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथा लिङ्गविहीनस्तु सर्वकर्मबहिष्कृतः ॥

---

[1] देवपूरुषैः (ग).

यस्य वक्षस्थले लिङ्गं कण्ठे रुद्राक्षमालिका ।
न फाले भूतिरेखाश्च तं त्यजेदन्त्यजं यथा ॥

लिङ्गस्य धारणं विप्रो मनसापि न लंघयेत् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥

ब्राह्मणानां शिवो देवस्तस्मात्तल्लिङ्गधारणम् ।
कर्तव्यं ब्राह्मणानान्तु वेदवेदान्तशासनात् ॥

भृत्यस्य प्रभुचिह्नन्तु यथा धार्यं महीतले ।
तथा भक्तस्य लिङ्गादिधारणं प्रोच्यते सदा ॥

अनन्तपद्मनाभस्य हस्ते लिङ्गस्य धारणम् ।
पाण्डुरङ्गे तथा विष्णोश्शीर्षे लिङ्गस्य धारणम् ॥
सुप्रसिद्धतया दृष्टं किं वक्तव्यं नृणां सदा ॥

इत्यादिना षट्स्थलपरशिवात्मकपरब्रह्मस्वरूपलिङ्गधारणस्य दृष्टत्वात्सर्वलिङ्गवाक्येन तद्धारणमेव विधीयते ।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ ३४ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥

अत्र विवक्षिताः उपासनायामुपादेयत्वेन ये गुणाः सत्यत्वादयः तेषां परशिवब्रह्मण्युपपत्तेः उपपन्नत्वादित्यर्थः । "ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः" इत्यादिना तद्धर्मश्रवणात् । श्रुत्यन्तरे च– "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्ता सर्वकामः" इत्यादौ सर्वात्मकस्य परमेश्वरस्य भक्तोपासनार्थं प्राणशरीरत्वेन परिच्छिन्नत्वस्य सत्यसङ्कल्प-

त्वादेश्च विवक्षितत्वात् । अत्र **"निधनपतये नमः"** इत्यादिना सर्वात्मकत्वमुपदिश्य **"पाणिमन्त्रं पवित्रं"** इति **पाण्यधिकरणकत्वेन** परिच्छिन्नत्वस्यापि तस्यैव निर्देशान्नेत-रोपासनमत्र विधीयते ।

ननु पुराणान्तरेषु लिङ्गस्य परमेश्वरनिकृष्टाङ्गत्वेन निर्देशात् **"चरणं पवित्र"** इत्यादिश्रुतीनामंघ्रिपरत्वेन रूढत्वात् वेदबाह्यसङ्करजातेरपि भस्मरुद्राक्षशिवलिङ्गादिचिह्नानां दृष्टत्वात्कथं तेषां श्रौतत्वम् इति चेन्न—

**लिङ्गपुराणे** ज्योतिर्लिङ्गोत्पत्त्यनन्तरं—

"ततः प्रहृष्टमनसा प्रणिपत्य महेश्वरम् ।
प्राह नारायणो नाथं लिङ्गस्थं लिङ्गधारिणम् ॥

यदि प्रीतिस्समुत्पन्ना यदि देयो परश्च नौ ।
लिङ्गाधःपीठवद्भाति कुण्डलीकृतपन्नगः ॥

तदूर्ध्वपीठवद्भाति धराऽश्वत्थदलाकृतिः ।
तस्यां स्थितं महादेवज्योतीरूपं महत्तरम् ॥

आवयोर्गर्वनिर्मूलकारणं लिङ्गमीदृशम् ।
भवदीयं महादेव दत्वा दीक्षां हि नौ कुरु ॥

तद्धारणाच्च तध्यानात्तदर्चनविधानतः ।
ऐहिकामुष्मिकं सौख्यं प्राप्नुवाम इति ध्रुवम् ॥

एवं तद्वचनं श्रुत्वा विश्वनाथस्सनातनः ।
इन्द्रनीलमयं लिङ्गं विष्णवे ब्रह्मणो मम ॥

पद्मरागमयं लिङ्गं दत्वा दीक्षामकारयत् ।
ततः प्रदत्तवान् देवो भक्तिमव्यभिचारिणीम् ॥

वक्षस्थले हरिलिङ्गं मूर्ध्नि चाहं पितामहः ।
धृत्वा प्रहृष्टमनसा श्रद्धया परया मुदा ॥"

इत्यादिना परमेश्वरस्यैव लिङ्गरूपत्वदर्शनात् । किञ्च–**सिद्धान्तागमे**–

"ब्रह्मणा विष्णुना पूर्वं यल्लिङ्गं ज्योतिरात्मकम् ।
अपरिच्छेद्यमभवत्केन वा परिबोध्यते ॥

पीठिका परमा शक्तिर्लिङ्गं साक्षात्परशिवः ।
शिवशक्तिसमायोगाद्विश्वं लिङ्गं तदुच्यते ॥

विश्वाधिकत्वमीशस्य लिङ्गमूर्तेस्स्वभावजम् ।
अनन्यदेवसादृश्यं श्रुतिराह सनातनी ॥

लीयन्ते यत्र गम्यन्ते ब्रह्मविष्ण्वादिनिर्जराः ।
तल्लिङ्गं परमं ब्रह्म सच्चिदानन्दलक्षणम् ॥

[1]प्रतिमाकारशून्यस्य लिङ्गस्य परमात्मनः ।
प्रतिमाकारदेवानां सादृश्यं [2]कथमीर्यते ॥"

इत्यादिना तथा दर्शनाच्च । व्यास-गौतम-दधीचि-शापद-धधूर्तकल्पितवाक्यानां श्रुतिविरुद्धत्वेन न चात्र प्रामाण्यम् । तथा चेत्पाण्डुरङ्ग-रामेश्वर-श्रीशैलादिषु विष्णु-प्रतिष्ठितलिङ्गानां तद्विष्णोरपि न सर्वोत्कृष्टत्वमुपपद्यते । [3]तदङ्गीकारे बौद्धपाषण्डमत-स्स्यात् । चरणशब्दस्यांघ्रिपरत्वे चरणश्रुतिनिष्ठव्यापकत्वस्वयंप्रकाशत्वादिधर्माणां विरोध-प्रसङ्गस्स्यात् । परमेश्वरधर्मबाहुल्यादाकाशप्राणादिशब्दवत्तस्य परमेश्वरपरत्वमेव । चर्यते भक्ष्यते जगत् येनेति चरणम्, इदं स्थितेरप्युपलक्षणम्, चरं जीवं मोक्षं नयतीति वा "एष एव साधु कर्म कारयति" इति श्रुतेः । उत्पत्तिस्थितिलयकारणमिति यावत् ।

---

[1] प्रतिमाकारणान्यस्य (ग). [2] कथमीर्यते (ग). [3] तदनङ्गीकारे (ग).

तादर्थ्याल्लिङ्गं चरणशब्दवाच्यम्। "लीयते गम्यते यत्र येन सर्वं चराचरम्" इत्यादिना लिङ्गचरणशब्दयोः पर्यायत्वं सुस्थम्।

अथ वीरशैवाष्टावरणानि—

"भस्म रुद्राक्षकं लिंगं गुरुर्मन्त्रं तथा चरः।
पादोदकं प्रसादश्च शैवाष्टावरणानि हि॥"

इत्यादिवैदिकशिवागम[1]संस्काराभावाद्ब्रह्मविद्याङ्गशैवाष्टावरणानि सर्वथा तेषां न सम्भवन्ति। अवैदिकानां शैवाग्निसंस्काराभावात्। जाबालाद्युपनिषत्सिद्धशैवाग्निभस्मधारणं [2]नोपदिश्यते। "शिखायामेकमेकास्यं" इत्यादिना तेषां विध्युक्तशिखाशून्यत्वाद्रुद्राक्षधारणं न सम्भवति। पञ्चाक्षरीमन्त्रस्य श्रौतप्रकरणपठितत्त्वात्तेषां वेदोक्तचतुर्विधवर्णान्तर्भूतत्वाभावात् स्मृत्युक्ताष्टादश-वर्णबाह्यत्वाच्च व्यत्यासक्रमेणाऽपि तन्मन्त्रोपदेशानर्हत्वाच्च सोऽपि न सम्भवति। उपनयन संस्कारशून्यानां वेदबाह्यानां[3] प्राणप्रतिष्ठादिवैदिकसंस्कारविधिः कथमुपपद्यते? तदभावे लिङ्गस्याप्यभावात्तद्धारणपूजादिना सकलपापक्षयपूर्वकपरशिवत्वप्राप्तिः[4] कथमुपपद्यते? "ब्राह्मणो वै सर्वा देवताः" "वर्णानां ब्राह्मणो गुरुः" इत्यादिश्रुतिस्मृतिसिद्धब्राह्मणाचार्यत्वा-नङ्गीकारात् गुरुचरणतीर्थप्रसादचतुष्टयमपि न सम्भवति। घृतकोशातकी-सुवर्णकार्पासादौ घृतसुवर्णत्वाभावेऽपि प्रतीतिमात्रवदत्रापि शैवत्वं प्रतीयते। तथा सिद्धान्तागमे—

"आगमं शिवलिङ्गस्य शरीरमिति कथ्यते।[5]
श्रुतिर्लिङ्गस्य चैतन्यं वेदान्तः प्राणमीर्यते॥
तत्संस्कारविहीनत्वाल्लिङ्गित्वं न हि सर्वदा" इति।

शूद्राणां ब्रह्मविद्याधिकारनिराकरणम्—

किञ्च— तत्त्वमस्यादि महावाक्यार्थप्रतिपादितलिङ्गाङ्गैक्यं कथं भवेद्वेदबाह्यानाम्? अपशूद्राधिकरणे— "संस्कारपरामर्शात्तदभावाभिलापाच्च" इति सूत्रे ब्राह्मण-क्षत्रिय-वैश्यानामुपनयन[6]संस्कारविशिष्टत्वाद् ब्रह्मविद्याधिकारोऽस्ति न शूद्राणामिति शूद्राणां श्रुति-

---

[1] गर्भादिसंस्कार (ज). [2] नोपपद्यते (ग). [3] अत्र षडध्वशोधनापूर्वक इति (ज, कोशे अधिकः पाठो दृश्यते. [4] कथमुपलभ्यते (ग). [5] गीयते (ग १). [6] शिवदीक्षा (ज).

स्मृतिपुराणेतिहाससिद्धानामपि ब्रह्मविद्याधिकारस्य निषिद्धत्वादिकमन्येषां वक्तव्यम्? तस्मा-त्पूर्वोक्तमेव समीचीनम्।

ननु— रुद्रस्य परब्रह्मत्वं कथम्? आपस्तम्बसूत्रे निकृत्यादिवत् रुद्राहुत्यनन्तरं "अप उपस्पृश्य" इत्यमङ्गळदेवतात्वनिर्देशात् इति चेन्न— तथात्वे मानाभावात् श्रौतशुण्ठत्वप्रसङ्गात्। "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं पतीनां प्रथमं पुरस्ताद्विदाम देवं भुवनेशमीड्यम्" "एक एव रुद्रो न द्वितीयाय तस्थे" "असंख्याताःसहस्राणि, स्मर्यते न च दृश्यते" "विश्वाधिको रुद्रो महर्षिः" "शिवोऽद्वैत" इत्यादि श्रुतिशतेषु परब्रह्मणश्शिवस्य अनन्यसामान्य-देवतात्वोपदेशात्। सर्वदेवताधिपतित्वादिधर्माणां तस्यैव निर्देशाच्च। तत्समीपे तद्भृत्यानां ब्रह्मविष्ण्वादीनां पूजार्हत्वासंभवात् रुद्रान्तर्धानार्थमपांपरिषेचनं विधीयते। तदुक्तं यजुर्वेदे— "अपः परिषिञ्चति रुद्रस्यान्तर्हित्यै" इति न च निकृत्यादिप्रकरणपठितत्वेन निकृष्टत्वम् गोश्वग्निब्राह्मणान् स्पृष्ट्वा अप उपस्पृशेत्" इत्यापस्तम्बसूत्रे प्रकरणैकत्वेन उत्कृष्टाप-कृष्टगोश्वाग्नीनामुपदेशात्। श्वयुवमघवन्शब्दानामुत्कृष्टापकृष्टवाचकानां एकसूत्रे निर्देशात्।

किञ्च—

"रजस्वलाग्निगोविप्रान् पातिव्रत्यस्त्रियं तथा।
शवामेध्यब्रह्मबन्धून्[1] स्पृष्ट्वा स्नानं समाचरेत्॥" इति।

वृद्धशातातपेऽपि रजस्वलासाहचर्येण गोविप्राणां निर्देशाच्च न प्रकरणदोषः। तस्मात्त-स्यैव ब्रह्मत्वम्।

**अथ शिवस्य परब्रह्मणः उपास्यत्वं नारायणस्य उपासकत्वं च।**

अत्रोक्त ब्रह्मलक्षणस्य नारायणेऽतिव्याप्तिमाशङ्क्य निराकरोति—

---

[1] ब्रह्मबिन्दून् (ग A).

## ॥ ३५ ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

अत्र तु शब्दो निश्चयार्थः पूर्वोक्तशिवलिङ्गधारणमेव श्रोत्रियाणां ब्रह्मविद्योपासकानामवश्यं कर्तव्यम्। न शारीरः- पूर्वानुवाके "**सहस्रशीर्षं**" इत्यारभ्य सहस्रशीर्षत्वादिविशिष्टस्य नारायणस्य मूर्त्यात्मकत्वेन व्यपदेशात्। "**समुद्रेऽन्तं विश्वशम्भुवं**" इत्यादिना समुद्रशायित्वादिलिङ्गानां तस्यैव समुचितत्वात्, तद्वाचकाच्युत हरिशब्दप्रयोगाच्च मूर्त्यात्मकनारायणात्मकश्शारीर एवात्रोपास्यो न भवति कुतः? अनुपपत्तेः- "**निधनपतये नमः**" इत्यारभ्य "**सर्वलिङ्गं स्थापयति**" इत्यन्तं शिवलिङ्गस्य परब्रह्मत्वेन ध्यानधारणात्मकसर्वोपासनविषयत्वप्रकटनाय प्रतिपदनमस्कारपूर्वकं सर्वात्मकत्वप्रतिपादनात्। मूर्त्यात्मकस्य विष्णोस्तद्धर्माणामसम्भवात्। अप्रतिमाकारस्य लिङ्गस्यैव सर्वोपास्यत्वं सिद्धम्। **शैवे-**

> "**शिवशक्त्यात्मकं लिङ्गं चिद्रूपं पारमैश्वरम्।**
> **ब्रह्मविष्ण्वादिदेवानां ध्येयं धार्यं सनातनम्॥**
>
> **लीयतेऽस्मिन् जगत्सर्वं जङ्गमस्थावरात्मकम्।**
> **गम्यते सृष्टिकाले तु तल्लिङ्गं ब्रह्मशाश्वतम्॥**"

इति व्युत्पत्या चरलिङ्गस्य महत्वं ब्रह्मलक्षणमुक्तम्। श्रुतिस्मृतिपुराणागमसिद्धत्त्वात्तद्धारणोपासनादिकं वैदिकम्। विष्णुविग्रहसालग्रामाद्युपासनस्य श्रौतविध्यभावात्तान्त्रिकत्वं सिद्धम्।

किञ्च तत्प्रकरणपठितविश्वपतित्वादिपरमेश्वरधर्माणां नारायणे असम्भवात्; "**पशूनां पतये वृक्षाणां पतये जगतां पतये**[1]" इत्यादिश्रुतिशतेषु शिवस्यैव सकलभुवनाधिपतित्वव्यवस्थापनात्, "**एको हि रुद्रो न द्वितीयाय तस्थुर्य इमान् लोकानीशत ईशनीभिः**" इति रुद्रव्यतिरिक्तस्य जगदीश्वरत्वस्य निरस्तत्वात्, "**विश्वाधिको रुद्रो महर्षिः**" इति तस्यैव विश्वाधिकत्वश्रवणाच्च, न विष्ण्वादीनां शारीराणां सर्वोपास्यत्वम्।

---

[1] वृक्षाणां पतये (ग A.)

नन्वेवं– नारायणोपासनाविधायकवाक्यानां का गतिः? इति चेत् उच्यते– "**तत्त्वमसि श्वेतकेतो**" इत्यादिश्रुतिषु ब्रह्मोपासकानां श्वेतकेत्वादीनां ब्रह्मत्वोपदेशवत् नारायणस्य ब्रह्मत्वमुपदिश्य "**पद्मकोशप्रतीकाशं**" इत्यादिना तद्धृदयपुण्डरीकमुपदिश्य "**तस्य मध्ये वह्निशिखा**" इत्यादिना जीवस्वरूपं निर्दिश्य "**तस्याश्शिखायामध्ये परमात्मा व्यवस्थितः**" इति जीवान्तर्यामित्वेन च तस्योपास्यत्वं विधीयते; "**स ब्रह्मा स शिवस्सेन्द्रः**" इत्यादिना तद्विभूतिरूपब्रह्मविष्णुरुद्रेन्द्रादि सर्वशब्दवाच्यत्वं निर्णीयते। तथा श्रुत्यन्तरेष्वपि ब्रह्मणो रुद्रस्य ब्रह्मविष्णुकालरुद्रातीतत्वं तत्कारणत्वं तच्छब्दवाच्यत्वं च श्रूयते। "**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**" इति माण्डूक्ये सर्वातीतत्वं, "**ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते**" इत्यथर्वशिखायां, "**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्**" इत्यारभ्य "**स ब्रह्मा स शिवस्स हरिस्सेन्द्रस्सोऽक्षरः परमस्स्वराट्, स एव विष्णुस्स प्राणस्स कालोऽग्निस्सचन्द्रमाः। स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्**" इत्यादिना सर्वशब्दवाच्यत्वव्यवस्थापनात् नान्यस्यात्रोपास्यत्वं सिध्यति।

"**अथवाहं हरिस्साक्षात्सर्वज्ञः पुरुषोत्तमः।**
**सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्॥**

इत्यारभ्य—

"**ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महेश्वरम्।**
**नीलग्रीवं महात्मानं पश्यन्तं पापनाशनम्॥**

इत्यादिना भगवता **बादरायणेन सूतसंहितायां** ध्यानयोगप्रकरणे व्याहृतस्वाम्नायार्थो वैदिकः।

**स्मृत्यन्तरेऽपि–**

"एवमुक्त्वा महाबाहुर्महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ इति ।

वामनपुराणे—

ततोऽव्ययात्मा स हरिः स्वहृत्कंजशायिनम् ।
दर्शयामास देवानां मुरारिर्लिङ्गमैश्वरम् ॥ इति ।

गीतायामपि "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" ॥ इति । श्रुतिस्मृतिपुराणेषु नारायणस्योपासकत्वं शिवस्योपास्यत्वं च घण्टाघोषेण श्रुतम् ।

पुनर्हेत्वन्तर माह—

## ॥ ३६ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

नात्रोपास्यो नारायणः— कुतः ? कर्मकर्तृव्यपदेशात् । **"नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योद्वम् ममामुष्य ओम्"** इति पूर्वोक्तनारायणमन्त्रे ओंकारवाच्यशिवलिङ्गधारणात्मकोपासनकर्मकर्तृनारायणस्य व्यपदेशात् । परमशिवलिङ्गबाह्याभ्यन्तरधारणार्चनार्पणावधानात्मकोपासनमेव मुमुक्षूणां श्रौतानामावश्यकम् । **"यच्छन्दसामृषभो विश्वरूपः"** इत्यारभ्य **"श्रुतं मे गोपाय"** इत्यन्तं तथा श्रूयते । किञ्च— **"पद्मकोशप्रतीकाशं"** इत्यनेन प्रकृतस्य नारायणस्य दहरपुण्डरीकमुपदिश्य **"परमात्मा व्यवस्थितः"** इत्यन्तेन तदन्तर्वर्तित्वेन परमेश्वरस्य निर्देशात् ध्यातृत्वेन नारायणस्य ध्येयत्वेन च परमशिवस्य कर्मकर्तृत्वं निर्दिश्यते । अतो नारायणस्य शिवोपासकत्वं सिद्धम् ।

ननु— **"नमो ब्रह्मणे धारणं मे अस्तु"** इति श्रुतौ देवतान्तरधारणविधायकप्रमाणाचाराभावेऽपि नारायणप्रतिनिधित्वेन शंखचक्रधारणस्य पाञ्चरात्रमतसिद्धत्वेन तद्धारणपरत्वं किं न स्यात् ? इति चेन्न— **"अनिराकरणं"** इत्यनेन निराकरणं हेयप्रपञ्चः तन्नभवतीत्यनिराकरणम् । उपादेयं ब्रह्मेत्यर्थलाभात्, ब्रह्मलिङ्गशब्दयोः पर्यायत्वाच्च । अर्थाल्लिङ्गधारणसिद्धिर्निष्प्रत्यूहा । तद्वच्छंखधारणं न विधेयम् क्लिष्टार्थकल्पने मानाभावात् ।

अथ ब्राह्मणलक्षणम्

"मुखे मन्त्रो हृदि ध्यानं मस्तके लिङ्गधारणम् ।
शिखा सूत्रं तथा भस्म इति ब्राह्मणलक्षणम् ॥

विभूतिर्यस्य नो फाले कण्ठे रुद्राक्षमालिका ।
मुखे षडक्षरीमन्त्रस्तं त्यजेदन्त्यजं यथा ॥

उद्धूळनं त्रिपुण्ड्रं च मनसाऽपि न लंघयेत् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥

इति **गौतम-शातातप-गारुडादिस्मृतिषु** लिङ्गत्रिपुण्ड्रादिकस्य ब्राह्मलक्षणत्वेन तदतिक्रमणे प्रत्यवायजनकत्वेन च श्रवणात् ।

किञ्च– लिङ्गधारणस्य श्रुत्या सर्वोत्कृष्टत्वप्रतिपादनात् [1]तान्त्रिकविधिना श्रौतानां प्रयोजनाभावाच्च तदुभयविध्यङ्गीकारो न युक्तः ।

"त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते ।
धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते ॥"

इति जाबाले तथा कालाग्निरुद्रोपनिषदि । "अथवा भगवांस्त्रिपुण्ड्रविधिभिः" इत्यादिसनत्कुमारप्रश्नोत्तरभूतात् "तिर्यक्तिस्रो रेखाः प्रकुर्वीत" इति वाक्यादनन्तरं त्रिरेखानां त्रिवेदात्मकाकारोकारमकारात्मकत्वस्य रुद्रमहेश्वरसदाशिवात्मकत्वस्य च प्रतिपादनालिङ्गधारणस्यावश्यकत्वमत्यन्तपुण्यहेतुत्वं च विधेयमिति निश्चितम् ।

ननु– "लिङ्गिनं चक्रिणं दृष्ट्वा" इत्यादौ चक्रधारणवल्लिङ्गधारणस्यापि निषेधदर्शनात्कथं श्रौतपरिग्राह्यत्वं ? इति चेन्न– प्रभाकरप्रभायां दीपादिप्रकाशवत् तान्त्रिकविधिनिषेधयोः श्रौतविधौ [2]अप्रकाशकत्वात् । निषेधानां वेदमूलकत्वाभावात्प्रामाण्यं नाशङ्क-

---

[1] तान्त्रिकविधेः (ग A) [2] अप्रकाशवत्वात् (ग)

नीयम्। किञ्च– निषेधस्य तान्त्रिकत्वात् तप्तचक्राङ्कनप्रकरणपठितत्वाच्च तान्त्रिकतप्तलिङ्ग-धारणनिषेधपरत्वमिति पूर्वमेवोक्तम्। "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" "त्वं देवानां ब्रह्मणानामधिपतिः विष्णुः क्षत्रियाणामधिपतिः त्वं देवेषु ब्राह्मणो ह्यहं मनुष्येषु ब्राह्मणः ब्राह्मणो वै ब्राह्मणमुपधावति" "यो वै स्वां देवतामतियजते" इत्यादि श्रुतिषु ब्राह्मणानां [1]शिवदेवत्वस्य अन्यथा प्रत्यवायस्य च श्रवणात्। स्मृतिरपि–

"ब्राह्मणानां शिवो देवस्तस्मात्तत्पिण्डसम्भवः।
ब्राह्मणस्येति विज्ञेयो नो चेदब्राह्मणो भवेत्॥

रुद्रपिण्डसमुद्भूतो रुद्रभूमिलयं गतः।
पितरं नाभिजानाति तातं वेश्यासुतो यथा॥

ब्राह्मणो भगवान् रुद्रस्तस्मात्तत्पिण्डसम्भवः।
ब्राह्मणश्चेति विज्ञेयो नात्र कार्या विचारणा॥

अतः संन्यासिनां वापि पुत्रः पार्वणमाचरेत्।
मातापित्रोर्मृताहे तु न कुर्यात्पार्वणं यदि॥
बौद्धम्लेच्छादिवत्त्याज्यस्स्वलोके पतितो भवेत्।"

इत्यदिना ब्राह्मणोत्पत्तेः रुद्रपिण्डहेतुकत्वं रुद्रदेवतात्वं च निर्दिष्टम्। तस्मादितरदेवतादि-लांछनादिकं ब्राह्मणानां न विधेयम्।

"चक्राङ्किततनुर्यत्र न तत्र दिवसं वसेत्।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत्॥

अज्ञानादथवा मोहाद्रागतो वा सुदर्शनम्।
धत्ते कुलघ्नं तं दृष्ट्वा सचेलः स्नानमाचरेत्॥

---

[1] शिवदैवत्वस्य (ग A).

यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रस्सर्वकर्मबहिष्कृतः ॥"

इत्यादिना शातातप-गारुड-शंख-विष्णुस्मृत्यादिषु तन्निषेधदर्शनालिङ्गधारणपरत्वमेव युक्तम् । तदुक्तं ब्रह्माण्डपुराणे—

"नमोऽस्तु ब्रह्मणे तुभ्यं आचार्याय महात्मने ।
तन्निराकरणं विश्वं जन्यत्वान्मृत्युनैव हि ॥

अनिराकरणं ब्रह्म कारणत्वाच्चिरन्तनम् ।
अनिराकरणं यत्तु धारणं देशिकोत्तमः ॥

वेदशास्त्रपुराणेषु प्रसिद्धं कर्णयोश्श्रुतम् ।
अहं धारयिता देवं भूयासं सर्वकारणम् ॥

ब्रह्मविष्ण्वादयो देवाः प्रसिद्धाश्च तथा स्मृताः ।
ते निराकरणास्सर्वे मृत्युना सर्वशत्रुणा ॥

मे निराकरणास्त्वेते न हि धार्याः कदाचन ।
नाहं धारयिता देवान् भूयासं मज्जतस्सुरान् ॥

न शक्नुवन्ति मां तत्तु मज्जन्तं मृत्युसागरे ।
ऊर्ध्वं ममेदमों लिङ्गं मां चामुष्य समाश्रय ॥"

इति अनिराकरणपदे भूतिरुद्राक्षयोः ओमिति लिङ्गस्य च त्रयाणामपि धारणस्य प्राधान्यं स्वयं सम्भवति । "मेधावी भूयासं" "अहमेकः प्रथममासं" इत्यत्रेव भूयासमित्यत्रापि विध्यर्थे आशीर्लिङ्विधीयते ।

जाबालकालाग्निरुद्राद्युपनिषत्सु शिवधारणद्योतनात्तत्प्रतिमाधारणं किं स्यादित्याशंक्याह—

अथ लिङ्गदर्शनधारणयोः सर्वोत्कृष्टत्वप्रतिपादम् ।[1]

## ॥ ३७ ॥ शब्दविशेषात् ॥ ५ ॥

"ऊर्ध्वाय नमः" इत्यारभ्य "सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रं" इत्यन्तेन लिङ्गस्यैवात्र सर्वात्मकत्वप्रतिपादनान्नारायणादिदेवताविग्रहोपासनं न कर्तव्यम् । कुतः ? शब्दविशेषात् । जिज्ञास्यब्रह्मलक्षणविधायकेन "जन्माद्यस्य यतः" "यतो वा इमानि भूतानि जायन्ते" इत्यादिना श्रुतिसूत्रप्रमाणेनोक्तस्य जगज्जन्मादिकारणत्वस्य लिङ्गशब्देनैव द्योतनात् ।

"लीयते गम्यते यत्र येन सर्वं चराचरम् ।
तस्माल्लिङ्गं परं ब्रह्म कारणं सर्वमव्ययम् ॥"

इति स्मृतेश्च । यस्मिन् चराचरप्रपञ्चः प्रयुङ्क्ते विलीयते, पुनस्सृष्टिकाले यस्माद्बहिर्गच्छतीति तल्लिङ्गं प्रपञ्चोत्पत्तिस्थितिलयाधारं परं ब्रह्मेत्यभिधीयते । पुराणेष्वपि लिङ्गधारणपूजादिकमेव बहुधा श्रूयते । स्कान्दे- शंकरसंहितायां–

"रुद्रो भूत्वा यजेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ।
[1]प्राणलिङ्गेन सम्बधी स रुद्रो नात्र संशयः ॥

क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाधिकाः ।
पशुभ्योऽपि नराः श्रेष्ठास्तेषु श्रेष्ठा द्विजातयः ॥

[2]ब्राह्मणेषु च विद्वांसो विद्वत्सु क्रतुबुद्धयः ।
क्रतुबुद्धिषु कर्तारस्तेभ्यस्संन्यासिनोऽधिकाः ॥

तेषु विज्ञानिनः श्रेष्ठास्तेषु शङ्करपूजकाः ।
तेषु श्रेष्ठा महाभाग मम लिङ्गाङ्गसंगिनः ॥

---

[1] प्राणलिङ्गाङ्गसम्बन्धी (ग A). [2] द्विजातिभ्योऽधिको विप्रः विप्रेषु क्रतुबुद्धयः (ग A).

लिङ्गाङ्गसङ्गिष्वधिकष्षट्स्थलज्ञानवान् पुमान् ।
तस्मादभ्यधिको नास्ति स एवाहं न संशयः ॥

ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः ।
धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः ॥

उरस्थले हरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः ।
लिङ्गस्थं मां समाराध्य स्वं स्वं पदमवापतुः ॥

यत्र तिष्ठति लिङ्गाङ्गसङ्गी शिवपरायणः ।
निमिषं निमिषार्धं वा तच्छिवक्षेत्रमुच्यते ॥

लिङ्गाङ्गसङ्गिनः पुंसो ये [1]दुर्विषयवासिनः ।
ते सर्वपापनिर्मुक्ता यास्यन्ति परमां गतिम् ॥

लिङ्गाङ्गसङ्गिनं मर्त्यं लिङ्गध्यानपरायणम् ।
अनुव्रजति यो मर्त्यस्सोऽपि मुक्तिमवाप्नुयात् ॥

धृतलिङ्गस्य मर्त्यस्य [2]पादप्रक्षाळनोदकम् ।
पापशुध्यर्थमज्ञानां तद्धार्यं शिखिवाहन ॥

प्राणलिङ्गैकनिष्ठस्य देहं स्पृष्ट्वा समीरणः ।
यत्र गच्छति तत्रस्था मर्त्या मुक्ता न संशयः ॥

युगपच्छिवलिंगैक्यपादस्पृष्टरजांसि च ।
पतन्ति मस्तके यस्य स मुक्तो नात्र संशयः ॥

अन्नं वा जलमात्रं वा यद्दत्तं लिङ्गधारिणे ।
तदन्नं मेरुसदृशं तज्जलं सागरोपमम् ॥

---

[1] दुर्विषयवर्तिनः (ग A). [2] पादप्रक्षाळितं जलं (ग A).

**लिङ्गाङ्गसङ्गं कुर्वन्तं दृष्ट्वा द्विजवरं रविः ।**
**स्थानाच्चलत्ययं भित्वा मण्डलं मे व्रजेच्छिवम् ॥**

**शिवलिङ्गाङ्गसम्बन्धभाजां दर्शनमात्रतः ।**
**मुक्तिं गच्छन्ति मनुजाः पशुपक्षिमृगादयः ॥**

इत्यादिना **लिङ्गदर्शनधारणयोस्सर्वोत्कृष्टत्वप्रतिपादनान्न** विग्रहधारणं विधीयते ।

किञ्च "**नारायणपरं ब्रह्म**" इति वाक्ये नारायणात्परं ब्रह्मेत्युपदिश्यते । "**समिधो यजति**" इत्यादिदर्शपूर्णमासप्रकरणपठितवाक्यावगतानां प्रयाजानां दर्शपूर्णमासाङ्गत्ववत् नारायणप्रकरणपठितस्य हृदयस्य नारायणसंबन्धित्वमुच्यते । "**अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्**" इत्युपक्रमे शिवैकबोधकानामीशादिशब्दानां मुख्यत्वेन व्यपदेशात् । उत्पत्तिशिष्टशिवप्रशंसायास्तत्परत्वं विधीयते । "**विश्वाधिको रुद्रो महर्षिः**" "**यः परः स महेश्वरः**" इति मध्येऽपि **शिवप्राचुर्यं** "**ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः**" इत्यन्तेऽपि प्रचुरशिवप्रशंसाकथनादभ्यासतात्पर्यमिति गीयते । विश्वाधिकत्वादिलक्षणानामनन्यसाधारणत्वात्तदेवापूर्वमित्युच्यते । "**परामृतात्परिमुच्यन्ति सर्वे**" इत्यन्तेन फलं व्यपदिश्यते ।

"**सहस्रशीर्षं**" इत्यनुवाके नारायणप्रशंसा ह्यर्थवादतात्पर्यमित्यवगम्यते । "**यस्मात्परं नापरमस्ति किञ्चित्**" इत्यनेनोपपत्तिः । एवं साङ्गतात्पर्येण शिवपरत्वावगमान्नान्यपरत्वम् । न च सहस्रशीर्षानुवाक एवात्रोपक्रमः । उपसंहारानुवाकगतोमापतित्वादिधर्माणां नारायणे असमञ्जसत्वात् । किञ्चोपक्रमे "**अणोरणीयान्**" इति मन्त्रे सर्वचेतनगुहाशयत्वमीश्वरस्य प्रसाध्य तदनुग्रहादेव सर्वेषां दुःखनिर्मुक्तत्वमुपदिश्य "**सप्त प्राणाः प्रभवन्ति**" इत्यारभ्य "**पूर्णं पुरुषेण सर्वं**" इत्यन्तेन सृष्ट्यादिप्रवृत्तिधर्मात्मकत्वं तस्य प्रदर्श्य "**न कर्मणा न प्रजया धनेन**" इत्यादिना निवृत्तिलक्षणधर्मप्रशंसामुपक्रम्य "**परेण नाकं निहितं गुहायां**" इत्यादिना तदुपासनाधिकारित्वं यतीनां

[1]निरूप्य **"परामृतात्परिमुच्यन्ति सर्वे"** इत्यनेन तदुपासकस्य मोक्षफलं विधाय **"दहरं विपाप्मं"** इत्यादिना तदुपासनस्थानमभिधाय **"यो वेदादौ स्वरः प्रोक्तः"** इत्यादिना तत्रोपास्यत्वं महेश्वरस्य निर्दिश्य **"ऋतँ सत्यं"** इत्यनेनोपासनाया [2]गुणविषयत्वेन परमशिवधर्मागामसाधारणानामतिशयितत्वं प्रदर्श्य तदर्थवादप्रशंसायां विशेषोपासकत्वेन यतीन्द्रत्वेन शिवभक्ताग्रगण्यत्वेन सहस्रशीर्षानुवाके नारायणस्यैव मुख्याधिकारित्वं निरूप्य तत्र **"नारायणं महाज्ञेयं"** इत्यादिना नारायणं प्रस्तुत्य **"पद्मकोशप्रतीकाशं"** इत्यादिना तध्दृदयपुण्डरीकं व्यपदिश्य **"तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः"** इत्यनेन परमेश्वरस्य तध्दृदयपुण्डरीकान्तर्वर्तित्वमुपदिश्य **"आदित्यो वा एष एतन्मण्डलं तपति"** इत्यनेन प्रभाकरमण्डलस्तुतिं कृत्वा **"य एषोन्तरादित्ये हिरण्मयः पुरुषः"** इत्यनेन रुद्रस्य परब्रह्मणः तन्मण्डलस्थितिं प्रसाध्य ततः पञ्चब्रह्ममन्त्रैरुपास्यस्य महेश्वरस्य सर्वेश्वरत्वादिधर्मान् दर्शयित्वा **"नमो हिरण्यबाहवे"** इत्यादिना पवनादिवन्मूर्तामूर्तत्वं [3]व्यपदिश्यते। तथा च **स्मृतिः**–

> **"नारायणेन यतिना पद्मगर्भो महामुनिः।**
> **ज्ञात्वा शिवैकविज्ञानं वसिष्ठायोपदिष्टवान्॥"** इति।

तथा **स्कान्दे** शिववचनम्–

> **"नारायणात्परो भक्तो मम नास्ति वरानने।**
> **भार्यात्वं वृषभत्वं च बाणत्वमगमत्पुरा॥"** इति।

[4]**अश्वत्थामानं** प्रति **शिववचनम्**–

> **"अहं यथा वराराध्यः कृष्णेना[5]क्लिष्टकर्मणा।**
> **तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते॥"** इति।

---

[1] नियम्य (ग A). [2] गुणविषयित्वेन (ग A). [3] व्याचक्षते (ग) [4] द्रोणपर्वणि इति (ज) कोशेऽधिकः पाठो दृश्यते। [5] क्लिष्टकर्मणा (ग A)

सौरसंहितायां च–

"शिवस्य परतत्त्वार्थं स्वयं ज्ञात्वा शिवस्तथा ।
उवाच विष्णवे विष्णुः पद्मगर्भाय प्रोक्तवान् ॥

चतुर्मुखो वसिष्ठाय वसिष्ठश्शक्तये तथा ।
पराशराय शक्तिश्च व्यासाय च पराशरः ॥"

इत्यादिना नारायण-परमेश्वरयोः उपासकोपास्यत्व-शिष्यत्व-गुरुत्वलक्षणं सम्यगुपदिश्यते । तस्माच्छिवोपासनया शिवभावमापन्नस्य नारायणस्य अनितरसाधारणदहरावच्छिन्नज्योतिर्लिङ्गानुसंधानसामर्थ्यलिङ्गेन "यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।" इति परमेश्वरनिष्ठव्यापकत्वादिधर्माणां "तत्त्वमसि श्वेतकेतो" "त्वं ब्रह्मासि" इत्यादिवन्नारायणपरत्वेन स्तुतिर्युक्ता । सर्वोपादानत्वात्सर्वान्तर्यामित्वाच्च सर्वात्मकत्वं सर्वशब्दवाच्यत्वं च परमेश्वरस्यैव समुचितम् । "देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन् को भवानिति, सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यारभ्य "यो वै रुद्रस्स भगवान् यश्च ब्रह्मा यश्च विष्णुर्यश्च महेश्वरः" इत्यादिना अथर्वशिरसि "स एव विष्णुः स प्राणः" इति कैवल्यश्रुतौ च तस्यैवान्तर्यामित्वनिर्देशात् ।

मुण्डक-माण्डूक्य-छान्दोग्य-कैवल्य-तैत्तिरीयादिषु परशिवस्य दहरोपास्यत्वकथनात्तस्यैव तत्समुचितमस्तु । पवित्रस्य परमेश्वरस्य अपवित्रवामहस्तस्थितिविरोधात्सर्वलिङ्गवाच्ये शरीरे लिङ्गधारणं न विधीयत इत्याशङ्कायामाह–

॥ ३८ ॥ स्मृतेश्च ॥ ६ ॥

"सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं" इति वाक्ये पाणिलिङ्गधृतिस्सर्वथा न व्यपदिश्यत इति चेन्न– कुतः ? स्मृतेश्च ।

"कृते तु मानवो धर्मस्त्रेतायां गौतमस्मृतिः ।
द्वापरे शंखलिखितौ कलौ पाराशरस्मृतिः ॥

इत्यादिस्मृतिनिर्दिष्टकृतादियुगचतुष्टयप्रसिद्धमन्वादिस्मृतिषु ब्राह्मणानां शिवलिङ्गधारणविधायक-स्मृतेश्च न देवतान्तरधारणोपासनं वैदिकानामङ्गीकर्तव्यमित्यर्थः । तथा हि **मनुस्मृतौ**–

"अक्षपादादयस्सर्वे [1]शक्तयः परया मुदा ।
धारयन्त्यळिकाग्रेषु शिवलिङ्गमहर्निशम् ॥" इति ।

तत्रैव **ध्यानयोगि**निरूपणे–

शिवध्यानपरो भूत्वा शिवलिङ्गाङ्गसंयुतः ।
शिवेतरपरित्यागी ध्यानयोगी स उच्यते ॥ इति ।

**गौतमस्मृतौ**–

"मुखे मन्त्रं हृदि ध्यानं मस्तके लिङ्गधारणम् ।
[2]रुद्राक्षं च तथा भस्म एतद्ब्राह्मणलक्षणम् ॥

अन्तर्धारयितुं लिङ्गं अशक्तश्शक्त एव वा ।
बाह्यन्तु धारयेल्लिङ्गं तद्रूपमिति निश्चयात् ॥ इति ।

**शंखस्मृतौ**–

"कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् ।
मानवश्शिवयोगेन शिवो भवति सर्वदा ॥

वामहस्तस्थितं लिङ्गं सावधानेन पूजयेत् ।
मस्तके हृदये कण्ठे धारयेत्सर्वदा द्विजः ॥" इति ।

---

[1] ऋषयः (क. झ). [2] शिखासूत्रं तथा भस्म एतद्ब्राह्मणलक्षणम् (ग. A ज).

## अथ लिङ्गाङ्गिनां सूतकनिराकरणम्–

पाराशरस्मृतौ–

काश्यां मृतानां जन्तूनां यतीनां लिङ्गधारिणाम् ।
ब्रह्मत्वमेव भवति प्रेतत्वं न हि विद्यते ॥

शैवलिङ्गार्चनं यस्य यस्य चाग्निपरिग्रहः ।
वानप्रस्थयतीनां च शरीरे नास्ति सूतकम् ॥

पूजयेद्यस्तु हस्तादौ शिवलिङ्गं शिवात्मकम् ।
तस्य हस्तस्थिता मुक्तिश्शङ्करस्य प्रसादतः ॥ इति ।

आनुशासनिकपर्वणि च–

किमाहुर्भरतश्रेष्ठ पात्रं विप्रास्सनातनम् ।
[1]अब्राह्मणं लिङ्गिनं च ब्राह्मणं चाप्यलिङ्गिनम् ॥ इति युधिष्ठिरप्रश्ने–

सद्वृत्तिमपि विज्ञाय लिङ्गिने चेतराय च ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥ इति भीष्मवचनम् ।

लैङ्गे–

वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च ।
ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम् ॥ इत्यारभ्य–

यजुरप्याह सर्वं वै लिङ्गं स्थापयतीति च ।
तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः ॥ इत्यादिश्रूयते ।

---

[1] लिङ्गिनं ब्राह्मणं चैव (ज ग, A).

अथ परशिवस्य ब्रह्मणः ऐक्यादिषट्स्थलेषु षड्लिङ्गात्मकत्वप्रतिपादनम् :–
सिद्धान्तागमे–

श्रुतिस्मृतिपुराणेषु वैदिकानां वरानने ।
लिङ्गधारणमाख्यातं सर्वसिद्धिप्रदायकम् ॥

चिच्छक्तिर्निधनाख्याता लयाधिष्ठानतत्त्वतः ।
तदङ्गत्वान्महेशस्य तत्पतित्वं विधीयते ॥

निधनाधिपतिः कालरुद्रो विश्वलयाधिपः ।
तस्यान्तकत्वं हंतृत्वं शिवस्यैव निरूप्यते ॥

तत्त्वानां महदादीनामूर्ध्वदेशप्रचारतः ।
तदोर्ध्वायेति वाक्येन प्रधानं परिगीयते ॥

ऊर्ध्वलिङ्गायेति वाक्ये सदाशिव इतीर्यते ।
कारणाङ्गं तथा प्रोक्तं हिरण्यायेति वाक्यतः ॥

हिरण्यलिङ्गवाक्येन भावलिङ्गं प्रचक्षते ।
सुवर्णायेति वाक्येन सूक्ष्मदेहः प्रबोध्यते ॥

सुवर्णलिङ्गवाक्येन प्राणलिङ्गं प्रचक्षते ।
नमो दिव्यायेति वाक्ये स्थूलदेहः प्रतीयते ॥

दिव्यलिङ्गायेति वाक्ये स्वेष्टलिङ्गं विधीयते ।
ऐक्यस्थलं तथा प्रोक्तं भवायेति पदेन हि ॥

भवलिङ्गायेति वाक्ये महालिङ्गं भवेत्तथा ।
नमश्शर्वायेति वाक्ये शरणस्थलमीरितम् ॥

प्रसादलिङ्गमाख्यातं शर्वलिङ्गपदे शिवे ।
प्राणलिङ्गिस्थलं प्रोक्तं शिवायेति पदेन हि ॥

शिवलिङ्गायेति वाक्ये चरलिङ्गं प्रदर्शितम् ।
नमो ज्वलायेति वाक्ये प्रसादस्थलमुच्यते ॥

ज्वललिङ्गायेति वाक्ये शिवलिङ्गं तथा स्मृतम् ।
नम आत्मायेति वाक्ये माहेश्वरपदं तथा ॥

आत्मलिङ्गायेति वाक्ये गुरुलिङ्गं तदुच्यते ।
भक्तस्थलं समाख्यातं परमायेति वाक्यतः ॥

आचारलिङ्गमाख्यातं परमलिङ्गपदेन वै ।
एतत्सोमस्य मित्रस्य मण्डलान्तरवर्तिनः ॥

सोमस्य पार्वतीशस्य लिङ्गं भवभयापहम् ।
सर्वेषु भक्तदेहेषु स्थाप्यं वै गुरुणा सदा ॥

पवित्राणां पवित्रत्वात्पवित्रमिति कथ्यते ।
तस्माद्धार्यं सदा लिङ्गं पाणिमन्त्रेति मन्त्रतः ॥

पाणौ लिङ्गं समासाद्य दीक्षाकाले गुरुश्शिवम् ।
मननात्पूजनाद्भक्तान् त्रायतीति निरुक्तितः ।
पाणिमन्त्रमिति प्रोक्तं तल्लिङ्गं ब्रह्म शाश्वतम् ॥

पञ्चब्रह्ममन्त्राणां षट्त्रिंशत्तत्त्वरूपत्वप्रतिपादनम्:—

षट्त्रिंशत्तत्त्वरूपत्वं तल्लिङ्गस्यैव सर्वदा ।
पञ्चब्रह्माभिधैर्मन्त्रैः प्रोच्यते परमार्थतः ॥

सद्योजातस्वरूपाय भूतत्त्वाय नमोऽस्तु ते।
सद्योजाताय शर्वाय जलतत्त्वाय ते नमः॥

भवे भवे महालिङ्गरूपिणे वह्निमूर्तये।
तथा नातिभवे वायुतत्त्वरूपाय ते नमः॥

नमो भवस्व मां व्योमरूपिणे शूलपाणये।
भवोद्भवाय सोमाय गन्धतत्त्वाय ते नमः॥

वामदेवाय रुद्राय रसतत्त्वाय ते नमः।
ज्येष्ठाय शिवरूपाय रूपतत्त्वाय ते नमः॥

श्रेष्ठाय हररूपाय स्पर्शतत्त्वाय ते नमः।
रुद्राय वामदेवाय शब्दतत्त्वाय ते नमः॥

नमः कालाय शर्वाय पायुतत्त्वात्मने नमः।
गुह्यतत्त्वाय कलविकरणाय नमोऽस्तु ते॥

पादतत्त्वाय बलविकरणाय नमोऽस्तु ते।
नमो बलाय शान्ताय पाणितत्त्वाय ते नमः॥

नमो वाक्तत्त्वरूपाय बलप्रमथनाय ते।
नासात्मने सर्वभूतदमनाय नमोऽस्तु ते॥

ममोन्मनाय भीमाय जिह्वातत्त्वात्मने नमः।
अघोरेभ्यो नमश्चास्तु चक्षुस्तत्त्वाय ते नमः॥

नमश्चास्त्वथ घोरेभ्यस्त्वक्तत्त्वाय नमोस्तु ते।
घोरघोरतरेभ्यस्तु श्रोत्रतत्त्वाय ते नमः॥

सर्वेभ्यश्च नमश्चाहंकारतत्त्वाय ते नमः ।
नमश्च सर्वशर्वेभ्यश्चित्ततत्त्वाय ते नमः ॥

नमस्ते रुद्ररूपेभ्यो बुद्धितत्त्वाय ते नमः ।
तत्पूरुषाय नमश्चास्तु मनस्तत्त्वाय ते नमः ॥

महादेवाय सोमाय जीवतत्त्वाय ते नमः ।
तन्नो रुद्राय भीमाय नमः प्रकृतिरूपिणे ॥

ईशानाय महेशाय रागतत्त्वाय ते नमः ।
सर्वविद्यास्वरूपाय विद्यातत्त्वात्मने नमः ॥

ईश्वराय नमश्चास्तु कलातत्त्वात्मने नमः ।
सर्वभूताधिपतये नमो नियतिरूपिणे ॥

ब्रह्माधिपतये तुभ्यं कालतत्त्वाय ते नमः ।
ब्रह्मणोऽधिपतये तुभ्यं मायातत्त्वाय ते नमः ॥

महेश्वरात्मने तुभ्यं ब्रह्मणे च नमो नमः ।
शिवरूपाय साम्बाय सदाशिव वपुर्धृते ॥

सदाशिवस्वरूपाय शक्तितत्त्वात्मने नमः ।
शिवतत्त्वात्मने तुभ्यमोङ्काराय नमो नमः ॥

षट्त्रिंशत्तत्त्वरूपस्य लिङ्गस्य परमात्मनः ।
सकलत्वं निष्कलत्वं प्रोक्तमुत्तरतः श्रुतेः ॥
तस्माल्लिङ्गं सदा धार्यं यावज्जीवाग्निहोत्रवत् ॥ इति ।

तस्मात्पाण्यादौ लिङ्गधारणं न विरुद्धम् ।

किञ्च– करणतया स्वतन्त्रविध्यन्तररहितस्य सौत्रामणीबृहस्पतिसवनादेरग्निचयनवाजपेया-यङ्गत्वेन तदुभयबलादुभयसिद्धिवत् अत्र नाराणानुवाके **"दहरं विपाप्मं"** इत्युपक्रम्य ज्योतिर्लिङ्गानुसन्धानरूपान्तर्लिङ्गधारणं प्रसाध्य **"निधनयतये नमः"** इत्यारभ्य **"पाणि-मन्त्रं पवित्रं"** इत्यन्तेन परब्रह्मणश्शिवस्य बाह्यधारणस्यापि व्यवस्थापनादुभयबलादुभय-सिद्धिर्घण्टाघोषः ।

**वामपाण्यधिकरणकलिंगपूजादेः श्रौतत्वप्रतिपादनम्ः–**

वामकरस्य निकृष्टत्वात्तत्र परमेश्वरस्य धारणपूजादिविधायकत्वं श्रौतानां न सम्भवतीति यदुक्तं तत्तुच्छम् । **"श्रौतशुण्ठत्वप्रसंङ्गात् । अञ्जलिना वा पिबेदखर्वेण पात्रेण"** इति श्रुतौ पाण्यवच्छिन्नाञ्जलिविधायकत्वेन ब्रह्मयज्ञपितृतर्पणाङ्गत्वेन नमस्काराङ्ग-त्वेन च वामहस्तस्य श्रौताङ्गत्वदर्शनान्नत्वपाविन्त्र्यप्रसङ्गः । तस्माच्छ्रुतिस्मृत्यादिसिद्धत्वा-त्पाणिलिङ्गधारणपूजादिकं श्रौतानां सिद्धमेव । अत एव **लैङ्गे**–

"लिङ्गस्य धारणादेव पशुत्वं विनिवार्यते ।
नान्यथा बहुयत्नेन जन्मकोटिशतैरपि ॥"

ये लिङ्गधारिणो लोके ते भक्ता इति कीर्तिताः ।
तदन्ये पशवः प्रोक्तास्तस्मात्पाशुपतं चरेत् ॥

ब्रह्मविष्ण्वादिदेवाश्च मुनयो गौतमादयः ।
लिङ्गस्य धारणादेव पशुत्वविनिवारिताः ॥

इत्युक्तम् ।

**अथ परमेश्वरस्य स्थूलसूक्ष्मकारणशरीराद्युपाधिवशादिष्टादिलिङ्गत्रयात्मना परिच्छिन्नत्व-निरूपणम् ः–**

सर्वगतस्य परमेश्वरस्याल्पप्रदेशविशेषकल्पनायोगादत्र दहराद्युपासनं देवतान्तरविषय-मित्याशंकायामाह–

## ॥ ३९ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अर्भकं अल्पं ओकः स्थानं यस्य तस्य भावस्तस्मात् अर्भकौकस्त्वात् । "**पद्म-कोशप्रतीकाशं**" इति, "**सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्**" इति च बाह्याभ्यन्तरेष्वल्पप्रदेशविशेषनिर्देशात्, तद्व्यपदेशाच्च । तस्य परिच्छिन्नत्वव्यपदेशाच्च । "**नीवारशूकवत्तन्वी पीताभास्वत्यणूपमा ।**" "**पाणिमन्त्रं पवित्रं**" इत्यादिना वह्निशिखान्तर्वर्तित्वेन पाण्यधिकरणकलिङ्गरूपत्वेन च परिच्छिन्नत्वव्यपदेशाच्च न सर्वगतः परमेश्वर इहोपदिश्यत इति चेन्न– एवं भक्तानुग्रहार्थं सूक्ष्मज्योतिर्लिङ्गात्मना गुहारूपदहर-पुण्डरीके पञ्चसूत्रकृतस्थूललिङ्गरूपेण हस्ततले च निचाय्यत्वात् स्थूलसूक्ष्मलिङ्गरूपेण ध्यातुं शक्यत्वात्, व्यापकस्य शिवस्य ब्रह्मणः ध्यानधारणाद्युपासनायाश्शक्यत्वात्, तत्र दृष्टान्त-माह– व्योमवच्च । यथा सर्वगतमपि व्योम जालिकासूचिकारन्ध्राद्यवच्छेदेन परिच्छिन्नं तथा परमेश्वरोऽपि स्थूलसूक्ष्मकारणशरीराद्युपाधिवशादिष्टादिलिङ्गत्रयात्मना परिच्छिन्नः; स्वतो व्यापक इत्यर्थः । नैतावता सर्वगतत्वहानिः तथा **श्रुत्यन्तरेष्वपि श्रूयते**–

"अङ्गुष्ठमात्रः पुरुषो ह्यङ्गुष्ठं च समाश्रितः ।
ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥"

"हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूपं
शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥

बालाग्रमात्रं हृदयस्य मध्ये
विश्वेदेवं जातवेदसं वरेण्यम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिश्शाश्वती नेतरेषाम् ॥

"अन्तर्बहिर्धारितं लिङ्गं परब्रह्माभिधेयं शाम्भवं"

"अन्तर्धारणशक्तो वा ह्यशक्तो वा द्विजोत्तमः ।
संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरस्थले ॥
धार्यं विप्रेण मुक्त्यर्थमेतं वेदविदो विदुः ॥"

"कण्ठे करे मस्तके सन्निवेश्य चोमे (?) तत्पाणिमन्त्रं पवित्रम्"

"अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥
अयं माताऽयं पिताऽयं जीवातुरागमत् ।
इदं तव प्रसर्पणं सुबन्धवेहि निरीहि ॥" इति ।

अतो व्यापकस्य परिच्छिन्नत्वं न विरुध्यते ।

### भस्मधारणस्य श्रौतत्वप्रतिपादनम्

ननु– परमेश्वरधारणोपासनाप्रथमाङ्गभस्मधारणस्य श्रुतिस्मृतिविध्यदर्शनान्न तस्य श्रौतत्वम् । शिष्टाचारमात्रविषयत्वे अन्धपरंपराप्रसङ्गः । प्रमाणपरिग्रहे नित्यम्? नैमित्तिकं काम्यम् वा?

**नाद्यः–** अकरणे प्रत्यवायादर्शनात् । न **द्वितीयः** निमित्ताश्रवणात् । न तृतीयः– **"पशुकामः पुत्रकामो भस्म धारयेत्"** इत्यधिकारिविशेषविध्यभावात् । अस्ति विधानमिति चेत्, कथं तस्य निषेध उपपद्येत? विहिते [1]निषेधासम्भवात् । विधिनिषेधयोस्तमःप्रकाशवत्परस्परविरुद्धस्वभावत्वात्तयोस्तुल्यबलत्वं न सम्भवति । स्मृतिसूत्रनिषेधवाक्यबाहुळ्यात्तन्निषेधस्यैवाधिकबलत्वं सिद्धम् । तथा हि– **सच्चरित्रदीक्षायां**

---

[1] विहिते विशेषासम्भवात् (ग A).

गौतमवचनम्– "भस्मतुषकपालामेध्यानि नाधितिष्ठेत्" इति । "भस्मतुषाधिष्ठाने पादस्य प्रक्षाळनं" इति आपस्तम्बसूत्रे–

"धूपाग्निं दीपतैलं च भस्म चास्थि रजस्वलाम् ।
एतानि ब्राह्मणस्स्पृष्ट्वा सवासा जलमाविशेत् ॥"

इति शंखस्मृतौ च निषेधदर्शनात् ।

"आग्नेयं भस्मना स्नानं वायव्यं गोरजःस्मृतम् ।" इति स्नानकरणतया निर्देशात्तस्य विधिरिति चेत् । स्नानमात्रे तस्य शुचित्वं, अन्यथा निषेधवाक्यानां दुर्निवारत्वात् । "अग्निः" इत्यादिना "भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्" इत्यन्तेन समन्त्रकभस्मधारणस्याथर्वशिरसि व्यपदेशात्सर्वथा विहितमेवेति चेत्, तदपि "व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय" इति तत्र विधीयमानपाशुपतव्रताङ्गत्वदर्शनान्न सार्वत्रिकभस्मधारणमुपदिश्यते तस्मान्न श्रौतपरिग्राह्यम्– इति चेत्–

अत्र ब्रूमः– ऋग्वेदे– "त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषम् । यद्देवानां त्रियायुषं तन्मे अस्तु त्रियायुषम्" इति । जाबालोपनिषदि "स एष भस्म ज्योतिः"

त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव हि ।
धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते" ॥ इति ।

श्वेताश्वतरोपनिषदि– "मानस्तोकेऽति मन्त्रेण मन्त्रितं भस्म धारयेत् ।
ऊर्ध्वपुण्ड्रं भवेत्साम मध्यपुण्ड्रं यजूंषि च ।
अधः पुण्ड्रमृचस्साक्षात्तस्मात्पुण्ड्रं त्रियायुषम् ॥" इति ।

"भूत्यै न प्रमदितव्यम्" इति– यजुर्वेदे– "विरजा विपाप्मा" इति नारायणानुवाके श्रूयते । "भूत्यै न प्रमदितव्यं" इत्यत्र न चैश्वर्यपरत्वम् । "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इति पूर्ववाक्ये

प्राकृतैश्वर्यलक्षणावबोधकधनाहरणविधानदर्शनाद्भूतिशब्दस्य भस्मपरत्वमेव । बोधायनसूत्रे— "अथातस्त्रिपुण्ड्रविधिं व्याख्यास्यामः, भूत्यै न प्रमदितव्यमिति हि विज्ञायते" इति ।

मानवपुराणे—

"भूत्यैवाग्निं समुत्थाय त्वया देहावकुण्ठनम् ।
ललाटे हृदि दोर्द्वन्द्वे त्रिपुण्ड्रस्य च धारणम् ॥
नैव प्रमदितव्यं च तथा लोकाक्षरस्मृतिः ॥"

इत्यादि श्रूयते । सामशाण्डिल्यशाखायां— "विभूतिं वामहस्तेन परिगृह्य दक्षिणहस्तेन रौद्रमुद्रया सम्यगाच्छाद्य सद्योजातादिपञ्चब्रह्ममन्त्रैः पञ्चवारमेकवारं वाऽभिमन्त्र्य, ईशान इति मस्तके, तत्पुरुषायेति मुखे, अघोरेभ्य इति हृदये, वामदेवायेति कट्यां, सद्योजातमिति पादयोः, प्रणवेन सर्वाङ्गमभिषिच्य" इत्यादिना तद्विधिर्बहुधा श्रूयते— सामभैत्रेयशाखायां च—

"मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ॥
भस्मच्छन्नो भस्मशय्या शयानो
रुद्राध्यायी मुच्यते सर्वपापैः" ॥

इति सुरापानादिमहापातकानामपि प्रायश्चित्तं भस्मधारणमेवेति प्रतिपादितम् ।

अथर्वशिरसि— "अग्निरिति भस्म" इत्यारभ्य "मन एतानि चक्षूंषि भस्म" इत्यन्तेन भस्मनस्सर्वात्मकत्वमुपदिश्य, ततः "अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्" इति । वृद्धशातातपे तदकरणे प्रत्यवायश्च श्रूयते—

"विभूतिर्यस्य नो फाले कण्ठे रुद्राक्षमालिका ।
मुखे पञ्चाक्षरो मन्त्रस्तं त्यजेदन्त्यजं यथा ॥" इति ।

मारुडस्मृतौ च—

त्रिपुण्ड्रं सुरविप्राणां वर्तुळं नृपवैश्ययोः ।
अर्धचन्द्रन्तु शूद्राणां अन्येषामूर्ध्वपुण्ड्रकम् ॥" इति ।

शातातपे—

"ऊर्ध्वपुण्ड्रं मृदा कुर्याल्लीलयापि कदाचन ।
तदाकारेण शस्त्रेण पीड्यते यमकिङ्करैः ॥

ऊर्ध्वपुण्ड्राङ्कुशाश्वत्थपत्रवर्तुळरूपधृत् ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः" ॥ इति ।

"अङ्कितश्शंखचक्राद्यैश्शरीरे देवतायुधैः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥"

इत्यादिना शंखचक्रोर्ध्वपुण्ड्रधारिणां ब्राह्मणाधमानां भस्मधारणमेव प्रायश्चित्तं, नान्यदिति गौतमस्मृतौ प्रतिपादितम् । जाबाले— "अथाचारं शृणुष्वावहितः, अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्, तत्रोपरि त्रिपुण्ड्रं धारयेद्ब्राह्मणानामयं धर्मः" इति । वृद्धशातातपे—

"त्रिपुण्ड्रेण विना सन्ध्या त्रिपुण्ड्रेण विना जपः ।
त्रिपुण्ड्रेण विना श्राद्धं राक्षसं परिकीर्तितम् ॥

त्रिपुण्ड्रं ब्राह्मणो विद्वान् मनसापि न लंघयेत् ।
श्रुत्या विधीयते यस्मात्तत्यागी पतितो भवेत् ॥ इति ।

तदेवं बहुश्रुतिस्मृतिपुराणागमसिद्धत्वेन भस्मधारणस्य श्रौतविधिविषयत्वं निष्प्रत्यूहम् ।

ननु "कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ" इत्यादिना भस्मधारणविधिर्बहुधा प्रतिपाद्य कालाग्निरुद्रोपनिषद उपसंहारे— "त्रिपुण्ड्रं भस्मना करोति

योविद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स समस्तपातकोपपातकेभ्यः पूतो भवति, स सर्वान् देवान् ध्यातो भवति स सर्वेषु तीर्थेषु स्नातो भवति" इत्यादिना भस्मधारणस्य फलव्यपदेशात्; अकरणे प्रत्यवायानुदेशाच्च न नित्यविधिविषयत्वम् इति चेन्न– "अग्निहोत्रं जुहुयात्स्वर्गकामः" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ नित्याग्निहोत्रज्योतिष्टोमादीनामपि फलव्यपदेशात् तेषामपि नित्यविधिविषयत्वं न स्यात्। अग्निहोत्रादिकर्मणां "एष देवानां योऽग्निमुद्वासयति" इत्यादावकरणे प्रत्यवायश्रवणान्नित्यविधिविषयत्वं निष्प्रत्यूहम् इति चेत्–

"येषां न जायते श्रद्धा श्रौते भस्मनि सर्वदा।
गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः॥" इति।

जाबाले तदकरणे प्रत्यवायदर्शनात्तद्वन्नित्यविधिविषयत्वं सिद्धम्। तस्मात् पूर्वोक्तस्मृतिसिद्धभस्मनिषेधो ह्यस्थिकपालाद्युपस्थितभस्मविषयः। "नाधितिष्ठेत्" इति निषेधस्य न भस्मना त्रिपुण्ड्रधारणनिषेधपरत्वम्। भस्मधारणस्य ऋग्यजुस्सामाथर्व-जाबाल-कालाग्निरुद्र-कात्यायनाथर्वशिरः प्रभृतिश्रुतिसिद्धत्वात् भस्मस्नानस्य मनुयाज्ञवल्क्यगौतमशातापादि-बहुस्मृतिविहितत्वात् स्कान्दलैङ्गशैवकूर्मादि बहुपुराणेतिहाससिद्धत्वाच्च श्रौतत्वं सिद्धम्।

### रुद्राक्षधारणस्य श्रौतत्वनिरूपणम्ः–

कात्यायनशाखायां– "तानि ह वा एतानि रुद्राक्षाणि यत्र यो वेदा धारयन्ति तस्माद्देवा धारयन्ति यस्तानि धारयन् गच्छंस्तिष्ठन् खादन् स्वपन्नुन्मिषन् सर्वाण्येनांसि तरति रुद्रो भूत्वा रुद्रवद्भवति" इति। बृहज्जाबाले सप्तमब्राह्मणे–

"रुद्राक्षाणां तु भद्राणां धारणे स्यान्महाबलम्।
धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम्॥" इति।

संवर्तस्मृतौ–

---

[1] श्रवणात् (ग A).

"स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने।
प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः॥

अरुद्राक्षधरो भूत्वा यत्किञ्चित्कर्म वैदिकम्।
कुर्याद्विप्रस्तु यो मोहान्नासावाप्नोति तत्फलम्॥" इति।

"पुरा त्रिपुरवाधायोन्मीलिताक्षोऽहं तेभ्यो जलबिन्दवो भूमौ पतितास्ते रुद्राक्षा जातास्तद्दर्शनस्पर्शनाभ्यां दशशतगोदानफलं भवति" तद्धारणाद्ब्रह्मघ्नगोघ्नस्वर्णस्तेयादिमहापातकोपपातकोभ्यः पूतो भवति" इति ऋगाम्नायान्तर्गतशाण्डिल्यशाखायां रुद्राक्षधारणविधानदर्शनात् स्कान्दलैङ्गपुराणेतिहासादिषु तन्माहात्म्यश्रवणाच्च श्रौतत्वं निश्चीयते।

## पादोदक-प्रसादस्वीकारस्य वैदिकत्वकथनम्

ननु– "अनर्हं मम नैवेद्यं निर्माल्यमुदकं तथा" इत्यादिना शिवपुराणेष्वपि शिवेन स्वकीयपादोदकप्रसादनिषेधकथनात् शिवपूजायाः प्रसादैकफलत्वेन तन्निषेधे पूजानिषेधोप्यर्थात्सिद्धः–

"विष्णोर्निवेदितं शुद्धं मुनिभिर्भोज्यमुच्यते।
निर्माल्यमितरेषान्तु भुक्त्वा चान्द्रायणं चरेत्॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम्।
सर्वपापप्रशमनं विष्णोः पादोदकं शुभम्॥

सालग्रामशिलावारि पापहारि विशेषतः।
आजन्मकृतपापानां प्रायश्चित्तं दिने दिने॥"

इत्यादिस्मृतिषु विष्णुपादोदकप्रसादग्रहणविधिदर्शनात् सर्वेषां वैदिकानां विष्णुपूजादिकमेव विधीयते इति चेत्–

---

[1] निवारम् (ग A)

**उच्यते**– अग्निहोत्रादिवच्छिवपूजाशिवपादोदक-शिवप्रसादानां वेदवेदान्तागमस्मृतिपुराणेतिहासादिभिर्विधीयमानत्वात् श्रौतत्वं श्रौतपरिग्राह्यत्वं च। तान्त्रिकविधिदर्शानाद्विष्णुपूजादिकं तान्त्रिकाधिकारिकमेव। शिवस्य ब्राह्मणत्वात् ब्रह्मणोपास्यत्वम्। तदुक्तं छान्दोग्ये प्रपदब्राह्मणे– **"त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणः, ब्राह्मणो वै ब्राह्मणमुपधावति"** इति। यजुर्वेदे– **"विश्वाधिको रुद्रो महर्षिः"** इति। **"ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्"** इति। श्रुत्यन्तरे च– **"एष नित्यो महिमा ब्राह्मणस्य तस्मात्सोमराजानो ब्राह्मणाः सोमोऽस्माकं ब्राह्मणानां राजा" "सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः"** इत्यादिश्रुतिषु महादेवस्य ब्राह्मणपर्यायत्व ब्राह्मणाधिपतित्व- व्यवस्थापनात्। ब्राह्मणानां ब्राह्मणैराश्रिततया महादेव एक एव उपधावनस्याराधनस्य योग्यः। कौर्मे–

**"अनुलोमविलोमानां वर्णानां ब्राह्मणो गुरुः।**
**विशेषाद्ब्राह्मणं रुद्रमीशानं शरणं व्रजेत्॥"** इति।

मनुस्मृतौ च–

**"ब्राह्मणानां शिवो देवः क्षत्रियाणान्तु माधवः।**
**वैश्यानान्तु तथा ब्रह्मा शूद्राणां सुरनायकः॥"** इति।

पाराशर्यपुराणे–

**"सर्वेषामेव [1]देवानां वरिष्ठः परमेश्वरः।**
**वरिष्ठयोर्हि सम्बन्धो युज्यते न परस्य तु।**
**ततो विप्रस्य सम्बन्धश्शिवेनैव हि युज्यते॥**

**सङ्कारास्सर्वदेवाश्च वृषलस्तु पुरन्दरः।**
**पितामहस्तु वैश्यस्स्यात् क्षत्रियः परमो हरिः॥**

---

[1] वर्णानां (ग १).

ब्राह्मणो भगवान् रुद्रस्सर्वेषामुत्तमोत्तमः ।
ब्रह्मभूतस्य रुद्रस्य ब्राह्मण्यं नैव हेतुजम् ॥

ब्राह्मणो वै सदा लोके ब्राह्मणन्तूपधावति ।
नेतरः क्षत्रियो वैश्यश्शूद्रोऽपि च न संङ्करः ॥

तस्मात् [1]वेदेन मार्गेण द्विजातो ब्राह्मणस्सदा ।
महाब्राह्मणमीशानमुपगच्छेन्नचेतरम् ॥

सर्वात्मभूतमात्मानं विरूपाक्षं द्विजोत्तमम् ।
यस्तु नोपैति साङ्कर्यं तस्यास्तीह न संशयः ॥ इति ।

श्रुतिरपि– "यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति" इति ।

स्कान्दे–

"[2]स्वदेवतां परित्यज्य येऽन्यदैवमुपासते ।
[3]ते पापण्डा इति ज्ञेयास्सर्वकर्मबहिष्कृताः ॥

नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ।
नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ॥" इति ।

धर्मशास्त्रे वेदपाठकस्य ब्राह्मणस्य रुद्रांशत्वमुक्तम् । तस्मान्मुमुक्षूणां वैदिकानां तत्पूजैव कर्तव्या । "निधनपतये नमः" इत्यादिश्रुतिस्मृतिपुराणसिद्धत्वाच्छिवलिङ्गस्यैव वैदिकत्वम्; तान्त्रिकप्रधानत्वाद्विष्णवात्मकसालग्रामादीनां तान्त्रिकत्वमेव । तल्लिङ्गपूजादिकमपि सर्ववेदसिद्धम् । ऋग्वेदे– "तव श्रिये मरुतो अर्चयन्त रुद्र यत्ते जनिम चारु चित्रं । पदं यद्विष्णोरुपमन्यधायि तेन पासि गुह्यं नाम गोनाम्" इति ।

---

[1] वैदिकमार्गेण (ग A). [2] स्वं देवं प त्य :य (ग A). [3] स पाषण्ड (ग A)

**अस्यार्थः**– हे रुद्र, चारु चित्रं– रत्नहेमरजतशिलाप्रवालादिबहुविधं जनिम– लिङ्गं यत् प्रादुर्भूतमित्यर्थः। मरुतो– देवा, ते– तव, श्रिये– ऐश्वर्याय, अर्चयन्त– अर्चयन्तीत्यर्थः, तेन ऐश्वर्यप्रदायकेन शिवलिङ्गेन उपमं– उप– समीपे मा– लक्ष्मीः यस्मिन् तत् उपमं, सर्वदानपायिलक्ष्मीकं विष्णोः पदं आधिपत्यं न्यधायि। गोनां– वेदानां, गुह्यं– रहस्यभूतं नाम अभिधानवान् त्वं पासि– रक्षसि।

एतस्योपबृंहणं पराशरपुराणे–

> रौद्रलिङ्गं महाविष्णुर्भक्त्या शुद्धशिलामयम्।
> चारुचित्रं समभ्यर्च्य लब्धवान् परमं पदम्॥
>
> सा च लक्ष्मीस्समाख्याता महाविष्णोऽस्तु वल्लभा।
> यस्य लिङ्गं समभ्यर्च्य संपूज्यं सर्वचेतनैः॥
>
> ब्रह्मा सर्वजगत्कर्ता यस्य लिङ्गार्चनेन वै॥ इति।

तथा यजुर्वेदे– "त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्" इति। श्रुत्यन्तरे– "अर्चत प्रार्चत प्रियमेधासो अर्चतार्चन्तु पुत्रका उत [1]पुनर्न धृष्ण्वर्चत अर्चतप्रार्चत" इत्यादिश्रुतिषु परमेश्वरस्याराध्यत्वं [2]देवानामाराधकत्वं च श्रूयते। अतश्शिवपूजाया नित्यविधिविषयत्वं सिद्धम्। पुरः त्रिपुराणि नाशयतीति [3]पुनर्न सदाशिव इत्यर्थः। तदकरणे प्रत्यवायश्च ऋग्वेदे श्रूयते– "अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया गृभ्णन्ति जिह्वया ससम्" इति। जने– जनेषु स्थितं जातावेकवचनं, परःपदं– उत्कृष्टं, रुद्रं– तत्रवचनव्यत्ययच्छान्दसः, अन्तः– दहराकाशे, मनीषया– बुद्धिपूर्वकमिच्छन्ति, ये उपासका भवन्ति ते जनाः, ससं– सस्यविकारं, अन्नं जिह्वया गृभ्णन्ति– भक्षयन्तीत्यर्थः। ये रुद्राराधनमन्तरेण भुञ्जते ते पुरीषमेव जिह्वया भक्षयन्तीति भावः। तदुक्तं वृद्धशातातपे–

---

[1] पुरन्नधृष्ण्वर्चत (ज). [2] देहिना (ग A). [3] पुरर्नः (ज).

"अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं शिवम् ।
पुरीषमेव गृभ्णन्ति जिह्वया ते न संशयः ॥
तस्माच्छिवं महादेवं पूजयेद्भक्तिसंयुतः ॥" इति ।

ननु- अन्तरिच्छन्तीत्यत्र मानसक्रियामात्रदर्शनात्कथं बाह्यपूजापरत्वं इति चेन्न । "यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति" इति । "मनस्येकं वचस्येकं कर्मण्येकं महात्मनां" इति च श्रुतिस्मृतिपुराणागमैः मनोवाक्कायकर्मभिः शिवपूजोपदेशात् । अन्तरिच्छन्तीतिवाक्येन बाह्यशिवपूजाप्यर्थात्सिद्धा । आपस्तम्बसूत्रे च-

"अधीमहे तस्माद्यज्ञोपवीत्येवाधीयीत यजामहे सौमनसाय रुद्रम्" इति । यज्ञोपवीतवत् परमशिवलिङ्गस्यव्यवस्थापनात् । तत्पूजादिकमप्यर्थात्सिद्धम् । सूतसंहितायाम्-

"वेदसिद्धं महादेवं साम्बं चन्द्रार्धशेखरम् ।
लिङ्गे दिनेदिने देवं शिवरुद्रादिसंज्ञिकम् ।
नार्चयिष्यन्ति मोहेन पाषण्डोपहताजनाः ॥"

इत्याद्यनेकश्रुतिस्मृतिपुराणेतिहासेषु प्रसिद्धत्वाच्छिवलिङ्गाराधनमेव श्रौतानां विधेयम् ।

"यो वैदिकमनादृत्य कर्म स्मार्तविधायकम् ।
मोहादाचरते किञ्चिन्न स पुण्येन लिप्यते ॥" इति ।

मनुस्मृत्या प्रात्यक्षिकश्रुतिविरुद्धम् । "आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरं" इत्यादिस्मृतिसिद्धपञ्चपूजादिकमश्रौतपरिग्राह्यम् । तदुक्तं पाराशर्ये-

विहाय साम्बमीशानं यजन्ते देवतान्तरम् ।
ते महाघोरनरके पतन्त्येव न संशयः ॥" इति ।

शिवगीतायाम्—

"तं त्यक्त्वा तादृशं देवं यस्सेवेतान्यदेवताम् ।
स वै भागीरथीं त्यक्त्वा कांक्षते मृगतृष्णिकाम् ॥" इति ।

शिवप्रसादस्वीकारस्य श्रौतत्वप्रतिपादनम्

शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य" इत्यादिना शिवलिङ्गपूजाया वैदिकत्वं सर्वपरिग्राह्यत्वं च श्रुतिसिद्धमेव । तस्माच्छिवप्रसादस्य तान्त्रिकनिषेधविधिसत्वेऽपि तत्स्वीकारो युक्तः श्रौतविधेर्बलीयस्त्वात् ।

किञ्च-- सौरसंहितायां भगवता व्यासेन जैमिनि संवादे स्पष्टमुक्तम्--

"अनर्हं मम निर्माल्यं पादाम्बु कुसुमं दळम् ।
इतीश्वरेण कथितमिति केचिन्महर्षयः ॥
वदन्ति यत्कथं स्वामिन् यथार्थं कथयस्व मे ॥

इति जैमिनिना पृष्टस्स प्राह--

देवदेवस्य वचसो विषयो यत्र जैमिने ।
ये वीरभद्रशपिताश्शिवभक्तिपराङ्मुखाः ॥
शम्भोरन्यत्रदेवेषु ये भक्ता ये न दीक्षिताः ।
येऽशुद्धकर्मिणश्शम्भोरन्यत्र मतबुद्धयः ॥
तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम् ।" इति ।

तत्रैवेश्वरवचनम्--

"मदीयभुक्तनिर्माल्यं पादाम्बु कुसुमं दळम् ।
धर्ममर्थं च कामं च मोक्षं च तनुते क्रमात् ॥

एकादशीसहस्रेषु देहशोषणकोटिषु ।
तत्पदं लभते देवि मम नैवेद्यसेवनात् ॥

इत्यादिना तत्रैव प्रसादस्वीकारविधिदर्शनाच्छिवभक्तानां शिवप्रसादस्वीकार्य एव निषेधस्याभक्तविषयत्वेन विधिनिषेधयोर्न विरोधः ।

कामिके—

शिवानुभूतमाखिलं निर्माल्यं परिभाष्यते ।
भोज्यं धार्यमिति द्वेधा षड्विधं च तदिष्यते ॥

देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ।
चण्डद्रव्यं बहिः क्षिप्तं निर्माल्यं षड्विधं स्मृतम् ॥

देवस्वं ग्रामभूम्यादि दासीदासचतुष्टयम् ।
हेमरौप्यकरत्नादि देवद्रव्यमिति स्मृतम् ॥

मनसा यच्छिवोद्दिष्टं द्रव्यं नैवेद्यमुच्यते ।
शिवोपभुक्तं स्रग्गन्धमन्नपानादिकं तथा ॥

निवेदितमिति प्रोक्तं सुरैर्वा मुनिभिर्नरैः ।
प्रतिष्ठितस्य लिङ्गस्य नैवेद्यं यत्समर्पितम् ॥

तच्चण्डद्रव्यमित्युक्तं पूर्वसन्ध्यासमर्पितम् ।
पत्रं पुष्पं बहिः क्षिप्तमिति षड्विधमुच्यते ॥

बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते ।
पुण्यं क्रतुशतस्योक्तं शम्भोर्निर्माल्यभक्षणात् ॥ इति ।

धर्मशास्त्रे च—

लिङ्गे स्वयंभवे बाणे रत्ने रजतनिर्मिते ।
सिद्धप्रतिष्ठिते लिङ्गे न चण्डाधिकृतिर्भवेत् ॥

शम्भोर्निर्माल्यकं शुद्धं भुञ्जीतैवाप्रमादतः ।
तथेतरस्य निर्माल्यं भुक्त्वा चान्द्रायणं चरेत् ॥

एक एवेति यो रुद्रस्सर्ववेदेषु गीयते ।
तस्माच्छिवैकभुक्तान्नं [1]सदा भुञ्जीत वैदिकः ॥ इति ।

ऋग्वेदे– "त्वादत्ते भी रुद्र शन्तमेभिस्तं हि मोआशीय भेषजेभिः । व्यस्मद्द्वेषो पितरं व्यँह" इत्यादि । अस्यार्थः– हे रुद्र त्वया आसीय भुक्त्वा दत्तेभिः– दत्तैः, शन्तमेभिः- सुखतमैः, भेषजेभिः- संसारभयभेषजैः तत्परिहारहेतुभिरिति योजना । योऽहं पितरं त्वामुपास्य, व्यस्मद्द्वेषः- विगताहंकारः, अतएव व्यँहः- निष्पापोऽभवम् । तं मामनुगृहाणेत्यर्थः । "शिवो मामेव पितरः" इति श्रुतेः ।

ऋग्वेदोपनिषदि–

"ईशावास्यमिदँ सर्वं यत्किंचजगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ इति ।

अस्यार्थः– इदं सर्वं स्थावरात्मकं जगत् जगत्यां यत्किञ्चित् जङ्गमात्मकं प्राणिजातं च सर्वं ईशावास्यं-ईशेन-शिवलिङ्गेन, आवास्यं-आवासयोग्यं सर्वत्र धारणयोग्यमित्यर्थः । "सर्वलिङ्गं स्थापयति पाणिमत्रं" इति श्रुतेः । तस्मात्तेन शिवलिङ्गेन त्यक्तेन भुक्तशेषप्रसादेन भुञ्जीथाः "भुजि-पालनाभ्यवहारयोः" इति धातोः, शिवभुक्तशेषप्रसाद एव भोक्तव्य इत्यर्थः । "मा गृधः कस्यस्विद्धनम्" इति परमेश्वरेतरदेवताप्रसाद-निषेधः श्रौतानां विधीयते । तथा यजुर्वेदे– "यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ" हे रुद्र तव प्रणीतो पूजायां पिता जगज्जन्मादिकरणं च यः मनुः मन्त्रात्मको भवान् यत् शं च सुखकरं योश्च तत्पृथक्त्वेन निरूपितं अपकादिकं प्रसादं आयजे सम्पादितवान् तत् पक्वमपक्वं च प्रसादं अस्याम त्वयोपभुक्त प्रसादं [2]भुञ्जीमहि ।

सामशाखागतजाबालोपनिषदि "रुद्रभुक्तं भुञ्जीत रुद्रपीतं पिबेद्रुद्राघ्रातं जिघ्रेद्रुद्रेणात्तमश्नीयात्तस्माद्ब्राह्मणाः प्रशान्तमनसो निर्माल्यमेव भक्षयन्ति निर्माल्यमेव निषेवन्ते" इति । तथा स्कान्दे–

[1] भुञ्जीयाद्वैदिकस्सदा (ग A).　　[2] भुञ्जीयाम (ग A).

"शिष्टाश्शान्ताश्च रुद्रेण भुक्तमेव हि भुञ्जते ।
घ्रातमेव हि जिघ्रन्ति पीतमेव पिबन्ति च ॥ इति ।

यजुर्वेदे प्रदेशान्तरे– "रुद्रेणान्नममृतं देवा वै भोक्तुकामा वेदाश्च कामयन्ते" रुद्रेण ईश्वरेण अन्नं अद्यत इत्यन्नं अमृतं प्रसादं कामयन्तीत्यर्थः, काण्वशाखायां– "अत्रिगुप्सातमश्नीयाद्यदि पाप्मानमश्नितम् । भुंक्ष्वामलं भुंक्ष्वाघं भुंक्ष्वाधो गच्छति" इति । त्रीणि तिस्रो गावो यस्य सः त्रिगुः त्रिलोचनः तेन प्सातं भक्षितं, "प्सा भक्षणे" अत्रिगुप्सातं अनीश्वरार्पितं; अश्नीयाद्यदि सः पापभुक् मलभुक् अधो गच्छति नरकं प्राप्नोतीत्यर्थः । तथा कौर्मे–

"असमर्प्यान्नकं शम्भोर्भुङ्क्ते खादति पाति च ।
श्वमांसमत्ति मूत्रं च भुङ्क्ते खादति पाति च ॥ इति ।

## अथ पादोदकविधिः

बोधायनशाखायां– "अथाऽतो महादेवपादोकविधिं व्याख्यास्यामः । श्रीरुद्रेण पवित्रेण शतधारेण सहस्रधारेणाच्छिद्रधारमनन्तमजममीष्टं शिवं पवित्रं भगवन्तं महादेवं स्थापयित्वा सर्वो वै रुद्रः इति द्वाभ्यामभिमन्त्र्य शिरसि संप्रोक्ष्य ऋत सत्यमिति प्राशयेत्" इति । तत्र जाबालः– "भगवतः पादौ प्रक्षाल्य शंखं प्रपूर्य गन्धपुष्पाक्षतैरभ्यर्च्य, चरुं निवेद्य, "इमं मे गङ्गे" इत्यभिमन्त्र्य, कद्रुद्रायेति शिरसि संमार्जनं कृत्वा ऋतं सत्यमिति निर्माल्यं पिबेत्" इति ।

वायवीयसंहितायाम्–

"शिवस्य पूजनं कार्यमग्निपूजात्वनन्तरम् ।
ततस्स्वयं तु भुञ्जीत शुद्धमन्नं शिवार्पितम् ॥" इति ।

शिवधर्मशास्त्रे–

"पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
शिवार्पितं विना भुङ्क्ते सद्यो भवति किल्बिषी ॥" इति ।

शातातपस्मृतौ—

"घोरमूर्तिर्भवेद्वह्निरघोरा लिङ्गमुच्यते ।
तस्माल्लिङ्गं पुराभ्यर्च्य ततो वह्निं समर्चयेत् ॥" इति ।

शैवपुराणे—

प्राणाग्निहोत्रं यः कुर्याच्छिवस्यैव प्रसादतः ।
अश्वमेधायुतं पुण्यं लभते नात्र संशयः ॥

कबळे कबळे कुर्वन् शङ्करस्यानुकीर्तनम् ।
सदोपवासी विज्ञेयो जीवन्मुक्तो न संशयः ॥

ब्राह्मणानां शिवो देव इति श्रुतिषु गीयते ।
तस्मात्प्राणाग्निहोत्रे च सोमयागादिकेष्वपि ॥

पार्वणे वैश्वदेवे च शिवाग्नौ करणे तथा ।
शिवप्रसादविधिना कुर्यात्कर्माणि नान्यथा ॥ इति ।

कौर्मे— "यः श्राद्धकाले शिवभुक्तशेषं
ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डेन तिलैर्विमिश्र-
माकल्पकोटिं पितरस्सुतृप्ताः ॥ इति ।

लैङ्गे— वसुरुद्रार्करूपेभ्यो मध्यपिण्डन्तु पुत्रदम् ।
वेदोक्तं रुद्रनिर्माल्यं किं पुनर्बहुभाषणैः ॥ इति ।

यजुर्वेदे— "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये । अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्" इत्यादिश्रुतिषु यागीय-पशुरूपादिकस्य सर्वस्य शिवप्रसादत्वेन निर्देशात्—

"आदत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
यदेह पुरुषो सदिति तं पत्नी प्राश्नाति ॥"

इत्यापस्तम्बसूत्रे ब्राह्मणोत्पत्तेः रुद्रपिण्डहेतुकत्वोपदेशाच ।

लैङ्गे— एष्टव्या बहवः पुत्राश्शिवमन्त्रानुसारिणः ।
समुद्धरन्ति ते गोत्रं रज्जुः कूपाद्घटं यथा ॥

इत्यादिश्रुतिस्मृतिपुराणागमादिसिद्धत्वाच्छिवप्रसादोदकसेवनं श्रौतानां विधेयम् । निषेधवाक्यानां चण्डद्रव्यपरत्वमशैवदीक्षितपरत्वं वेति शैवसिद्धान्तघण्टाघोषः । शिवप्रसादनिषेधकतान्त्रिकस्मृतिविधिमात्रस्वीकारे पूर्वोक्तवेदवेदान्तस्मृत्यागमपुराणेतिहासादीनां दत्तजलाञ्जलित्वं प्रसज्येत । अतो वेदबाह्यत्वप्रसङ्गात् पूर्वोक्तमेव समीचीनम् ।

किंच— भागवते चतुर्थस्कन्धे—

"तत्किं शिवाख्यमशिवं न विदुस्त्वदन्ये
ब्रह्मादयस्तमवकीर्य जटाश्मशाने ।
तन्माल्यभस्मनृकपाल्यवसत्पिशाचै-
र्यन्मूर्धभिर्दधति तच्चरणावसृष्टम् ॥" इति ।

रामायणे— "तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥" इति ।

विष्णुपुराणे—

शम्भोर्जटाकलापात्सा विनिष्क्रान्तास्थिशर्करान् ।
प्लावयित्वा दिवं निन्ये यान् पापान् सगरात्मजान् ॥

इत्यादि भागवतरामायणविष्णुपुराणेष्वपि शिवप्रसादस्वीकारविधेः भागवते एकादशस्कन्धे "अपि दीपावलोकं मे नोपयुज्यान्निवेदितं" इत्यादिवचनैर्विष्णुप्रसादनिषेधविधेश्च दर्शनात् शिवप्रसाद एव वैदिकपरिग्राह्यः ।

## विष्णुप्रसादस्वीकारस्याश्रौतत्वनिरूपणम्

ननु– भागवतचतुर्थस्कन्धे–

"त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां तरेमहि ॥"

इत्यादि वाक्येषु विष्णुप्रसादस्वीकारविधिरपि दृश्यते इति चेत्–

उच्यते– तद्विष्णुप्रसादस्वीकारे वैदिकविध्यभावादेतद्वचनेन "**उच्छिष्टभोजिनो-दासाः**" इति विशेषणेन च छिद्रोर्ध्वपुण्ड्रतप्तचक्राङ्कितादिकं पाञ्चरात्रादितान्त्रिकपरिग्राह्य-मेव । न वैदिकभोज्यम् । नोचेत्पूर्वोपबृंहितानां "**नोपयुज्यान्निवेदितं**" "**मा गृधः कस्यस्विद्धनम्**" इत्याद्येकादशस्कन्धेशावास्योपनिषद्वाक्यानां वैयर्थ्यप्रसङ्गस्यात् ।

स्कान्दे–

"निर्माल्यं शम्भुना भुक्तं गृण्हीयाद्वैदिकस्सदा ।
न तथा विष्णुभुक्तान्नं प्राणैः कण्ठगतैरपि ॥" इति ।

याज्ञवल्क्यस्मृतौ–

माधवान्नं न भोक्तव्यं सर्वथा वैदिकोत्तमैः ।
सदाशिवोपभुक्तान्नं भुञ्जीयादप्रमादतः ॥ इति ।

शाण्डिल्यस्मृतौ–

"न भोज्यं माधवस्यान्नं श्रौतानां मोक्षकांक्षिणाम् ।
शिवोपभुक्तं भोक्तव्यं श्रौतविध्येकशासनात् ॥" इति ।

शातातपे– विप्रो वा क्षत्रियो वापि वैश्यो वा मोहचेतसा ।
विष्णुगेहस्थितस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥

30

इत्यादिना विष्णुप्रसादनिषेधवाक्यानि श्रौतपराणि, शिवप्रसादनिषेधवचनानि श्रौतेतरपराणीति निर्णीयते। किञ्च—

**श्रुति स्मृति विरोधे तु श्रुतिरेव बलीयसी।**
**श्रुतिश्रुतिविरोधे तु विशेषविधिरुच्यते॥**

इति न्यायेन शिवप्रसादस्वीकारवचनबाहुल्यान्नान्यार्थो युक्तः। किं निषेधसत्त्वमात्रेण शिवनिर्माल्यस्योत्तमाधिकारिनिरूपकवचनानामप्रामाण्यम्? उत तेषामनन्यथासिद्धत्वेन?

**नाद्यः**—तथा सत्याश्रमभेदेन वर्णभेदेन युगभेदेन शाखाभेदेन देशकालपुरुषभेदेन वस्तुसामान्यविशेषभेदानुसारेण व्यवस्थितशास्त्रस्य परस्परवैरुध्यदर्शनात्सर्वं शास्त्रमप्रमाणं प्रसज्येत। आपस्तम्बादिकृतसंन्यासनिषेधकानां स्त्रीशूद्रवेदपाठनिषेधकानां सामान्यतोऽहिंसानिषेधकानां कृषिवाणिज्यगोरक्षादिनिषेधकानां एकहस्तकृततर्पणनिषेधकानां मातुलकन्यापरिणयनादिनिषेधकानां च वचनानां सद्भावात्; किञ्चिच्छास्त्रस्य प्रामाण्यमिति चेत् सर्ववैदिकबाह्यत्वप्रसङ्गः।

**नद्वितीयः**—उदिनुदितहोमस्थल इव न हि निन्दान्यायेन तत्तच्छ्रुतिस्मृत्यादिपठित शिवप्रसादनिषेधवचनानामग्निहोत्रादिकर्मस्तुतिपरत्वेनान्यथा सिद्धत्वात्। **तथाहि** अग्निहोत्रादिकर्मावश्यकतां प्रतिपादयद्भिः तत्स्तुतिं करिष्यद्भिः स्मृतिकारादिभिः तन्निन्दापुरस्सरं कर्माभिमुख्यं प्रतिपादितमेव। शिवप्रसादस्वीकारावश्यकतां निरूपयद्भिश्शिवादिभिः पुराणकारादिभिश्च शिवप्रसादातिरिक्तान्नभोजने श्वमांसादिवत्प्रायश्चित्तादिपुरस्सरं **भक्तिस्पर्शराहित्य** प्रतिपादनपुरस्सरं अलिङ्गधारणादि निन्दा कृता। तथाचोभयत्रापि निन्दायां तात्पर्यं नास्त्येव। किन्तु स्तुतावेव। तस्मादवश्यमेवं व्यवस्थाश्रयणीया। अन्यथा परस्परविरोधप्रसङ्गः। अतः पूर्वोक्त **नहि निन्दान्यायेन** निषेधवचनानां तत्र तात्पर्याभावात् पूर्वोक्तविशेषणविशिष्टाधिकारिभेदेन सर्वं शास्त्रं प्रमाणमेव।

**ननु**— तर्हि— बौद्धशास्त्रस्यापि प्रामाण्यप्रसङ्गः इति चेन्न। वेदबाह्यत्वात्। शिवपूजाशिवोपासना—शिवतत्त्वविचारशिवप्रसादोदकानां वेदवेदान्तप्रतिपादितत्वाच्छैवशास्त्रस्य वेदमयत्वम्। स्वाभिप्रेतार्थानुसारेण पाञ्चरात्रादयोऽपि श्रुत्यर्थवर्णनरूपत्वात्प्रातिभासिकवैदिका

इत्युच्यन्ते। तस्मात् बौद्धशास्त्रे वैलक्षण्यम्। वेदाप्रामाण्य बौद्धशास्त्रस्य सुरापानवन्निषेध एव तात्पर्यं प्रदोषकालविष्णुदर्शनवत्। ब्रह्माण्डपुराणे—

"न प्रदोषे हरिं पश्येत्त्रयोदश्यां विशेषतः।
यदि प्रमादात्पश्येत्तु द्वादशाब्दव्रतक्षयः॥

स्कान्दे च—

"न प्रदोषे हरिं पश्येद्यदि पश्येत्प्रमादतः।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम्॥ इति।

प्रदोषकालविष्णुदर्शनतदाराधनस्मरणपादोदकप्रसादादिकस्य श्रौतेतरपरिग्राह्यत्वं, अश्रौतत्वादित्यलं विस्तरेण।

**परमशिवस्य ब्रह्मणः भक्तानुग्रहार्थं शरीरपरिग्रहत्वकथनम्**

सर्वगतस्य परब्रह्मणः शिवस्य भक्तानुग्रहार्थं शरीरपरिग्रहे नारायणादिशारीरवत् सुखदुःखव्याप्तिस्स्यादित्याशंक्य निराकरोति—

## ४० सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

भक्तकल्पद्रुमस्य स्वेच्छास्वीकृतलीलादिव्यमङ्गळविग्रहस्य परमेश्वरस्य जीववत्सुखदुःखसम्भोगप्राप्तिरितिचेन्न। कुतः? वैशेष्यात्। "**अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं** इत्यत्र अणुत्व-महत्व-सर्वजीवान्तर्यामित्व-निष्कर्मत्वादिधर्माणां परमेश्वरस्यैवोपदेशात् "**यो वेदादौ स्वरः प्रोक्तो**" इत्यादौ प्रणवातीतत्व-सर्वहृदयपुण्डरीकोपास्यत्वोपदेशात्। "**ईशानस्सर्वविद्यानां**" इत्यादौ सर्वविद्याधिपतित्वाद्यसाधारणधर्मोपदेशात्, "**नमो हिरण्यबाहवे**" इत्यादिना ज्योतिर्मयशरीरत्वादिधर्माणामुपदेशाच्च जीव-परमेश्वरयोर्वैशेष्यम्। तस्माद्विशेषातिशयद्योतनाज्जीवपरमात्मनोश्चित्तिकत्वेऽपि विभुत्वाणुत्व-सर्वज्ञत्व-किंचिज्ज्ञत्व-नित्यतृप्तत्व-

संसारभोक्तृत्वादि-परस्परविरुद्धधर्मस्वभावत्वात्तयोस्स्वाभाविकभिन्नत्वं सिद्धम्। शरीराश्रयत्वेऽपि परमेश्वरस्य जीववत्सुखदुःखभोक्तृत्वं सर्वथापि न सम्भवति। **अग्निस्तम्भनविद्याश्रयस्य दाहभयाभाववत्**, वशीकृतमायस्य मायाकृतसुखदुःखभोक्तृत्वं कथं घटते?। अतस्सूत्रकारेण **वैशेष्य**पदमुपदिष्टम्। विशेष एव वैशेष्यम्, स्वार्थे अण्। "**द्वासुपर्णा**" इति मन्त्रान्तरे च जीवस्य संसारभोक्तृत्वं परमेश्वरस्य तदभावश्च निर्दिश्यत इत्युभयोः परस्परविलक्षणत्वं सुस्थमेव।

**किञ्च**– स्वेच्छागृहीतशरीरसम्बन्धित्वं कर्मजन्यशरीरसंम्बन्धित्वं च वैशेष्यम्। तस्मात् "**अणोरणीयान्**" इत्याद्युपक्रमादिषड्विधतात्पर्यलिङ्गेन नारायणोऽपनिषदोऽपि परशिवप्रतिपादकत्वादत्र नारायणस्योपासकत्वं परशिवस्योपास्यत्वं न निर्दिश्यते।

## जीव-ब्रह्मणोर्भेदाभेदत्वप्रदर्शनम्

ननु– "**सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयं**" "**तत्त्वमसि**" "**अहं ब्रह्मास्मि**" "**अयमात्मा ब्रह्म**" इत्यादौ जीवब्रह्मणोरेकत्वोपदेशाद्घटपटवत्परस्परविरुद्धस्वभावस्वाभाविकभेदः कथमुपदिश्यते तथापि जीवब्रह्मणोर्भेदाभेदत्वं स्वाभाविकभेदनिवृत्तिश्च न कदाचित्सम्भवति इति चेन्न– जीवब्रह्मणोर्भेदाभावे श्रुत्यनुभवयुक्तिविरोधप्रसङ्गात्। शास्त्रप्रवृत्तिरपि न स्यात्। "**द्वासुपर्णा सयुजा सखाया**" "**ज्ञाज्ञौ द्वावजावीशानीशौ**" इत्यादौ जीवब्रह्मणोर्भेदव्यपदेशात्। "**तत्त्वमसि**" इत्यादि महावाक्येषु तयोरेकत्वोपदेशादभेदो युक्तः। श्रुत्येकदेशप्रामाण्ये बौद्धादिवद्वेदबाह्यत्वप्रसंगात्तथा मानाभावात्परस्परश्रुतिविरोधाच्च। कुण्डलीभूतसर्पस्य दीर्घीभूतसर्पस्य च प्रभाकरप्रभायास्तन्मण्डलस्य च ह्रस्वत्व-दीर्घत्व-व्यापकत्व-परिच्छिन्नत्ववत् जीवेश्वरयोश्चित्स्वैकत्वेऽप्यणुत्वविभुत्वात्मकविरुद्धस्वभावत्वाद्भेदाभेदो ह्यविरुद्धः। तस्माज्जीवेश्वरयोस्संसारदशायां भेदो मोक्षदशायामभेदश्च भ्रमरकीटवदुपदिश्यते। तथा च श्रुतिः-- "**ब्रह्मविद्ब्रह्मैव भवति**"

> "**यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।**
> **तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥**"

इत्यादिना भेदाभेदं स्पष्टमुपदिशति। इदमेव सर्ववेदान्तसमन्वयात्सूत्रकारमतमिति घण्टाघोषः।

अत्तृत्वाधिकरणम् ॥ २ ॥

शिवस्य परब्रह्मण नारायणाद्युपास्यत्वतत्कारणत्व-तत्पोषकत्व-प्राकृतभोगनिरासकत्वं च प्रसाध्य तस्य सर्वसंहारकत्वमधिकरणान्तरेण दर्शयति--

## ॥ ४१ ॥ अत्ता चराचरग्रहणात् ॥ १ ॥

कटवल्लीषु दृश्यतेऽस्य विषयः--

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः।
मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः॥" इति।

अत्र मृत्यूपसेचनविशिष्टब्रह्मक्षत्राद्युपलक्षितसकलचराचरप्रपञ्चौदनसूचितः कश्चिदत्ता व्यपदिश्यते। स किमग्निः, प्रधानं, पृथिवी, जीवः परमेश्वरोवेति **सन्दिह्यते "अग्निरन्नादस्तपसोरन्यः" "अजामेकां लोहितशुक्लकृष्णां" "अन्नाध्येव खल्विमानि भूतानि जायन्ते, जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि" "तयोरन्यः पिप्पलं स्वाद्वत्ति" "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त ऊपासीत"** इति श्रुतिदर्शनात्। तस्माज्जायत इति तज्जं, तस्मिन् लीयत इति तल्लं, तस्मिन् अनिति चेष्टत इति तदनं, तज्जं च तल्लं च तदनं च तज्जलानि; अवयवलोपश्छान्दसः इति शब्दो हेतौ सृष्टिस्थितिलयाधिष्ठानं सर्वं चिदचिदात्मकं प्रपञ्चं ब्रह्मेति शान्त उपासीतेत्यर्थः।

पूर्वपक्षस्तु- **"अनश्नन्नन्यो अभिचाकशीति" "निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" "समस्तसाक्षिं तमसः परस्तात्"** इत्यादिश्रुतिशतेषु कृपासमुद्रस्य सर्वमङ्गळाश्रयस्य शिवस्य परब्रह्मणः संसारभोक्तृत्व-निष्कळत्व निष्क्रियत्व-तमःपरत्वादि धर्मोपदेशात्तस्य जगत्संहारकत्वं नोपपद्यते[1]। संहर्तृत्वं हि जीव-प्राणग्राहकत्वं, तस्य क्रोध एव मूलं; क्रोधस्य हि हेयगुणस्य मोह एवालवालं, तस्य तम एव प्रकृतिः

---

[1] नोपदिश्यते (ग. A).

तमसः अज्ञानावृतत्वात् अज्ञान-तमो-मोह-क्रोधादीनाममङ्गळगुणत्वान्नित्यशुद्धत्व-सर्वज्ञत्व-नित्यतृप्तत्वादि सर्वमंगळगुणाश्रयस्य[1] तस्य सर्वथा संहर्तृत्वं न सम्भवति। जीवसामान्यलक्षण-तामसत्वादिगुणानां तद्विलक्षणपरमेश्वरे कल्पने मानाभावात्। "निष्कळं" इत्यादि पूर्वोक्त-श्रुतिभङ्गप्रसङ्गाच्च शारीरात्मकविष्ण्वादीनामेव तदुक्तम्। तस्य विष्णोस्तमोगुणप्रधाननिद्राशील-त्व-नीलवर्णत्व-सर्वमोहकत्व-महामायात्मकपार्वत्यंशसंभूतत्वाच्च। स्कान्दादिपुराणकथासु मोहातिशयेन वृन्दाश्मशाने बहुकालविलुण्ठनादद्यापि कृष्णतुलसीरूपेण वृन्दावनस्थितत्वाच्च। अमङ्गळगुण-सम्पन्नानां तत्संहर्तृत्वं भवतु, तदुक्तं सूत-गीतासु--

"अस्ति रुद्रस्य विप्रेन्द्र अन्तस्सत्वं बहिस्तमः।
विष्णोरन्तस्तमस्सत्वं बहिरस्ति रजोगुणः॥

अन्तर्बहिश्च विप्रेन्द्र ह्यस्ति तस्य प्रजापतेः।
रजसा तमसाऽऽक्रान्तौ ब्रह्मनारायणौ खलु॥ इति।

शिवधर्मशास्त्रे--

"अन्तस्सत्त्वगुणोपेतो बहिस्तामससंयुतः।
शुद्धसात्त्विकसंयुक्तश्शङ्करो लोकशङ्करः॥

अन्तस्तामससंयुक्तो बहिस्सत्त्वगुणान्वितः।
शुद्धतामससंयुक्तो विष्णुस्साक्षाच्छ्रियः पतिः॥

बाह्याभ्यन्तरयोर्नित्यं ब्रह्मा राजससंयुतः।
त्रिमूर्त्यतीतस्सर्वज्ञश्शिवश्शुद्धो निरञ्जनः॥" इति।

"प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इत्यादिना विष्णोः प्रबलतमो वैशिष्ट्यं शिवस्य गुणत्रयातीतकारणकारणत्वं चोपदिश्यत इति सर्वथा तस्य जगत्संहर्तृत्वं न संभवतीति विष्ण्वादीनामेव तत् इति।

---

[1] गुणगणाश्रयस्य (ग १).

सिद्धान्तः—

अत्र ब्रूमः— "**अत्ता चराचरग्रहणात्**" अत्र अत्ता साक्षात्परशिव एव, कुतः? चराचरग्रहणात्, चराचरं चिदचिदात्मकं यत् जगत् तस्य अद्यत्वेन [1]ग्रहणात्, श्रवणादित्यर्थः। मृत्यूपसेचनत्वेन सर्वप्राणिमात्रस्य अद्यत्वेन प्रतीयमानत्वात् ब्रह्मक्षत्रग्रहण-मुपलक्षणार्थम्। जननमरणसंसारनिमग्नकिंचिज्ज्ञनारायणादिजीवानां चराचरप्रपञ्चसंहर्तृत्वासंभवात् अत्रात्ता परशिव एव। "**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**" "**निधनपतये नमः**" "**महाग्रासाय नमः**" "**यथोर्ण-नाभिस्सृजते गृण्हते च**" "**य इमा विश्वा भुवनानि जिह्वति**" "**यतो वा इमानि भूतानि जायन्ते**" इत्यादिश्रुतिशतेषु चराचरप्रपञ्चजन्मस्थितिलयकारणत्वं परमे-श्वरस्यैव दृश्यत इति न वन्ध्यादिदेवतानां तत्संभवति। "**अनश्नन्नन्यो अभिचाक-शीति**" इति श्रुतिः कर्मफलभोक्तृत्वनिषेधमात्रमेव निर्दिशति। ततो न विरोधः। "**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्**" इत्यादौ वशीकृतमायकत्वस्य, "**उमासहायं**" इत्यारभ्य "**तमसः परस्तात्**" इत्यन्तेन तमः परत्वस्य च निर्देशात् "**यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः**" इत्यादौ प्रळयेऽपि [2]तत्साक्षितया परिशेषत्वं च दृश्यते। "**न सन्न चासच्छिव एव केवलः**" इत्यनेन पशुपाशात्मकसदसतोर्न स्वरूपसत्ता निषिध्यते। "**अमूलमनाधारमिमाः प्रजाः प्रजायन्ते**" "**न कदाचिदनीदृशं जगत्**" इत्यादिश्रुत्या जगतोऽनादित्वव्यपदेशात्। तथा च स्मृतिः—

> **चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः।**
> **योगिवन्निरुपादानमर्थजातं प्रकाशयेत्॥** इति।

निरुपादानमित्यनेन जगदुभयकारणत्वमूर्णनाभिवत्तस्यैव सूचितम्। तस्मात्स्वात्मसंकुचितप्रपञ्च-त्वेन शिवः केवल इत्युपदिश्यते। तस्मात्तस्यैव सर्वसंहर्तृत्वमुचितम्—

पुनर्हेत्वन्तरमाह—

---

[1] प्रतीयमानत्वात् (ग A)　[2] तत्सापेक्षत्वं च (ग A)

## ४२. प्रकरणाच्च ॥ १० ॥

"**न जायते म्रियते वा विपश्चित्**" इत्याद्यनन्यसाधारणधर्मावच्छिन्न ब्रह्म प्रकरणात्– "**क इत्थावेद यत्र सः**" इति वाक्ये दुर्विज्ञानत्वं "**महान्तं विभुमात्मानं मत्वा धीरो न शोचति**" इत्यादिना परमेश्वरधर्मबाहुल्यदर्शनात्, प्रकृतपरित्यागाप्रकृतस्वीकारे मानाभावाच्च। परमेश्वरप्रकरणपठितसर्वसंहर्तृत्वं नेतरस्योपपद्यते। सृष्टिस्थितिकर्तृत्ववत्संहारकर्तृत्वानङ्गीकारे "**एक एव रुद्रो न द्वितीयाय तस्थे**" इत्यादिश्रुतिविरोधप्रसंगाच्च। ब्रह्मणो महिमातिशयभङ्गप्रसङ्गोऽपि स्यात्। "**यतो वा इमानि भूतानि जायन्ते**" इत्यादौ संहारस्यापि तदधीनत्वेनोपदेशात् न सन्देहकळंकप्रसङ्गः। तस्मादत्ता परशिव एवेति सिद्धम्।

इति द्वितीयं अत्तृत्वाधिकरणम्।

---

## गुहाधिकरणम् ॥ ३ ॥

एवं शिवस्य परब्रह्मणः सर्वसंहर्तृत्वं प्रसाध्य जीवब्रह्मणोर्बिम्बप्रतिबिम्बभाववादिमतमधिकरणान्तरेण निराकरोति—

## ॥ ४३ ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

[1]**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः"** इति **कठवल्लीषु** विद्यतेऽस्य **विषयः**— किमिह गुहां प्रविष्टौ बुद्धिजीवौ[2] निर्दिष्टौ ? किं वा जीवपरमेश्वराविति **सन्दिह्यते। पूर्वपक्षः— "अनश्नन्नन्यो अभिचाकशीति"** इति श्रुतौ परमेश्वरस्य भोक्तृत्वनिषेधात्। **"ऋतं पिबन्तौ"** इत्यत्र भोक्तृत्वव्यपदेशाद्बुद्धिजीवयोरेवात्र भोक्तृत्वमवगम्यते। चेतनत्वाज्जीवब्रह्मणोरेकत्वाच्छायातपवत्परस्परवैरुध्यं नास्ति। चिज्जडयोर्जीवबुध्योः परस्परविरुद्धस्वभावत्वेन तयोरेव सर्वभूतगुहाप्रविष्टत्वं समुचितम्। कार्यकारणभावस्य बुद्धिप्रधानत्वात्तद्भिन्नत्वेन शारीरो विधीयते।

ननु— **"ये यं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं"** इति श्रवणाद्बुद्धिर्जीवाविति पक्षैकस्वीकारो न युक्तः।

---

[1] अत्र 'ऋतं पिबन्तौ इति' इत्यारभ्य उत्तरत्र "प्रादेशमात्रसर्वभूतगुहाप्रविष्टत्वं परमेश्वरस्य न विरुध्यते। श्रुत्यन्तरे"- इत्यन्तं यावदयमधस्तनः पाठः 'ग A' कोशे दृश्यते यथा—

गुहां प्रविष्टौ शिवजीवौ वेदितव्यौ। कुतः ? आत्मानौ, हि यस्माद्वावप्यात्मानावित्यर्थः। ऋतं पिबन्तावित्ति कर्मफलभोगश्रवणादेकस्तावदात्मा द्वितीयोप्यात्मैवन्याय्यः। तत्र युक्तिमाह। तद्दर्शनादिति। सङ्ख्याश्रवणे तस्य समानप्रत्ययस्यैव लोके दर्शनादित्यर्थः। लोके हि अस्य गौर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते। नाश्वो न पुरुषः। एवं इहाप्यात्मतत्त्वसाम्याज्जीवपरमात्मानौ वेदितव्यौ। प्रादेशमात्रसर्वगुहाप्रविष्टत्वे परमेश्वरस्य न विरोधः। श्रुत्यन्तरे- "सर्वानन शिरोग्रीव" "अणोरणीयान्महतो महीयान्।" "एवं विदित्वा परमात्मरूप...पुराणम्", "यो वेद निहितं गुहायां परमे व्योमन्" इति श्रुति स्मृतिषु सर्वगतस्य परमेश्वरस्य न विरोधः।" इति। [2] शिवजीवौ (ग A).

" द्वासुपर्णा " इति मन्त्रे जीवेश्वरयोस्साहचर्येऽपि **" अनश्नन्नन्यो अभिचाकशीति "** इत्यत्र-कर्मफलभोक्तृत्वाभावश्रवणात्- इति चेत्- श्रुत्यन्तरे **" भूताश्च भव्याश्च यत्तत्पश्यसि " " अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । "** **" ऋतं पिबन्तौ "** इत्यनेन परमेश्वरस्यैव कर्मफलभोक्तृत्वोपदेशात् **" सुकृतस्य लोके "** इति प्रादेशिकत्वलिङ्गदर्शनाच्च। **" ऋतं पिबन्तौ "** इति द्विवचनेन तयोः पानमुपदिश्यते । अचेतनात्मकबुद्धेस्तदसंभवान्न बुद्धिक्षेत्रज्ञपक्षो युक्तः । इति चेन्न ।

**" छत्रिणो गच्छन्ति "** इति वाक्ये छत्र्यच्छत्रिमनुष्याणां छत्रित्वाभ्युपगमात्, तद्वदिहापि पिबदपिबन्तौ द्वौ **" पिबन्तौ "** इति निर्दिश्येते । सर्वगतेश्वरस्य एकदेश-वृत्तित्वं नोपपद्यते **" सुकृतस्य लोके "** इति च कर्मवीक्षणानतिक्रमणं प्रतिपादयति। **" न कर्मणा वर्धते नो कनीयान् "** इत्यत्र परमेश्वरस्य सुकृतदुष्कृतकर्मसाक्षित्वव्यप-देशादत्रबुद्धिजीवावेव प्रतिपाद्येते-- इति चेत्--

**सिद्धान्तः**–

**अत्रब्रूमः**– **" गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् "** गुहां प्रविष्टौ शिवजीवौ वेदितव्यौ; कुतः ? आत्मानौ हि ; हि-- यस्मात्, द्वावप्यात्मानावित्यर्थः **" ऋतं पिबन्तौ "** इति कर्मफलभोगश्रवणादेकस्तावदात्मा, द्वितीयोप्यात्मैव न्याय्यः । तत्र युक्तिमाह-तद्दर्शनात् इति । संख्याश्रवणे तत्र समानप्रत्ययस्यैव लोके दर्शनादित्यर्थः । लोके हि- **" अस्य गोर्द्वितीयोऽन्वेष्टव्यः "** इत्युक्ते, गौरेव द्वितीयोऽन्विष्यते नाश्वो न पुरुषः । एवमिहाप्यात्मत्वसाम्याज्जीवपरमात्मानौ वेदितव्यौ । प्रादेशमात्रसर्वभूतगुहाप्रविष्टत्वं परमेश्वरस्य न विरुध्यते । श्रुत्यन्तरे–

**" सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः ।**
**सर्वव्यापी स भगवांस्तस्मात्सर्वगतश्शिवः ॥ "**

**" अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः " " एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् " " गुहाहितं गह्वरेष्ठं पुराणं " " यो वेद निहितं गुहायां परमे व्योमन् " " आत्मानमन्विच्छ गुहां प्रविष्टं "** इत्यादिश्रुतिशतेषु सर्वगतस्य परमेश्वरस्य भक्तोपासनार्थं प्रादेशविशेषमात्रगुहाप्रविष्टत्वोपदेशान्न

विरोधः। सुकृतलोकप्रवर्तकत्वं च छत्रित्ववदेकदेशवर्तित्वेप्युभयोर्युक्तम्। छायातपवत्परस्परवैलक्षण्यं जीवेश्वरयोर्न विरुध्यते। आनन्दमयो ह्यानन्दभुक्– "**सत्यात्मप्राणारामं मन आनदं**" इत्यादि श्रुतिष्वात्मारामस्य मनोमात्रग्राह्यस्वरूपानन्दानुभवश्रवणात् "**अनश्नन्न्यो अभिचाकशीति**" इति वाक्ये कर्मफलभोक्तृत्वनिषेधोप्युपपद्यते[1]। तस्मात्तयोर्भोगसाम्येन भोक्तृविशेषात्प्रभुभृत्यन्यायेन भोज्यविशेषोऽपि युज्यते। यतः– "**नित्यो नित्यानां चेतनश्चेतनानां**" "**ज्ञा ज्ञौ द्वावजावीशनीशौ**" "**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।जुष्टं यदा पश्यत्यन्य मीशस्य महिमानमिति वीतशोकः**" इत्यादि श्रुतिषु परमेश्वरस्य नित्यमुक्तत्व-प्रज्ञातृत्व-सर्वपापप्रमोचकत्वादिधर्माणां, जीवस्य अनाद्यविद्याकृतमोहशोकबद्धत्वादिधर्माणां च दर्शनादुभयोर्वैलक्षण्यमुपपद्यते। तथापि जीवपरमेश्वरयोश्चित्त्वेनैकत्वात् तत्त्वमस्यादि श्रुतिष्वभेददर्शनाच्च। जीवपरमेश्वरौ गुहाप्रविष्टाविति गृह्येते–

"**येनेक्षते शृणोति**" इत्यादिवाक्येष्वन्तःकरणात्मक बुद्धिसाहचर्येण प्रज्ञातस्य परमेश्वरस्य ईक्षितृत्वादि धर्मव्यपदेशाद्गुहाशयत्वं बुद्धिपरमेश्वरयोरेवेत्याशंकायां हेत्वन्तरेण निराकरोति–

## ॥ ४४ ॥ विशेषणाच्च ॥ १२ ॥

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु।"
"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"
"**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति**"

इति रथि-रथरूपविवक्षया शिव-जीवयोर्विशेषणोपदेशात्, "**न जायते म्रियते वा विपश्चित्**" इत्यादौ बहुशरीरप्रवेशनिर्गमनव्यापाराव्यापारविशेषणात्, परमेश्वरस्वरूपज्ञानाज्जीवस्य

---

[1] उपचर्यते (ग A).

हर्षामर्षप्रमोचकत्व दर्शनाच्च गुहां प्रविष्टौ जीवपरमेश्वरावित्युच्येते। बिम्ब-प्रतिबिम्भयो-रेकत्रावस्थानाभावाच्छिव-जीवयोबिम्ब-प्रतिबिम्बभावपक्षो न युक्तः। पूर्वमेव गतार्थत्वान्न विस्तृतम्।

इति गुहाधिकरणम्।

## अन्तराधिकरणम् ॥ ४ ॥

### परमशिवस्य चक्षुर्मध्योपास्यत्वप्रतिपादनम्

सर्वगतस्य परमेश्वरस्य गुहाहितत्वमुपदिश्य तस्यैव प्रदेशान्तरमधिकरणान्तरेण दर्शयति—

## ४५. अन्तर उपपत्तेः ॥ १३ ॥

छान्दोग्ये श्रूयतेऽस्य **विषयः "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, एतदमृतमेतदभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छति"** इत्यादि। किमत्राक्ष्यन्तःपुरुषोऽयं छायापुरुषः? क्षेत्रज्ञो वा? हृषीकाधिष्ठाता वा? परमेश्वरो वा? इति **संशयः**। कुतः? **"छायात्मा पुरुषः प्रतिरूपः"** इति **"य एषोऽक्षिणि पुरुषो दृश्यते"** इति च तस्य प्रसिद्धत्वेन दृश्यमानत्वोपदेशात्। स हि चक्षुषा रूपं पश्यन् चक्षुषि सन्निहितो भवतीति अनेन क्षेत्रज्ञोऽपि लभ्यते। **"अमृतमभयमेतद्ब्रह्म"** इति वाक्यशेषेण परमेश्वरस्सूचितः। **"य एषोऽक्षिणि पुरुषो दृश्यते"** इति चक्षुरधिष्ठातृदेवतात्मकस्सूर्योऽपि दृश्यत इति।

**पूर्वपक्षस्तु—** क्षेत्रज्ञस्य शारीरस्य जगदनुभवे चक्षुरिन्द्रियप्रविष्टत्वदर्शनादात्मशब्दवाच्यत्वाच्चेतस्सम्बन्धात्स एवोपदिश्यते। **"रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः"** इति वाक्यदर्शनादादित्यो वा विधीयते। अमृतत्वादिलिङ्गानां लोचनाधिष्ठानदेवताविषये असम्भवात् प्रदेशविशेषप्रदर्शनान्नात्र परमेश्वर उपास्यः इति।

अत्र **ब्रूमः— "अन्तर उपपत्तेः"** अन्तरः अक्ष्यन्तर्गतः पुरुषः परमात्मैव। कुतः? उपपत्तेः। परशिवे ब्रह्मणि आत्मत्वामृतत्वाभयत्वादिधर्माणां व्यपदेशादिहाप्यक्षिस्थानपुरुषस्यापि तद्धर्मश्रवणान्नेतर इत्युपदिश्यते। **"प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" "शिवोऽद्भुतः" "ऋतगँ् सत्यं परं**

ब्रह्म" "एतस्य वा अमृतस्य नामधेयानि" इत्यादि तैत्तिरीय-माण्डूक्य-जाबालाद्युपनिषत्सु आत्मत्वामृतत्वाभयत्वपरब्रह्मत्वादिधर्माणां शिवस्यैवोपदेशात्। शिव-ब्रह्म-परमात्म-शब्दानां घट-कलश-कुम्भशब्दवत्पर्यायत्वेन वाच्यभेदाभावात्। मधुविद्या-शाण्डिल्यविद्योप-कोसलविद्या - पर्यङ्कविद्या - पञ्चाग्निविद्या-संवर्गविद्या-दहरविद्यादिद्वात्रिंशद्ब्रह्मविद्योपास्यत्वं शिवस्यैव विधीयते। "शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" "एक एव रुद्रो न द्वितीयाय तस्थे" "असंख्याताःसहस्राणि। स्मर्यते न च दृश्यते" "विश्वाधिको रुद्रो महर्षि" इत्यादिश्रुतिभिः सर्वाधिकत्व-सर्वोपास्यत्वादिधर्माणां तस्यैव निर्देशात् चक्षुरन्तःपुरुषो महादेव एव। "यद्यप्यस्मिन् सर्पिर्वोदकं वा सिंचन्ति-वर्त्मनी एव गच्छति" इति श्रवणादक्षिस्थानं निरस्तसमस्तदोषकळङ्कम्। "एतं संयद्वाम इत्याचक्षते, एतं ह सर्वाणि कामान्यभिसंयन्ति, सर्वाण्येनं वामान्यभि-संयन्ति य एवं वेद। एष उ एव वामनीरेष हि सर्वाणि वामानि नयति, सर्वाणि वामानि नयति, य एवं वेद। एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति, सर्वेषु लोकेषु भाति, य एवं वेद" इति संयद्वामत्वादिधर्माणां अस्मिन् व्यपदेशात्परमेश्वर एव चक्षुर्मध्योपास्य इत्युच्यते।

सर्वातीतस्य सर्वगतस्य शिवस्य कथमक्षिपुरुषत्वमित्याशंकायामाह–

## ४६. स्थानादिव्यपदेशाच्च ॥ १४ ॥

"यः पृथिव्यां तिष्ठन्" इत्यादिना क्षित्यादिशारीरकान्ताष्टमूर्तित्वं परमेश्वरस्य प्रसाध्य "यश्चक्षुषि तिष्ठंश्चक्षुषोन्तरो यं चक्षुर्न वेद यस्य चक्षुश्शरीरं यश्चक्षुरन्तरो यमयति एष त आत्मान्तर्याम्यमृतः" इति श्रुतौ चक्षुस्स्थानमपि निर्दिष्टं तस्मात् हृदयोपासनादिवदक्ष्युपासनमप्युपपन्नम्।

ननु उपासनायाः नामरूपगुणवैशिष्ट्यात् आकाशवत्सर्वगतस्य तदभावात्कथं तस्यो-पासनम्? इति चेन्न। "तस्योदिति नाम" "हिरण्यश्मश्रुः" इत्यादिना प्राकृतगुणातीतस्य महेश्वरस्य नामरूपगुणव्यपदेशात् अभ्युदयनिश्श्रेयसफलप्रदत्वेन सर्वशक्ति-

विशिष्टस्य शिवस्य ब्रह्मणो द्विविधं रूपं वक्तुं शक्यम्। **कैवल्ये "हृत्पुण्डरीकं विरजं विशुद्धं"** इत्यादिना हृदयपुण्डरीकं प्रपश्य।

**"तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्।**
**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्॥"**

इत्यादिना पवनादिवत् एकस्यैव निरवयवत्वसावयवत्वव्यपदेशात्।

**परमशिवस्य ब्रह्मणः शक्तिवैशिष्ट्यनिरूपणे श्रुतिप्रामाण्यं दर्शयति तैत्तिरीये च—**

**"ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।**
**ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः"**

ऋतं— मनोतीतं, सत्यं- वागतीतं, परं— गुणत्रयात्मकमूर्तित्रयात्परं, ब्रह्म इति वाक्येन परशिवस्य निष्कलत्वनिरवयवत्वादिकमुपदिश्य, पुरुषं- पुरि- पूर्वोक्तदहरपुण्डरीके शेत इति पुरुषं, परमशक्त्युमाशबळाकारतया कृष्णपिङ्गळं, कृशानुरेतस्कतया ऊर्ध्वरेतसं त्रिलोचनतया विरूपाक्षं, जगदुभयकारणतया विश्वरूपं, इत्यनेन सकलत्वसावयवत्वादिकं निरूपितम्। अतः "द्वे एते ब्रह्मणो रूपे" इत्यादिश्रुतिसिद्धमूर्तामूर्तत्वादिकं परब्रह्मणश्शिवस्यैव सिद्धम्। तस्मादङ्गाङ्गित्वेन तदुभयोपासनं विधेयम्। साधनं विना साध्यानिष्पत्तेस्तत्प्राप्त्यर्थं अक्षिस्थानप्रदेशाद्युपासनव्यपदेशो युक्तः।

पुनर्हेत्वन्तरमाह—

## ॥ ४७ ॥ सुखविशिष्टाभिधानादेव च ॥ १५ ॥

अक्ष्यन्तः पुरुषस्साक्षाच्छिव एव। कुतः? **"सुखविशिष्टाभिधानादेव च"**। एवकारेण नात्र संशयः कार्य इति सूच्यते। सुखविशिष्टं शिवाभिधानं ब्रह्म वाक्योपक्रमे श्रूयते। तस्यैवेहाभिधानादित्यर्थः। **"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म"** इत्युपक्रमे ब्रह्मणस्सुखविशिष्टत्वप्रदर्शनात्।

ननु– "**आचार्यस्तु ते गतिं वक्ता**" इति वाक्ये ब्रह्मप्रकरणत्वादर्शनात्। कं शब्दस्य वैषयिकसुखे रूढत्वात्, खशब्दस्याकाशे प्रसिद्धत्वात् वाक्येपक्रमे सुखविशिष्टत्वं ब्रह्मणः कथमुपपद्यते? इति चेत्–

उच्यते– "**प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म**" इति गार्हपत्याद्यग्नीनां वचनं श्रुत्वोपकोसल उवाच– "**विजानाम्यहं यत्प्राणो ब्रह्मेति कं च तु खं च न विजानामि**" इत्यत्रैतदुक्तम्। "**यद्वाव कं तदेव खं, यदेव खं तदेव कं**" इति वाक्ये कशब्दखशब्दयोर्विशेषण-विशेष्यभावेन व्यपदेशात् कशब्दोऽत्रानन्दे रूढः, तथाप्यधिष्ठित-प्रतीकत्वेन भूताकाशे ब्रह्मशब्दोऽभिहितः। कंशब्दस्सदा हृषीकविषयवैशेषिकसुखे रूढत्वेऽपि इतरेतरबोधकौ कशब्द खशब्दौ सुखात्मकब्रह्मण्येवावगम्येते। तत्र "**कं ब्रह्म खं ब्रह्म, खं ब्रह्म कं ब्रह्म**" इति द्विरावृत्या ब्रह्मशब्देन विधीयमान कशब्द-खशब्दयोर्विशेषणविशेष्यत्वव्यपदेशात्सुखगुणाधिष्ठानत्वमुपपद्यते। सुखस्यापि गुणस्य गुणिवत् ध्येयत्वम्। तस्मात् श्रुत्युपक्रमे सुखविशिष्टत्वेन ब्रह्म निर्दिष्टम्। गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुद्दिश्य "**ते होचुरुपकोसलैषा सोऽम्य तेऽस्मद्विद्याऽऽत्मविद्या च**" इत्युपसंहृत्य पूर्वत्र परमेश्वरपरत्वमुपदिशति। "**आचार्यस्तु ते गतिं वक्ता**" इति वाक्ये गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां निरस्यति। "**यथा पुष्करपलाश आपो न श्लिष्यते, एवमेवंविदि पापं कर्म न श्लिष्यते**" इति चक्षुर्व्यवहितपुरुष-विज्ञानेन निरस्तपापपङ्कत्वं निरूप्य तस्यैव ब्रह्मत्वं निर्दिशति। तस्मात्प्रकृतस्यैव परमेश्वरस्य अक्षिस्थानगतत्वं संयद्वामत्वादि गुणकत्वं च निरूप्य अर्चिरादिकान्तद्विदो गतिं वक्ष्यामीत्यारभ्य "**य एषोऽक्षिणि पुरुषो दृश्यते, एष त आत्मेति होवाच**" इत्य-संकुचितत्वेन व्यपदेशादक्ष्यन्तः पुरुषः परमेश्वर इति सिद्धम्।

इहोपदिष्टानां धर्माणां छायाब्रह्मण्यतिव्याप्तिमाशंक्य हेत्वन्तरेण निराकरोति–

## ॥ ४८ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्ष्यन्तरः पुरुषश्शिव एव, कुतः? श्रुतोपनिषत्कगत्यभिधानात्। श्रुता अभ्यस्ता उपनिषत्- ब्रह्मविद्या येन सः श्रुतोपनिषत्कः, तस्य या गतिः अर्चिरादिरूपा

तस्याः प्रकृतेः अभिधानादित्यर्थः । "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षं" "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायन्त एतद्वै प्राणानामायतनमेतदमृतमेतदभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" इति सैवेहाक्षिपुरुषविद्याभिधीयते । "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसंभवन्ति" इत्युपक्रम्य "आदित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयत्येष देव पथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्येवं परया गत्या अक्षिपुरुषस्य ब्रह्मत्वमुपदिश्यते ।

"अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्रप्रयातागच्छन्ति ब्रह्मब्रह्मविदो जनाः ॥"

इति स्मृतौ च ब्रह्मगतिर्गीयते । तस्मादक्ष्यन्तः पुरुषो न छायापुरुषः ।

अस्मिन् अर्थे हेत्वन्तरमाह—

## ४९ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

अत्र इतरच्छायापुरुषादिः अक्ष्यन्तःपुरुषो न भवति कुतः ? अनवस्थितेरसम्भवाच्च। अनवस्थितेः उपासकस्य सर्वत्राक्षिणिछायासंपादकपुरुषान्तरस्यासन्निधानात्, छायापुरुषे अमृतत्वादिगुणानामसम्भवाच्चेत्यर्थः ।

ननु— यदैव हि कश्चित्पुरुषश्चक्षुरासीदति, तदा चक्षुषि पुरुषच्छाया दृश्यते, अपगते सति तस्मिन्नदृश्यते च । "य एषोऽक्षिणि पुरुषः" इति श्रुतौ स्वचक्षुषि दृश्यमानपुरुषोपासनोपदेशात् तदुपासने तद्ग्रीवाप्रदेशं प्रवीक्ष्य कंचित्पुरुषं चक्षुस्समीपे पश्यति, तस्यात् छायापुरुषस्यैव चक्षुः प्रदेशविशेषे उपासनं इति चेन्न अमृतत्वादीनां

परमशिवधर्माणां छायापुरुषे *असंभवात्। चक्षुर्व्यवस्थित पुरुषधर्माणां सर्गस्थितिलयादीनां देवतात्मन्यसंम्भवाच्च। "**भीषास्माद्वातः पवते, भीषोदेति सूर्यः**" इत्यादौ सूर्यादीनां परमेश्वराधीनत्वमुपदिष्टम्। **महानारायणीये**– "**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्**" इति श्रुतावंगुष्ठमात्रचक्षुःस्थितत्वं परमेश्वरस्यैव व्यपदिश्यते। अतस्तदन्तरोपास्यत्वं नेतरस्य सर्वथा सम्भवति।

ननु– "**आपश्च पृथिवी चान्नमत्तारौ वह्निमरुतौ**" इत्यादौ वायोरपि भोक्तृत्वावगमात् प्राणाग्निहोत्रप्रकरणोपदिष्टाङ्गुष्ठमात्रप्रदेशोपास्यत्वं प्राणवायोरेव सम्भवति। तस्य पञ्चाहुतिभोक्तृत्वं चावगम्यते। तस्मान्न परमेश्वर एवात्रोपास्यः इति चेन्न–

प्राणवायोर्भोक्तृत्वावगमेऽपि सकलजगदीशितृत्वचराचरप्रपञ्चभोक्तृत्वादिधर्माणामचेतने प्राणवायावसम्भवात्। "**प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः**" इत्यादौ प्राणाधारत्वेन पञ्चाहुतिभोक्तृत्वमपि महेश्वराधीनमित्युपदेशादङ्गुष्ठमात्रप्रदेशविशेषोपास्यत्वमङ्गुष्ठमात्रत्वमपि च परमेश्वरस्य न विरुध्यते। एतत्पक्षे "**दृश्यते**" इति प्रसिद्धोपासनमाचार्यकटाक्षलभ्यं मुमुक्षुविषयं चेति ज्ञेयम्।

**इति चतुर्थं अन्तरधिकरणम्।**

---

* असम्भवात् इत्यनन्तरं 'ज' कोशे अयं अधिकः पाठः दृश्यते। शिवएवाक्ष्यन्तः पुरुषः। जीवस्य साधारण्येन कृत्स्न देहेन्द्रियादि संसर्ग द्योतनात् ; "द्वासुपर्णे"ति मन्त्रे जीवब्रह्मणोस्साहचर्यं श्रवणात्। रश्मिभिरेषोऽस्मिन् प्रतिष्ठित इति वाक्ये अधिदेवत्वात्मकसूर्यप्रदर्शनाच्च न परमेश्वरस्य चक्षुरन्तरोपासनमिति चेन्नैव। अत्र श्रुत्युपदिष्टसंयद्वामादि धर्माणां शिवस्यैव सम्भवात्।

## अन्तर्याम्यधिकरणम् ॥ ५ ॥

सर्वगतस्य शिवस्य परब्रह्मणः चक्षुरन्तरोपस्यत्वमुपदिश्य सर्वान्तरोपास्यत्वमधिकरणान्तरेण दर्शयति—

### ५०. अन्तर्याम्यधिदैवाधि[1]लोकादिषु तद्धर्मव्यपदेशात् ॥१८॥

अन्तर्यामिब्राह्मणे कथ्यतेऽस्य विषयः-- **"वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति"** इत्युपक्रम्य **"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मा ऽन्तर्याम्यमृतः"** इत्याद्यधिदैवतानन्तरं **"यस्सर्वेषु लोकेषु .... इत्यधिलोकं" "यस्सर्वेषु वेदेषु - - इत्यधिदैवतं" "यस्सर्वेषु यज्ञेषु - - इत्यधियज्ञं" "यस्सर्वेषु भूतेषु....इत्यधिभूतं" "यः प्राणेष्वित्यादि....य आत्मनि इत्यन्तमध्यात्मं च"** कश्चिदन्तरवस्थितो यमयिताऽन्तर्यामी श्रूयते ; स किमत्रपृथिव्याद्यधिष्ठातृदेवताविशेषोऽवगम्यते ? उताणिमादिविभूत्युपपन्नः कश्चिद्योगी ? अथ वा परमेश्वरः स किमर्थान्तरं ? उत नेति **सन्दिह्यते ।**

**"पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः"** इत्यादिना कार्य[2]कारणसंघातस्य देवतायां श्रुतत्वेन तस्याः नियन्तृत्वोपपत्तेः। अशरीरस्य शिवस्य नियन्तृत्वासम्भवात् देवतात्मपक्षो युक्तः। कस्यचित्सिद्धस्य योगिनो वा ह्यणिमाद्यष्टैश्वर्ययोगेन सर्वानुप्रविष्टत्वं यमयितृत्वं च स्यात्। स्वकर्मफलभोगाय सर्वभूतेन्द्रियानुप्रविष्टत्वं जीवस्य न विरुध्यते। महदहंकारादिरूपेण परिणामित्वात्प्रधानस्य व्यापकत्वं सिद्धम्। सर्वचेतनोपादानकारणतया विराट्पुरुषस्य सर्वभूतानुप्रवेशित्वमुचितम्। **"विश्वाधिको रुद्रः"**

---

[1] लोकादिपु (क) इति पाठः 'ज, झ' कोशयोः न दृश्यते  [2] करण (ज. झ).

इत्यादौ परमेश्वरस्य विश्वधिकत्वनिर्देशाद्विकारात्मकचेतनाचेतनरूपप्रपञ्चानुप्रविष्टत्वं सर्वथा न संभवति। तस्मात्तद्भिन्नस्यैव सर्वात्मकत्वसर्वनियन्तृत्वादिकमुपपन्नम्।

इति प्राप्त ब्रूमः- **"अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्"** योऽधिदैवादिष्वन्तर्यामी व्यपदिश्यते स परमशिव एव कुतः? तद्धर्मव्यपदेशात्। तस्य परमेश्वरस्य पृथिव्याद्यधिदेवताभिन्नत्व स्थूलसूक्ष्मप्रपञ्चानुप्रवेशित्वनियन्तृत्वकारणत्वामृतत्वादिधर्माणां व्यपदेशात् उपदेशादित्यर्थः।

ननु- निर्विकारस्य ब्रह्मणो यमयितृत्वाद्यसम्भवात् निर्गुणब्रह्माध्यस्तमिथ्याभूतप्रधानसत्वगुणप्रतिबिम्बितेश्वरस्यैव सर्वनियन्तृत्वादिकं इति चेन्न। **"एष त आत्माऽन्तर्याम्यमृतः"** इति वाक्ये कालत्रयाबाध्यस्य अमृतशब्धाभिधेयस्य शिवस्यैव नियन्तृत्वादिधर्मनिर्देशात्। मिथ्याभूतस्य सर्वनियामकत्वासम्भवात्। लोके प्रतिबिम्बस्य कर्तृत्वादर्शनाच्च प्रतिबिम्बितेश्वरस्य सर्वनियन्तृत्वादिकं नोपपद्यये। तस्मात् शिवस्यैव सर्वान्तर्यामित्वसर्वनियन्तृत्वादिकं सिद्धम्।

ननु- नियामकत्वादिधर्मानवच्छिन्नस्य परमेश्वरादन्यस्यैव परब्रह्मत्वं किं न स्यात्? इति चेन्न। अनवस्थादोषप्रसङ्गात्। तत्सत्वे प्रमाणाभावात्। तेन लोकस्य प्रयोजनाभावाच्च। गुणशून्यस्य ब्रह्मत्वाङ्गीकारे पाषाणादिवज्जडत्वापत्तेः। तस्मात्तस्यैव सगुणत्वं निर्गुणत्वं च। शक्तिसंकोचकाले निर्गुणत्वम्। तद्विकासकाले सगुणत्वम्। अतस्सर्वजगदुभयकारणत्वसर्वात्मकत्वसर्वप्रविष्टत्व सर्वनियामकत्वादिकं महादेवस्य महेश्वरस्यैवोपपन्नम्। तथा श्रुत्यन्तरे- **"यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु" "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्, सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु"** इति तैत्तिरीये। **अथर्वशिरसि च- 'देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन्, को भवानिति, सोऽब्रवीत् अहमेकः प्रथममासं, वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्तस्सोन्तरादन्तरं प्राविशत्"** इत्यादिना शिवस्य परब्रह्मणस्सर्वान्तर्यामित्वादिधर्माणां दर्शनान्नान्यस्य परब्रह्मत्व सर्वान्तर्यामित्वसर्वात्मत्वादिकं सर्वथा सम्भवति। अन्यथा प्रकरणविरोधोऽपि स्यात्। व्योमवत्परिपूर्णस्य महेश्वरस्य विश्वाधि-

कत्वं विश्वानुप्रविष्टत्वमप्यविरुद्धम् । "**अन्तर्याम्यमृतः**" इति शिव एवामृतशब्देन निर्दिश्यते । "**एतानि ह वा अमृतस्य नामधेयानि**" इति जाबालेश्रवणात् तत्र प्रतिपर्यायममृतशब्दप्रयोगो ह्यभ्यासः । **अथर्वशिरसि**– "**यो वै रुद्रस्स भगवान् यश्च ब्रह्मा**" इत्यादिना सर्वात्मकत्वप्रसाधने अनन्तदिव्यमङ्गळगुणरत्नाकरे शिवे पुनः पुनर्भगवच्छब्दप्रयोगवत् जाबाले भूयोभूयः परमशिवे अमृतशब्दप्रयोगाभ्यासो रूढ्यर्थे निर्दिष्टः ।

अध्यस्तस्य मिथ्याभूतस्य प्रधानस्य सर्वान्तर्यामित्वमुपपन्नमित्याशंकायां तन्मतं निराकरोति ।

### महेश्वरस्यैव सर्वान्तर्यामित्व निरूपणम्

## ५१. न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तं– गुणत्रयसमष्ट्यात्मकं प्रधानम् । तत् सत्त्वगुणप्रतिफलितं च नान्तर्यामिशब्दवाच्यं भवितुमर्हति । कस्मात्? अतद्धर्माभिलापात् । "**अदृष्टो द्रष्टा अश्रुतश्श्रोता अमतो मन्ता अविज्ञातो विज्ञाता**" इति वाक्यशेषदर्शनादात्मत्वद्रष्टृत्वादिधर्मासम्भवादित्यर्थः । तच्छब्देन प्रधानमुच्यते न तत् अतत्, प्रधानभिन्नः परमशिवः तस्यैव ये धर्माः अमृतत्वादयः तेषमभिलापात् अभिधानादित्यर्थः प्रधानधर्माणामभिलापाभावात्सांख्याद्वैतकल्पितं प्रधानं नान्तर्यामीति भावः ।

ननु– "**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः**" इति स्मृतौ । "**अजामेकां**" इत्यादिश्रुतै च प्रधानस्य सर्वप्रपञ्चकारणत्वोपदेशात् अयस्कान्तसूचीन्यायेन ब्रह्मसत्तावशात्तत्कारणत्वान्तर्यामित्वादिकं तस्यैवोपपद्यते इति चेन्न ।

"**सोऽकामयत, बहुस्यां प्रजायेयेति, तत्सृष्ट्वा तदेवानुप्राविशत्**" इत्यादौ परब्रह्मणश्शिवस्य प्रधाननिरपेक्षतया जगज्जन्मादिहेतुत्वश्रवणात्, "**मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं**" "**क्षरं प्रधानममृताक्षरं हरः क्षरात्मनावीशते देव एकः**" "**प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः**" इत्यादौ च परमेश्वरस्य प्रधानजीवनियामकत्वनिर्देशाच्च । तत्प्रतिबिंबितेश्वरस्यापि नान्तर्यामित्वम् । प्रतिफलितस्य जडत्वादळीकत्वाच्च नीरूपयोर्ब्रह्मप्रधानयोर्बिम्बप्रतिबिम्बभावकल्पनाशास्त्रं गगनभित्तिचित्रवदविचारमनोरमम् । तस्मादद्वयवादिमतमद्वयवादिनतमेव । तथा च **स्मृतिः**–

अनाद्यविद्यया बद्धं ब्रह्मतत्कालकारणम् ।
स्वाविद्यया संसरति मुक्तिः कल्पितवाक्यतः ॥

एवं प्रतारणं शास्त्रं सर्वमाहात्म्यनाशकम् ।
उपेक्ष्यं शिवभक्तैस्तु श्रुतिस्मृतिविरोधतः ॥

कलापगादयं मुख्यः फलं वै मुख्यतस्तमः ।
ज्ञाननाशित्वसिध्यर्थं तदेव हि निरूपितम् ॥

तदन्यथैव संसिद्धं विद्याविद्यानिरूपणे ।
अयस्कान्तस्य पक्षे तु तत्कर्तृत्वं तदीरितम् ॥

तदैक्षतेति श्रुतिभिर्मुख्यकर्तृत्वदर्शनात् ।
तत्सान्निध्यात्प्रधानस्य कर्तृत्वं नोपपद्यते ॥

ऐन्द्रजालिकपक्षेऽपि मतान्तरमिदं ध्रुवम् ।
नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित् ॥

वाचारम्भणवाक्यानि तदनन्यत्वबोधनात् ।
न मिथ्यात्वाय कल्पन्ते जगतश्शिवरूपतः ॥

ज्ञानार्थमर्थवादश्चेज्जगत्सृष्ट्यादिरूपिणी ।(?)
अनङ्गीकरणाद्युक्तं विधिमाहात्म्ययोर्न तत् ॥

अपवादार्थमिति चेदारोपो वस्तुतो न हि ।
दृढप्रतीतिसिध्यर्थमिति चेत्तन्न युज्यते ॥

मुख्यार्थबाधकं नास्ति कार्यदर्शनतश्श्रुतेः ।
ऐन्द्रजालिकपक्षे तु कर्तृत्वं ब्रह्मणि स्थितम् ॥

मायादीनां च कर्तृत्वं श्रुतिसूत्रैर्न बोध्यते ।
अकर्तृत्वं च यत्तस्य माहात्म्यज्ञापनाय वै ॥

विरुद्धमर्थबोधाय न युक्तेः कस्य कारणम् ?
मायिकत्वं पुराणेषु मोहार्थमुपपद्यते ॥

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कार्यहेतुकम् ॥

अखण्डाद्वैतभाने तु सर्वं शिवमयं जगत् ।
ज्ञानाद्विकल्पबुद्धिस्तु लीयते न स्वरूपतः ॥

भिन्नत्वं नैव युञ्जीत शिवोपादानतः क्वचित् ।
भेदाभेदमते लोके सर्वश्रुतिसमन्वयात् ।

तदेव वैदिकं प्रोक्तमिति वेदान्तडिण्डिमः ।" इति ।

अतस्सर्वान्तर्यामी महेश्वर इति राद्धान्तः ।

जीवस्य चेतनत्वाद्द्रष्टृत्वादिधर्माणां तस्यैवोपपत्तिमाशंक्य परिहरति–

## ५२. शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

अत्रापि नेत्यनुवर्तते । शारीरश्च जीवोऽपि नान्तर्यामीत्याचक्षते । कुतः ? उभयेऽपि हि भेदेनैनमधीयते । उभयेऽपि हि **काण्वा माध्यन्दिनाश्च** एनं क्षेत्रज्ञं अन्तर्यामिभिन्नतया अधीयते । "**यो विज्ञाने तिष्ठन्**" इति **काण्वाः**, "**यः आत्मनि निष्ठन्**" इति माध्यन्दिनाः विज्ञानात्मशब्दयोर्जीवपर्यायत्वात् । जीवादन्यः परमशिव एवान्तर्यामीत्युपदिश्यते । तस्माज्जीवविराट्पुरुषप्रधानादीनामन्तर्यामित्वं न घटत इति सिद्धम् ।

ननु– "**नान्योतोऽस्ति द्रष्टा**" **इति श्रुतेः** परमेश्वरादन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चात्मानं निरस्यति । तस्माद्द्रष्टृत्वं शरीरे नोपपद्यते । इतिचेन्न ।

"**द्वासुपर्णा**" इति मन्त्रे जीवब्रह्मणोस्साहचर्यव्यपदेशात् । "**नान्योतोऽस्ति द्रष्टा**" इति श्रुतावधिष्ठात्रन्तरनिषेधो युज्यते । "**यत्र हि द्वैतमिव भवति**" इत्यनेन जीवब्रह्मणोरादौ संसारदशायां भेदः "**यत्रत्वस्य सर्वमात्म्यैवाभूत्तत्केन कं पश्येत् केन कं वदेत्**" इत्यनेन मोक्षदशायां सर्वस्य शिवात्मकत्वज्ञानात्संसारप्रतिषेधोऽवगम्यते । तस्माज्जीवब्रह्मणोर्भेदाभेदो युक्तः । तस्मात्सर्वनियामकः सर्वान्तर्यामी परमेश्वर एक एवोच्यते

इति पञ्चमं अन्तर्याम्यधिकरणम् ।

---

## अदृश्यत्वाधिकरणम् ॥ ६ ॥

### अथ परमेश्वरस्य सर्वाधिकत्वव्यवस्थापनम्

जीवादीनां ब्रह्मत्वस्वप्रवर्तकत्वधारणाय परमशिवस्य सर्वान्तर्यामित्वं प्रसाध्य तस्यैव सर्वाधिकत्वव्यवस्थापनार्थं अदृश्यत्वादिगुणकत्वमधिकरणान्तरेण दर्शयति–

## ५३. अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

**आथर्वणे** दृश्यतेऽस्य **विषयः**। **"अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः"** इत्यादि। किमत्रादृश्यत्वादि गुणको भूतयोनिः? शारीरः? प्रकृतिः? परशिवो वा इति **संशयः**– **"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्"** इत्यादौ प्रधानस्य गुणत्रयात्मकस्य बहुप्रजाजनकत्वेन भूतयोनित्वोपपत्तेः योनिशब्दस्य निमित्तवाचकत्वाद्भूतयोनिर्विज्ञानात्मा स्यात्। चिद्रूपस्य निष्कळङ्कस्य परमशिवस्य पृथिव्यादिरूपेण मृदादिवत्परिणामित्वं न सम्भवति। **"यथोर्णनाभिस्सृजते"** इति श्रुतौ चेतनोर्णनाभावचेतनतन्तुचक्रनिर्माणोपसंहारदर्शनाच्चिद्रूपस्य चेतनाचेतनप्रपञ्चकारणत्वमुपपद्यत इति चेन्न। न हि केवलचेतनोर्णनाभेस्तन्तुपटहेतुत्वं तच्छरीरस्यैव तदुपादानकारणत्वदर्शनात्। तथा पुरुषशरीरस्यैव लोमनखादिहेतुत्वम्। तस्मादिह्यादृश्यत्वादिधर्माः प्रधाने युज्यन्ते। **"यस्सर्वज्ञस्सर्ववित्"** इत्यादिवाक्यशेषे परमशिवधर्मबाहुल्यद्योतनात्कथं प्रकृतेर्भूतयोनित्वं? इति चेत्–

**अभिधीयते**। **"अथ परा यया तदक्षरमधिगम्यते, "यत्तदद्रेश्यम्"** इत्यादावक्षरशब्देनादृश्यत्वादि धर्मावच्छिन्नं प्रधनं श्रावयित्वा **"अक्षरात्परतः परः"** इत्यत्र योक्षरात्परश्श्रुतः स सर्वज्ञस्सर्वविच्च भविष्यति। तस्मादक्षरशब्दवाच्यं प्रधानं भूतयोनिः इति प्राप्ते–

**ब्रूमः**– अत्रादृश्यत्वादिगुणको भूतयोनिर्महेश्वर एव, कुतः? धर्मोक्तेः। **"यः सर्वज्ञस्सर्ववित्"** इत्यादि परमेश्वरधर्मबाहुल्यवचनादित्यर्थः। न प्रधानस्याक्षरशब्दवाच्यत्वं

जगत्कारणत्वं चोपदिश्यते । "**यथोर्णनाभिस्सृजते गृह्णते च । यथा पृथिव्यामोषधयस्सम्भवन्ति, यथा सतः पुरुषात्केशलोमानि तथा क्षरात्संभवतीह विश्वम्**" इत्युपक्रान्तस्य जगत्कारणस्यैव "**यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते**" इत्यत्र प्रत्यभिज्ञायमानत्वादचेतनप्रधाने सर्वज्ञत्वादिधर्माणामसंभवात् । "**अक्षरात्परतः परः**" इत्यनेन प्रकरणाद्भूतयोनेरक्षरात्परो न कश्चिदुपदिश्यते । "**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां**" इति प्रकृतस्याक्षरस्य भूतयोनित्वव्यपदेशात् । श्रुत्यन्तरेऽपि– "**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं, ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्**" इत्यादिना शिवस्यैव भूतयोनित्वादिधर्मोपदेशाद्भूतयोनिर्नेतरः ।

किञ्च– "**द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च**" इति वाक्ये ऋग्वेदादिलक्षणामपरां विद्यां निर्दिश्य "**अथ परा यया तदक्षरमधिगम्यते**" इत्यादिना परविद्याविषयत्वं ब्रह्मणः परमशिवस्योपदिश्यते । तयोरुभयोर्विद्ययोः परापरविभागत्वेन अभ्युदयनिश्श्रेयसफलकत्वं निर्दिश्यते । "**तिस्रश्च विद्याः प्रतिज्ञायेरन्**" इत्यादिना भूतयोनित्वं परमेश्वरस्यैव प्रसाधितम् । (द्वे ये तु विद्ये इह वेदितव्ये निर्दिष्टे) "**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति**" इत्यादावेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा । परमशिवब्रह्मण्येवोपपद्यते । जडप्रधाने तत्प्रतिज्ञाऽसम्भवात् ।

किञ्च– "**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह**" इति प्राधान्येन ब्रह्मविद्यामुपक्रम्य परापरविभागेन परां विद्यामक्षराधिगमनीं प्रदर्श्य तस्याः ब्रह्मविद्यात्वं निर्दिशति । अपरा हि ऋग्वेदादि लक्षणा कर्मविद्या ब्रह्मविद्योपक्रममुपदिशति। ब्रह्मविद्या प्रशंसायै– "**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरा मृत्युं ते पुनरेवापि यन्ति**" इत्येवमादिना निन्दां कृत्वा, ततो विरक्तस्य परविद्याधिकारित्वम् । "**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**" इत्यादिनोपदिशति । तस्माददृश्यत्वादिगुणको भूतयोनिर्महेश्वर इति सिद्धम् ।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ५४. विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

अत्रापि भूतयोनिश्शिव एव, नेतरौ प्रकृतिजीवौ ; कुतः ? विशेषणभेदव्यपदेशाभ्यां च । विशेषणं च भेदव्यपदेशश्च ताभ्यामित्यर्थः

**" दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः ॥ "**

इत्यादिना विशेषणमुपदिश्यते । दिव्यत्वादिधर्माणां परमेश्वरादन्ययोर्जीवप्रधानयोरसम्भवात् । भेदव्यपदेशोऽपि— **" अक्षरात्परतः परः "** इति अक्षरमव्याकृतं पाशरूपं तस्मात्सर्वस्माद्विकारात्परं तस्मात्परतः पर इति पाशपरमेश्वरयोर्भेदेन व्यपदेशः । तस्मान्नेतरौ भूतयोनिः । अथवा अक्षरात्पर इति जीवात्परः परशिवो वा स्यात् । **' परतः परम ;'** इति वैलक्षण्येन व्यपदेशात् परमेश्वर एवात्रावगम्यते ।

पुनर्हेत्वन्तरमाह--

## ५५. रूपोपन्यासाच्च ॥ २३ ॥

अत्रापि भूतयोनिश्शिव एव । कुतः ? रूपोपन्यासाच्च । रूपं-- अवयवात्मकं शरीरं, तस्योपन्यासादित्यर्थः । **" अक्षरात्परतः परः "** इत्यनेन शिवस्य परब्रह्मणः जीवप्रधानवैलक्षण्यमुपदिश्य ततः-- **" एतस्माज्जायते प्राणः "** इति प्राणादिसर्वकारणत्वं परमेश्वरस्य प्रदर्श्य, **" अग्निर्मूर्धा चक्षुषीचन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदा। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा "** इत्यादिना तस्यैव विश्वरूपत्वं दर्शयति । जीवप्रधानयोस्सर्वकारणत्वसर्वान्तर्यामित्वादिधर्माणामसंभवात् रूपोपन्सासो न सम्भवति ।

नन्वदृश्यत्वादिगुणकस्य परमेश्वरस्य कथं रूपोपन्यास इति चेन्न । प्रकरणात् **" एष "** इति च प्रकृताकर्षणात् **" एतस्माज्जायते प्राणः " " एष सर्वभूतान्तरात्मा "** इति श्रुतिर्भूतयोनिपरत्वमेवोपदिशति पवनादिवन्मूर्तामूर्तत्वं तस्य स्वाभाविकमेव । किंच

"**एतस्माज्जायते प्राणः**" इत्यादिना प्राणादिपृथिव्यन्तकारणत्वं पूर्वत्रोपदिश्य "**तस्मादग्निस्समिधो यस्य सूर्यः**" इत्येवमादि "**अतश्च सर्वा ओषधयो रसाश्च**" इत्येवमन्तं समिदादिकारणत्वं निर्दिश्य "पुरुषएवेदं विश्वं कर्म" इत्यादिना भूतयोनेस्सर्वात्मकत्वमुपदिशति । "**हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीं द्यामुते मां कस्मै देवाय हविषा विधेम**" इति श्रुतौ त्रिजगच्छरीरस्य महादेवस्य "**समवर्तताग्रे**" इति पदेन अजातत्वं निर्दिष्टं, प्राणस्वरूपेण सर्वभूतान्तस्थितत्वात् । "**पुरुष एवेदं विश्वं कर्म**" इत्येवमादि सर्वरूपोपन्यासः परमशिवप्रतिपत्तिहेतुरिति राद्धान्तः । तस्माद्भूतयोनिः अक्षरशब्दवाच्यः परमेश्वर एव ।

इति षष्ठं अदृश्यत्वाधिकरणम् ।

---

## वैश्वानराधिकरणम् ॥ ७ ॥

*विश्वाधिकस्य महेश्वरस्य विश्वकारणत्वं विश्वाधिकत्वादिकं निर्दिश्य तस्यैव जाठराग्निरूपेण सर्वोपास्यत्वमधिकरणान्तरेण दर्शयति—

## ५६. वैश्वानरस्साधारणशब्दविशेषात् ॥ २४ ॥

छान्दोग्यो पठ्यतेऽस्य विषयः— "को न आत्मा किं ब्रह्मेति" "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि" इत्यारभ्य आकाशादित्यादीनां गुणयोगं एकैकोपासनतिरस्कारेण च मूर्धादिभावमुपन्यस्य आचक्षते— "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः, चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य पचन आस्यमाहवनीयः" इत्यादि। किमिह वैश्वानरशब्देन जाठराग्निर्भूताग्निस्तदभिमानिदेवता परमेश्वरो वेति बह्व्यो विप्रतिपत्तयः संदृश्यन्ते। "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैषघोषो भवति यमेतत्कर्णावपिधाय श्रुणोति स यदोत्क्रमिष्यन् भवति नैनं घोषगँ शृणोति" इत्यादिना भूताग्निर्व्यपदिश्यते। तत्साधारणशब्दप्रयोगश्रवणात्। "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इत्यादावग्निदेवता दृश्यते। "वैश्वानरस्य सुमतौ स्याम, राजा हि कं भुवनानामभिश्रीः" इत्यादिस्तुतैरैश्वर्यावगततद्देवतायां प्रयोगसम्भवात्।

किञ्च— "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इत्यादाविष्टिदेवतात्वेन फलदातृत्वश्रवणात् आत्मशब्दवैशेष्यात्। उपक्रमे च 'को न आत्मा किं ब्रह्म"

---

* "विश्वाधिकस्य" इत्यारभ्य "दर्शयती" त्यन्तं अवतारिकेयं "क" कोशे न दृश्यते।

इत्यात्मशब्दश्रवणात् । आत्मशब्देन वैश्वानरो ह्युपदिश्यते । वैश्वानरसन्निधानेन तद्भोक्तृत्वदर्शनाज्जीवात्माप्युपदिश्यते । वैश्वानरशब्दस्य भूताग्नौ रूढत्वात् प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते " इति वाक्ये प्रादेशमात्रपरिच्छिन्नप्रदेशविशेषव्यवस्थापनात्सर्वव्यापकस्य परब्रह्मणश्शिवस्य सर्वथा न वैश्वानरशब्दवाच्यत्वं इति चेत्–

[1]वक्ष्यामः– **"वैश्वानरस्साधारणशब्दविशेषात्"** अत्र वैश्वानरस्साक्षान्महेश्वर एव कस्मात् ? साधारणशब्दविशेषात् । साधारणशब्दानां मध्ये विशेषशब्दात् । उपक्रमे **"को न आत्मा किं ब्रह्मेति" "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि"** इत्यादिषु परमशिवासाधरणब्रह्मशब्दप्रयोगात् । भूताग्न्यादीनां तदसम्भवाद्वैश्वानरस्साक्षाच्छिवः ।

किञ्च[2]– आत्मशब्दस्तु जीवब्रह्मणोः वैश्वानरशब्दश्च जाठरादीनां त्रयाणां साधारणः । तथापि विशेषो दृश्यते । **"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः"** इत्यादि वाक्यैरात्मवैश्वानरशब्दयोः परमेश्वरपरत्वं प्रतिपाद्यते । परब्रह्मणश्शिवस्यैवात्र द्युमूर्धत्वादिधर्माणां सम्भवात् । **"सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति"** इत्यादौ सर्वव्यापकस्य परमेश्वरस्य सर्वलोकाश्रयफलभोक्तृत्वस्य युक्तत्वात् । **"एवं ह्यस्य सर्वे पाप्मानः [3]प्रदूयन्ते"** इत्यादौ सर्वपापप्रणाशकत्वं परमेश्वरस्यैव समुचितमिति । उपक्रमोपसंहारादौ ब्रह्मधर्मबाहुल्यान्नेतरो वैश्वानर इति सिद्धम् ।

अस्मिन्नर्थे हेत्वन्तरं दर्शयति–

## ५७. स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

इहापि परमशिव एव वैश्वानर इत्युच्यते । **"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ"** इति । **"अग्निरास्यं द्यौर्मूर्धा"** इत्यादिषु यतः परमेश्वरस्य सर्वात्मकत्वं स्मर्यते, ततो वैश्वानरो न परमेश्वराद्भिन्नः **"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुते-**

---

[1] ब्रूमः (ग A). [2] उत (ग A). [3] प्रमायन्ते (ग A).

जाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य पचन आस्यमाहवनीयः" इत्यादौ वैश्वनरशब्दस्य परमशिवपरत्वेन व्यवस्थापनात्।

"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशश्शोत्रं तस्मै लोकात्मने नमः॥"

इति स्मृतिरपि परमेश्वरपरत्वमुपदिशति। स्मर्यमाणं स्मृत्युक्तं रूपमनुमानं गमकं स्यात्। इति शब्दो हेत्वर्थः यस्मादेवं गमकं, तस्माद्वैश्वानरः परमेश्वर इति निर्णीयते।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## ५८. शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

ननु— वैश्वानरो न परमेश्वरः, कुतः ? शब्दादिभ्योन्तः प्रतिष्ठानाच्च। शब्दस्तावत् वैश्वानरशब्दो न परमेश्वरपरः। [1]जाठराग्नौ मुख्यत्वात्। आदिशब्दात् "हृदयं गार्हपत्यः" इत्यग्नित्रयं सूचितम्। "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं" इत्यादिना प्राणाहुत्याधारता संकीर्तनं च गृह्यते। एतेभ्यो हेतुभ्यो जाठर एव वैश्वानरः। [2]किञ्च— अन्तः प्रतिष्ठानात्। "पुरुषोन्तः प्रतिष्ठितं वेद" इति वैश्वानरस्यान्तः प्रतिष्ठितत्त्वश्रवणात्। इदं च जाठरे सम्भवति।

इति चेन्न— तथा जाठराग्न्ययवच्छिन्ने महेश्वरे दृष्ट्युपदेशात् ध्यानोपदेशात्। असम्भवात्। द्युमूर्धत्वादिधर्माणां केवलजाठराग्नावसम्भवादित्यर्थः। पुरुषमपि चैनमधीयते वाजसनेयिनः एनं वैश्वानरं पुरुषमधीयते पुरुषं वदन्ति। "स एषोऽग्निर्वैश्वानरो यत्पुरुषः सयो ह वैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेन्तः प्रतिष्ठितं वेद" इति परमेश्वरस्य सर्वात्मकत्वात्पुरुषविधत्वं पुरुषेन्तःप्रष्ठितत्वं च सर्वमुपपद्यते।

---

[1] जाठरादौ (ग A). [2] उत (ग A).

केचित्– "**पुरुषविधमभिधीयते**" इति पाठेऽप्ययमेवार्थः सूचितः। जाठरस्य पुरुषविधत्वं न संभवति। सर्वात्मकत्वात्परमशिवस्य भक्तोपासनार्थं सर्वमविरुद्धम्।

ननु– जाठराग्नेस्त्रैलोक्यात्मकत्वासम्भवेऽपि बाह्याभ्यन्तरस्थितस्य भूताग्नेर्द्युलोकसम्बन्धदर्शनात्त्रैलोक्यात्मकत्वं सम्भवति। "**यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्**" इत्यादावैश्वर्ययोगात्तच्छरीरदेवतायाः द्युलोकावयवत्वमुपपद्यते। तस्मान्न परमेश्वरः इति चेन्न–

"**यो रुद्रोऽग्नौ**" इत्यादि श्रुतिशतेषु परशिवस्यैव वैश्वानराद्युपाधिकत्वनिर्देशादत्र जाठरवैश्वानरोपाधिर्नेतरः।

परमेश्वरपक्षे पुनर्हेत्वन्तरमुपदिशति[1]–

## ५९. अत एव न देवता भूतं च ॥ २७ ॥

मन्त्रवर्णे तृतीयभूताग्नेर्लोकत्रयात्मकत्वदर्शनात्– "**मूर्धैव सुतेजाः**" इत्याद्यवयवसम्बधित्वं तस्यैवोपपन्नम्। तच्छरीरदेवताया ऐश्वर्ययोगात्समञ्जसं इति चेत्–

**ब्रूमः**– देवता च भूतं च देवताभूतमित्येकवद्भावः। द्वयमपि न वैश्वानरशब्दाभिधेयम्। अत एव पूर्वोक्तहेतुभ्यः द्युमूर्धत्वादेरुभयत्रासमञ्जसत्वादित्यर्थः। किञ्च– लोहितोष्णप्रकाशात्मकभूताग्नेस्तदधिष्ठानदेवतायाश्च परशिवोपासनाप्राप्तैश्वर्यत्वादात्मशब्दाभावात्सर्वेश्वरत्वसर्वान्तर्यामित्वसर्वात्मकत्वसर्वशब्दवाच्यत्वादिधर्माणां परब्रह्मणः शिवस्य सिद्धत्वाद्वैश्वानरशब्दवाच्यत्वं तस्यैव प्रतिपत्तव्यम्।

अस्मिन्नर्थे पुनराचार्यमतं दर्शयति–

## ६०. साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

"**रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या**" इति श्रुतावग्नेस्साक्षात्परमेश्वरात्मकत्वेन व्यपदेशाद्वैश्वानरशब्दवाच्यत्वं परमशिवस्य ब्रह्मणः अविरुद्धं **जैमिनि-**

---

[1] निर्दिशति (ग A).

मन्यते। पूर्वत्र जाठराग्न्यवच्छिन्नतया [1]परमशिवोपासनं निर्दिष्टं, अन्तः प्रतिष्ठितत्वाद्यनुरोधेन। इदानीं प्रतीकोपासनं विनैव साक्षादपि परमेश्वरत्वेनोपासने अविरोधित्वं सूचितम्। किञ्च– "**पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितम्**" इत्यत्र तस्य परमेश्वरस्य पुरुषशब्देनावयवत्वं अन्तःप्रतिष्ठितमित्यनेन निरवयवत्वं च सूचितम्। पूर्वापरसन्दर्भेण परमेश्वर एव वैश्वानर इत्युपदिश्यते। विश्वश्चासौ नरश्चेति, विश्वेषां नर इति विश्वे नरा यस्येति वा विश्वनरः, विश्वनर एव वैश्वानरः। तद्धितोनन्यार्थे राक्षसवायसादिवत्। अग्निशब्दोऽप्यग्रणीत्वादिगुणयोगाश्रयणेन परमेश्वरपरत्व एव भविष्यति। गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वं च सर्वात्मकत्वात्परमेश्वरस्यैव निर्णीयते।

व्यापकस्य परमेश्वरस्य कथं प्रादेशमात्रवाक्यमुपपद्यत इत्याशंकायामाचार्यान्तरं दर्शयति–

## ६१. अभिव्यक्तेरित्याश्मरथ्यः ॥ २७ ॥

सर्वव्यापकस्य शिवस्य परब्रह्मणः प्रादेशमात्रपरिमाणमुपदिश्यते। कुतः? अभिव्यक्तेः। परमशिव एव भक्तोपासनार्थं हृदयचक्षुरादिप्रदेश[2]विशेषेषु प्रादेशमात्रपरिमाणोऽभिव्यज्यते–

> "**सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः।**
> **सर्वव्यापी च (स) भगवांस्तस्मात्सर्वगतः शिवः॥**"

इत्यादिश्वेताश्वतराद्युपनिषत्सु व्यापकस्य भक्तोपासनार्थं परिच्छिन्नत्वव्यपदेशादत्रापि प्रादेशमात्रश्रुतिरुपपद्यत **इत्याश्मरथ्यो** [3]व्याचष्टे।

अस्मिन्नर्थे पुनराचार्यान्तरं दर्शयति–

---

[1] परमशिवोपादानम् (ग A). [2] विशेषस्थानेषु (ग A). [3] व्याचक्षते (ग A).

## ६२. अनुस्मृतेर्बादरिः ॥ ३० ॥

"**दहरं विपाप्मं परवेश्मभूतम्**" इत्यारभ्य "**पद्मकोशं**" इत्यादिना सर्वगतस्य शिवस्य ब्रह्मणः दहरगुहाशयत्व-वह्निशिखात्मकत्व-सर्वशब्दवाच्यत्व-प्रभाकरान्तर्वर्तित्व-लिङ्गात्मकत्व-पञ्चब्रह्मात्मकत्व-हिरण्मयत्वादिधर्माणां **तैत्तिरीये** दर्शनात्सगुणनिर्गुणात्मकस्य महेश्वरस्य स्वेच्छया लोकतारणार्थं हृदयादिप्रादेशमात्रप्रदेशस्थितत्वेन प्रादेशमात्र इति मनसा बादरिर्मन्यते। यथा आढकपरिमिततण्डुलादिकमाढक इत्युच्यते तथा प्रादेशमात्रप्रदेशावगतः परमेश्वरः प्रादेश इति निर्णीयते। तस्माद्व्यापकस्य परिच्छिन्नत्वमविरुद्धम्।

"**यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति**" इत्यादौ मूर्धादिचुबुकान्तप्रादेशमात्र वैश्वानरोपासकत्वव्यपदेशात्परमशिवब्रह्मणः प्रादेशमात्रत्वमविरुद्धम्। तस्मात्प्रादेशमात्रसम्पत्तेः प्रादेशमात्रश्रुतिरुपपन्नेति **जैमिनिराह**। **सूत्रकारस्तथा**दर्शयति–

## ६३. सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

वैश्वानरस्य प्रादेशमात्रत्वे श्रुत्यन्तरं दर्शयतीत्यर्थः। वाजसनेयब्राह्मणे–"**प्रादेशमात्रमिह वै देवास्सुविदिताभिसम्पन्नास्तथा– एनान् वक्ष्यामि तथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति स होवाच– मूर्धानमुपदिशन्नुवाच एष एवावतिष्ठते वैश्वानर इति चक्षुष्युपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर इति। मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति। मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति– चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति।**" चुबुकशब्देनात्र मुखफलकमधरमुपदिश्यते। आदित्यश्च सुतेजस्त्वगुण इत्यादिना लोकत्रयात्मकस्य वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तावयवान् अध्यात्ममूर्धप्रभृतिचुबुकान्तशरीरावयवेषु प्रादेशमात्रसम्पत्तिं परमेश्वरस्योपदिशति। **छान्दोग्ये**– "द्यौस्सुतेजस्त्वगुणः इति प्रभाकरस्य विश्वरूपत्वगुणविशेषेणैतावता किञ्चिद्विशेषणमुपदिश्यते– "**उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य-**

पचन आस्यमाहवनीयः" इत्यारभ्य– "एवं विद्वानग्निहोत्रं जुहोति" इत्युपासकस्य उरः प्रभृतीनां वेद्यादित्वनिरूपणं सर्वशाखासम्पत्तिनिमित्तप्रादेशमात्रश्रुतिरुपदिशति । तस्माद्व्यापकस्य परिच्छिन्नत्वं समुचितमेव ।

पुनर्हेत्वन्तरमाह–

## ६४. आमनन्ति चैनमस्मिन् ॥ ३२ ॥

किञ्चास्मिन् शरीरे एनं सर्वव्यापकं परमेश्वरं नारायणजाबालादयः आमनन्ति, "प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकस्तेनान्नेनाप्यायस्व" इति । "शिवो मा विशा प्रदाहाय" इति "ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" इत्यादावुपासकजाठराग्न्यवच्छिन्नतया परमेश्वरस्य भोक्तृत्वं प्रादेशमात्रपरिमितत्वं च मन्यन्त इत्यर्थः ।

किञ्च– "य एषोनन्तोऽव्यक्तोऽनन्त आत्मा सोऽविमुक्तः प्रतिष्ठित इति सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरुणायां नास्यां च प्रतिष्ठित इति का वै वरुणा का च नासीति तत्र चेमां वरुणां नासी च सर्वाणीन्द्रियगतानि पापानि वारयति । नाशयति च" इति निरुच्य पुनरप्यामनन्ति "कतमच्चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यस्सन्धिस्स एव द्युलोकस्य परस्य च सन्धिर्भवतीति" जाबालेऽपि परमेश्वरस्य प्रादेशमात्रप्रदेशपरिमितत्वव्यपदेशाज्जाठराग्न्यवच्छिन्नप्रादेशमात्रप्रतिपादितः वैश्वानरश्शिव एवेति सिद्धम् ।

इति सप्तमं वैश्वानराधिकरणम्

इति श्रीमन्निराभारवीरशैवयतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यकृत-द्वैताद्वैताभिधानविशेषाद्वैतसिद्धान्तस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

### समन्वयाभिधानस्य प्रथमाध्यायस्य द्वितीयः पादः

## अथ श्रीकरभाष्ये प्रथमाध्याये तृतीयः पादः

### द्युभ्वाद्यधिकरणम् ॥ १ ॥

अनन्तकल्याणगुणरत्नाकरस्य सर्वज्ञत्वादिषड्विधधर्मावच्छिन्नस्य जगदभिन्ननिमित्तोपादानकारणस्य परमकारुणिकस्य परशिवब्रह्मणः पूर्वोक्तपादद्वये उपक्रमादिषड्विधलिङ्गतात्पर्येण–कासांचित् श्रुतीनां समन्वयं प्रसाध्य, इहापि अस्पष्टश्रुतिवाक्यसन्देहशूकनिर्मूलनाय भगवता व्यासेन तृतीयपाद आरभ्यते ।

**अथ परमशिवस्य ब्रह्मणः द्युभ्वाद्यायतनत्वप्रतिपादनम् ।**

### ६५. द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

मुण्डकोपनिषदि पठ्यतेऽस्य विषयः । **"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः"** इति । अत्र द्युभ्वाद्यधिष्ठानत्वेन श्रूयमाणं वस्तु परमेश्वरो वा तदन्यो वेति **सन्दिह्यते ।**

प्रधानक्षेत्रज्ञभूतवायुपरत्वमेवात्र युक्तम्, प्रधानस्य महदहंकारहेतुत्वात् । **"अनन्तमपारं विज्ञानघन एव"** इति श्रुतौ प्रधानस्य व्यापकत्वव्यपदेशात् । **"आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः"** इति श्रुतावात्मशब्दव्यपदेशात्, शारीरस्य भोज्यायतनत्वदर्शनाच्च क्षेत्रज्ञस्यापि सर्वाधारत्वमनवद्यम् । **"वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति ।"** इति श्रुतौ वायोः सर्वाधिष्ठानत्वव्यवस्थापनात् । वायोश्च द्युभ्वाद्यायतनत्वं **"विश्वाधिको रुद्र"** इत्यादिश्रुतिषु परमेश्वरस्य विश्वाधिकत्वनिर्देशात् द्युभ्याद्यायतनत्वं सर्वथा न सम्भवतीति प्राप्ते–

ब्रूमः–

"**द्युभ्वाद्यायतनं स्वशब्दात्**" द्यौश्च भूश्च द्युभुवौ, द्युभुवावादिर्यस्य तत् द्युभ्वादि। द्युपृथिव्यन्तरिक्षमनःप्राणादि। तस्यायतनं स्थानं परमेश्वर इत्यर्थः। कुतः? स्वशब्दात्। स्वस्य ब्रह्मणः प्रतिपादको यः शब्दः आत्मशब्दस्तस्मात् "**तमेवैकं जानथ आत्मानं**" इत्यात्मशब्दश्रवणादित्यर्थः। "**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**" इत्यत्राप्यात्मशब्दस्य शिवपरत्वमवगम्यते। तस्मात् द्युभ्वाद्यायतनं नेतरः।

किञ्च– "**सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः**" इति। "**पुरुष एवेदँ विश्वं कर्म तपो ब्रह्म परामृतम्**" "**ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण**" "**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी**" "**यत्परं ब्रह्मसर्वात्मा विश्वस्यायतनं महत्**" इत्यादि श्रुतिशतेषु शिवस्य परब्रह्मण एव सर्वातीतत्वसर्वाधिष्ठानत्वव्यपदेशादत्र द्युभ्वाद्यायतनं महेश्वर इति सिद्धम्।

सेतोश्च पारवत्त्वोपपत्तेः परमेश्वराद् भिन्नं द्युभ्वाद्यायतनत्वं भविष्यतीत्याशङ्कायां हेत्वन्तरमाह–

## ६६. मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

सेतुश्रुत्या सर्वाधिष्ठानमात्रमुपदिश्यते। न पारवत्वादिलक्षणम्। अत्रापि द्युभ्वाद्यायतनत्वं परमशिवस्यैव। कुतः? "**मुक्तोपसृप्यव्यपदेशात्**" मुक्तैरुपसृप्यं प्राप्यं मुक्तोपसृप्यम्। भावप्रधानो निर्देशः। मुक्तोपसृप्यत्वस्य व्यपदेशः तस्मादित्यर्थः। **यद्वा–** मुक्तोपसृप्यं प्राप्यं यतस्तस्यात्र निर्देशात्, मुक्तोपसृप्यत्वव्यपदेशादिति पाठे न कश्चित्प्रयासः। "**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति**" इत्यत्र परमशिवोपासकानां शिवसारूप्यमुपदिश्य "**गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥**" "**यथा नद्यः**

**स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति"** इत्यादौ निष्कलपरमशिवोपासकानां भक्तानां लिङ्गशरीरभङ्गद्वारा परमशिवसायुज्यमप्युपदिश्यते। तस्माज्जीवपरमेश्वरयोः प्राप्यप्रापकत्वेन **भेदाभेदो** निर्णीयते। **"परात्परं पुरुषमुपैति"** इत्यनेन **भ्रमरकीटवत्** स्वाभाविकभेदसिद्धस्य जीवस्य परमशिवप्राप्त्युपदेशात् स्वकण्ठाभरणवन्नित्यब्रह्मात्मकत्वं निषिध्यते।

**किञ्च**– श्रुत्यन्तरेष्वपि **"तत्त्वमसि" "अहं ब्रह्मास्मि" "ब्रह्मवित् ब्रह्मैव भवति"** इत्यत्र जीवब्रह्मणोर्भेदाभेदस्य स्पष्टत्वेनोपदेशात् न चैकपक्षस्वीकारो युक्तः।

ननु– **"ततस्तु तं पश्यते निष्कलं ध्यायमानः" "एष त आत्मा सर्वान्तरः" "एष त आत्मान्तर्याम्यमृतः"** इत्यादौ जीवब्रह्मणोः ध्यातृ-ध्येयत्वेन, द्रष्टृ-द्रष्टव्यत्वेन, नियम्य-नियामकत्वेन च घटपटवत् परस्परस्वभावभेदव्यवस्थापनात्, **"परात्परं पुरुषमुपैति"** इत्यत्र पुण्यापुण्यकृतनामरूपशरीरपरित्यागपूर्वकदिव्यशरीरप्राप्तिमात्रमिति चेन्न। **"ब्रह्मवित् ब्रह्मैव भवति"** इत्यादिबहुश्रुतिविरोधात्, मुक्तिसंसारयोरविशेषत्वप्रसङ्गाच्च।

ननु– **"तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** इत्यत्र परमशिवानुग्रहेण प्रध्वस्तपाशपटला प्रात्यक्षिकनिरतिशयानन्दस्वरूपा तत्समानगुणसारा कैवल्यलक्ष्मीप्राप्तिरेव मुक्तिः। **किञ्च– "आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनन्दं"** इत्यत्र आकाशपदेन चित्प्रकृतिरुपदिश्यते। **'मन आनन्दं'** इत्यनेन देहेन्द्रियाद्यनपेक्षितत्वेन परमशिवस्य मनस्येव परमानन्दानुभवो व्यपदिश्यते। इदमेव **ब्रह्म[1]सारूप्यवतां** मुक्तशुद्धजीवानामपि ज्ञापकम्। तस्मान्निरतिशयानन्दानुभवसाधनं देहेन्द्रियाद्यनपेक्षितमन्तःकरणमस्तीत्युपदिश्यते। तेषां जीवानां परमेश्वरविद्याशक्त्यंगत्वात् स्वाभाविकभेदस्याविनाशित्वाच्च **अङ्गाङ्गित्वेन सायुज्यम्**। न सर्वथा लिङ्गशरीरविलयपूर्वकशिवत्वप्राप्तिः सम्भवतीति चेत्–

---

[1] सारूप्यलीलां (ग A).

## विशिष्टाद्वैतात् विशेषाद्वैतस्य वैशिष्ट्यम्

**ब्रूमः–**

पूर्वोदाहृताभिः **"यथा नद्यः"** इत्यादिश्रुतिभिः स्वरूपैक्यस्यैवोपदेशान्न चाङ्गाङ्गित्वेन मुक्तिः। **किञ्च**– जीवब्रह्मणोरङ्गाङ्गित्वमनुपपन्नं। **शीर्यत इति शरीरमिति** व्युत्पत्तिसिद्ध शरीरत्वासम्भवात्। न च शरीरस्य परमात्मनो हिताहितप्राप्तिपरिहाररूपचेष्टाश्रयत्वं सम्भवति। परशरीरस्य स्वशरीरत्वासम्भवाच्च। नापीन्द्रियाश्रयत्वेन जीवस्य शरीरत्वम्। स्थूलशरीरस्यैवेन्द्रियाश्रयत्वेन निरवयवत्वेन निरवयवस्याण्वात्मन इन्द्रियाश्रयत्वाभावात्। नापि भोगायतनत्वेन जीवश्शरीरं, परस्य नित्यतृप्तस्य सुखदुःखानुभवभोगासम्भवात्। नपि [1]जीवः परमात्मनः शरीरं, पुरुषप्रेरितरथतुरगादेरपि पुरुषशरीरत्वापातात्। नापि साक्षात्प्रयत्नाधिष्ठेयत्वाज्जीवः शरीरम्। अङ्गुल्यादेरपि साक्षात्प्रयत्नाधिष्ठेयत्वेन शरीरत्वापातात्। जीवस्य कर्मजन्यत्वाभावात्, अहमिदं ममेदमित्यज्ञानविषयत्वाभावात्, अन्त्यावयवित्वाभावाच्च न जीवः परमात्मनः शरीरम्। **"यस्यात्मा शरीरं"** इत्यात्मनि शरीरशब्दप्रयोगमात्रेण शरीरत्वाभावात्; अन्यथा **"वाचं धेनुमुपासीत" "अन्नं ब्रह्मेत्युपासीत"** इति वाचोऽपि धेनुत्वमन्नस्यापि ब्रह्मत्वं च स्यात्। तत्र [2]यच्छब्दयोगात् परमात्मन अशरीरत्वप्रतिपादकबहुश्रुतिविरोधाच्च। **अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" "अथायमशरीरोऽमृतः" "प्राणो ब्रह्मैव तेज एवाकायमव्रणमस्नाविरमरजँ शुद्धमपापविद्धम्"** इत्यादि श्रुत्या तस्याशरीरत्वप्रतिपादनात् **"अप्राणो ह्यमनाश्शुभ्रः" "अचक्षुश्श्रोत्रं तदपाणिपादं"** इति च मनः प्राणशून्यस्य चक्षुःपादरहितस्य शरीरित्वासम्भवात्। **"सर्वस्यान्तरस्थानात्सर्वशरीरं"** इति व्यपदेशः उपासनार्थ उपपद्यते[3]। उत सर्वशरीरत्वपरिकल्पनमन्तर्यामिजीवयोर्भेदाभेदसूचनार्थं वा स्यात्। एवं **विशिष्टाद्वैतस्यासङ्गतत्वाद्विशेषाद्वैतमेव मुमुक्षुभिरादरणीयम्।**

**किञ्च**– श्रुत्यन्तरे च **"प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन् क्रोधो या च तृष्णा क्षमा च। तृष्णां भित्वा हेतुजालस्य मूलं बुध्या सञ्चिन्त्य स्थाप-**

---

[1] नियम्यत्वेन जीवः (अधिकः पाठः) [2] तच्छब्दप्रयोगात् (ज. झ. ग ^). [3] ना स्यात् (ग).

यित्वाथ रुद्रे। रुद्रवत्समभाहुः" इत्यादिना लिङ्गशरीरविलयपूर्वकशिवत्वप्राप्तिरेव मुक्तिरित्युपदिश्यते। **"न हि निन्दा निन्दितुमीष्टे, स्तुत्यं स्तोतुं प्रवृत्ता"** इति न्यायेनात्र परमतनिन्दाया न प्रत्यवायजनकत्वं, जल्पवितण्डाभ्यां शिवज्ञानाधिक्य स्थापनस्य परपक्षप्रतिक्षेपं विनाऽसंभवात्। पाषण्डनिन्दायाश्च तत्त्वस्थापनानुकूलत्वेन विहितत्वात्। निषेधस्य विहितेतरविषयत्वाच्च। जीवानां न चिच्छक्त्यंशत्वं, **"तदैक्षत बहुस्यां"** इत्यादौ पितृपुत्रादिवत्स्वांशभूत स्वान्तर्लीनजीवकारणत्वदर्शनात्। **"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"। "भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्व संशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** इत्यादिना परमशिवप्रसादेन तदुपासकानां आत्यन्तिकपाशनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपा मुक्तिर्भवतीति व्यपदेशात् द्युभ्वाद्यायतनं महेश्वर एवेति सिद्धं।

## ६७. नानुमानमतच्छब्दात् ॥ ३ ॥

अनुमीयत इत्यनुमानं सांख्यस्मृतिप्रतिपादितं प्रधानं, न द्युभ्वाद्यायतनं। कुतः? अतच्छब्दात्। **"यस्सर्वज्ञः सर्वविद्यस्य"** इत्यादौ प्रधानप्रतिपादकशब्दाभावादचेतनस्य प्रधानस्य सर्वज्ञत्वादि धर्माणामसंभवात्सर्वकारणत्वेन सर्वाधिष्ठानत्वेन च परमशिव एवात्र परिगृह्यते।

अचेतनत्वात्प्रधानस्य द्युभ्वाद्यायतनत्वाऽसम्भवेऽपि चेतनत्वाज्जीवस्य तदाशंक्याह—

## ६८. प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवोऽपि न द्युभ्वाद्यायतनः। कुतः? अतच्छब्दादेव। प्राणभृतो जीवस्य चिद्रूपत्वमात्मशब्दत्वं च दृश्यते। तथापि **"एषोऽणुरात्मा चेतसा वेदितव्यः"**।

**"वालाग्रशतभागस्य शतधा कल्पितस्य च।"**

**जीवो भागस्सविज्ञेयः" "ज्ञाऽज्ञौ द्वावजावीशनीशौ"** इत्यादि श्रुतिशतेषु जीवस्य किंचिज्ज्ञत्व परिच्छिन्नत्वादिव्यपदेशात् द्युभ्वाद्यायतनत्वं न सम्भवतीत्यतच्छब्दत्वम्। तस्मात्सर्वव्यापकस्य सर्वशक्तिविशिष्टशिवस्यैव द्युभ्वाद्यायतनत्वम्॥

पुनर्हेत्वन्तरमाह—

## ६९. [1]भेदव्यपदेशात् ॥ ५ ॥

अतः प्राणभृन्न द्युभ्वाद्यायतनम्। कुतः? भेदव्यपदेशात्। भेदेन व्यपदेशः, तस्मात्।

"**तमेवैकं जानथात्मानं**" अन्या वाचो "**विमुञ्चथामृतस्यैव सेतुः**" "**समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः**" "**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोकः**" "**द्वा सुपर्णा सयुजा सखायौ**" इत्यादौ जीवब्रह्मणोः ज्ञातृज्ञेयत्वादिधर्मैः स्वाभाविकभेदव्यपदेशात्, किञ्चिज्ज्ञस्य जीवस्य न द्युभ्वाद्यायतनत्वमुपपद्यते।

परमेश्वरपक्षे हेत्वन्तरमाह—

## ७०. प्रकरणात् ॥ ६ ॥

"**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति**" इत्यनेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाश्रुत्युपक्रमप्रदर्शनात्। सर्वजगदुपादानभूतपरशिवज्ञानेन सर्वविज्ञानसंभवात्। जीव-प्रधानादीनां द्युभ्वाद्यायतनत्वं न सम्भवति। दर्शपूर्णमासप्रकरणपठितानां "**समिधो यजति**" इति वाक्यानामिव परमेश्वरप्रकरणपठितभेदाभेदबोधकसर्ववेदान्तवाक्यानां परमेश्वरपरत्वम्। "**नेह नानास्ति किञ्चन**" इत्यादिश्रुतिषु सर्वनिषेधपूर्वकनिष्प्रपञ्चब्रह्मावगमात् सर्ववेदान्तोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैः तत्परत्वमेवेति चेन्न। "**सदेव सौम्येदमग्र आसीत्**" "**ज्ञाज्ञौ द्वावजौ**" इत्यादि बहुश्रुतिविरोधात्। सर्वभेदनिषेधस्य सर्वशिवात्मकत्वज्ञानसूचकत्वाच्च। निष्प्रपञ्चनिर्विशेषज्ञानस्य मायापाशमोचकत्वाभावात् न किञ्चित्प्रयोजनं पश्यामः। अस्यामुपनिषदि "**स ब्रह्म-**

---

[1] भेदव्यपदेशाच्च (ग).

**विद्यां सर्वविद्याप्रतिष्ठाम्"** इति ब्रह्मविद्यामुपक्रम्य "**एकस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति**" इति प्रश्नोत्तरत्वेन शिवैकज्ञान-सर्वविज्ञानप्रतिज्ञामुपदिश्य "**द्वे विद्ये वेदितव्ये**" इत्यादिना प्रवृत्तिप्रतिपादकपरापरविद्याभेदेन विद्याद्वयमुपन्यस्य आदौ चतुर्दशविद्यानामपरविद्यात्वमुक्त्वा "**अथ परा यया तदक्षरमधिगम्यते**" इत्युपक्रम्य "**अक्षरात्सम्भवतीह विश्वं**" इत्यन्त तल्लक्षणत्वेन जगज्जन्मादिकारणत्वं प्रसाध्य "**यः सर्वज्ञः**" इत्यादिना तस्यैव स्वरूपमुक्त्वा "**प्लवा ह्येतेऽदृढा**" इत्यादिना प्रवृत्तिमार्गनिन्दां विधाय "**तपःश्रद्धे येत्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः सूर्यद्वारेण ते विरजाः प्रयन्ति यत्रामृतः पुरुषो ह्यव्ययात्मा**" इत्यत्र अमृतपुरुषशब्दौ असाधारण्येन शिववाचकावित्युपपादितम् ।

"**क्षरं प्रधानममृताक्षरं हरः**" इति परशिवपरत्वेनाक्षरशब्दो निर्णीतः । "**येनाक्षरं पुरुषं वेद सत्यम्**" इत्यादिना जीवसृष्टिहेतुत्वमुक्त्वा "**तद्वोद्धव्यं सौम्य विद्धि**" इति तस्य ज्ञेयत्वं निर्दिश्य "**धनुर्गृहीत्वौपनिषदं**" इत्यादिना वेदान्त-वेद्यत्वमुक्त्वा "**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं**" इत्यादिन हिरण्यात्मकपरमशिवज्ञानेन पुण्यपापनिवृत्तिपूर्वकपरमशिवसारूप्यमुपदिश्य "**याथा नद्यः**" इत्यारभ्य "**ब्रह्म वेद ब्रह्मैव भवति**" इत्यन्तं षड्विधलिङ्गैः परम-शिवप्रकरणमिति प्रतीयते, ज्ञेयवाचकेश्वरपदस्य शिवे रूढत्वात् । रुक्मवर्णस्यापि "**नमो हिरण्यबाहवे**" इत्यादिषु तत्परत्वेन दर्शनाच्च । विश्वकारणविश्वाधिकविश्व-नियामकशिवज्ञानस्यैव भवपाशनाशहेतुत्वं सिद्धम् । तस्माद्रज्जुसर्पवदविद्याकल्पितवादप्रधान निष्प्रपञ्चब्रह्माद्वैतवादस्त्ववैदिक इति वेदितव्यः तद्विधायकश्रुत्यदर्शनात् ।

**किञ्च**– श्रुत्यन्तरे च "**शिव एको ध्येयः शिवंकरः**" इति शिवेतरध्यान-परित्यागदर्शनात् । "**ज्ञात्वा शिवं शान्तिमत्यन्तमेति**" इति शिवज्ञानस्यैव अत्यन्त-शान्तिहेतुत्वव्यपदेशात् । "**ईशं ज्ञात्वा अमृता भवन्ति**" इति शिवज्ञानादेव मोक्ष-श्रवणात् । "**ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः**" इति शिवज्ञानैकनिरतानां सर्वपापनिवृत्तिव्यवस्थापनात्तदुपासनादेव मुक्तिरिति घण्टाघोषः । इहोपनिषदि परमशिव-धर्मबाहुल्यप्रकरणात् द्युभ्वाद्यायतनं परमशिव एवेति सिद्धम् ।

परमेश्वरपरत्वे हेत्वन्तरमाह–

## भेदाभेदात्मकविशेषाद्वैतस्य सर्वोत्तरत्वनिरूपणम्

## ७१. स्थित्यदनाभ्यां च ॥ ७ ॥

[1]इतोऽपि न प्राणभृत् द्युभ्वाद्यायतनम् कुतः? स्थित्यदनाभ्यां च। स्थितिश्च अदनं च स्थित्यदने। ताभ्यां– (पञ्चमीद्विवचनं) "**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति**" इत्यत्र जीवस्य कर्मफलभोक्तृत्वं, "**अनश्नन्नन्यः**" इति परमेश्वरस्य औदासीन्येन स्थितिरुपदिश्यते। तस्मात् द्युभ्वाद्यायतनं महेश्वर एव।

ननु– "**एक एव रुद्रो न द्वितीयाय तस्थे**" इत्यादि श्रुतिशतेषु सर्वप्रपञ्चनिषेधपूर्वकाद्वैतव्यवस्थापनात्, "**द्वासुपर्णा**" इत्यादि मन्त्रगतजीवब्रह्मणोर्भेद औपचारिक एवेति चेन्न– अद्वितीयत्वप्रतिपादकश्रुतीनां निर्गुणत्वप्रतिपादकश्रुतीनां च सृष्टेः पूर्वं मूर्तामूर्तोभयप्रपञ्चाभावात् [2]कालपरत्वम्। भेदश्रुतीनां सर्वासां सृष्ट्युत्तरकालपरत्वम्। "**यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः**" "**अहमेकः प्रथममासं**" "आत्मा वा इदमेकमेवाग्र आसीत्" "**सदेव सौम्य**" इति गति**सामान्यन्यायेन** सर्ववेदान्तेषु सृष्टेः पूर्वमेव ब्रह्मणः अद्वितीयत्वव्यवस्थापनात्। "**सोऽकामयत**" इत्यादिषु सृष्ट्युन्मुखस्य ब्रह्मणः कामनया बहुभावश्रवणात्। सृष्ट्युत्तरकाले ब्रह्मणस्सगुणत्वदर्शनान्नान्यार्थो युक्तः। तथा च **स्मृतिः**–

**सृष्टेः पूर्वं महादेवश्शक्तिसंकोचहेतुना।**
**निगुणत्वेन शास्त्रेषु गीयते तत्ववेदिभिः॥**

**सृष्ट्यादौ परमेशस्य शक्तेः प्राचुर्यवैभवात्।**
**सर्वज्ञत्वादिकल्याणगुणवानिति कीर्त्यते॥**

**तस्माद्द्वैतश्रुतीनान्तु सृष्ट्युत्तरसमन्वयः।**
**[3]अद्वैतश्रुतिबोधस्तु सृष्टेः प्रागेव कथ्यते॥**

---

[1] इहापि (ग A). [2] तत्कालपरत्वम् (ग A). [3] अद्वैतश्रुतिजालानां ((ग A)

अथ सत्वादिवैशिष्ट्यात् सगुणत्वं सदाशिवे ।
तत्साक्षिकत्वात् चिच्छक्त्या निर्गुणत्वं विधीयते ॥
सकलो निष्कलश्चेति तस्माद्वेदेषु गीयते ॥ इति ।

**कैवल्ये**– "**उमासहायं परमेश्वरं प्रभुं**" इत्यादिना ब्रह्मणः मूर्तत्वं प्रशान्तत्वं सगुणत्वं चोपदिष्टम् । तदुपसंहारे तस्यैव "**समस्तसाक्षिं तमसः परस्तात्**" इत्यादिना निरवयवत्वं निर्गुणत्वादिकं चोपदिष्टम् । न साक्षित्वस्य गुणत्वं "**साक्षी चेता निर्गुणश्च**" इति श्रुतेः ।

ननु महेश्वरसृष्टेः पूर्वं जगत्कारणप्रकृतिसद्भावात् कथमद्वैतमिति चेन्न– "**देवात्मशक्तिं स्वगुणैर्निगूढां**" "**परस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च**" इत्यादिश्रुतिशतेषु तच्छक्तेस्तदभिन्नत्वदर्शनात् । न शक्तिशक्तिमतोस्स्वाभाविकपृथक्त्वम् । तस्मात् सकलप्रपञ्चपरमकारणीभूतचिच्छक्त्यधिष्ठानत्वे सति तदपृथक्सिद्धत्वेन [1]परमशिवस्याभिन्ननिमित्तोपादानकारणत्वव्यवस्थापक**भेदाभेदविशेषाद्वैतमेव** [2]**सर्ववेदान्तसिद्धान्तघण्टाघोषः** ।

**नन्वद्वैतशब्देन** जीवब्रह्मणोरेकत्व[3]बोधनात् द्वैताभावे अद्वैतप्रतीत्यसम्भवाच्च विशेषपदस्य न किञ्चित् प्रयोजनमिति चेन्न । अद्वैतपदस्य भेदनिषेधमात्रबोधकत्वात्, भेदस्य सत्यत्वासत्यत्वादर्शनाच्च विशेषपदं [4]निर्दिष्टम् । एतेन जीवब्रह्मणोर्जात्यैकत्वेऽपि जडजातावश्मलोष्ठकाष्ठादीनां स्वाभाविकभेदवच्चिज्जातौ चित्वेनैकत्वेऽपि अणुत्वविभुत्वकिञ्चिज्ज्ञत्वसर्वज्ञत्वादिपरस्परविरुद्धधर्माणां [5]पृथक्दर्शनात् पारमार्थिकभेद उभयोरुपदिश्यते ।

## विशेषाद्वैतशब्दनिर्वचनम्

**विश्च शेषश्च विशेषौ, तयोरद्वैतं विशेषाद्वैतम्**" इति निरुक्तिः । तत्राद्वैतपदेन **भ्रमरकीटवज्जीव**स्य स्वाभाविकभेदनिवृत्तिरुपदिश्यते । "**हंस हंसेति यो ब्रूयात्**"

---

[1] महेश्वरस्य (ग A). [2] सर्ववेदान्तघण्टाघोषः (अ). [3] दशनात् (ज ग A).
[4] निवेशितम् (ग A). [5] उपपद्यते (ज).

इत्यादि श्रुतिषु "**विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि**" इति नैघण्टुकेषु विशब्दस्य परमात्मवाचकत्वेन स्पष्टोपदेशात्। वात्युत्पादयतीति व्युत्पत्त्या च विशब्देन जगत्कारणत्वं ब्रह्मलक्षणं सूचितम्। शेषशब्देन "**यथाग्नेर्विस्फुलिङ्गा**" इति श्रुतिषु परमेश्वरांशत्वस्य जीवानां व्यपदेशात् जीवोऽभिधीयते। अद्वैतपदेन "**यथा नद्यः**" इत्यादि श्रुतिसिद्धसायुज्यं जीवब्रह्मणोरुपदिष्टम्।

## अथ जगतः सत्यत्वप्रतिपादनम्

रज्वारोपितसर्पवज्जगज्जीवानां मिथ्यात्वे निषेधविधायकवेदशास्त्रपुराणादीनां तथात्वेन वेदबाह्यत्वप्रसङ्गः स्यात्। **अस्मन्मते** सर्वज्ञानं सत्यमेव। तत्रापि सादृश्यज्ञानस्य पारमार्थिकत्वाद्रज्जुसर्पज्ञानमपि सत्यम्। सादृश्यं विना तदज्ञानासम्भवाच्च। **पञ्चीकरण-प्रक्रियया** अत्रापि तदंशानां सत्वात् शुक्तिरजतज्ञानमपि सत्यम्। शुक्त्यंशानां भूयस्त्वान्न तथा व्यवहारः। अङ्गुल्यादिनावष्टब्धनेत्रोद्गीर्णचन्द्रद्वयग्राहकदृक्सामग्रीद्वयस्यापि सत्यत्वात् द्विचन्द्रज्ञानमपि सत्यम्, निमित्तस्य सत्यत्वेन नैमित्तिकस्यापि सत्यत्वम्। स्वनयनगतपित्थदोषाच्छादितत्वेन शङ्खगतशुक्लिमा गृह्यते, सुवर्णानुलिप्तशङ्खवत् स्वनयन-निष्क्रान्तरश्मयः परमसूक्ष्मतया स्वेनैव गृह्यन्ते। तस्मात् "**पीतः शङ्खः**" इत्या-कारकज्ञानमपि सत्यमेव। तत्तद्देशसंयोगात्तत्तत् ज्ञानं जायते। परमशीघ्रतया नान्तराल-ज्ञानमस्ति। तस्मादलातचक्रज्ञानमपि सत्यम्। **पञ्चीकरणप्रक्रियया** एकस्मिन् भूते तदन्येषामंशानां सत्वात्; व्योमांशभूयस्त्वान्न जलार्थसिद्धिः। तस्मात् मरुमरीचिकाज्ञान-मपि सत्यम्। स्वप्नकारणीभूत विद्याया सत्यत्वात् स्वप्नज्ञानस्यापि सत्यत्वम्। बीजाङ्कुर-न्यायात् कारणसत्वे कार्यसत्यत्वम्।

**किञ्च–** शुभाशुभफलसूचकत्वात् प्रबोधेऽपि स्वप्नानुभूतज्ञानस्य सिद्धत्वान् न स्वाप्निकज्ञानस्य मिथ्यात्वम्। जाग्रत्प्रपञ्चवत्तस्यापि परमेश्वराधीनत्वात्। ऐन्द्रजालिकज्ञान-मपि सत्यं, तत्कारणीभूतमणिमन्त्रौषधादीनां सत्यत्वात्, तत्रापि ज्ञानस्याबाधितत्वात्। बुध्युपस्थितसर्वपदार्थज्ञानस्य पारमार्थिकत्वात् भ्रान्तिकारणीभूततत्तत्पदार्थानां सत्यत्वाच्च सर्वं ज्ञानं सत्यमेव। "**यद्दृश्यं तन्नष्टम्**" इति व्याप्तिबलात् अनाद्यविद्याकल्पित-प्रपञ्चस्थितपदार्थानां मिथ्यात्वेन पूर्वोक्तदृष्टान्तपदार्थानामपि मिथ्यात्वं किं न स्यादिति चेन्न, ब्रह्मानुभूतिर्न स्यात्। **किञ्च** प्रपञ्चवद्ब्रह्मणोऽपि मिथ्यात्वं स्यात्। ब्रह्ममिथ्या-

ऽसत्यहेतुजन्यज्ञानविषयत्वात् प्रपञ्चवत् इति। तस्मात् पूर्वोक्तमेव समुचितम्। **"या मा सा माया" "न विद्यते सा अविद्येति"** व्युत्पत्त्या जगदुपादानकारणमायायाः मिथ्यात्वात् तत्कार्यप्रपञ्चस्य कथं सत्यत्वमिति चेन्मैवं– **"मायां तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं" "पराऽस्य शक्तिर्विविधैव श्रूयते"** इत्यादिश्रुतिशतेषु मायायाः ब्रह्मशक्तित्वेन व्यपदेशात्, चन्द्रचन्द्रिकावच्छक्तिशक्तिमतोरभेदात् शक्तिनाशे शक्तिविशिष्टब्रह्मणोऽपि नाशप्रसङ्गेन निरीश्वरमतप्रवेशस्स्यात्। तस्मात् स्वशेषभूतद्युभ्वादिप्रपञ्चाधिष्ठानं परमेश्वर एव।

---

भूमाधिकरणम् ॥ २ ॥

अथ परमेश्वरस्य भूमशब्दवाच्यत्वप्रतिपादनम्–

अनन्तकल्याणगुणरत्नाकरपरमशिवज्ञानवतो जीवन्मुक्तस्य निर्विषयिकपरमानन्द[1]प्रदर्शनार्थमाह–

## ७२. भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

छान्दोग्ये विद्यतेऽस्य **विषयः**। "भूमात्वेव विजिज्ञासितव्य" इति "भूमानं भगवो विजिज्ञास" इति "यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यन्यत् शृणोत्यन्यद्विजानाति तदल्पम्" अत्र भूमेति पदेन प्रतिपाद्यः प्राणो वा परमेश्वरो वेति **संशयः**। "बहोर्लोपो भू च बहोः" इति भूमा शब्दस्य भावप्रत्ययान्तता श्रवणात् बहुत्वं सूचितम्। किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकांक्षायां प्राणो वा आशाया भूयान्" इति पूर्वं प्राणस्य सन्निधानात् प्राणो भूमेति प्रतिभाति। तथा "श्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु" इति ब्रह्मलिङ्गबाहुल्यात्परमेश्वरो वेति भाति। तस्मादत्र सन्दिह्यते।

**पूर्वपक्षस्तु**–भूमा शब्देनात्र प्राण एव परिगृह्यते। "प्राणो ब्रह्म" इति नारदसनत्कुमारप्रश्नप्रतिवचनद्योतनात्। यथा "अस्ति भगवो नाम्नो भूयः" इति। "वाग्वावनाम्नो भूयसी" तथा "अस्ति भगवो वाचो भूयः" इति। "मनो वाव वाचो भूयः" इति च "भूयो नामादिभ्यो हि आप्राणात्" इति प्रश्नप्रतिवचनाभ्यां प्राण एवात्र परिगृह्यते। प्राणात्परं पुनः प्रश्नप्रतिवचनं न श्रूयते। "अस्ति भगवः प्राणात् भूय" इति "अदोवाव प्राणाद्भूय" इति "प्राणमेव तु

---

[1] प्रदर्शनार्थमधिकरणान्तरमाह (ज)·

नामादिभ्यः आशान्तेभ्यो भूयसं प्राणो वा आशया भूयान्" इत्यादिना सप्रपञ्चमुपदिश्य प्राणदर्शिनश्चातिवादित्वम् "अतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत" इत्यभ्यनुज्ञायैव "एष तु वा अतिवदति यस्सत्येनातिवदति" इति प्राणत्रयस्य अतिवादित्वमुपदिश्य तस्यैव सत्यादि परंपरया "प्राण एव भूमानं मन्यते" इत्यादि। तस्यैव भूमत्वोपदेशात् प्राणस्यैव भूमाशब्दवाच्यत्वं युक्तम्। "यत्र नान्यत् पश्यति" इति वाक्यविहितभूमलक्षणं तस्यैव निर्दिष्टम्। सुषुप्त्यवस्थायामपि प्राणव्यापारदर्शनात् "नान्यत्पश्यति" इति लक्षणं समुचितम्। तथा च श्रुतिः– "न शृणोति न पश्यति" इत्यादिना सर्वकारणव्यापारशून्यसुषुप्त्यवस्थां प्रदर्श्य "प्राणाऽग्नय एवैतस्मिन् पुरे जाग्रति" इति सुषुप्त्यवस्थायामपि वृत्तिपञ्चकविशिष्टस्य प्राणस्य जाग्रदवस्थां प्रसाध्य, प्राणप्रधाना सुप्तिरिति निर्दिश्यते "यो वै भूमा तत्सुखम्" इति वाक्यनिर्दिष्टसुखं तस्याप्यविरुद्धम्। "प्राणो वा अमृतम्" इति श्रवणात्, यच्च "यो वै भूमा तदमृतम्" इति अमृतशब्दवाच्यत्वम् तस्यैवोपपन्नम्। "प्राणो हि पिता, प्राणो माता, प्राणो भ्राता, प्राणः [1]सखा, प्राण आचार्यः, प्राणो ब्राह्मणः" इत्यादिना प्राणस्यैव सर्वात्म- कत्वोपदेशात्। "प्राणमेव सर्वात्मानं करोति" इति प्राणस्यैव जगत्कारणत्वमुप दिशति। तस्मात् "तरति शोकमात्मवित्" इत्यात्मविविदिषया न प्रकरणविरोधः। अतः सर्वथा षड्विधलिङ्गतात्पर्येण प्राण एव भूमा, न परमेश्वर इति चेत्।

उच्यते– "भूमा सम्प्रसादादध्युपदेशात्" भूमा परमेश्वर एव। कुतः? सम्प्रसादादध्युपदेशात्। सम्यक् प्रसीदत्यस्मिन् जीवस्वरूपमिति सम्प्रसादः सुषुप्त्यवस्था। तस्यां चावस्थायां प्राणो जागर्तीति सम्प्रसादशब्देन प्राण उच्यते। तस्मादधिप्राणा-दूर्ध्वं उपदेशादित्यर्थः।

केचित्– "सम्प्रसादो जीवः, तस्मादुपरि" इति वदन्ति। प्राणोपदेशानन्तरं "एष तु वा अतिवदति यस्सत्येनातिवदति" इति तुशब्देन प्राणवादस्यानतिवादत्वमुक्त्वा; सत्यशब्दवाच्यपरमात्मवादस्यातिवादत्वं वदन् भूमानमुपदिशति।

---

[1] प्राणः स्वसा (ग A).

किञ्च– "तरति शोकमात्मवित्" इत्यादिना आत्मज्ञानेन मोक्षोपदेशात्, जडस्य प्राणवायोः मोक्षप्रदायकत्वासम्भवात्, आत्मन् शब्दस्य परमशिवे बहुश्रुतिरूढत्वात्, "ज्ञात्वा शिवं शान्तिमत्यन्तमेति "ब्रह्मविदाप्नोति परं" इत्यादिबहुश्रुतिषु परशिवज्ञानेनैव मोक्षोपदेशात् "अथात आत्मादेश" इत्यात्मत्वेनाग्रे वर्णनात्। "यत्र नान्यत्पश्यति" इत्यादिवाक्यगतधर्माणां प्राणवायोरसम्भवात्। "सोऽहं भगवश्शोचामि तं मा भगवान् शोकस्य पारं तारयतु" इति प्रकरणलिङ्गबाहुल्यात् भूमाशब्दवाच्यः साक्षात्परमेश्वर एव।

परमेश्वरपक्षे हेत्वन्तरमाह–

## ७३. धर्मोपपत्तेश्च ॥ ९ ॥

"यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति" इत्यादिना सृष्टेः प्राक् सर्वव्यवहाराभावादिधर्माणां परमशिवे उपपत्तेः। इदमेव मुक्तात्मनां ज्ञापकम्। पूर्वोक्ताधिकरणे "तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादिना ब्रह्मोपासकस्य [1]शुद्धजीवस्यात्यन्तिकपाशनिवृत्तिपूर्वकशिवसायुज्यं नदीसमुद्रदृष्टान्तेन प्रसाधितम्। तस्मात् शिवत्वापन्नजीवानां जीवन्मुक्ति-विदेहमुक्त्योः सर्वशिवात्मकत्वज्ञानेन प्रपञ्चनिषेधो युक्तः।

ननु– "यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति वाक्ये जीवन्मुक्तस्य विदेहमुक्तिपर्यन्तं प्रपञ्चभोगव्यपदेशात् कथं शिवज्ञानवतां जीवन्मुक्तानां प्रपञ्चनिषेधः उपपद्यत इति चेत्, शिवोपासकजीवन्मुक्तानां प्रचण्डातपमध्यनिक्षिप्तकर्पूरदीपवदन्तःकरणसद्भावेऽपि सर्वशिवात्मकज्ञानसद्भावात् सच्चिदानन्दस्वरूपपरमशिव एव विश्वात्मना दर्शनविषयो भवति। "एतत्ततो भवति" इत्यादिश्रुतिरपि तथा श्रूयते। तस्माज्जीवन्मुक्तानां "अहं ब्रह्मास्मि" इति ब्रह्मविदामनुभवो दृश्यते। "न हि दृष्टेरनुपपन्नं नाम" इति न्यायान्नान्यार्थो युक्तः। ब्रह्मणः प्रपञ्चस्याभिन्ननिमित्तोपादानकारणत्वात् तस्य [2]तदभेददृष्टिस्समुचितैव। "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादि

---

[1] अशुद्धजीवस्य (ग A).　　[2] तदेव भेददृष्टिः (ग A).

श्रुत्यन्तरे सर्वशिवात्मकज्ञानविदां पूर्ववत्प्राकृतप्रपञ्चव्यवहाराभावस्य मुक्तजीवधर्मत्वेनावगमात्। **"यो वै भूमा तत् सुखम्"** भूम्नः सुखत्वं दर्शितम्। **"यो वै भूमा तदमृतम्"** इति श्रूयमाणममृतत्वं परशिवासाधारणधर्मः। किञ्च– **"स भगवः कस्मिन् प्रतिष्ठित** इति स्वे **महिम्नि"** इति **"आत्मैवेदं सर्वं"** **"आत्मतः प्राणः–आत्मन आकाशः"** इत्यादिना तस्यैव परमशिवस्य स्वमहिम्नि प्रतिष्ठितत्वसर्वकारणत्वादिधर्माणां व्यपदेशात्। भूमपदवाच्यः परमशिव एवेति सिद्धम्।

नन्वेकस्य परमशिवस्य व्यवहारभावाभावत्वं [1]कथमुपपद्यत इति चेत्– **"लोकवत्तु-लीलाकैवल्यम्"** इति सूत्रे भगवता व्यासेनैवोत्तरत्र स्पष्टं [2]वक्ष्यते।

---

[1] कथमुपदिश्यत (ग A). [2] उक्तं (ग A).

## अक्षराधिकरणम् ॥ ३ ॥

### अथ चिच्छक्तिविशिष्टस्य परमशिवस्य अक्षरशब्दवाच्यत्वनिरूपणम्

ब्रह्मणः परमशिवस्य सर्वाधिक्यमुपदिश्य अक्षरशब्दवाच्यत्वमधिकरणान्तरेणाह—

### ७४. अक्षरमम्बरान्तधृतेः ॥ १० ॥

बृहदारण्ये [1]श्रूयतेऽस्य विषयः। "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति" "स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति। अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इति। अत्र अक्षरशब्देन प्रणवो जीवः, परमेश्वरोवेति संशयः।

"ओंकार एवेदँ सर्वम्" इत्यादौ प्रणवस्य सर्वात्मकत्वप्रदर्शनात्। "अक्षरसमाम्नाय" इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात्, "ओमित्येकाक्षरं ब्रह्म" इति श्रुत्यन्तरेऽपि प्रणवस्य ब्रह्मात्मकत्वव्यपदेशात् अक्षरशब्दवाच्यत्वं तस्यैवोपपन्नम्। "पुरुषोऽक्षर उच्यते" इति श्रवणादक्षरशब्दवाच्यत्वं जीवस्याप्युपपन्नम्। तस्मात् परमेश्वरस्याक्षरशब्दवाच्यत्वं नोपपन्नमिति चेत्—

ब्रूमः— "अक्षरमम्बरान्तधृतेः" अत्र अक्षरशब्दवाच्यः शिव एव। कस्मादम्बरान्तधृतेः। पृथिव्याद्याकाशान्तस्य स्वशक्त्युद्भूतस्य प्रपञ्चस्य धृतेः धारणादित्यर्थः। "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावा पृथिवी इमे यद्भूतं भव्यं भविष्यं चेत्याचक्षते आकाश एव तदोतं प्रोतश्च" इत्यादिसर्वविकारप्रपञ्चाधिष्ठानतया निर्दिष्ट आकाशः "कस्मिन्नोतश्च प्रोतश्च" इति गार्गिपृष्टे "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इत्यादिना "एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च" इत्यन्तेन याज्ञवल्क्यवचनेन निर्दिष्टस्याक्षरस्याम्बरान्तर-

---

[1] दृश्यते (ग ∧).

धृतिर्निर्णीयते "**क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः**" "**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी, यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्**" इत्यादिश्रुत्यन्तरेष्वपि परमेश्वरस्य मुख्यतया अक्षरशब्दवाच्यत्वस्याम्बरान्तधृतेश्चोपदेशात् नान्यस्य सम्भवति। यदपि "**ओंकार एवेदँ सर्वम्**" इति। तदपि श्रुतौ प्रणवस्य ब्रह्मप्रतिपादकत्वेन स्तुत्यर्थं सर्वात्मकत्वं वर्णितम्। तत्र परमेश्वरधर्मबाहुल्यात्परमेश्वर-प्रकरणाच्चस्यैवाक्षरशब्दवाच्यत्वं सिद्धम्।

### परमशिवस्य शक्तिविशिष्टत्वप्रतिपादनम्।

अम्बरान्तधृतेः प्रधाने अतिव्याप्तिमाशंक्य निराकरोति—

## ७५. सा च प्रशासनात् ॥ ११ ॥

सा धृतिः परब्रह्मणः शिवस्यैव सम्भवति। कुतः? प्रशासनात् "**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः**" इत्यादिना परमशिवस्यैव प्रशासनं श्रूयते। जडस्य प्रधानस्य प्रशासनासम्भवात्। श्रुत्यन्तरेऽपि "**ईशानः सर्वविद्यानां**" इत्यादिना सर्वनियामकत्वस्य परमशिवधर्मत्वेन व्यपदेशात्। प्रधानस्य सर्वदा (था?) प्रशासनमयुक्तम्। एतेन सर्वाधिष्ठानब्रह्मणः सविशेषत्वमुपदिष्टम्। निर्विशेषस्य धृत्यसम्भवात्। "**परास्य शक्तिर्विविधैव श्रूयते**" इति श्रुतौ शक्तेः स्वाभाविकत्वश्रवणान्निर्विशेषत्वं कदाचिदपि ब्रह्मणो न सम्भवति। वह्निर्दहतीति शक्ति-शक्तिमतोरपृथक्सिद्धत्वेऽपि भेदव्यवहारात् **शक्ति-शक्तिमतोर्भेदाभेदसिद्धः**। भेदाभेदयोर्विरोध इति चेत् "**आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः**" इति अपृथक्त्वेऽप्यबाधितपृथक्त्वव्यवहारदर्शनान्न विरोधः। तदुक्तं कूर्मे—

"**चिद्रूपस्तु शिवस्साक्षात् सत्यानन्दमयी शिवा**" इति। किञ्च— "**एक एव रुद्रो न द्वितीयाय तस्थे**" जगच्छासने परमेश्वरस्याद्वितीयत्वव्यवस्थापनात् **चिच्छक्तिविशिष्टस्य परमशिवस्यैवाक्षरशब्दवाच्यत्वं निष्प्रत्यूहम्।**

पुनर्हेत्वन्तरमाह—

## ७६. अन्यभावव्यावृत्तेश्च ॥ १२ ॥

इतोप्यम्बरान्तर्धृतिः परमेश्वरस्यैव न प्रधानादेः। कुतः? अन्यभावव्यावृत्तेः। अन्यस्य प्रधानादेः, भावो धर्मः, तद्व्यावृत्तेः, तद्विपरीतश्रवणादित्यर्थः। **"तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टमश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातं"** इत्यत्र द्रष्टृत्वादिकं परमेश्वरलक्षणमचेतनत्वात् प्रधानस्य न सम्भवति। तस्मादक्षरपदवाच्यः परमेश्वरः।

---

ईक्षतिकर्माधिकरणम् ॥ ४ ॥

प्रत्यक्षादिप्रमाणातीतस्य सर्वानुग्राहकस्य शिवस्य परब्रह्मणः कृपातिशयेनोपासकस्य प्रत्यक्षत्वमुपपादयितुमधिकरणान्तरं दर्शयति ।

## ७७. ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

अथर्वणे प्रश्नोपनिषदि श्रूयतेऽस्य विषयः । "**एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति**" इत्यारभ्य "**यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्**" इति । अत्र ध्यातव्यत्वेन श्रूयमाणः पुरुषः परमेश्वरोऽन्यो वेति संशयः ।

न तत्रोपास्यः परमशिवः, किन्तु हिरण्यगर्भः एव । "**स सामभिरुन्नीयते ब्रह्मलोकम्**" इति तल्लोकप्राप्तेरेवात्र दर्शनात् । जीवोत्कृष्टे तस्मिन् परमशब्दसम्भवात् पुरुषशब्दवाच्यत्वाच्च । नारायणो वा स्यात् । "**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः**" इति तत्पदस्यैव विद्वदनुभवत्वेन व्यवस्थापनात् । प्रणवशब्दस्यापि मुख्यवृत्या तद्वाचकत्वात् सर्वजीवसमष्ट्यात्मकहिरण्यगर्भो वात्र सर्वोपास्यत्वेन विधीयते । तस्मात्सर्वथात्र परमशिवोपासनं न [1]विधीयते इति चेत्

**ब्रूमः**– "**ईक्षति कर्मव्यपदेशात्सः**" "अत्रोपास्यः पुरुषशिव एव । कस्मात्– ईक्षतिकर्मव्यपदेशात्" स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति वाक्यशेषे ध्यातव्यस्य क्षतिकर्मत्वेन व्यपदेशात्सः परमशिव एवेत्यर्थः ।

---

[1] व्यपदिश्यत (ज).

ननु "**स सामभिरुन्नीयते ब्रह्मलोकमिति**" वाक्ये ब्रह्मशब्दस्य चतुर्मुखे रूढत्वात् अत्र तदुपासनं किं नस्यादिति चेन्न। "**स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते**" इति श्रुतौ जीवघनशब्देन सकलजीवाभिमानी हिरण्यगर्भ उच्यते। तस्मात्परो यः परमात्मा ईक्षणे कर्मभूतः स एवाभिध्यानेऽपि कर्मभूत इत्युपदिश्यते। '**परं पुरुष**'मिति विशेषणं परमशिवपरिग्रह एव सम्भवति, "**यस्मात्परं नापरमस्ति किञ्चित् पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः**" इत्यादौ पुरुषशब्देन तदतिरिक्तवस्तुशून्यत्वव्यपदेशात्। अथवा "**तमोंकारेणान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं च**" इति श्रुतिनिर्दिष्टपरमशिवासाधारणधर्माणां हिरण्यगर्भादेरसम्भवात्। "**ब्रह्मलोकं**" इत्यत्र ब्रह्मणः परमशिवस्य लोकः तदुपासकानां प्राप्यतया निर्दिश्यते। "**परं चापरं च ब्रह्म यदोंकारः**" इति विभज्यानन्तरं "**परमपुरुषमभिध्यायीत**" इति ध्यातव्यत्वेन व्यपदेशात्परमशिव एवात्र निर्णीयते "**ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्**" "**अकारो ब्रह्मा उकारो विष्णुर्मकारः कालकालस्तस्मादोंकारं लिङ्गमाहुः**", "**नमस्ताराय**" इत्यादिश्रुतिशतेषु परमशिवस्य ब्रह्मणः प्रणवात्मकत्वं, "**यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः, तस्य प्रकृतिलीनस्य यः परः स महेश्वरः**" इत्यादौ प्रणवपरत्वं च निर्दिश्यते। अतः प्रणवात्मकत्वं प्रणवपरत्वं च तस्यैव समुचितम्। "**यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह्येव स पाप्मना विनिर्मुच्यते**" इत्यनेन परमशिवोपासकानां सर्वपापनिवृत्तिपूर्वकसालोक्यादिक्रममुक्तिः व्याचक्षते।

"**एतस्माज्जीवघनात्परात्परं**" इति वाक्ये जीवघनात् जीवसमष्ट्यात्मकहिरण्यगर्भात्परं ध्येयमित्युपदेशाद्धिरण्यगर्भपक्षोऽत्र न व्यपदिश्यते, नारायणपक्ष एवात्रेति चेदुच्यते। "**ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते**" इति श्रुतौ ब्रह्मविष्णुकालरुद्रादीनां प्रथमजीवत्वपरमशिवजन्यत्वव्यपदेशात्तेषाममृतत्वाभयत्वजगदुभयकारणत्व[2]विश्वाधिकत्वादिधर्माः कथमुपपद्यन्ते? "**नारायणं महाज्ञेयं विश्वात्मानं परायणं**" इत्यादौ नारायणस्य विश्वात्मकत्वव्यपदेशात् कथमस्योपास्यत्वं न घटत इति चेत्—

---

[1] प्रतिपाद्यते (ज). [2] विश्वाधिकर्तृत्वादि (स).

उच्यते – "एतस्माज्जीवघनात्" इति वाक्ये जीवघनाज्जीवसमष्ट्यात्मकहिरण्यगर्भात्परादुत्कृष्टात् नारायणात्परमुत्कृष्टं पुरि शयं, पुरि दहरपुण्डरीके अन्तर्यामितया स्थितं, अत एव पुरुषं परं ब्रह्म तदुपासकः साक्षात्पश्यतीति निर्देशान्न नारायणोऽत्रोपास्यः "नारायणपरं ब्रह्म तत्त्वं नारायणः परः" इत्यादौ परमशिवोपासकस्य नारायणस्य श्वेतकेत्वादिवदौपचारिकत्वेन ब्रह्मधर्ममुक्त्वा नारायणात् यत्परं तत्परं ब्रह्मेत्युपदिश्यते। श्रुत्यन्तरे च "परात्परतरं ब्रह्म तत्परात्परतो हरिः। यत्परात्परतोऽधीशः तन्मे मनः शिवसंकल्पमस्तु" इति ब्रह्मविष्ण्वतीतपरमशिवे मदीयमनस्सङ्कल्पमस्त्विति वेदपुरुषैः प्राथ्यते। "तद्विष्णोः परमं पदं" इति वाक्ये यद्विष्णोर्नारायणात्परमुत्कृष्टं पदं शिवाभिधेयं परब्रह्म तत्पदं सूरयः परमशिवोपासकाः विद्वांसः सदा पश्यन्ति साक्षात्कुर्वन्तीति बोध्यते। तथा च स्मृतिः–

विष्णोर्नारायणादूर्ध्वं परमं परिशेषितम्।
पदं शिवाभिधं नित्यं सदा पश्यन्ति सूरयः॥

तस्मान्नारायणादधिकं शिवपदमेव मुमुक्षुभिर्वेदितव्यम्।

## अथ परमशिवस्य कृष्णपिङ्गलत्वकथनम्

किञ्च– नारायणस्य विश्वात्मकत्वं परमेश्वरोमाशक्त्यंशत्वात्समुचितम्। "पुरुषो वै रुद्रः" "वासुदेवः परा प्रकृतिः"

एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले।
भोगे भवानी पुरुषेषु विष्णुः क्रोधे च काली समरे च दुर्गा॥

इत्यादौ तस्य पराशक्त्यंशत्वं स्पष्टमुक्तम्। अत एव "ऋतं सत्यं" इत्यत्र ऋतं सत्यं अवाङ्मानसगोचरं त्रिलोचनत्वेन विरूपाक्षं उमारूपप्रणवशक्त्या शबलात्मकत्वेन कृष्णपिङ्गलम्।

प्रणवाख्या परा शक्तिश्शिवस्वाभाविकी स्मृता।
तत्परः परमं ब्रह्म विश्वातीतो महेश्वरः॥

इति स्मृतौ प्रणवस्य पराब्रह्मात्मकत्वश्रवणात्। परं सर्वातिशायि ब्रह्म "पुरि शयं पुरुषमीक्षते" इत्युपदेशादत्रेक्षति कर्मत्वेन निर्दिश्यमानः पुरुषः साक्षाच्छिव एवेति सिद्धम्।

---

## दहराधिकरणम् ॥ ५ ॥

ब्रह्मविष्ण्वादिचराचरप्रपञ्चातीतस्य महेश्वरस्य भक्तसंसारतारणार्थं [1]अधिकरणान्तरं दर्शयति—

## ७८. दहर उत्तरेभ्यः ॥ १४ ॥

छान्दोग्ये दृश्यतेऽस्य **विषयः "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्"** इत्यादि। अत्र दहरशब्दवाच्यत्वेन श्रूयमाणं वस्तु भूताकाशो जीवः परमेश्वरो वेति संशयः।

अत्र भूताकाश एव दहरशब्दवाच्यः, तस्यैव प्रसिद्धत्वात्। सूचीरन्ध्रान्तर्गतव्योमवत्तस्य दहरायतनापेक्षया दहरत्वम्। **"यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते"** इत्यादौ *[2]"बाह्याभ्यन्तरभावकृतभेदेन, अवकाशात्मना, आकाशस्यैकत्वेन च" आकाशोपमानत्वद्यावापृथिव्यधिष्ठानत्वव्यपदेशः। सर्वव्यापकस्याकाशस्य, अन्तःप्रविष्टत्वेन दहरशब्दवाच्यत्वमविरुद्धम्।

किञ्च— जीवस्यापि दहरशब्दवाच्यत्वमविरुद्धम्। **"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं"** इत्यादौ ब्रह्मणः परमशिवस्य पुरं शरीरं ब्रह्मपुरं जीवः, **"यस्यात्मा शरीरं"** इति श्रुतिदर्शनात्।

> **"बालाग्रशतभागस्य शतधा कल्पितस्य च।**
> **जीवो भागस्स विज्ञेयो हृदये सर्वदेहिनाम्॥"**

**"एषोऽणुरात्मा चेतसा वेदितव्यः"** इत्यादौ जीवस्य अल्पपरिमाणत्वव्यपदेशात् दहरपदवाच्यत्वं व्यवह्रियते। वियदुपमादिकमपि परशिवापेक्षया जीवस्य। भेदमुपदिशति। तस्माज्जीवभूताकाशयोः दहरशब्दवाच्यत्वं सर्वानुप्रविष्टत्वं सम्भवतीति चेत्—

---

[1] दहरात्मकत्वमधिकरणान्तरं (ज). [2]* अत्र पुष्पांकितः पाठः 'ज' प्रतौ परिष्कृतः दृश्यते।

ब्रूमः—"दहर उत्तरेभ्यः" अत्र दहराकाशस्साक्षात्परमेश्वर एव कस्मादुत्तरेभ्यः ? वाक्यशेषगतहेतुभ्यः। तथाहि—जिज्ञास्यत्वेनाभिहितस्य दहराकाशस्य "तं चेद्ब्रूयुः" इत्युपक्रम्य "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इत्याक्षेपपूर्वकं समाधानवाक्यं उद्दिश्य, "स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्यादिना आकाशोपमानत्वात्, द्यावापृथिव्याद्यधिष्ठानत्वेन निर्देशात् भूताकाशस्य सर्वोपास्यत्वं न सम्भवति। "एष त आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इत्यादिवाक्यनिर्दिष्टापहतपाप्मत्वादयो गुणाः न भूताकाशजीवयोः सम्भवन्ति।

किञ्च—"तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति कर्मणामनित्यफलमुपदिश्य, अथ "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामाँस्तेषां सर्वेषु लोकेष्वस्य कामचारो भवति" इति प्रकृतदहराकाशस्यानन्दफलत्वव्यवस्थापनात् परमेश्वरत्वमस्य निर्दिष्टम्। तस्मात् द्यावापृथिव्यधिष्ठानाकाशोपमितदहराकाशः पूर्वोक्तहेतुभ्यः परमशिव इति सिद्धम्।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ७९. गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

उत्तरेभ्यः इत्यस्य प्रपञ्चोऽयम्। किञ्च—"इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति दहरवाक्ये प्रकृतं परमेश्वरं ब्रह्मलोकशब्देन अभिधाय प्रजाशब्दवाच्यानां जीवानां प्रत्यहं तद्विषया गतिरुच्यमाना गन्तव्यस्य दहराकाशस्य ब्रह्मतां गमयति। गतिं ब्रह्मलोकशब्दं चाभिप्रेत्य "गतिशब्दाभ्यां" इति द्विवचनमुक्तं सूत्रकारैः। प्रत्यहं सुषुप्त्यवस्थायां जीवस्य परमशिवगमनं तथा हि दृष्टम्। हंसोपनिषदि— "एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं सर्वं व्याप्तं तस्याऽष्टधा वृत्तिर्भवति-पूर्वदले पुण्यमतिः आग्नेये निद्रालस्यादयो भवन्ति, याम्ये क्रौर्यमतिः, नैरृत्ये पापे मनीषा, वारुण्यां क्रीडा, वायव्यां गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः ईशान्ये द्रव्यादानं, मध्ये वैराग्यं, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नो, लिङ्गे सुषुप्तिः" इति हृदयान्तर्वर्तिदहराकाशात्मकपरशिवलिङ्गगमनमेवेति दृढीकृतम्।

लिङ्गब्रह्मशब्दयोः घट-कुम्भ-कलशादि शब्दवत्पर्यायत्वम् । दृष्टमित्यनेन प्रत्यहमनन्तरत्नप्रभाभासमानमहाकैलासाभिधानब्रह्मलोकगमनासम्भवात् "**ब्रह्मैव लोकः ब्रह्मलोकः परशिवलोकः**" इति कर्मधारयसमास एव ग्राह्यः । अस्मिन्नर्थे अहरहर्ब्रह्मलोकगमनमेव लिङ्गमित्यनेनोक्तम् । च शब्देन "**निषादस्थपति**"न्यायोऽपि कर्मधारयसमासग्रहणे सूचितः । सुषुप्तौ तद्भावाच्च "**जीवश्शङ्करतां गतः**" इति **शिवगीतायामप्युपदिश्यते** । तस्माद्दहराकाशः परमशिव इति सिद्धम् ।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## ८०. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

"**एष सेतुर्विधरणः**" इति श्रुतौ धृतिरूपमहिम्नः अस्मिन् वाक्ये [1]दहराकाशस्योपलब्धेश्च दहराकाशः परमेश्वर एव ।

किञ्च— "**दहरोऽस्मिन्नन्तर आकाशः**" इत्यारभ्य व्योमसादृश्येन तस्मिन्[2] सर्वसमाधानमुपदिश्य तत्रैवात्मन् शब्दमुक्त्वा अपहतपाप्मत्वादिगुणवैशिष्ट्यं प्रदर्श्य अनतिक्रान्तप्रकरणे तस्यैव धृतिमाह— "**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय**" इति । अत्र विधृतिरित्यात्मशब्दसाहचर्यात्परब्रह्मणश्शिवस्य तत्त्वादिधारणमुपदिश्यते । तस्मात्परमेश्वरादन्यस्य विध्धृतिर्न संभवति । यथा सलिलसन्तानस्य सेतुर्विधारयिता क्षेत्रसम्पदामसम्भेदायैवमयमात्मैषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमाणाञ्च विधारयिता सेतुरसम्भेदायासङ्करायेति । एवमत्र प्रकरणे दहरस्य विधारणलक्षणमहिमानं निर्दिशति । श्रुत्यन्तरे चराचरप्रपञ्चधारणं परशिवलिङ्गस्यैव श्रूयते । "**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः**" इति । तथा "**एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरण एषां लोकानामसम्भेदाय**" इति च । तस्मात् परमेश्वरादन्यो न दहरशब्दवाच्यः ।

---

[1] अन्यद्दहराकाशस्य (ज, झ). [2] तस्मिन्समाधान (ज, झ).

## नारायणोक्त भेदाभेदशक्तिविशिष्टशिवाद्वैतप्रसङ्गः

पुनर्द्वैत्वन्तरं दर्शयति–

## ८१. प्रसिद्धेश्च ॥ १७ ॥

दहरशब्दः परमेश्वर एव प्रसिद्धः । "आकाशो ह वै नामरूपयोर्निर्वहिता" "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिषु परमेश्वरस्य आकाशशब्दवाच्यत्वदर्शनात् अत्र दहराकाशः परमेश्वरः ।

यद्यप्याकाशशब्दस्य भूताकाशे प्रसिद्धिः, तथापि "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्युपमानत्वेन ग्रहणात् नोपमेयदहराकाशत्वं सम्भवति । तस्माद्दहरपदवाच्यो नेतरः ।

ननु– "दह्रं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थं । तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।" कैवल्ये च– "हृत्पुण्डरीकं विरजं विशुद्धं" इति दहरपुण्डरीकमुपदिश्य, तन्मध्ये "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" इत्यादिना परमात्मोपासनं सूचितम् । अत्र दहराकाशत्वेन परमेश्वरोपदेशात्परस्परश्रुतिविरोधप्रसङ्ग इति चेन्न । भूताकाशस्य अपहतपाप्मत्वादि परमेश्वरधर्माणा मसम्भवात् । दहराकाशशब्देन "चिदम्बरप्रकृतिः" उच्यते । शक्ति-शक्तिमतोरभेदान्न परस्परश्रुतिविरोधः । "आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनन्दम्" इत्यादिना परमेश्वरस्य चिदम्बरशरीरत्वोपदेशात् ।

किञ्च कूर्मे वृषभः–

"कैषा भगवती देवी शङ्करार्धशरीरिणी ।
शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम् ॥"

कूर्मः– "रहस्यमेतद्विज्ञानं जन्तूनामेव मोचनम् ।
व्योमसंज्ञा पराकाष्ठा ज्ञानरूपातिलालसा ॥

स्वाभाविकी च तन्मूला प्रभा भानोरिवामला।
एका माहेश्वरी शक्तिरनेकोपाधियोगतः॥

परापरेण रूपेण क्रीडते तस्य सन्निधौ।
सेयं करोति सकलं पश्य कार्यमिदं जगत्॥

न कार्यं नापि करणं ईश्वरस्येति सूरयः।
अनया परया देवः स्वात्मानन्दं समश्नुते॥

यया सर्वमिदं प्रोतमोतं चैवाखिलं जगत्।
एका शक्तिश्शिवो ह्येकः शक्तिमानुच्यते शिवः॥

शक्ति-शक्तिमतोर्भेदं वदन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्वचिन्तकाः॥"

तत्रैव देवीवाक्यम्—

"मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम्।
अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः॥

अहं वै सर्वभूतानां आत्मा सर्वान्तरा शिवा।
शाश्वतैश्वर्यविज्ञानमूर्तिस्सर्वप्रवृत्तिका॥
अनन्तानन्तमहिमा संसारार्णवतारिणी*॥"

इत्यादिना भेदाभेदशक्तिविशिष्टशिवाद्वैतप्रसङ्गस्य नारायणेन कूर्मपुराणे व्याख्यानात् दहरात्मकत्वं दहरमध्यवर्तित्वं च परमेश्वरस्य न विरुद्धम्।

पुनर्हेत्वन्तरमाह—

---

* अत्र "दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम्" इत्यधिकः पाठः 'स' कोशे दृश्यते।

## ८२. इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १८ ॥

इतरपरामर्शात् "अथ यदिदमस्मिन् ब्रह्मपुरे" इति वाक्ये ब्रह्मशब्देनेतरस्य जीवस्य परामर्शात्प्रतिपादनाद्दहराकाशो जीव इति चेन्न, असम्भवात्। सत्यसङ्कल्पादिधर्माणां जीवे असम्भवादित्यर्थः।

किञ्च– "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति" इति वाक्यशेषबलात् जीव एवात्र परिगृह्यते। श्रुत्यन्तरे– सुषुप्त्यवस्थायां सम्प्रसादशब्दनिर्देशात्तदवच्छिन्नशारीर एवात्र व्यपदिश्यते। उत शरीरात्समुत्थानमपि जीवलिङ्गम्, तस्मादत्र जीव एव दहराकाशशब्दवाच्य इति चेत्–

उच्यते देहेन्द्रियमनःप्राणाद्यवच्छिन्नस्य जीवस्य दहराकाशवर्तित्वेन तदाकाशोपमानं विरुध्यते। जीवस्य शरीरात्समुत्थानपूर्वकपरमेश्वरप्राप्त्युपदेशान्नात्र जीवप्रकरणम्। अतः परमेश्वरप्रकरणत्वात् परमेश्वर एवात्र दहरपदवाच्य इति सिद्धम्।

हेत्वन्तरमाह–

## ८३. उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तराचेत् उत्तरत्र प्रजापतिवाक्ये "य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यत्र जीवशब्दवाच्यस्यात्मनः सत्यसङ्कल्पत्वादिधर्माननुपदिश्य "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः इत्यादिना जिज्ञासान्वेषणादीनां तस्यैव निर्देशात्।

किञ्च– दहरविद्यायामुपरि प्रजापतिविद्यायां "एषोऽक्षिणि पुरुषो दृश्यते एष आत्मा" "य एष स्वप्ने महीयमानश्चरति एष आत्मा". "तद्यत्रैतत्सुप्तस्समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मा" इत्यादौ जाग्रत्स्वप्नसुषुप्तिग्रस्तजीवस्यैवात्र प्रतिपादनात्तस्यैवात्रापहतपाप्मत्वादिधर्मोपदेशाच्च। "एतदमृतमभयमेतद्ब्रह्मेति" इति वाक्यसिद्धामृतत्वादिधर्माणां [1]तस्यैवोपदेशाद्दहराकाशो जीव इति चेन्न। आविर्भूतस्वरूपस्तु

---

[1] तस्यैवोचितत्वात् (ज).

इत्यत्र तु शब्देन पूर्वपक्षव्यावृत्तिः । उत्तरात्प्रजापतिवाक्यादपि न जीवशङ्का युक्ता आविर्भूतस्वरूपोऽत्र जीवो विवक्षितः । "**परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि निष्पद्यते**" इत्युपसंहारवाक्ये मुक्तजीवस्य ब्रह्मभावाविर्भावेनापहतपाप्मत्वादिधर्मप्रतिपाद्यः परमेश्वर एव । मुक्तजीवस्य ब्रह्मत्वेन जीवत्वाभावात् ब्रह्मधर्मोपदेशो युक्त एव । "**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्**" "**ब्रह्मवित् ब्रह्मैव भवति**" इत्यादिश्रुतिषु मुक्तजीवानां ब्रह्मात्मकत्वं सूचितम् । तथा च स्मृतिः-

"अन्तर्बहिश्च तत्सर्वं परिपूर्णं महेश्वरम् ।
भावयेत्परमानन्दलब्धये पण्डितोत्तमः ॥"

"शिवोऽहमिति भावो हि शिवतापत्तिकारणम् ।
न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत् ॥

ज्ञानं वस्तुपरिच्छेदो ध्यानं तद्भावकारणम् ।
तस्मात् ज्ञाते महादेवे ध्यानयुक्तो भवेत्सुधीः ॥

नैरन्तर्येण सम्पन्नो भवेद्ध्यातुं शिवं प्रति ।
तद्भावो जायते यद्वत्क्रिमेः कीटस्य चिन्तनात् ॥

गुरोः कटाक्षवेधेन शिवो भवति मानवः ।
रसवेधाद्यथा लोहो हेमतां प्रतिपद्यते ॥" इति ।

ननु दहराकाशस्येश्वरत्वे "**अथ य एष सम्प्रसादः**" इत्यादिना जीवपरामर्शो व्यर्थ इत्याशङ्कायामाह-

## ८४. अन्यार्थश्च परामर्शः ॥ २० ॥

परामर्शः जीवपरामर्शः अन्यार्थश्च- ब्रह्मभेदप्रतिपादनार्थः "**परं ज्योतिस्स्वरूपं-सम्पद्य स्वेन रूपेणाभिनिष्पद्यत**" इति वाक्यशेषावगतजीवपरामर्शोऽप्युपसम्पन्नः

परमेश्वर पर एव । जीवपरामर्शं विना तदसम्भवात् जीवपरामर्शो न जीवप्रति-पादनार्थः ।

## ८५. अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

"**दहरोऽस्मिन्नन्तर्हृदय आकाशः**" इत्यादौ परब्रह्मणशिवस्य अल्पत्वश्रवणात् व्यापकस्याल्पदहरत्वासम्भवाद्दहरपदवाच्यत्वं जीवस्यैव समुचितमिति चेन्न । "**अर्भकौक-स्त्वात्**" इति सूत्रे व्योमदृष्टान्तेन भक्तोपासनार्थं परमेश्वरस्य परिच्छिन्नत्वं पूर्वमेवोक्तम् ।

ननु "**एषोऽक्षिणि पुरुषो दृश्यते**" इति श्रुतौ जाग्रदवस्थापन्नजीवोपक्रम-श्रवणात् जाग्रदाद्यनुभवस्य जीवे समुचितत्वात् स एवात्र दहरपदवाच्य इति चेन्न । "**अयमात्मापहतपाप्मा विजरो**" "**नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः**" "**तस्माद्वा एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति; विद्धस्सन्नविद्धो भव-त्युपतापी सन्ननुपतापी भवति, तस्माद्वा एतँ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्प-द्यते**" । "**सकृद्विभातो ह्येवैष ब्रह्मलोकः**" इति वाक्यशेषे ब्रह्मलिङ्गबाहुल्यान्नान्य प्रकरणमित्यभिधीयते । अवस्थात्रयप्रतिपादनस्यापि "**शाखाचन्द्रन्यायेन**" परमात्मप्रति-पादकतयोपपत्तेः ।

श्रुत्यन्तरेऽपि– "**आत्मन्येवात्मानं पश्येच्छम्भुराकाशमध्ये**" "**शिव एको ध्येयः**" इत्यादिषूपासनाज्ञानस्य मोक्षफलं विधीयते । तस्मान्निष्कामनिजधर्मोपेतनिषिद्धकाम्य-कर्मत्यागपूर्वकश्रुतिस्मृतिचोदितवर्णाश्रमोचितकर्मानुष्ठानलब्धचित्तशुद्ध्यनुगतपरमशिवभक्तिसम्भावित-मुमुक्षुभिरेव चिच्छक्त्यात्मकज्योतिर्लिङ्गस्वरूपं अपहतपाप्मत्वादिगुणविशिष्टं शिवतत्त्व-मुपासनीयम् ।

ननु छन्दोग्ये– शिवतत्त्वप्रतिपादकमुख्यलिङ्गादर्शनात्कथं तत्परत्वमिति चेदुच्यते–

तैत्तिरीये "**दहरं विपाप्मं**" इत्यारभ्य "**यः परः स महेश्वरः**" इत्यन्तेन, कैवल्ये– "**हृत्पुण्डरीकं विरजं विशुद्धं**" इत्यारभ्य "**उमासहायं**" इत्यादिना परम-शिवोपासनाया असन्दिग्धतया व्यवस्थापनान्नान्यविषयत्वम् । [illegible] गीतासु–

"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ १८-६१ ॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ १८-६२ ॥

इति प्रतिपादितम् ।

## अनुकृत्यधिकरणम् ॥ ६ ॥

सर्वव्यापकस्य परमेश्वरस्य दहरात्मकत्वं प्रसाध्य तस्यैव साधनान्तरनिरपेक्षस्वयम्प्रकाशत्वं स्थूलसूक्ष्मचिदचित्प्रकाशकत्वं चाधिकरणान्तरेण दर्शयति—

## ८६. अनुकृतेस्तस्य च ॥ २२ ॥

मुण्डकोपनिषदि श्रूयते— "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। अत्र सर्वप्रपञ्चप्रकाशकत्वेन श्रूयमाणं वस्तु तेजोविशेषः परमेश्वरो वेति संशयः।

तेजोविशेष एवात्रोपदिश्यते। तेजस एव प्रबलप्रकाशकत्वेन प्रसिद्धेः। प्रकृष्टतेजसा दुर्बलस्याभिभवदर्शनाच्च। अतो न परमेश्वर इति चेत्—

ब्रूमः— "अनुकृतेस्तस्य च" अत्र प्रतिपाद्यस्तेजोविशेषः परमेश्वर एव। कुतः? अनुकृतेः; अनुकृतिरनुकरणं यत् "तमेव भान्तमनुभाति सर्वं" इत्यनुभातं तदुच्यते। न हि तेजस्तेजोऽन्तरे भासमाने भासते। ततःप्रकाशत्वेन भासमानं शिवतत्वं अनु सर्वं प्रभाकरचन्द्रनक्षत्रादिकं भासत इति युक्तम्। सूत्रे "तस्यचे"ति पदेन "तस्य भासा सर्वमिदं विभाति" इति विषयवाक्योदाहृतचतुर्थचरणाभिप्रेतं सर्वावभासकत्वं स्वयं प्रकाशमानत्वं शिवस्यैवोपपन्नम्। "तदेव ज्योतिषां ज्योतिः" इत्यादौ प्रसिद्धं च। "न तत्र" इति तच्छब्दे च—

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिर्यत्तदात्मविदो विदुः॥"

इति प्रकृतपरशिवब्रह्मग्रहणमेव युक्तमिति बोध्यते।

हिरण्मयो ज्योतिर्मयो ह्यानन्दमयः परमशिव इत्यर्थः। "**हिरण्याय नमः, हिरण्यलिङ्गाय नमः**" "**नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय**" इत्यादौ परमशिवस्यैव प्रसिद्धम्। तस्मिन्नन्नमयाद्यपेक्षया परे कोशे दहराकाशे "**ब्रह्मपुच्छं प्रतिष्ठा**" इति यत्प्रतिष्ठाभूतं ब्रह्म तत्प्रतिष्ठितं, तच्च विरजं मलत्रयशून्यं, निष्कलं पाशरहितं, शुभ्रं नैसर्गिकदोषशून्यं, ज्योतिषां सूर्यादीनां ज्योतिरवभासकं, तच्च विदुषामनुभवसिद्धमित्यर्थः।

परमेश्वरपक्षे हेत्वन्तरमाह–

## ८७. अपि च स्मर्यते ॥ २३ ॥

**"अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रम्।**
**पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥"**

इति **कैवल्याद्युपनिषत्सु** ज्योतिर्मयत्वं परमशिवस्यैव स्मर्यते। अपि चेति समुच्चये। तथा-**गीतासु** च–

**"न तद्भासयते सूर्यो न शशाङ्को न पावकः।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥**
**यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥"**

**इति** शिवस्य परब्रह्मणः साधनान्तरनिरपेक्षस्वयंप्रकाशकत्वे सति स्वानुस्यूतस्थूलसूक्ष्मचिदचित्प्रपञ्चप्रकाशकत्वमुपदिश्यते। तस्मान्नान्यविषयत्वम्।

### षड्विधतात्पर्यलिङ्गैः भगवद्गीतायाः शिवपरत्वप्रतिपादनम्

ननु **गीतासु "तत्तेजो विद्धि मामकम्"** इति सर्वप्रकाशकत्वेन नारायणस्यैव परब्रह्मत्वोपदेशात् "**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति**" इति वाक्यविहितदहरान्तर्वर्तित्वं

तस्यैवोपपन्नम्; न तु शिवपरत्वं, प्रकरणविरोधोऽत्र दृश्यते। तस्मान्नारायण एवात्रोपदिश्यते इति चेन्न।

उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैः गीतार्थस्यापि परमशिवबोधकत्वात्। "ईश्वरस्सर्वभूतानां" इत्युपक्रम्य "तमेव शरणं गच्छ" इत्यन्तेन शिवपरत्वम्। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्यादिना विष्णुपरत्वमेव सूचितमिति न शङ्कनीयम्। दहरोपासनस्य विष्णुपरत्वे पूर्वोक्ततैत्तिरीयकैवल्यादिबहुश्रुतिविरोधात्। अग्रिमवाक्येन फलविषयकप्रकारसहितस्य विष्णूपासनस्य पृथग्विधानाच्च। तदुक्तं—

"सर्वगुह्यतमं भूयः श्रुणु मे परमं वचः।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥"

इत्यादौ अनयोश्शिवकेशवयोरुपास्योपासकयोरभेदः "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रन्यायेन वेदितव्यः।

किञ्च— विष्णोरपि शिवांशत्वाद्विष्णूपासनायाश्शिवप्रीतिकरत्वाच्च विष्णूपासनया मोक्षविधायकवाक्यानां स्थूलारुन्धतीन्यायेन शिवभक्तिजननद्वारा मोक्षहेतुत्वमुपदिष्टम्। कूर्मपुराणे ईश्वरगीतासु श्रूयते—

शिवः— "ममैषा परमा मूर्तिः नारायणसमाह्वया।
सर्वभूतात्मभूतस्था शान्ता चाक्षरसंज्ञका॥

तस्मादेष महायोगी मद्भक्तः पुरुषोत्तमः।
अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय हि॥" इति।

गीताशास्त्रमपीश्वराल्लब्ध्वा तदाज्ञावशादेव कृष्णेनार्जुनायोपदिष्टम्। तत्रैव शिवः—

"मयैतद्भाषितं ज्ञानं हितार्थं ब्रह्मवादिनाम् ।
दातव्यं शान्तचित्तेभ्यो शिष्येभ्यो भवता सदा ॥

नारायणोऽपि भगवान् देवकीतनयो हरिः ।
अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥" इति ।

तस्मात्परमेश्वर एवात्रोपास्यः ।

---

प्रमिताधिकरणम् ॥ ७ ॥

चिदचित्प्रपञ्चप्रकाशकस्य परब्रह्मणश्शिवस्य रूपोपन्यासमधिकरणान्तरेण दर्शयति–

## ८८. शब्दादेव प्रमितः ॥ २४ ॥

**कठवल्यां** श्रूयतेऽस्य **विषयः**– "**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य स ततो विजुगुप्सते**" इति। "**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः एतद्वै तत्**" इति। अत्राङ्गुष्ठमात्रत्वेन श्रूयमाणः पुरुषो जीवः परमेश्वरो वेति **सन्देहः**।

अत्राङ्गुष्ठमात्रपरिमाणोपदेशाज्जीव इत्यूहनीयम्, सोपाधिकत्वात्। किञ्च– "**स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा विश्वाधिपस्संचरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूपस्सङ्कल्पाहंकारसमन्वितो यः।**"

> "**अथ सत्यवतः कायात्पाशबन्धवशं गतम्।**
> **अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्॥**"

इत्यादिश्रुतिस्मृतिषु शारीरस्यैवाङ्गुष्ठमात्रोपदेशात्। "**मध्य आत्मनि तिष्ठति**" इति देहान्तर्वर्तित्वेन निर्देशात्सर्वथा जीवस्यैवाङ्गुष्ठमात्रत्वमुपपद्यत इति चेदुच्यते–

इहाङ्गुष्ठमात्रः पुरुषो महेश्वरः एव। कुतः? शब्दादेव– ईशानशब्दादेव साक्षान्महेश्वरः प्रमितः निश्चित **इत्यर्थः**। इतरव्यवच्छेदार्थ एवकारः। **ईशानस्सर्वविद्यानां**" इत्यादिश्रुत्यन्तरेष्वपि परमशिवस्यैवेशानशब्दश्रवणात् न हि शरीरस्येश्वरत्वम्। "**भूतभव्यस्य**" इति श्रुत्युपदिष्टसर्वेश्वरत्वस्य जीवेऽनुपपन्नत्वात्। "**यद्भूतं यच्च भव्यं उतामृतत्वस्येशानः**" इति श्रुत्यन्तरे च तस्यैव श्रवणात्। "**एतद्वै तत्**" इति प्रकरणस्य परमेश्वरादन्यत्र सामञ्जस्याभावात्। "**सर्वो वै रुद्रः**" इत्यादौ तस्यैव चराचरात्मकत्वश्रवणाच्च। पृष्टं चेह **ब्रह्म**– "**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रा-**

**स्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यति तद्वद॥"** इति। शब्दादेवेत्यभिधानश्रुतेरेव प्रकृते मुख्यतया परमेश्वरस्यैव व्यपदिष्टत्वात्। **"नमस्तेऽस्तु भगवन्विश्वेश्वराय"** इत्युपक्रम्य **"सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः"** इत्यन्तेन यजुस्सामसु— **"सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये"** इत्यथर्वणे च तस्यैव सर्वेश्वरत्वव्यवस्थापनात्। **"अङ्गुष्ठमात्रः पुरुषो ह्यङ्गुष्ठन्तु समाश्रितः। ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्॥"** इत्यादिमहोपनिषदि परमेश्वरस्यैव अङ्गुष्ठमात्रत्वनिर्देशान्नेतरः।

### अथ ब्रह्मविद्याधिकारनिरूपणम्

व्यापकस्य शिवस्य परब्रह्मणः कथमङ्गुष्ठमात्रत्वमित्याशङ्कायामाह—

## ८९. हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥

तु शब्दोऽत्र शङ्कानिरासार्थकः। हृद्यपेक्षया हृदयस्थानापेक्षया व्योमवत्सर्वव्यापकस्य परशिवस्य साधकानुग्रहार्थं ज्योतिर्मयलिङ्गरूपेणाङ्गुष्ठपरिमाणहृदयावच्छिन्नतया अङ्गुष्ठमात्रत्वमुपपन्नम्। **"अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः"** इति श्रूयते। हस्तिमशकादि शरीरेषु हृदयपुण्डरीकस्यानियतपरिमाणत्वात्कथमङ्गुष्ठमात्रनियमः इति चेदत्राह—

**मनुष्याधिकारत्वाच्छास्त्रस्येति** शेषः। पूर्वतन्त्रे षष्ठे **"फलार्थं कर्मणि"** इत्यधिकरणे **"तिर्यगादेरपि स्वर्गकामस्याधिकारः, स्वर्गकामश्रुतेरधिकारात्"** इत्याशङ्क्य तिर्यगादेस्सामर्थ्याभावेन स्वर्गकामपदं सङ्कोच्य, मनुष्याधिकारत्वे स्थिते चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्रापय्य **"वसन्ते वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यश्शरदि वैश्यः"** इति त्रयाणामेव अग्निसम्बन्धश्रवणात् त्रयाणामेवाधिकार इति राद्धान्तितम्।

किञ्च— **"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥"**

"**अर्थी समर्थो विद्वान् [1]शास्त्रेणापर्युदस्तो वैदिके कर्मण्यधिकारी**" इति श्रुति-सूत्रनिर्दिष्टशक्तस्यार्थित्वाद्युपनयनादिशास्त्रस्य [2]मनुष्यनियताधिकारलक्षणविषयत्वात्। "**यं त्वं मनुष्याय हिततमं मन्यसे**" इत्यादौ मनुष्याणामेव हिततमत्वोपदेशात्तिर्यगादावर्थित्वादि-धर्माणामसम्भवात् शरीरातिशयेन मनुष्याणामेवाङ्गुष्ठमात्रहृदयपुण्डरीकसम्भवाच्च तेषामेव ब्रह्म-विद्याधिकारित्वम्। तस्मादुपासनाशास्त्रविधेर्मनुष्यहृदयं यत्परिमाणं तदवच्छिन्नस्वरूपं परम-कारुणिकः परमशिवः प्राप्नोति। घटावच्छिन्नाकाशस्य घटपरिमाणवदङ्गुष्ठमात्रदहराकाशा-वच्छिन्नस्य परमेश्वरस्य तत्परिमाणत्वं न विरुद्धम्। अङ्गुष्ठमात्रजीवप्रतिपादकवाक्यानां मुक्तजीवपरत्वान्न दोषः। "**ब्रह्म वेद ब्रह्मैव भवति**" इत्यादिश्रुतिषु मुक्तजीवस्य ब्रह्मात्मकतया ब्रह्मधर्मोपदेशो युक्तः। किञ्च– "**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः**" "**तं स्वाच्छरीरात्प्र[3]वृहेन्मुञ्जादिवेषिकां धैर्येण। तं विद्याच्छुक्रममृतम्**" इत्यङ्गुष्ठमात्रत्वे न कश्चिद्विरोधः।

---

[1] शास्त्रेणापर्युदासो (ज). [2] मनुष्यनियतप्रमाणाधिकार (ज. भ) [3] प्रगृहेन्मुञ्जादि (ज)

## देवताधिकरणम् ॥ ८ ॥

### देवानां ब्रह्मविद्याधिकारविचारः

एवं ब्रह्मविद्याधिकारं प्रसाध्य देवानां ब्रह्मविद्याधिकारित्वमाह–

### १०. [1]तदुपर्युपरि बादरायणस्सम्भवात् ॥ २६ ॥

बृहदारण्यकतृतीयाध्याये श्रूयतेऽस्य विषयः। "तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणां" इति मनुष्याधिकारत्वादित्येतत्प्रसङ्गादागतमिदमधिकरणम्।

इह देवानां ब्रह्मविद्याधिकारित्वं अस्ति न वेति संशयः।

अत्र ब्रह्मविद्यायां न देवानामधिकारः। "यं त्वं मनुष्याय हिततमं मन्यसे" इत्यादौ मनुष्याणामेव परशिवोपासनस्य हिततमत्वेन व्यपदेशादर्थित्वादिशास्त्रस्य मनुष्याधिकारत्वात्, देवानां पञ्चीकृतविग्रहाभावात्। स्थूलशरीरविशिष्टस्यैव स्तुतिध्यानादिकर्माधिकारदर्शनाच्च। "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादौ देवानां शरीरित्वं व्यपदिश्यत इति चेन्न। विध्यैकवाक्यविषयाणामन्यत्र समन्वयाभावात्। शरीरवत्त्वेऽपि "अर्थी समर्थो विद्वांश्शास्त्रेणापर्युदस्तो वैदिके कर्मण्यधिकारी" इत्यादिशास्त्रनिर्दिष्टत्वादिकं न तेषां सम्भवति। देवपरमेश्वरयोः स्थित्यैकत्वोपदेशात्। "देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन्" इत्यादौ स्वर्ग एव लोको रुद्रस्य परमात्मनः पदं देवानामपि पदमित्याचक्षते।

किञ्च– "आप्नोति स्वाराज्यम्" इत्यादिषु [2]मुक्तानामपि स्वाराज्यप्राप्तिः श्रूयते। उत– "तन्त्वौपनिषदं पुरुषं पृच्छामि" इत्यादौ ब्रह्मणो वेदवेद्यत्वावगमात्। "नावेदविन्मनुते तं बृहन्तम्" इत्यादौ मानान्तराभाव उपदिश्यते। देवानां

---

[1] "तदुपर्यपि बादरायण सम्भवात्" (ज.). [2] तद्व्यपदेशोऽपि देवानां (ज, झ).

ब्रह्मविद्याधिकारहेतुभूतोपनयनसंस्कारस्य वेदशास्त्रेष्वदृष्टत्वात्, साधनं विना साध्यानिष्पत्तेरिति न्यायादुपनयनादिकर्मशून्यानां देवानां न सर्वथा ब्रह्मविद्याधिकारित्वं सम्भवतीति प्राप्ते ब्रूमः–

ब्रूमः– "**तदुपर्युपरि बादरायणस्सम्भवात्**" तेषां मनुष्याणामुपर्युपरिष्टात् स्वर्गलोकस्थितानां देवानामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायणो मन्यते। कुतः, सम्भवात्। "**देवारुद्रमपृच्छन् को भवानिति; सोऽब्रवीदहमेकः प्रथममासं**" इत्यादिनाथर्वशिरसि देवानामर्थित्वस्य परमेश्वरकर्तृकब्रह्मविद्योपदेशस्य च दृष्टत्वात्। तत्रैव प्रदेशान्तरे, "**ततो देवा रुद्रं नापश्यंस्ते देवा रुद्रं ध्यायन्ति**" इत्यादौ देवानां परमेश्वरविषयमुपासनं श्रूयते। "**तद्यो यो देवानां प्रत्यबुध्यत**" इत्यादिना देवानामपि ब्रह्मविद्याकामनया ब्रह्मस्वरूपत्वोपदेशात् ब्रह्मविद्याधिकारित्वं न विरुद्धम्।

"**देवा ह वै स्वर्गं लोकमगमन्**" इत्यत्र स्वर्गपदेन प्रकृतप्रकरणाद्धिरण्यगर्भादिदेवलोकादुत्कृष्टं ब्रह्मणः शिवस्य लोकविशेषत्वं व्यपदिश्यते। देवादीनां सदा भोगशालित्वेऽपि भोगवस्तुष्वनित्यत्वादिदोषदर्शनाद्वैराग्यादिकं निरतिशयानन्दमोक्षार्थित्वं च सम्भवति। "**इन्द्रो वृत्राय वज्रमुदयच्छत्**" इत्यादिमन्त्रार्थवादस्मृतिपुराणागमादिषु देवानां विग्रहवत्त्वव्यपदेशात् तेषां स्वतस्सिद्धाबाधितब्रह्मसूत्रसंस्कारसिद्धत्वात्, स्वयंभातवेदवेदान्तार्थत्वाच्च उपनयनसंस्कारशास्त्रस्य मानुषकिञ्चिज्ज्ञानविषयत्वमेवेति निर्णीयते। उत– "**एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास!**" "**भृगुर्वै वारुणिः, वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति**" इत्यादौ ब्रह्मविद्याग्रहणार्थं ब्रह्मचर्यादिकं दृष्टम्।

उत, भृग्वादिसगोत्रत्वेन स्वत उद्भूतयज्ञसूत्रविशिष्टत्वेन, स्वतस्सिद्धवेदवेदाङ्गज्ञानवत्वेन च ब्रह्मविद्याधिकारहेतुभूतार्थित्वादिकं च सम्भवत्येव। वेदानां 'अर्थवादप्रामाण्यात् देवानां शरीरित्वेन तत्सामर्थ्यं सिध्यति। "**आदित्यो यूपः अग्निर्हिमस्य भेषजम्**" इत्यादिगुणवादानां स्वार्थे समन्वयविरोधेऽपि "**इन्द्रो वृत्राय वज्रमुदयच्छत्**"

---

[1] वाच्यार्थे प्रामाण्यात् (ज परिष्कृतकोशे) दृश्यते

इत्यादीनामर्थवादानां विरोधस्य मानान्तरप्राप्तेश्चाभावेन स्वार्थे समन्वयसम्भवात्। अङ्गुष्ठमात्रश्रुतेस्त्वाङ्गुष्ठापेक्षया विरोधाभावात्प्रामाण्यं युक्तम्।

ननु चतुर्थ्यन्तशब्दानामेव देवत्वात्तेषामचेतनत्वात्कथं ब्रह्मविद्यायामधिकार इति चेन्न। चतुर्थ्यन्तशब्दवाच्यानां विग्रहवतां देवानां प्रतिपादितत्वेन ब्रह्मविद्यायामधिकारसम्भवात्।

देवानां विग्रहवत्त्वे बाधकमाशङ्क्य निराकरोति–

## ९१. विरोधः कर्मणीति चेन्नानेकप्रवृत्तेर्दर्शनात् ॥ २७ ॥

**ननु**– देवानां विग्रहवत्त्वं विना ब्रह्मविद्यायामनधिकारात्तदङ्गीकरणीयम्। तथा सति कर्मण्यपि शरीरित्वया ऋत्विगादिवत्सन्निधानेनैवोपकारकत्वं स्यात्तच्च न सम्भवति। एकस्य शरीरस्यानेकत्र युगपत्सन्निधानासम्भवात्तस्माद्विग्रहवत्त्वाङ्गीकारे कर्मणि देवताया उपकारकत्वविरोधः प्रसज्येतेति चेन्नैष दोषः। कुतः? अनेकप्रवृत्तेर्दर्शनात् विग्रहवतोऽपि सौभर्यादेरिव देवानामेकैकशरीरित्वेऽपि एकस्य देवस्यानेकेषां शरीराणां युगपद्व्याप्तेः श्रुतौ दर्शनात्। तथा हि–

**बृहदारण्यके शाकल्यब्राह्मणे**– "**अथैनं विदग्धः शाकल्यः पप्रच्छ, कति देवा याज्ञवल्क्य**" इत्युपक्रम्य "**त्रयश्च त्री च शता त्रयश्च त्री च सहस्रं**" इत्युक्त्वा "कतमेते" इति पृच्छायां "**महिमान एवैषामेते त्रयस्त्रिँशत्त्वेव देवा**" इति सहस्रषडधिकत्रिशतदेवानां त्रयस्त्रिंशद्देवेष्वन्तर्भावमुक्त्वा। त्रयस्त्रिंशत्त्वेऽपि षट्सु षण्णां, त्रिषु त्रयाणां, द्वयोर्द्वयोरेकस्मिन्वाय्वात्मके देवे अन्तर्भावं ब्रुवती श्रुतिः एकस्य वायोरनेकात्मकत्वं दर्शयति। तस्माद्विग्रहवत्त्वेऽपि देवानां कर्माङ्गभावचोदनादनेकविधत्वे न कश्चिद्विरोधः।

**स्मृतावपि**– "**आत्मनो वै शरीराणि बहूनि भरतर्षभ।**
**योगी कुर्यात्फलं प्राप्य तैश्च सर्वैर्महीं चरेत्॥**
**प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्।**"

इत्यादिना अणिमाद्यैश्वर्येण योगीश्वराणामपि योगप्रभावाद्युगपदनेकशरीरधारणस्य प्रतिपादितत्वात् तैजसशरीराणामाजन्मसिद्धदेवानामनेकप्रतिपत्तिः कुतश्शङ्कनीया ।

अनेकैर्भोजयद्भिर्भोज्यं युगपदेको न भोज्यते ।
बहुभिर्नमस्कुर्वाणैस्तु युगपदेको न वन्द्यते ॥"

एवं विग्रहवतीमेकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति तत्कर्मणि न विरोधः ।

ब्रह्मादिदेवानां विग्रहवत्त्वाङ्गीकारे विग्रहाणामनित्यत्वात्तत्प्रतिपादकवेदस्याप्यनित्यत्वं स्यादित्याशङ्क्याह–

## १२. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

ननु मास्तु कर्मणि विरोधः । शब्दे वेदे विरोधो दृश्यते । अस्मदादिवद्देवानां विग्रहवत्त्वाङ्गीकारे जन्मविनाशः प्रसज्येत । अतोऽनित्यविग्रहवद्देवतायाः नित्यवेदार्थत्वाङ्गीकारे शब्दस्यार्थेन सह नित्यसम्बन्धाभावान्नित्यानित्यसंयोगविरोधः ।

किञ्च– श्रुतिप्रतिपादितेन्द्रादिदेवानामनित्यत्वाङ्गीकारे तत्प्रतिपादकवेदस्यापि तथापौरुषेयत्वमनित्यत्वं च स्यात् । तस्माद्वेदचोदनार्थवादादेर्दत्तजलांजलिताप्रसङ्गः । तच्चोदित कर्मणां चासिद्धिरित्यनेकार्थविरोधः इति चेत् न तद्विरोधः कुतः ? "अतः प्रभवात् ।" देवादिनिष्ठनित्याकृतिवाचकाद्वेदराशेरेव देवतादिप्रपञ्चस्य प्रभवादुत्पन्नत्वश्रवणादित्यर्थः । कथमेवमवगम्यते ?– प्रत्यक्षानुमानाभ्याम् ।

प्रत्यक्षं श्रुतिः । अनुमानं स्मृतिः । यथाक्रमं श्रुतिः शब्दपूर्वां सृष्टिं निर्दिशति । तथा च श्रुतिः– "**एत इति वै प्रजापतिर्देवानसृजत, असृग्रमिति मनुष्यान्, इन्दव इति पितॄन्, तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं, विश्वानीति शास्त्रं, अभिसौभगेत्यन्याः प्रजाः**" इति । तथा "**स मनसा वाचं मिथुनं समभवत्**" इत्यादिना तत्र तत्र शब्दपूर्विका सृष्टिरुपदिश्यते ।

स्मृतिरपि—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥" इति।

"नाम रूपं च भूतानां कर्मणां च प्रवर्तनम्।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः॥" इति।

तस्माद्वेदस्य नित्यत्वं देवादीनामनित्यत्वं चोदाहृतवाक्यैः प्रतीयत इति न विरोधः। व्यक्तीनामनित्यत्वेऽप्याकृतिनित्यतया तस्या एव शब्दार्थत्वेन गवादिवत्सम्बन्धस्यौत्पत्तिकत्वसिद्धेः न शब्दे विरोधः।

किञ्च— "यद्धि मनसा ध्यायते तद्वाचा वदति तत्कर्मणा करोति" इति न्यायेन यथा गुरुश्शिष्यपाठार्थं प्राङ्मनोगतशास्त्रं स्मृत्वा पश्चात्तदर्थं छात्राणामुपदिशति। घटनिर्माणकाले यथा कुलालो घटशब्दावाकृतिविशेषं मनोगतं ध्यात्वा घटादिकं सृजति, तद्वत्परमेश्वरोऽपि सृष्टिकाले स्वहृदयस्थितवैदिकेन्द्रादिशब्दाद्याकृतिविशेषान् स्मृत्वा पश्चादिन्द्रादिनेन्द्रादिकं सृजतीति न शब्दविरोधः।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ९३. अत एव च नित्यत्वम् ॥ २९ ॥

कर्तृस्मरणादिना सिद्धमेव वेदस्य नित्यत्वम्। अनित्यसंयोगेनानित्यत्वमाशङ्क्य वेदा देवाकृतिविशेषावच्छिन्नदेवादिसृष्टिप्रतिपादनादाकृतेश्शब्दार्थत्वात्तस्याश्च नित्यत्वान्नानित्यसंयोगनिबन्धनमनित्यत्वमित्युपसंहरति। अत एवाकृतेः शब्दार्थत्वादेव वेदस्य नित्यत्वमविरुद्धम्।

केचिद्वेदेश्वरयोर्नित्यत्वमवान्तरप्रळयावस्थायित्वमित्यूचुः। "वाचा विरूपनित्यया" इत्यादिश्रुतिविरोधप्रसङ्गात्तदसङ्गतम्। किञ्च— वेदानां परमेश्वरविमर्शशक्तित्वेन नित्यत्वात् तन्मिथ्यात्वे वेदबाह्यपाषण्डमतप्रवेशः प्रसज्येत। अपि च— "मन्त्रकृतो वृणीते" इति "विश्वामित्रस्य सूक्तं भवति" इति विश्वमित्रादीनां मन्त्रकृत्त्वेऽपि विश्वामित्रादि-

शब्दानामाकृतिविशेषान् स्मृत्वा तत्तद्वैदिकशब्दैर्मन्त्रब्राह्मणात्मकस्य वेदस्य नित्यत्वमुपदिश्यते। यस्माद्ब्रह्मा वैदिकेन्द्रादिशब्दार्थान् स्मृत्वा सृजति, अनधीतमन्त्रार्थविज्ञानसमर्थत्वात्; दैनन्दिनप्रळयानन्तरं पुनर्विश्वामित्रादिचराचरप्रपञ्चं सृजति। तस्मान्मन्त्रादिकर्तृत्वं वेदनित्यत्वं च सिद्धम्।

इन्द्रादीनां प्रतिकल्पं विलक्षणनामरूपत्वाद्वेदस्य कथं तत्प्रतिपादकत्वमित्याशङ्क्याह—

## १४. समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥३०॥

समाननामरूपत्वात्सर्वेषामिन्द्राणां सर्वेषु कल्पेषु समाननामरूपत्वादावृत्तावपीन्द्रपरंपरासमङ्गीक्रियमाणायामप्यविरोधः। वेदस्येन्द्रप्रतिपादकत्वविरोधो नास्ति। कुतः? तद्दर्शनात् स्मृतेश्च। एवमग्निवायुवरुणादिष्वपि द्रष्टव्यम्।

नन्वाकृतिपदार्थत्वेऽपि प्रळये सर्वाकृतिव्यक्तिनाशे पुनस्तदाकृतिकव्यक्त्युत्पत्तौ मानाभावात् नित्यानित्यसंयोगविरोधस्तदवस्थ इति चेन्न। संसारस्यानादित्वात्प्रतिसृष्टिस्तदाकृतिकमेव जन्यते न विलक्षणम्। प्रळये सर्वं वस्तु संस्कारावशेषमेव नश्यति; न तु निरन्वयध्वंसः। ज्ञानस्येवार्थस्यापि तत्संज्ञितपदार्थोपपत्तिदर्शनेन संस्काराङ्गीकारात्। संस्काराच्च समाननामरूपैव सृष्टिर्न वैलक्षण्यम्। समाननामरूपत्वस्य श्रुतौ दर्शनात्स्मृतेश्चाभ्युपगन्तव्यम्। "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं हि देवमात्मबुद्धिप्रकाशम्। मुमुक्षुर्वै शरणमहं प्रपद्ये" इत्यादिका श्रुतिः। स्मृतिरपि—

"अप एव ससर्जादौ तासु वीर्यमपाविशत्।
तदण्डमभवद्धैमं सहस्रार्कसमप्रभम्॥
ब्रह्माणं विदधे पूर्वं वेदांश्चास्मै प्रयच्छति॥" इत्यादि।

किञ्च— "यथा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति" तथैनं वाक् सर्वैर्नामभिस्सहाप्येति, चक्षुस्सर्वैरूपैस्सहाप्येति, श्रोत्रं सर्वैश्शब्दैस्सहाप्येति,

मनस्सर्वैर्ध्यातैस्सहाप्येति, स यदा प्रतिबुध्यते; यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवै-तस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति-श्रुतावपि सृष्टि मण्डूकादिवत्पूर्वकल्पप्रपञ्चसमाननामरूपत्वमुत्तरोत्तरप्रपञ्चस्य वर्णितम्। सुप्तौ स्वप्नजाग्रत्प्रपञ्चव्यवहारप्रळयेऽपि पुनः पूर्वप्रबोधव्यवहारवदुत्तरोत्तरकल्पान्तरे सृष्टिप्रळययो-रप्येवमूहनीयम्।

पूर्वपक्षसङ्गत्या मतान्तरमाह—

## ९५. मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

देवानामनधिकारं ब्रह्मविद्यायां जैमिनिर्मन्यते। कुतः? मधुविद्यादिष्वधिकारा-सम्भवात्। "असावादित्यो देवमधु" देवानामोदनान्मध्वीव मधु, तस्य मधुनो द्युलोक एव तिरश्चीनवंशः। अन्तरिक्षमपूपः, आदित्यस्य हि मधुनोऽवस्थानाद्देव मध्वपूपमित्यारोपः। "रोहितं शुक्लं कृष्णं गोप्यं च" इत्यादिना आदित्यमण्डल-प्राप्तिफलकेषु मधुविद्यादीनामधिकारः आदित्याद्यन्तराभावात्। स्वस्यैवोपास्यत्वोपासकत्वा-भावात्। तथा च ब्रह्मविद्यायामधिकाराङ्गीकारे विद्यात्वाऽविशेषात्तत्रापि स्यात्। तत्र चाधिकारासम्भवाद्ब्रह्मविद्यायामपि न सम्भवति।

किञ्च— कमन्यतमादित्यमुपासीत? पुनश्च "आदित्यव्यपाश्रयाणि पञ्च रोहिता-दीन्यमृतानि" इत्युपक्रम्य "वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्चदेवगणाः क्रमेण तत्तदमृतमुपजीवति" इत्युपदिश्य "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्नि-नैव मुखेनैत देवामृतं दृष्ट्वा तृप्यति" इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति। वस्वादयस्तु स्वातिरिक्तवस्वादीन् कानमृतोपजीविनो विजानीयुः? स्वव्यतिरिक्तवस्वादिमहिमानं कं वा [1]प्रेप्सेयुः? "तथाग्निः पादो, वायुः पादः, आदित्यः पादो, दिशः पादो, वायुर्वावसंवर्ग आदित्यो ब्रह्मेत्या-देशः" इत्यादिषु देवतात्मोपासनेषु न चैषामधिकारः। "तथेमावेव गौतम-

---

[1] प्रेक्षेरेन् (ङ).

भरद्वाजौ अयमेव गौतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपौ अयमेव वासिष्ठोऽयम् कश्यपो वागेवात्रिः ” इत्यादिना ऋष्युपास्यविद्यासु न तेषामेव ऋषीणामधिकारः। तस्मात् देवतानां सर्वथा मधुविद्यायामधिकारासम्भवात् ब्रह्मविद्याधिकारो न सम्भवतीति विज्ञायते।

तत्र हेत्वन्तरमाह–

## ९६. [1]ज्योतिषि भावाच्च ॥ ३२ ॥

“तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्” इति ज्योतिषि परमशिवेऽसाधारणतया देवानामुपासनेऽप्यधिकारभाववाक्यदर्शनात् इतरत्र मध्वाद्युपासने अनधिकारो न्यायसिद्ध इत्यवगम्यते।

किञ्च– परिदृश्यमानज्योतिर्मण्डल एव सूर्यचन्द्रादिदेवताशब्दानां लोकव्यवहारसद्भावान्मण्डलस्य मृत्पिण्डवदचेतनत्वेन विग्रहाभावादग्निवाय्वादीनामपि तत्तुल्यता। मन्त्रार्थवादानां चान्यपरत्वेन स्वार्थे प्रामाण्याभावान्न देवानां विग्रहवत्त्वम्। तस्मादपि देवानामनधिकार इति जैमिनिर्मन्यते।

एवं देवानां ब्रह्मविद्याधिकारे जैमिन्याचार्यकृताक्षेपं निराकरोति–

## ९७. भावन्तु बादरायणोऽस्ति हि ॥ ३३ ॥

तु शब्दश्शङ्कानिरासार्थः। मधुविद्यादिषु देवानामधिकाराभावेऽपि ब्रह्मविद्याया-मधिकारं बादरायणाचार्यो मन्यते। अस्ति हि मण्डलाभिमानिनी मण्डलातिरिक्ता विग्रहवती चेतनदेवता। अस्तीति पुराणेषु प्रतिपाद्यत इत्यर्थः। मधुविद्यायामनधिकारेऽपि वस्वादिदेवानां स्वहृदयपुण्डरीकस्थब्रह्मोपासनाधिकारो न विरुध्यते। कल्पान्तरे वस्वादेर्ब्रह्मत्वप्राप्तिसम्भवात्। सगुणनिर्गुणात्मकं शिवाभिधानं परं ब्रह्म देवानामुपास्यं

---

[1] ज्योतिष्यभावाच्च (क).

विधीयते । "**असावादित्यो देवमधु**" इत्यारभ्य आदित्यवस्वादिनामरूपविशिष्टकार्यविशेषावस्थं ब्रह्म उपास्यं उपदिश्यते । "**अथ तत ऊर्ध्वं उदेत्यनेनैवोदेता नास्तमेता**" इत्यादिना सूक्ष्मादित्यान्तरात्मत्वेन प्रविष्टं कारणात्मकं ब्रह्म उपास्यमुपदिश्यते । तत्र "**स य एतदेवममृतं वसूनामेकैको भूत्वाग्निनव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति**" इति वस्वादित्वरूपं फलमुच्यते । "**न ह वा अस्मा उदेति न निम्लोचति सकृदिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद**" इति ब्रह्मप्राप्तिफलमुपदिश्यते । तस्मान्मध्वादिष्वपि देवानामधिकारस्सम्भवति ।

किञ्च– यद्यपि देवानां देवतामिश्रोपासनानधिकारस्तथापि ब्रह्मविद्यायां तेषामप्यधिकारस्सम्भवति हि । नह्येकत्रानधिकारे सर्वत्रानधिकारः । राजसूयाद्यनधिकृतानां ब्राह्मणादीनां ज्योतिष्टोमानधिकारप्रसङ्गात् । यदुक्तं "**ज्योतिषि भावाच्चेति**" तस्योत्तरमस्ति हि ।

यद्यपि आदित्यादयः शब्दा ज्योतिषि प्रयुज्यन्ते तथापि तदभिमानिदेवतापरा एव तं तं देवतात्मानं प्रतिपादयन्ति । अस्ति ह्यैश्वर्ययोगाद्देवानां ज्योतीरूपेणावस्थातुं तं तं विग्रहं गृहीत्वा च व्यवहर्तुं सामर्थ्यम् । तथाहि श्रूयते– "**मेधातिथेर्मेषेति मेधातिथिं हि काण्वायनमिन्द्रो मेषो भूत्वा जहार**" (बाष्कलमन्त्रोपनिषत् ?) इति । स्मर्यते च "**आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह**" इति । मृदादिष्वधिष्ठातारोऽभ्युपगम्यन्ते । "**मृदब्रवीदापोऽब्रुवन्**" इत्यादौ दर्शनात् ।

ननु– मन्त्रार्थवादानां स्वार्थतात्पर्याभावात् तन्मूलेतिहासपुराणानामपि तथात्वात्कथं विग्रहसिद्धिरिति चेन्न । अत्राप्यस्ति ह्येवोत्तरं, तेषामप्यबाधितेऽर्थे प्रामाण्यमस्तीत्यर्थः । अर्थवादेष्वपि शब्दशक्तिबलाज्जातस्यार्थप्रत्ययस्य बाधाभावे प्रामाण्यमप्रतिहतमेव । तन्मात्रेण प्रयोजनानवाप्तेः । विधेयस्तावकया विध्येकवाक्यत्वकल्पनं इति चेत्, न चैतावता अवान्तरवाक्यार्थबाधस्सम्भवति । तस्याभावे स्तुतिरपि न स्यात् [ अत एव वायव्यस्तवनाद्यर्थवादेष्वपि अनुवादेनाबाधितमर्थमङ्गीकृत्यैव स्तुतिपरत्वमङ्गीक्रियते ।

वस्तुतस्तु यथास्वर्गार्थवादानां चोदनापेक्षितफलप्रतिपादकतया प्रामाण्यमेवं देवताविग्रहप्रतिपादकानामपि । तथा हि– "**तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति**"

इत्यादिपर्यालोचनया "रात्रिसत्रन्यायेन" देवताप्रीतिरेव कर्मणां व्यापारत्वेन कल्प्यते। न त्वात्मसममेतमपूर्वाख्यं मानान्तरागोचरं कल्पनार्हम्। न च प्रदत्तं हविर्देवता भुङ्क्ते, प्रत्यक्षविरोधात्। भोगाभावे कथं तृप्तिः? तृप्त्यभावाच्च कथं प्रसीदतीति वाच्यम्। अभुञ्जानाया अपि तदुद्देशेन त्यागमात्रेणापि प्रीतिसम्भवात्।

यथा कस्मिंश्चित् पूज्यतमे असन्निहितेऽपि सन्निहितानां पूजाप्रसङ्गे तदुद्देशेन पूर्वं किञ्चित्ताम्बूलादिकं विभज्यास्मै दत्वा सन्निहितपूजायां कृतायां तच्छ्रुत्वा सोऽपि किञ्चिद-लभमानोऽपि प्रथमं स्वोद्देशत्यागमात्रेणात्मानं पूजितं मन्वानः प्रसीदति। तथा देवाना-मपि तदुद्देशेन आहवनीयप्रक्षेपे तेन प्रीतिरविरुद्धा। एवं नमस्कारादिकरणा प्रीतिरुदा-हर्तव्या। न च ग्रहादीनामचेतनानामपि देवताप्रीत्यसम्भवः तदधिष्ठातृदेवतासम्भवात् सम्भ-वात्। वस्तुतस्सर्वान्तर्यामीश्वर एव सर्वफलप्रद इति तस्यैव प्रीतिः कल्प्यते। अत एव गीतासु—

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान्मयैव विहितान् हि तान्॥" इति।

तस्माच्चेतनवत्वाद्विग्रहवत्त्वाद्देवतानां ब्रह्मविद्याधिकारोऽस्तीति सिद्धम्।

———

## ९. अपशूद्राधिकरणम्

### अथ शूद्राणां ब्रह्मविद्याधिकारनिराकरणम्

"अह हा रे त्वा शूद्र" इति श्रुतौ शूद्रशब्दश्रवणात्पूर्वत्र ब्रह्मविद्यायास्सामान्येन मनुष्याधिकारव्यपदेशात्तेषामङ्गुष्ठमात्रहृदयप्रदेशविशेषदर्शनाच्च शूद्राणामपि तदधिकारोऽस्तीत्याशङ्क्याह–

## ९८. शुगस्य तदनादरश्रवणात्तदा द्रवणात्सूच्यते हि ॥ ३४ ॥

**छान्दोग्ये** चतुर्थाध्याये उपाख्यायतेऽस्य विषयः। "अह हा रे त्वा शूद्र तवैव सह गोभिरस्तु" इति। "आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः" इति। इह शिष्यस्य गुरुणा "अह हा रे त्वा शूद्र" इति शूद्रशब्देन सम्बोधनमुपपद्यते। तस्मादत्र शूद्रशब्दस्य ब्रह्मविद्यायामधिकारोऽस्ति न वेति सच्चिन्त्यते। शूद्राणां ब्रह्मविद्यायामधिकारोऽस्ति, श्रुतावपि शूद्रशब्दस्यामन्त्रणदर्शनात्। "**वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः**" इति त्रैवर्णिकानामेवात्राग्निसम्बन्धदर्शनात्तेषामेवात्र ब्रह्मविद्याधिकारित्वमेवेति चेन्न।

अर्थित्वादिकस्य शूद्राणामपि सम्भवात्। मनुष्याधिकारमपहाय देवानामधिकारव्यपदेशात्। तद्वत्त्रैवर्णिकाधिकार इव शूद्रस्याप्यधिकार इति प्राप्तम्। आहवनीयाभावेनाग्निसाध्यकर्मानधिकारेऽपि देवादिवद्विद्यायामधिकारसम्भवात्। उपनयनाद्यभावेऽपि देवादिवद्ब्रह्मविद्याधिकारः।

ननु स्वयंभातवेदवेदार्थत्वात्तेषामेवाधिकार इति चेन्न– शूद्राणामपि पुराणश्रवणादिना ज्ञानोपपत्तेः। **निषादस्थपतिन्यायेन** महावाक्यग्रहणाधिकारसम्भवाच्च। तस्मादत्र शूद्रशब्दस्य मुख्यार्थतया ब्रह्मविद्याधिकारस्सम्भवतीति चेत्–

**उच्यते**– न शूद्रस्य ब्रह्मविद्याधिकारः देवानामुपनयनाभावेऽपि सुकृतविशेषप्राप्तवेदवेदार्थत्वात् स्वभावसिद्धाबाध्यब्रह्मसूत्रत्वात्तेजश्शरीरित्वाद्युलोकसम्बन्धाच्च नाधिकारविरोधः।

वेदाधिकारहेतुभूतोपनयनस्य त्रैवर्णिकविषयत्वादौपनिषच्छास्त्रस्य वेदाङ्गत्वात्। "शूद्रो यज्ञेऽनवक्लृप्तः" इति निषेधाच्च। छान्दोग्ये चतुर्थाध्याये संवर्गविद्यायां शूद्रश्रवणस्य न्यायाभावाच्च न लिङ्गं साधकम्। लिङ्गस्याधिकृतविषयत्वव्याख्यानार्थमिदं सूत्रम्– "शुगस्य तदनादरश्रवणात्तदा द्रवणात्सूच्यते हि" इति।

अस्य जानश्रुतेः क्षत्रियस्य तदनादरश्रवणात्, तस्य हंसस्य अनादरश्रवणात् या शुगुत्पन्ना सा शूद्रशब्देन सूच्यते। रैक्केन स्वस्य सर्वज्ञत्वज्ञापनार्थं तदा द्रवणात् तया शुचा रैक्कं प्रति जानश्रुतिः शुचमभिदुद्रावेति शूद्रो जानश्रुतिः। मुख्यार्थासम्भवाद्योगो गृह्यते। अत्र जानश्रुतिं पौत्रायणं राजानं प्रासादस्थं कदाचिद्धंसानां तदुपरिमालारूपेण गच्छतां एको हंसः एकं प्रत्युवाच "अयं जानश्रुतिर्महाभाग" इति। तमितरः प्रत्युवाच। "कोऽयं वराकः ? एतस्मादप्युत्कृष्टो रैक्कः" इति। तच्छ्रुत्वा जानश्रुतेश्शोक उत्पन्नस्तेनैव शोकेनानीतं रथगोसुवर्णाद्युपायनमवलोक्य रैक्क आह– "हे जानश्रुते शूद्र आनीतमुपायनं तवैवास्तु नैतेनाल्पोपायनेन अहमुपदेक्ष्यामि" इत्याख्यायिकार्थस्संक्षेपतो ज्ञेयः।

अपि च वेदाध्ययनाभावेन तत्साधनोपलब्धतद्ज्ञानसिध्यभावात् स्मृतिपुराणेतिहासादीनि श्रुत्यर्थमुपपादयन्ति तस्मात्तच्छ्रवणाधिकारोऽपि न स्वातन्त्र्येण शूद्राणां विधीयते। तच्छ्रवणजन्यज्ञानं तु सर्वपापापनयनफलम्। विदुर-धर्मव्याधादीनां देवांशसम्भूतत्वात्पुराणश्रवणजन्यज्ञानद्वारा मोक्षाधिकारित्वं न विरुध्यते।

ननु मुख्य एव शूद्रो जानश्रुतिरस्तु। किं जघन्येन योगेनेत्याह–

## ९९. क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

न चात्रापि जानश्रुतेश्शूद्रजातित्वम्, प्रकृतप्रकरणादुत्तरत्र संवर्गविद्यायामेव चैत्ररथेन प्रसिद्धक्षत्रियेण अभिप्रतारिणा सह समभिव्यवहारात्मकलिङ्गात् समानानामेव प्रायेण समभिव्यवहारो भवति। जानश्रुत्युपासनोपक्रमे हि "पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस। स ह सर्वत्र आवसथान् मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति" इति। दानशीलत्वं नानाविधपक्वान्नप्रदायित्वं चोपदिश्य तन्मध्ये "स

संजिहान एव क्षत्तारमूचे" इति तृप्रेरणमुपदिश्यते। तदुपसंहारे "इयं जायाऽयं ग्रामो यस्मिन् आस्ते" इति। "ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास" इति बहुग्रामदातृत्वमुपदिश्यते। तस्मादेतद्धर्मैर्जानश्रुतेः क्षत्रियत्वमेवावबोध्यते। "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इति कापेयाख्य याजकयोगादभिप्रतारी चैत्ररथः क्षत्रिय इत्युपदिश्यते। चैत्ररथपुरोहितत्वं च कापेयानां श्रौतप्रसिद्धम्। "एतेन वै चित्ररथं कापेया अयाजयन्" इति एतेन द्विरात्रेण। समानान्वयानां हि प्रायेण समानान्वया एव याजका भवन्ति।

ननु चित्ररथपुरोहितकापेययोगादभिप्रतारिणश्चैत्ररथत्वं भवति, तस्मान्न क्षत्रियत्वमिति चेन्न। "चैत्ररथिर्नामैकः क्षत्रपतिरजायत" इति वाक्यशेषे चित्ररथवंशजत्वेन क्षत्रियपतित्वेन च क्षत्रियत्वव्यपदेशात्तद्वदुत्तरत्र ब्राह्मणेन कावेयेन युक्ताभिप्रतारि क्षत्रिय इत्युपदिश्यते। तद्वदेकेन ब्राह्मणेन युक्तो जानश्रुतिरपि क्षत्रिय इत्यवगम्यते। तस्मात् क्षत्रियस्यैव शूद्रेति सम्बोधनमुपपद्यते।

**निषादस्थपतिन्यायेन** शूद्रस्य चोपनिषद्ब्रह्मवाक्यश्रवणाधिकारोऽस्तीत्याशंक्य निराकरोति।

## १००. संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

अत्रापि न शूद्राणां ब्रह्मविद्याधिकारः, कुतः ब्रह्मविद्योपदेशप्रकरणे उपनयनादि संस्कारपरामर्शात्। "तं होपनिन्ये" "अधीहि भगव इति होपससाद" 'ब्रह्मपरा ब्रह्मनिष्ठा ब्रह्मान्वेशमाणा; एष ह वै तत्सर्वं वक्ष्यतीति, ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्ना" इत्यादिना उपनयनस्य ब्रह्मविद्याङ्गत्वोपदेशात्। अतश्च न शूद्रस्याधिकारः।

ननु "तान् हानुपनीयैव" इत्यादावनुपनीतानां अदीक्षितानामपि वैश्वानरविद्यायामधिकारित्वव्यपदेशादनियतमुपनयनमिति चेन्न। निषेधस्य प्राप्तिपूर्वकत्वात् प्राप्तोपनयनानां शिवदीक्षितानां प्राचीनशालादीनां द्विजानामेवाधिकारात् निषेधस्तु स्वविद्योपदेष्टुरश्वपतेर्ज्ञो

न्यूनवर्णत्वाद्द्रष्टव्यः। तान्प्राचीनशालादीन् ऋषीननुपनीयैव अश्वपतीराजोवाचेति श्रुत्यर्थः।

ननु तर्हि शूद्रस्याप्युपनयनं कल्प्यतामित्यत आह– "**तदभावाभिलापाच्चेति।**"

**"न शूद्रे पातकं किंचिन्न च संस्कारमर्हति।**
**शूद्रश्चतुर्थो वर्ण स्यादेकजातिरिति स्मृतिः॥"**

इत्यादिनोपनयनादिसंस्काराभावाभिलापादित्यर्थः। पातकं भक्ष्याभक्षविभागाभावकृतम्। एकजातिरुपनयनरहित इति भावः। "**निषादस्थपतिं याजयेत्**" इति विधिरस्तीति चेन्न। उपनयनसंस्कारविशिष्टत्रैवर्णिकानामेव श्रुतिस्मृतिषु महावाक्यश्रवणोपदेशान्न शूद्रस्य ब्रह्मविद्याधिकारित्वं सर्वदा सम्भवतीति सिद्धम्।

अत्र हेत्वन्तरमाह–

## १०१. तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७॥

इतोऽपि न शूद्रस्याधिकारः शूद्रत्वाभावनिर्धारणे सत्येवोपदेशप्रवृत्तेर्व्यपदेशात्। "**नैतदब्राह्मणो विवक्तुमर्हति समिधँ सौम्याहरोपत्वानेष्ये सत्यादगाः**" इति लिङ्गात्सत्यकामो जाबालः प्रमीतपितृको गौतमसमीपं गत्वा ब्रह्मचर्यमुपेयमित्युवाच। "**तं गौतमः पप्रच्छ किं गोत्रोऽसि**" इति। जाबाल उवाच– "**मातापि न जानात्यहमपि न जानामि**" इति। तच्छ्रुत्वा गौतमः "**नाब्राह्मणस्यैतादृशयथार्थवादित्वं सम्भवति**" इति शूद्रत्वाभावं निश्चित्य शुश्रूषामङ्गीकृतवान् इत्याख्यायिकादर्शनाच्च न शूद्रस्याधिकार इति सिद्धम्।

ननूपनयनासम्भवे ब्रह्मोच्चारणनिरासः कादाचित्कस्सार्वत्रिको वा? न सर्वदा सम्भवति। डिम्भस्योपनयनासम्भवेऽपि न ब्रह्म अभिव्याहारयेत्– अन्यत्र स्वधानिनयनादिति स्वधानिनयने ब्रह्मोच्चारणविधानात्तस्मात्कादाचित्क इति युज्यते। ततोऽनुपनीतस्य शूद्रस्य पाकयज्ञादिषु ब्रह्मोच्चारणनिरासः स्यात्। न ब्रह्मविद्याधिकारनिषेध इत्याशंक्याह–

## १०२. श्रवणाध्ययनप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

इतश्च न शूद्रस्याधिकारः। कस्मात् स्मृतेश्च। स्मृतितो वेदश्रवणस्य तदध्ययनस्य तत्प्रयोजनयोरर्थज्ञानानुष्ठानरूपयोरर्थयोः प्रतिषेधान्निषेधादित्यर्थः। "अथ ह्यस्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रपूरणं, उदाहरणे जिह्वाच्छेदः, धारणे शरीरच्छेदः" इत्यत्र शूद्रस्य वेदाध्ययनादौ शिक्षा श्रूयते।

शूद्रस्य वेदश्रवणे तच्छ्रोत्रे तत्प्रमादतः।
त्रपुं प्रपूरयेद्राजा तदुच्चारण मात्रतः॥

तज्जिह्वां छेदयेत्तूर्णं तद्धारणवशात्तदा।
शरीरभेदनं कुर्याद्विधिरेषोऽयमुच्यते॥

इति स्मृतिरपि दृश्यते। तस्मादुपनयनादिसंस्कारविशिष्टत्रैवर्णिकानामेव वेदश्रवणवेदाध्ययनवेदार्थानुष्ठानविधिसम्भवात्तेषामेव ब्रह्मविद्याधिकार इति राद्धान्तः।

ननु विदुर-धर्मव्याधप्रभृतीनां ब्रह्मज्ञानदर्शनान्न शूद्राणां ब्रह्मविद्याधिकारनिषेध इति चेन्न, तेषां देवांशत्वात्।

"देवांशसम्भवानां तु जातिभेदं न कारयेत्।
स्वभावसिद्धविज्ञानाद्वामदेवादिवत्सदा।
तत्पुत्रबान्धवादीनां जातिभेदः प्रकल्प्यते॥"

इत्यादौ कारणपुरुषत्वेन निर्गतजातिभेदव्यपदेशाद्विदुरादीनामपि शूद्रत्वमौपचारिकमेव। तथापि तेषां गुरुसमीपे त्रैवर्णिकैस्सह पुराणेतिहासश्रवणाधिकारमात्रमेवेति विधीयते। न प्रत्यक्षवेदवेदान्तविद्याधिकारित्वम्।

---

कम्पनाधिकरणम् ॥ १० ॥

प्रासङ्गिकाधिकारचिन्ता निवृत्ता । प्रकृतवाक्यार्थसन्धानमद्य दर्शयति–

## १०३. कम्पनात् ॥ ३९ ॥

सर्वगतस्य शिवस्य परब्रह्मणः साधकानुग्रहाय मनुष्यहृदयप्रमितत्वं **कठवल्युपक्रमे** प्रदर्श्य–

> **"यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् ।**
> **महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥"**

इति कठवल्लीषष्ठाध्याये पठ्यतेऽस्य विषयः । अत्र जगत्कम्पनहेतुः प्राणो वा अशनिर्वा परमेश्वरोवेति संशयः । **"प्राण एजति निस्सृतं"** इति वाक्ये निसृत-मुत्पन्नं यदिदं जगत्सर्वं प्राणे निमित्ते एजति इति श्रूयते । प्राणशब्दस्य प्राणवायौ प्रसिद्धत्वाज्जगदात्मस्य परमेश्वरस्य विश्वकम्पनहेतुत्वासम्भवात्, **"नमस्ते वायो, त्वमेव प्रत्यक्षं ब्रह्मासि"** इत्यादौ तस्यैव ब्रह्मत्वव्यपदेशाच्च अत्र प्राणोपासनस्यैव मोक्षोपदेशे, न विरोधः । किञ्च– **"अप पुनर्मृत्युं जयति य एवं वेद"** इति श्रुतौ वायु-विज्ञानस्य मोक्षफलं स्पष्टमुक्तं; अथवा **"महद्भयं वज्रमुद्यतं"** इत्यत्र महाभयहेतुत्वस्य वज्र एव **'वायौ पर्जन्यभावेन विवर्तमाने विद्युन्मेघवृष्टयो जायन्ते"** इति श्रवणात्, अशनिहेतुवायुलक्षकत्वं वज्रस्यापि युक्तम् । तस्मात्सर्वथात्र परमेश्वरमुख्यलिङ्ग-दर्शनान्न परमेश्वर एवोपदिश्यत इति चेत्–

उच्यते **"कम्पनात्"** । अत्र जगत्कम्पनहेतुः परमेश्वर एव । एजृ– कम्पन इति धातोः कम्पनार्थत्वादित्यर्थः । परमेश्वरे प्राणशब्दः श्रूयते, परमेश्वरस्य सकलजगत्कम्पन-हेतुत्वं शासकत्वाद्भवति । यस्य शासनभयेन सर्वे वयं निषिद्धविमुखा विहितेषु प्रवर्तामहे । **"भीषास्माद्वातः पवते, भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः इति"** इत्यादौ च पवनादीनां भयहेतुत्वं परमेश्वरस्यैवोपदिश्यते ।

"ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां" इत्यादौ जगन्नियामकत्वस्य तस्मिन्नेव दर्शनाज्जगद्भयहेतुत्वं समुचितम्। "तस्माद्राजमुखं भीष्मं भावुकं" इति श्रवणात् कल्याणमूर्तेरपि जगच्छासकतया भयहेतुत्वम्। सर्वोपादानत्वात्तस्य प्राणशब्दवाच्यत्वं युक्तम्। "स एव विष्णुस्स प्राणः" "प्राणस्य प्राणं" इत्यादिषु श्रूयते।

किञ्चोपक्रमोपसंहारमध्यपरामर्शितया परमेश्वरप्रकरणत्वावगमान्नान्यविषयत्वम्।

"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन"॥

इत्युपक्रमवाक्ये परमेश्वर एवोपदिश्यते। "जगत्सर्वं प्राण एजति" इत्येजयितृत्वमपीदं परमेश्वरस्यैवोपपद्यते, न वायुमात्रस्य। तथा हि श्रुत्यन्तरे प्रसिद्धं–

"न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ"॥ इति।

उत्तरत्रापि--

"भयादस्याग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्चाग्निश्च मृत्युर्धावति पञ्चमः॥"

इत्यादिना परमेश्वरधर्मबाहुल्यात्तत्प्रकरणमिति निश्चीयते। वज्रशब्दवाच्यत्वं साध्वसकारणत्वसामान्यात्समुचितं परमेश्वरस्यैव। "य एतद्विदुरमृता भवन्ति" इत्यादावमृतफलव्यपदेशोऽपि परमेश्वरविषयक एव। "ईशं ज्ञात्वाऽमृता भवन्ति" "ज्ञात्वा-शिवं शान्तिमत्यन्तमेति" "सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुना" इत्यादौ शिवज्ञानस्यैव मोक्षहेतुत्वनिर्देशात्, न वायुविज्ञानादमृतत्वं क्वचिदपि विधीयते। तत्रोपसंहारे "अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" इति परमेश्वरस्यैवोक्तत्वाज्जगत्कम्पनहेतुत्वं नेतरस्येति सिद्धम्॥

### ज्योतिरधिकरणम् ॥ ११ ॥

दहरपुण्डरीकादिप्रदेशविशेषोपास्यत्वेन प्रतिपादितस्य परब्रह्मणः शिवस्य प्राप्यत्वमधिकरणान्तरेणोपपादयति—

## १०४. ज्योतिर्दर्शनात् ॥ ४० ॥

छान्दोग्ये– पञ्चमाध्याये प्रजापतिविद्यायामाम्नायते– "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य" इति "स उत्तमः पुरुष" इति। इह ज्योतिश्शब्देन प्रसिद्धं सूर्यादिज्योतिर्नारायणः परशिवो वेति संशयः।

नात्र ज्योतिश्शब्देन परमशिवः प्रतिपाद्यः, तस्य तेजःपरत्वेन मुख्यत्वात्। "ज्योतिश्चरणाभिधानात्" इत्यत्र चरणहेतुत्वेन ज्योतिश्शब्दस्य स्वार्थपरित्यागदर्शनात्तद्वदत्र परमेश्वरपरत्वं नोपपद्यते। कुतः? कारणाभावात्। न मुक्तिप्राप्तिहेतुत्वमपि परमेश्वरस्य सम्भवति। "अक्षया एता हृदयस्य नाड्यः" इत्यादि नाडीखण्डे "अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इत्यादिश्रुतौ प्रभाकरस्यैव मुक्तिप्राप्यत्वव्यपदेशात्।

किंच– नारायणस्यापि सङ्गुचितम्। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्यादौ मुक्तप्राप्यस्य परञ्ज्योतिषः पुरुषोत्तमशब्दवाच्यत्वेन निर्देशात्। पुरुषोत्तमशब्दस्य तत्रैव रूढत्वात्। तस्मात्तस्यैव पुरुषोत्तमशब्दसमानाधिकरणपरञ्ज्योतिश्शब्दवाच्यत्वं सम्भवतीति प्राप्ते–

### अथ शिवस्य ब्रह्मणः पुरुषोत्तमत्वप्रतिपादनम्

ब्रूमः– "ज्योतिर्दर्शनात्"। अत्र परञ्ज्योतिश्शिव एव कस्माद्दर्शनात्। "य आत्माऽपहतपाप्मा" इत्युपक्रम्य परमशिवस्यैव प्रतिपाद्यत्वेनानुवृत्तिदर्शनात् अत्र परं ज्योतिश्शब्दवाच्यत्वं, उत्तमपुरुषत्वं मुक्तप्राप्यत्वं च परमेश्वरे न विरुद्धम्। अपहतपाप्मत्वादिधर्मविशिष्टपरमेश्वरस्यैवात्र "अन्वेष्टव्यः" इति प्रतिज्ञानात्। "एतं त्वेवं ते

भूयोऽनुव्याख्यास्यामि" इत्यनुसन्धानात्, "अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः" इत्यादौ अशरीरत्वेन ज्योतिस्सम्पत्त्युपदेशात्।

किञ्चोत्तमपुरुषविशेषणात्परमपुरुष एवात्र निर्दिश्यते। ब्रह्मप्रकरणान्न मुक्तप्राप्यत्वं प्रभाकरस्योपपद्यते। "अत्र ब्रह्म समश्नुते विद्वान् परात्परं पुरुषमुपैति दिव्यम्" इत्यादावपुनरावृत्ततया मुमुक्षूणां परमशिवप्राप्तिदर्शनात् न नारायणस्यापि मुक्तप्राप्यत्वं सम्भवति। "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "ईशं ज्ञात्वा अमृता भवन्ति" इत्यादौ मुक्तानां परमशिवप्राप्तिदर्शनात्। पुरुषोत्तमशब्दोऽपि परमेश्वरे सम्भवति, पुरुषेभ्यः शारीरेभ्यः परमः उत्कृष्टत्वात्। ब्रह्ममेधकल्पेऽपि "वेष्टितुं पुरुषोत्तमम्" इति प्राप्यस्य परमशिवस्य ब्रह्मणः पर्यायत्वेन हस्त-कर-पाणिशब्दवत् पुरुषोत्तमशब्दस्य योगदर्शनात्। "ईशानः सर्वविद्यानां" इत्यादौ वेदादिसर्वविद्यानियामकत्वसर्वजन-प्रभूतात्मकपुरुषनियामकत्वादिधर्माणां परमेश्वरस्योपदेशात्; सर्वपुरुषात्मकजीवनियामकत्वे पुरुषोत्तमः ज्योतिः परशिव एव। "परात्परतरं ब्रह्म तत्परात्परतो हरिः। यत्परा-त्परतोऽधीशस्तन्मे मनश्शिवसंकल्पमस्तु॥" "शिवमद्वैतं चतुर्थं मन्यन्ते" "विश्वा-धिको रुद्रो महर्षिः" इत्यादौ पुरुषशब्दवाच्यनारायणादिजीवेभ्योऽधिकत्वव्यपदे-शात् परमशिव एव पुरुषोत्तम इति राद्धान्तः। पुरुषोत्तमशब्दस्य विष्णावेव रूढि-रिति चेत् हरिवंशे कृष्णं प्रति परमेश्वरवचनम्—

"यानि नामानि गोविन्द तव लोके महान्ति वै।
तान्येव मम नामानि नात्र कार्या विचारणा॥"

इति वाक्यदर्शनात्पुरुषोत्तमशब्दवाच्यत्वं तस्यैव सिद्धम्।

---

## अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १२ ॥

## १०५. आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

छान्दोग्यस्याष्टमाध्याये पठ्यतेऽस्य विषयः । **"आकाशो ह वै नाम, नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतँ स आत्मा"** इतीह नामरूपनिर्वोढृत्वेनोपदिष्ट आकाशः किं भूताकाशः, कि जीवः, उत परमेश्वरो वेति **संशयः** । वियत्याकाशशब्दस्य रूढत्वादवकाशप्रदातृत्वेन तस्य नामरूपविभागयोग्यत्वसम्भवात् । **"सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते"** इत्यादौ जगत्कारणत्वस्य तत्रैव व्यपदेशात्तदेव युक्तम् । उत जीवोऽपि स्यात् । **"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि"** इति विकारजातस्य नामरूपव्याकृतत्वान्निर्विकारस्य परमेश्वरस्य तदसम्भवात् । तस्य नामरूपव्याकरणदर्शनात् चिदाकाशरूपत्वाच्च । तस्मात्तयोरेव आकाशशब्दवाच्यत्वमुच्यत इति चेत्—

**ब्रूमः**—अत्राकाशशब्दवाच्यः शिव एव, कस्मात्? अर्थान्तरत्वादिव्यपदेशात् । अर्थानां पदार्थानां अन्तरत्वव्यपदेशात् नामरूपात्मकस्थूलसूक्ष्मचिदचित्प्रपञ्चान्तरात्मत्वव्यपदेशान्निर्देशादित्यर्थः । आदिशब्देन **"ते यदन्तरा तद्ब्रह्म"** इत्यादिना ब्रह्मत्वादिव्यपदेशो द्रष्टव्यः । परमेश्वराद्भिन्नस्य भूताकाशादेरात्मत्वामृतत्वादिधर्माणामसम्भवात् प्रकरणविरोधाच्च ब्रह्मलिङ्गभूयस्त्वान्नेतर इति सिद्धम् ।

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम्

---

## सुषुप्त्यधिकरणम् ॥ १३ ॥

## १०६. सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादित्यनुवर्तते । बृहदारण्यके षष्ठाध्याये दृश्यतेऽस्य विषयः । "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषस्समानस्सन्नुभौ लोकावनुसञ्चरति" इति । अत्र विज्ञानमयः लिङ्गशरीरावच्छिन्नशारीरः परमेश्वरो वेति संशयः ।

अत्र जीव एवाभिधीयते । उपक्रमोपसंहाराभ्यासपरामर्शादिभिर्जीवस्यैव प्रवृत्तत्वात् । "योऽयं विज्ञानमयः प्राणेषु" इति शारीरप्रकरणात् । "स वा एष महानज आत्मायं" इत्युपसंहारेऽपि तदनिराकरणदर्शनात् । मध्येऽपि "एषोऽन्तर्हृदय आकाशः" इति हृदयान्तरे व्यवस्थानव्यपदेशादत्र पूर्वापरमध्यपरामर्शेषु परमेश्वरपरत्वविधायकशब्दादर्शनाद-वस्थात्रयानुगतजीवस्यैव विद्यमानत्वात्स एवात्र प्रतिपाद्यत इति चेत्-

उच्यते:- "कतम आत्मा योऽयं विज्ञानमयः" इति श्रुतौ भ्रमरकीट-वन्मुक्तजीवः प्रतिपाद्यते; न तु बद्धजीवः । कुतः ? सुषुप्त्यवस्थायां उत्क्रान्त्यवस्थायां च जीवब्रह्मभेदस्य भेदेन द्विवारं प्रतिपादितत्वादित्यर्थः । सुषुप्तौ तावदयं पुरुषः "प्राज्ञेनात्मना संपरिष्वक्तः न बाह्यं किञ्चन वेद नान्तरं" इति जीवपृथक्त्वेन प्राज्ञशब्देन परमशिवो निर्दिश्यते ।

नन्वत्र जीवः पुरुषो भवति, तस्य शरीरे बाह्याभ्यन्तरविज्ञानवत्वसंभवात् शरीराधिपतित्वात्, उपक्रमोपसंहारादिषड्विधलिङ्गैस्तद्धर्मदर्शनाच्च जीव एवात्र प्राज्ञशब्द-वाच्य इति चेन्न । प्राज्ञशब्देनात्र परमशिव एव प्रतिपाद्यते । "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानस्सर्वपतिः" इत्यादिश्रुतिनिर्दिष्टसर्वज्ञत्व-सर्वेश्वरत्वादिधर्माणामन्यत्रासम्भवात् । तथोत्क्रान्त्यवस्थायां "शारीर आत्मा प्राज्ञेना-त्मनान्वारूढ उत्सर्जन्याति" शारीराद्व्यतिरिक्ततया परमेश्वर उपदिश्यते । तत्रोपक्रमे तावद्योऽयं विज्ञानमयः प्राणेष्विति शारीरधर्माणां अनुपदेशात् । किञ्च- शारीरधर्माननूद्य तस्य भ्रमरकीटवत् शिवैकभावत्वं निर्दिश्यते । तथोपसंहारेऽपि "स वा महानज

आत्मा" इति परमेश्वर एवात्राजत्वादिधर्मनिर्दिष्टः। ततो मध्ये, "यदत ऊर्ध्वं मोक्षायैव ब्रूहि" इति पदे पदे प्रश्नः। "अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इति पुनः पुनः प्रतिवचनं च। वाक्यभेदोऽस्याभेदपरत्वं ज्ञापयति। "अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान्" इति शरीरेन्द्रियविलक्षणपरमेश्वरप्रतिपादनपरत्वव्यपदेशान्न शारीरपरत्वमिति सिद्धम्।

परमेश्वरपक्षे हेत्वन्तरमाह—

## १०७. पत्यादि शब्देभ्यः ॥ ४३ ॥

इतश्च परमशिव प्रतिपादनमेवैतत्। यतोऽस्मिन् सन्दर्भे परमेश्वरप्रतिपादका. पत्यादयः शब्दा दृश्यन्ते। "सर्वस्येशानस्सर्वाधिपतिः" "भूताधिपतिरेष भूतपालः" इत्यादिकं श्रूयते। "ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः" "पशूनां पतये वृक्षाणां पतये जगतां पतये" इत्यादिषु सर्वाधिपतित्वं परमेश्वरस्यैव प्रसिद्धम्। एवं सर्वेश्वरत्वादि-जातीयकाः धर्माः न कुत्रापि जीवस्य दृष्टत्वादत्र परमशिव एव प्रतिपाद्यत इति राद्धान्तः।

इति सुषुप्त्यधिकरणम्

इति श्रीमन्निराभारवीरशैवयतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्य-कृतद्वैताद्वैताभिधान-विशेषाद्वैतसिद्धान्तस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

समन्वयाभिधानस्य प्रथमाध्यायस्य तृतीयः पादः

———

## अथ श्रीकरभाष्ये प्रथमाध्याये चतुर्थः पादः ।

### आनुमानिकाधिकरणम् ॥ १ ॥

शास्त्रारम्भे मुमुक्षूणां पुनरावृत्तिरहितफलसिध्यर्थं ब्रह्मजिज्ञासामुपदिश्य तद्ब्रह्मणो निर्विशेषत्व-निराकरणपूर्वकसर्वज्ञत्वादिप्रसाधनार्थं "लक्षणप्रमाणाधीना हि वस्तुसिद्धिः" इति न्यायेन वस्तुसिध्यर्थं जगज्जन्मादिलक्षणं शास्त्रप्रमाणकमुक्त्वा, परस्परविरुद्धस्वभाव-भेदाभेदश्रुतीनामविरोधतया चतुर्थसूत्रे ब्रह्मणि समन्वयं प्रदर्शयित्वा उक्तब्रह्मलक्षणस्य प्रधाने अतिव्याप्तिमाशंक्य "ईक्षतेर्नाशब्दं" इत्यारभ्य "गतिसामान्यात्" इत्यन्तं अशब्दत्वेन प्रधानजगत्कारणत्वं प्रथमपादे वेदान्तवाक्यैर्निवारितम् । द्वितीयतृतीयपादयोर-स्पष्ट-स्पष्टास्पष्टब्रह्मलिङ्गानामुपासनद्वारा ब्रह्मणि समन्वयमुपपाद्य, क्वचिच्छाखासु प्रधान-जगत्कारणत्वप्रतिपादकशब्दानां दृष्टत्वादशब्दत्वं कथं तस्योपपद्यत इत्याशङ्कायां चतुर्थपादो-ऽयमारभ्यते–

#### परमशिवस्य सर्वोपास्यत्वप्रतिपादनम्

### १०८. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च ॥ १ ॥

कठवल्लयामुपदिश्यतेऽस्य विषयः–

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः ॥" इति ।

इह महत्परत्वेनोपदिश्यमानमव्यक्तशब्दनिर्दिष्टं साङ्ख्यप्रधानमुत शारीरो वेति सन्देहः ।

पूर्वापरवाक्यसन्दर्भेण प्रधानमेवात्र प्रतिज्ञायते । साङ्ख्यशास्त्रे महदव्यक्तपुरुष-शब्दानां तत्त्वत्रये प्रसिद्धत्वात्तेषामेवात्र प्रत्यभिज्ञानात् नाशब्दत्वं तस्योपपन्नम् । अव्यक्त-

प्रकृतिप्रधानमायादिशब्दानां प्रात्यक्षिकवेदे दर्शनाच्च । **"ब्रह्मण्येव वेदान्तानां समन्वयः"** इति नियमाभावात्, **कापिलस्मृत्यादिषु** प्रधानस्य जगत्कारणत्वस्य श्रुति-स्मृति-न्यायसिद्ध-त्वात्तदेवात्र प्रतिपाद्यत इति चेत्–

**वक्ष्यामः आनुमानिक**मित्यादिना ।

आनुमानिकमित्यनुमानगम्यत्वात्प्रधानम् । तदप्येकेषां शाखिनां **प्रसिद्धम्** । अव्यक्त-शब्देन प्रधानं प्रतिपाद्यत इत्यशब्दत्वमसिद्धमिति चेन्न । शरीरस्य पूर्ववाक्ये रथरूपकेण विन्यस्तस्य प्रतिपादितस्य अत्र वाक्ये अव्यक्तशब्देन गृहीतेर्ग्रहणात् ।

नन्वव्यक्तशब्दस्य कथं शरीरपरत्वमित्यत आह– **दर्शयतिचेति** । पूर्वोक्तवाक्य-सन्दर्भः पर्यालोच्यमानः औचित्येनाव्यक्तशब्देन शरीरग्रहणं दर्शयति ।

**"आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।**
**बुद्धिं च सारथिं विद्धि मनः प्रग्रहमेव च ।**
**इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥"**

इत्युपक्रम्य **"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"** इति श्राव-यित्वा किं तद्विष्णोः परमित्याकांक्षायां **"इन्द्रियेभ्यः पराः"** इत्यारभ्य **"सा काष्ठा सा परा गतिः"** इत्यन्तेन प्रकृतेन्द्रियेभ्यः परां गतिं दर्शयति ।

अत्र पूर्वप्रकृतानामिन्द्रियार्थमनोबुद्धीनामस्मिन् वाक्ये स्वशब्दैरेवोपादानम् । पूर्व-त्रात्मा आत्मशब्देनोपदिष्टः उत्तरत्र पुरुषशब्देन, उत्तरवाक्ये महच्छब्देनोक्ता बुद्धिः पूर्ववाक्ये बुद्धिशब्देनैव गृहीता । बुद्धिर्द्विविधा, हिरण्यगर्भबुद्धिरस्मदादिबुद्धिश्च । **"यो ब्रह्माणं विदधाति पूर्वम्"** इति श्रुतिदर्शनात्, प्रथमोत्पन्नहिरण्यगर्भबुद्धिरस्मदादिबुद्धीनां परा । तस्मादस्याः महत्वम् । पूर्वत्र द्वयमेकीकृत्य निर्दिष्टम् । इह पृथक्त्वमिति विवेकः । पूर्वत्र शरीरपदमुत्तरत्राव्यक्तपदम् । तयोः परिशेषादेकार्थत्वमित्यवगन्तव्यम् । **"तद्विष्णोः परमं"** इत्यत्र पञ्चम्यर्थ एव निश्चीयते । तथा **ब्रह्मगीतासु**–

"पदं यत्परमं विष्णोस्तदेवाखिलदेहिनाम् ।
ऋते साम्बं महादेवं किं भवेत्परमं पदम् ॥"

इति दर्शनात् ।

"वेदार्थोऽयं स्वयं ज्ञातः तत्राज्ञानं प्रचक्षते ।
इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ॥"

इति उपबृंहणादिपुरस्कारेणैव वेदार्थविज्ञानव्यपदेशात् नेतरोऽत्र प्रतिपाद्यः ।

किञ्च– एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥

इति वाक्ये, नारायणात्परस्य शिवस्य दुरवगाहित्वमुपदिश्य तदुपलब्ध्यर्थं योगउपन्यस्यते ।

"यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥"

इत्येतदुपदिश्यते । वाचं मनसि संयच्छेत्-वागादिबाह्येन्द्रियव्यापारं परित्यज्य मनोमात्रेणावतिष्ठेत् । मनो विषयकल्पनाभिमुखं विकल्पदोषवर्जनेन ज्ञानशब्दोक्तायां बुद्धौ अध्यवसायस्वभावायां धारयेत् । तामपि बुद्धिं महत्यात्मनि भोक्तरि अग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत् । महान्तं चात्मानं शान्त आत्मनि परस्मिन् पुरुषे शिवापरपर्याये परस्यां काष्ठायां प्रतिष्ठापयेत् । तस्मादुपक्रमोपसंहारमध्यपरामर्शेन साङ्ख्यप्रधानस्य निरवकाशत्वात्परमशिव एव सर्वोपास्यत्वेन विधीयत इति राद्धान्तः ।

ननु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दवाच्यत्वमित्याशङ्कायामाह–

## १०९. सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

तु शब्देन शङ्कानिरासः । दर्शयतीत्यनुषङ्गः । स्थूलशरीरारम्भकं भूतानां सूक्ष्मकारणं अव्यक्तशब्देन दर्शयति । कुतः तदर्हत्वादव्यक्तशब्दार्हत्वात् । "गोभिर्मिश्रितसोमम्" इतिवत् प्रकृतिशब्देन विकृत्यभिधानं युक्तम् ।

परशिवपरत्वे हेत्वन्तरं दर्शयति–

## ११०. तदधीनत्वात्तदर्थवत् ॥ ३ ॥

ननु जगत्सूक्ष्मावस्थायामेव सांख्यैः प्रधानत्वाङ्गीकारेण नैष दोष इति चेन्न। कुतः, तदधीनत्वात्– ईश्वराधीनत्वात्। **"स्वतन्त्रमव्यक्तं जगत्कारणम्"** इत्येतन्मतं साङ्ख्यानाम्। सिद्धान्ते तु ईश्वराधिष्ठितं मायाविद्यादिशब्दवाच्यं प्रधानं कारणमित्यत्यन्त-भेदात्।

ननु सूक्ष्मप्रपञ्चस्यानभिव्यक्तनामरूपबीजस्य प्रागवस्थायामव्यक्तशब्दयोग्यत्वमुपपद्येत ; तदात्मना च देहस्याव्यक्तशब्दयोग्यत्वमवगम्येत तर्हि साङ्ख्यवाद एवोपदिश्येत। सूक्ष्मचिदचिदात्मकस्य प्रपञ्चस्यैव प्रागवस्थाप्रकृतित्वेन विधीयत इति चेदुच्यते। परमे-श्वरशक्तितया जडप्रधानस्य जगत्कारणत्वं वक्तुं शक्यम्। प्रधानाधिष्ठान परमेश्वरादेव जगदुत्पत्तेस्सम्भवादव्यक्तशब्दवैयर्थ्यमित्याशङ्क्योक्तमर्थवदिति। प्रयोजनवदित्यर्थः। ईश्वरस्य सहकारिरूपमव्यक्तमावश्यकम्। **"मायां तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरम्"** इति मायायाः परमेश्वराधीनत्वं श्रूयते। मायाप्रतिपादितजगज्जन्मादिकारणत्वं वशीकृत-मायिकपरमेश्वराधीनमेव। **"वायव्यं श्वेतमालभेत भूतिकामः"** इत्यत्र विध्युद्देश-वर्तिनां वायव्यादीनां शब्दानां विधिना संबन्ध एव **"वायुर्वै क्षेपिष्ठा देवता वायु-मेव स्वेन भागधेयेनोपधावति। स एवैनं भूतिं गमयति"** इत्येतेषामर्थवाद-विशिष्टानां वाक्यानां न मुख्यं प्रामाण्यम्। **"वायुः क्षेपिष्ठा देवता"** इत्यादेः वायुस्वभावस्तुतित्वेनावान्तरवाक्यसमन्वयवत् मायाजगत्कारणत्ववाक्यानां स्तुतिपरत्वम्, तद-धिष्ठानपरमेश्वरबोधकत्वमविरुद्धम्। न चैवमव्यक्तशब्दस्य अविद्यापरत्वे तद्विकारतयेन्द्रिया-दीनामपि तच्छब्देनोपादानसम्भवात्कथं शरीरस्यैव ग्रहणमिति वाच्यम्। तेषां स्वशब्दै-रेवोपपादनात् परिशेषतस्तत्सिद्धेः। सूत्रद्वयस्यापरा व्याख्या। शरीरं द्विविधं ज्ञेयं स्थूलञ्च। पूर्ववाक्ये द्वयमपि शरीरग्रहणे न गृहीतम्। सूक्ष्मं यदुत्तरत्र सूक्ष्ममेवा-व्यक्तशब्देनोक्तं तदर्हत्वात्। तच्चावश्यमभ्युपेयम्। सकलजीवाश्रयमहासुषुप्त्यात्मकमव्यक्तं केचिदाकाश इति केचिन्मायेति केचिदक्षरमिति वदन्ति।

**"एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च"**। इति श्रुतावाकाश इति, **"मायान्तु प्रकृतिं विन्द्यात्"** इति मन्त्रे मायेति, **"अक्षरात्परत"** इति

श्रुतावक्षर इति निर्दिष्टम्। तदेव "**महतः परमव्यक्तं**" इत्युच्यते। तत्र स्थूलं यदिदमुपलभ्यते। सूक्ष्मं यदुत्तरत्र वक्ष्यते—

"तदन्तरप्रतिपत्तौ **रंहति संपरिष्वक्तः**" इति। तदुभयमपि शरीरमविशेषात् पूर्वत्र रथत्वेन वर्णितमत्र तु सूक्ष्ममव्यक्तशब्देन व्याचक्ष्यते। सूक्ष्मशरीरस्याव्यक्तशब्दार्हत्वात्। तदधीनत्वेन च जीवनिष्ठबन्धमोक्षयोः जीवात्परत्वं तस्योपदिश्यते। तस्मादव्यक्ताधिकत्वं परमशिवस्य निर्दिष्टम्। "**प्रधानक्षेत्रज्ञपतिः**" "**एषामीशे पशुपतिः**" "**मायी सृजते विश्वमेतत्**" "**नान्ये ब्रह्मणि वेदितव्ये**" "**विद्याविद्ये ईशते यस्तु सोऽन्यः**" "**क्षरात्मनावीशते देव एकः**" इत्यादौ तथा श्रूयते। तस्मात्परमेश्वरप्रकरणमिति सिद्धम्।

परमेश्वरपक्षे हेत्वन्तरमाह—

## १११. ज्ञेयत्वावचनाच्च ॥ ४ ॥

किञ्च सांख्यैः प्रकृतिपुरुषविवेकान्मोक्षमङ्गीकृत्य प्रकृतिरपि तदर्थं ज्ञेयेत्युक्तम्। न च तादृशप्रज्ञानोपयुक्तं किञ्चिदत्रोक्तं अव्यक्तमात्रशब्दश्रवणात्। **तस्मादपि नाऽव्यक्तं प्रधानं प्राज्ञो हि** वदतीति चेन्न प्रात्यक्षिकप्रकरणात्।

ननु ज्ञेयत्वावचनादित्यसङ्गतं, अव्यक्तशब्दवाच्यस्यैवोत्तरत्र ज्ञेयत्ववचनात्।

"**अशब्दमस्पर्शमरूपमव्ययं**
**तथा रसं नित्यमगन्धवच्च यत्।**
**अनाद्यनन्तं महतः परं ध्रुवं**
**निचाय्य तं मृत्युमुखात्प्रमुच्यते॥** इति।

**इह तु** इच्छादिरहितप्रधानं महत्परं कापिलशास्त्रे निर्णीतम्। तदेव निचाय्यत्वेन व्यपदिश्यते। अतः प्रधानमेवाव्यक्तमिति चेदुच्यते—"**पुरुषान्न परं किञ्चित्**" इति श्रुतौ सर्वाधिक्यत्वेनात्र परमेश्वरस्यैव व्यपदेशान्निचाय्यत्वं नेतरस्योपदिश्यते।

परमेश्वरपक्षे पुनर्हेत्वन्तरं दर्शयति—

## ११२. वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

"अजामेकां लोहितशुक्लकृष्णां" इत्यादौ गुणत्रयात्मकप्रधानस्यौपचारिकत्वेन जगत्कारणत्वश्रवणादत्र निचाय्यत्वेन प्रधानमेवोपदिश्यत इति चेन्न । प्राज्ञो ह्यत्र परमेश्वरः निचाय्यत्वेन निर्णीयते । कस्मात्— प्रकरणात् । प्राज्ञस्य हि प्रकरणमिहोपक्रमोपसंहाराभ्यां दृश्यते । "ईशानो भूतभव्यस्य" "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः" "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" इति "पुरुषान्न परं किञ्चित्" "एष सर्वेषु भूतेषु" हृदयावच्छिन्नस्य पुरुषस्य देवतान्यत्वभ्रान्तिवारणाय परमशिवासाधारणेशानशब्दमुद्दिश्य "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति तस्यैव सर्वाधिकत्वव्यपदेशात् । "एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते" इति तस्य दृगाद्यविषयत्वात्मत्वनिर्देशात् । "यच्छेद्वाङ्मनसि प्राज्ञः" इत्यञ्जनादर्थलभ्यभवत्तद्विज्ञानाय योगोपदेशात् "मृत्युमुखात्प्रमुच्यते" इति तद्विदुषां मृत्युमोचनफलश्रवणाच्चेदं परमशिवप्रकरणमिति सिद्धम् ।

कापिलशास्त्रेऽपि न केवलप्रधानविज्ञानेन निर्वाणव्यपदेशः । जडाजडप्रकृतिपुरुषविज्ञानेन तद्दर्शनात् । नेदं परमात्मप्रकरणमिति चेन्न; इह चेतनाचेतनात्मकविज्ञानादेव मृत्युमुखमोचकत्वनिर्देशात् । "तमेवं विदित्वाऽतिमृत्युमेति" "संपश्यन् ब्रह्म परमं याति" इति सर्वोपनिषत्सु शब्दादिधर्मवत्त्वं प्राज्ञस्य शिवस्यैव विवक्ष्यते । अतो ह्यत्र ज्ञेयत्वमव्यक्तशब्दवाच्यत्वं च प्रधानस्य वक्तुं न शक्यमिति सिद्धम् ।

हेत्वन्तरमाह—

## ११३. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अतोऽपि न प्रधानस्याव्यक्तशब्दवाच्यत्वम् । ज्ञेयत्वं च भवति । यतस्त्रयाणामग्निशारीरपरमेश्वराणामेव कठवल्लीषु वरदातृत्वप्रभावादव्यक्तत्वेनोपन्यासश्च प्रश्नस्य तत्परत्वेन गीयते, न प्रधानादेः । तत्र तावत् "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो

प्रब्रूहि तं श्रद्दधानाय मह्यम्" इत्यग्निविषयः प्रश्नः। "योऽयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके ; नायमस्तीति चैके। "एतद्विद्यामनुशिष्टस्त्वयाहम्" इति जीवविषयः। "अन्यत्र धर्मात् यत्तत्पश्यसि तद्वद" इति परमेश्वरविषयः। प्रत्युत्तरमपि "लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा" इत्यग्निविषयम्।

"हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।
यथा च मरणं प्राप्य आत्मा भवति गौतम॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम्॥ इति।"

इति जीवविषयम्।

"न जायते म्रियते वा विपश्चित्" इत्यादौ परमात्मविषयं दृष्टम्। न ह्येवं प्रधानस्य प्रश्नोत्तरे दृश्यते। नन्वपृष्टत्वात्तस्य नोपन्यास इति चेदुच्यते– योयमात्मविषय प्रश्नः "ये यं प्रेते विचिकित्सा मनुष्येऽस्तीति" किं स एवायं "अन्यत्र धर्मात्" इति पुनरनुकृष्यते? किं वा ततोऽन्योऽयमपूर्वः प्रश्नः उत्थाप्यत? इति आत्मविषयोऽयं प्रश्नः। "भूयोऽनुकृष्यते" इति यद्युच्येत् आत्मपरमेश्वरविषयप्रश्नद्वयोरभेदसम्भवात्। वैश्वानरात्मविषयप्रश्नद्वयमेवात्र वक्तुं शक्यम्, न तु त्रयाणां प्रश्नोपन्यासाविति, तथान्योऽयमपूर्वः प्रश्न उत्थाप्यत इति व्याचक्षेत। अतो यथैव दातृत्वातिरेकेण प्रश्नकल्पनायामदोषः तद्वत् प्रश्नाभावेऽपि प्रधानोपन्यासोपपत्तौ अदोष इति चेद्ब्रूमः। वाक्यारम्भप्रभावादत्र वरप्रदानभेदेन न कश्चित् प्रश्नं कल्पयामः। वरप्रदानोपक्रमात्, मृत्युनचिकेतसंवादात्मकवाक्यप्रवृत्तिः कठवल्यामासमाप्ति दृश्यते। मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन् वरान् ददौ ; नचिकेताः किल तेषां प्रथमेन वरेण पितुस्सौमनस्यं वव्रे ; द्वितीयेनाग्निविद्यां, तृतीयेनात्मविद्यां "ये यं प्रेते" इति। "वरेष्वयं तृतीयः" इत्यात्मविद्योपन्यासादलं। यदि "अन्यत्र धर्मात्" इत्यपूर्वोऽयमन्यः प्रश्न उत्थाप्येत, तदा वरदातृत्वभेदेनापि प्रश्नकल्पनोपन्यासः असंभाव्यः।

नन्वपूर्वोऽयं प्रश्नः प्रष्टव्यव्यतिरेकादिति वक्तुं शक्यम्, प्रागेव तु जीवविषयः प्रश्नः "वराणामेष वरस्तृतीयः" इति तत्र संशयदर्शनात्। शारीरस्य

धर्मादिगोचरत्वात् । न "अन्यत्र धर्मात्" इत्यत्र प्रश्नः उपयुक्तः । प्राज्ञस्य धर्मातिरिक्तत्वात् अन्यत्र धर्मादिति प्रश्नः अभिहितः । प्रश्नच्छाया च न समाना दृश्यते, पूर्वस्य भावत्वाभावत्वपरत्वात् उत्तरस्य च धर्मातिरिक्तवस्तुपरत्वात् । अतः प्रत्यभिज्ञानाभावात्प्रश्नभेदो न पूर्वस्यैवोत्तरत्रानुकर्षणं इति चेन्न, बद्धदशायां "जीव-ब्रह्मणोर्भेदेऽपि" मुक्तदशायां भ्रमरकीटवदेकत्वोपदेशात् न प्रष्टव्यभेदात्प्रश्नभेदो द्रष्टव्यः । अत्रापि "अन्यत्र धर्मात्" इत्यस्य प्रश्नस्य प्रत्युत्तरं "न जायते म्रियते वा विपश्चित्" इत्युत्पत्तिप्रलयप्रतिषेधेन प्रोच्यमानं जीवशिवयोरभेदमुपदिशति । तथा--

"स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ॥

इति जाग्रत्स्वप्नप्रपञ्चानुभवतो जीवस्यैव महत्त्वविभुत्वविशेषणवेदनेन शोकनिवृत्तिं प्रतिपाद्य ब्रह्मानुगतस्य जीवस्य परमेश्वरानन्यभाव उपदिश्यते । "प्राज्ञविज्ञानाद्धि शोकविच्छेदः" इति वेदान्तसिद्धान्तः । तथोत्तरत्र "यदेवेह तदमुत्र यदमुत्र-तदन्विह । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इति मुक्तजीवप्राज्ञयो रैक्यमुपदिश्यते । तथा शारीरविषयकभावाभावप्रश्नात्परं "अन्यं वरं नचिकेतो वृणीष्व" इत्युपक्रम्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेताः यदा न चचाल तदैनं मृत्युरभ्युदयनिःश्रेयसफलविभागप्रदर्शनेन ज्ञानाज्ञानविभागसन्दर्शनेन च "विद्याऽभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त" इति प्रश्नमपि तदीयं प्रशंस-न्निदमुवाच--

"तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाति"

इति अत्रापि शारीरपरमात्मनोर्मुक्तिदशायामभेद इति व्याचक्षते । न चास्यामुपनिषदि प्रधानस्य प्रश्नोत्तरे स्तः इति न प्रधानमव्यक्तम् ।

पुनर्हेत्वन्तरमाह--

## ११४. महद्वच्च ॥ ७ ॥

यथा महच्छब्दस्य वेदे सर्वत्र "**बुद्धेरात्मा महान्परः**", "**महान्तं विभु-मात्मानं मत्वा**", "**वेदाहमेतं पुरुषं महान्तं**" **इत्यादौ** बुध्याख्यद्वितीयतत्त्वमिति नाङ्गीक्रियते सांख्यैस्तथा वैदिकाव्यक्तशब्दैर्नाप्रकृतप्रधानमङ्गीक्रियते। तस्मात्प्रकृतशरीरपर-मेवाव्यक्तपदमित्यशब्दत्वं प्रधानस्येति सिद्धम्।

एवोपदेशान्नान्यस्य कारणत्वम्। **तैत्तिरीयके** आकाशादिसृष्टिः, **छान्दोग्ये** तेज आदि-केत्येवं कार्यपरविकल्पः ज्ञायते। कार्यपरविकल्पेन जगद्धेतुभूतं ब्रह्मापि सकलोपनिषत्सु अविगीतमधिगम्यमानं सद्विवक्षितं इति वक्तुं शक्यमिति विज्ञायते। कारणविषयं विगानं परिहर्तुं सूत्रकारोऽत्र समाधानमभाषत। कार्यपरविकल्पे सत्यप्याकाशादिसृष्टेरवि-वक्षितत्वात्। न ह्यत्राकाशादिसृष्टिप्रपञ्चः प्रतिपादयिपितः। तस्मान्न तद्विरोधः। न हि सृष्टिप्रतिबद्धः कश्चित्– पुरुषार्थो दृश्यते श्रूयते वा, न वा कल्पयितुमपि शक्यते। पूर्वापरमध्यपरामर्शतया परमेश्वरपरत्वस्य दर्शनात्। **"अन्नेन सौम्य शुङ्गेनापो मूलमन्विच्छाद्भिस्सौम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सौम्य शुङ्गेन सन्मूल-मन्विच्छ"** इति मृदादिदृष्टान्तैश्च कार्यकारणयोरभेदं वक्तुं जन्मादिविशिष्टं जगच्छ्राव्यत इति गम्यते।

परमेश्वरस्य जगत्कारणत्वे **"असद्वा इदमग्र आसीत्"** **इत्यादिषु** विरोधमाशङ्क्य परिहरति--

## १२२. समाकर्षात् ॥ १५ ॥

**"असद्वा इदमग्र"** इत्यत्र पूर्वप्रकृतस्य सत्वस्याकर्षणान्नासत्कारणतापरमिदम्। तथाहि– **"असन्नेव स भवति"** इत्यसद्वादं निराकृत्य, **"अस्ति ब्रह्मेति चेद्वेद"** इति सदात्मानं निर्धार्य, **"सोऽकामयत"** इति तत्सकाशात्सृष्टिमुपदिश्य **"तत्सत्य-मित्याचक्षते"** इत्युपसंहृतम्। **"तदप्येष श्लोको भवति"** इति प्रकृतविषयश्लोक उदाहृतः। तत्र न असत्शब्देन शून्यवादः परिग्रहीतुं शक्यते, प्रकृतहानाप्रकृतकल्प-नाप्रसङ्गात्। सत्येप्यसच्छब्दस्य नामरूपव्याकरणाभावेन प्राक् सतोप्यौपचारिकप्रयोगसम्भ-वादेवं सर्वत्र यथा व्यपदिष्टोक्तेरुच्यते। **"तद्धीदं तर्ह्यव्याकृतमासीत्, तन्नामरूपा-भ्यामेव व्याक्रियत"** इत्यत्रापि, **"स एष इह प्रविष्ट आनखाग्रेभ्यः"** इत्यध्यक्षस्य प्रपञ्चप्रविष्टत्वेन समाकर्षात्। निरध्यक्षस्य व्याकरणाभ्युपलब्धौ तु ततः परं प्रकरणानु-षङ्गिणा **'स'** इत्यनेन सर्वनाम्ना कः प्रपञ्चानुषङ्गे संगृह्यत? चिद्रूपस्य परमेश्वरस्यानु-प्रवेशः श्रूयते। देहप्रविष्टस्य चिद्रूपत्वव्यपदेशात्। **"पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः"** इति।

किञ्च परिदृश्यमानमिदं सकर्तृकं विज्ञायते। एवं प्रथमसृष्टावपीति गम्यते "**न हि दृष्टेऽनुपपन्नं नाम**" इति न्यायात्। "**अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि**" "**तत्सृष्ट्वा तदेवानुप्राविशत्**" इत्यादिष्वपि साधिपतित्वमुपदिश्यते। "**व्याक्रियत**" इत्यत्र कर्मकर्तरि लकारः स्थिते परमात्मनि व्याकरणसौष्ठवमपेक्ष्य द्रष्टव्यः। "**केदारः स्वयमेव लूयते**" इतिवत् सत्यपि पृथक्कर्तरि न विरुध्यते। यद्वा कर्मण्येवायं लकारः "**गम्यते ग्रामः**" इत्यादिवद्द्रष्टव्यः। एवं परमेश्वरस्य सर्वकारणत्वे न कश्चिद्विरोधः। नापि सृष्टिविरोधात्कारणे परशिवब्रह्मणि विरोधः।

बालाक्यधिकरणम् ॥ ५ ॥

अथ शुद्धाद्वैतमतनिराकरणम्

एवं प्रधानजगत्कारणवादिसाङ्ख्यमतं निरस्य निर्विशेषब्रह्मसान्निध्येन प्रधानस्य जगत्कारणत्वव्यवस्थापकं सर्वदा जीवब्रह्माभेदप्रधानशुद्धाद्वैतमतं निराकरोति—

## १२३. जगद्वाचित्वात् ॥ १६ ॥

"**ब्रह्म ते ब्रवाणि**" इत्युपक्रम्य "**यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्यः**" इति **कौषीतकी ब्राह्मणे** बालाकाजातशत्रुसंवादे दृश्यते। अत्र वेदितव्यः प्राणः? जीवः? परमेश्वरो? वेति **सन्देहः**। अत्र प्राण एवाभिधीयते। कस्मात्? "**यस्य वै तत्कर्म**" इति दर्शनात्। कर्मणश्चलनात्मकस्य प्राणाश्रयत्वात्। वाक्यशेषे च "**अथास्मिन् प्राण एवैकधा भवति**" इति प्राणशब्दश्रवणात्। प्राणस्य हि मुख्यप्राणे प्राणवायौ रूढत्वात्। ये चैते पुरस्ताद्बालाकिना "**आदित्ये पुरुषश्चन्द्रमसि पुरुषः**" इत्येवमादयो जीवा निरूपिताः। तेषामपि प्राणोऽस्त्यधिष्ठाना प्राणावस्थाविशेषत्वात्। आदित्यादिदेवतात्मनां "**कतम एको देव इति. प्राण इति, स ब्रह्म स आदित्य इत्याचक्षते**" इति श्रुत्यन्तरसिद्धेः। उत शारीरो वा निर्दिश्यते। **यस्य** चैतत्कर्मेति धर्माधर्मलक्षणकर्मोपदेशसम्भवात् "**पूर्वप्रकृतानामादित्यः पुरुषः**" इत्यादीनां भोक्तृजीवस्य कर्तृत्वसम्भवेनैतेषां पुरुषाणां कर्तेति निर्देशोपपत्तेः जीवलिङ्गमप्यत्र दृश्यते। "**तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथैते श्रेष्ठिनं भुञ्जते एवमेवैष प्रज्ञात्मा तैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति**" इति। वेदितव्यपुरुषोन्मुखं बालाकिं प्रत्यजातशत्रुणा सुप्तपुरुषमामन्त्रणेन सम्बोध्य ततोऽनुत्थितं पाणिघातेनोत्थितं प्रदर्श्य प्राणादिव्यतिरिक्तजीवस्य प्रतिपादनात्, निराकृतसर्वकर्मबन्धपरमेश्वरे तदसम्भवात्, परमेश्वरविषयकलिङ्गानामत्रादर्शनाच्च, प्राणजीवयोरेक एवात्र निर्णेतव्य इति चेदुच्यते।

अत्र परमेश्वर एव जीवाधिष्ठातृत्वेन वेदितव्यः । "**ब्रह्म ते ब्रवाणि**" इति परब्रह्मप्रतिपादनमुपक्रम्य आदित्यादिषु पुरुषोपन्यासे बालाकिना कृते "**मृषा वै खलु मा संवदिष्ठाः**" इत्यादिना तन्निराकृते स्वयमजातशत्रुरेतेषां पुरुषाणां कर्ता यस्य चैतत्कर्मेत्युक्तवान् । तत्रैतस्समुख्यब्रह्मपरत्वं युक्तिमत् पुरुषकर्तृत्वं च स्वातन्त्र्येणेश्वरस्यैवोपपन्नम् । "**ईशानस्सर्वविद्यानां**" "**एषामीशे पशुपतिः पशूनां**" इत्यादिष्वपि सर्वनियन्तृत्वस्य परब्रह्मणि शिव एव व्यवस्थापनात् । न च तत्र कर्मशब्दानुपपत्तिः, जगद्वाचित्वात् कर्मशब्दस्य क्रियत इति कर्मेति जगत्कृत्वोक्त्यैव पुरुषकर्तृत्वस्यापि प्राप्तौ बालाकिना वेदितव्यत्वेनोपदिष्टानां पुरुषाणामब्रह्मत्वज्ञापनार्थं **ब्राह्मणपरिव्राजकन्यायेन** पुरुषाणामपि पृथङ्निर्देशः ।

ननु विश्रान्तिस्थितजीवस्य चेतनत्वात् स्वातन्त्र्येण सर्वकर्तृत्वमुपदिश्यत इति चेन्न। गार्ग्येण ब्रह्मत्वेनोक्तपुरुषाणां ब्रह्मातिरिक्तत्वद्योतनाय **गोबलीवर्दन्यायेन** पृथक् व्यपदेशान्नेतरः ।

पुनराशङ्क्य परिहरति–

## १२४. जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥१७॥

"**प्रथैते श्रेष्ठिनं भुञ्जन्ति**" इति "**अथास्मिन्**" **प्राण एवैकधा भवति**" इति वाक्यशेषे परिच्छिन्नजीवमुख्यप्राणलिङ्गस्यैवात्र द्योतनान्न सर्वव्यापकब्रह्मोपासनमात्रपरमिति चेत्तद्व्याख्यातम् । पूर्वत्र प्राणाधिकरणे प्रतर्दनविद्यायां **इष्टादिलिङ्गत्रयोपासनं** व्याख्यातम् । तद्वदिहापि उपक्रमोपसंहारमध्यपरामर्शैस्तथा वेदितव्यम् । "**ब्रह्म ते ब्रवाणि**" इत्युपक्रमे परब्रह्मोपक्रमदर्शनात् । "**यस्य वै तत्कर्म**" इति मध्ये च सर्वजगत्कर्तृत्वस्य तस्मिन्नेव निर्देशात् । "**सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद**" इत्युपसंहारे निरतिशयफलश्रवणाच्च नान्यपरत्वं युक्तम् । "**प्राणबन्धनं हि सौम्य मनः**" इत्यत्र प्राणशब्दस्य ब्रह्मपरत्वमुपदिश्यते । तस्मादत्र तदभेदेन **लिङ्गत्रयोपासनं** द्रष्टव्यम् । न चैवं प्रतर्दनविचारणेन गतार्थता ।

कर्मशब्दस्य जगद्वाचित्वस्य तत्राप्रतिपादनादन्यपरत्वमस्तीत्याशङ्कायाः सम्भवात् पुनर्हेत्वन्तरमाह–

## १२५. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१८॥

जैमिन्याचार्यो जीवपरामर्शमस्मिन् प्रकरणे अन्यार्थं प्रश्नप्रतिपत्त्यर्थं मन्यते। कस्मात्? प्रश्नप्रतिवचनाभ्याम्, प्रश्नस्तावत्सुप्तप्रतिबोधनेन प्राणादिप्रभिन्नशारीरे बुद्धे पुनश्शारीराद्भिन्नविषयः श्रूयते।

"**क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा वै एतदभूत्कुत एतदगात्**" इति। प्रश्नप्रतिवचनमपि। "**यदा सुप्तो न कश्चन स्वप्नं पश्यत्यथास्मिन् प्राण एवैकधा भवति। सता सौम्य सदा सम्पन्नो भवति**" "**एतस्मादात्मनः सर्वे प्राणा यथायतनं प्रतिष्ठन्ते**" इति च जीवस्य सुप्तौ शिवप्राप्तिर्ब्रह्मणः प्राणादिकं जगज्जायत इति जगत्कारणत्वं च श्रूयते। तस्मात् परमेश्वरविज्ञानेन जीवस्य तदात्मकत्वमुपदिश्यते। अपि चैवमेके वाजसनेयिनो बालाक्यजातशत्रुसंवादे असन्दिग्धतया विज्ञानमयं जीवं तद्भिन्नं परमेश्वरं चामनन्ति। "**य एष विज्ञानमयः पुरुषः**" "**क्वैष तदाभूत्कुत एतदगात्**" इति प्रश्ने, "**य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते**" इत्युत्तरे च आकाशशब्दो ब्रह्मणि प्रसिद्धः, सर्ववेदान्तप्रत्ययत्वाच्च। अत्रापि स एव निश्चयः। अतः परमेश्वरस्यैव वेदितव्यत्वम्।

---

वाक्यान्वयाधिकरणम् ॥ ६ ॥

परमतनिराकरणपूर्वकस्वसिद्धान्तस्थिरीकरणम्

जीवब्रह्मणोः मैत्रेयीब्राह्मणे स्वस्वशब्दैकपरत्वेन विधानात्कथं सामानाधिकरण्यमित्याशङ्क्याह–

## १२६. वाक्यान्वयात् ॥ १९ ॥

बृहदारण्यके मैत्रेयीब्राह्मणे दृश्यतेऽस्य विषयः "स होवाच न वाऽरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति", इत्यारभ्य "न वाऽरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इति। अत्र किं द्रष्टव्यत्वादिना निर्दिष्टोऽयं जीवः परमेश्वरो वेति सन्दिह्यते। विज्ञानात्मा जीव एवात्र व्यवह्रियते। कुतः? उपक्रमसामर्थ्यात् पतिजायापुत्रपशुवित्तादिप्रपञ्चस्यात्मार्थत्वेन प्रियत्वव्यपदेशात्।

किञ्च– तत्रैव "न वाऽरे पत्युः" इत्यादिना भोक्तृजीवोपक्रमात्, मध्येऽपि "इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति स्वभूतेभ्यः समुत्थानस्य शारीरे उपदेशात् तस्यैव द्रष्टव्यत्वं निर्दिशति। तथा "विज्ञातारमरे केन विजानीयात्" इति कर्तृप्रतिपादकवाक्येनोपसंहारात् शारीर एवोपदिष्टः। तस्मादुपक्रमे वित्तसाध्येन कर्मणा किममृतत्वमस्तीति मैत्रेयीप्रश्नदर्शनादेतत्प्रकरणं नेतरस्योपदिश्यत इति प्राप्ते–

**अभिधीयते–** अत्र द्रष्टव्यत्वेन उपदिश्यमानः पुरुषः परमेश्वर एव। **कुतः–?** वाक्यान्वयात्। वाक्यस्य तु उपक्रमोपसंहारमध्यपरामर्शतया परब्रह्मणि शिव एव समन्वयात्।

**"अमृतत्वस्य तु नाशास्ति वित्तेन"** इति वित्तसाध्येन कर्मणा मोक्षे प्रत्याशा नास्तीति याज्ञवल्क्यादुपश्रुत्या **मैत्रेयी** मोक्षसाधनं पृच्छति। **"येनाहं नामृतास्यां किमहं तेन कुर्याम्। यदेव भगवान्वेद तदेव मे ब्रूहि"** इति प्रश्नानन्तरं आत्मज्ञानमुपदिश्यते **"आत्मा वाऽरे द्रष्टव्यः"** इत्यादिना। न हि जीवज्ञानान्मोक्ष इति कश्चिदभ्युपैति। अतो द्रष्टव्यः परमेश्वरस्तथा **"आत्मनो वाऽरे दर्शनेन"** इति यदात्मश्रवणात् ज्ञानात्सर्वज्ञानं प्रतिज्ञातं भवति। उपक्रमे वित्तसाध्येन कर्मणा किममृतत्वमस्तीति मैत्रेयीप्रश्नदर्शनात् **"एतावदरे खल्वमृतत्वं"** इत्युपसंहारदर्शनाच्च। अतः **"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञायते"** अत्र तत्त्वेन विजानीयादित्यवसाने कृत्स्नवाक्यमपि परमेश्वरं गमयति। अतः अमृतत्वस्य साधनमात्ममात्रोपदेशः परमात्मविषय **एव** न जीव विषयः।

### अथ संयुक्तभेदमतनिरूपणम्

**"न वाऽरे पत्युः"** इत्यादिना जीवोपक्रमदर्शनात् कथं वात्मज्ञानेन सर्वविज्ञानप्रतिपादकवाक्यस्य ब्रह्मविषयत्वम् **"ज्ञाऽज्ञौ द्वावजौ"** इति शारीरस्याजन्यत्वप्रतिपादनात् ब्रह्मजन्यत्वं न सम्भवति। तस्माद्ब्रह्मज्ञानेन जीवज्ञानमनुपपन्नमित्याशंक्याह–

## १२७. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

**"आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति"** **"इदं सर्वं यदयमात्मा"** इति चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्सिद्धेः लिङ्गं सूचकं जीवपरमात्मनोरत्यन्तविलक्षणत्वादेकविज्ञानेन सर्वविज्ञानवाक्यं न विरुध्यते। **"यतो वा इमानि भूतानि जायन्ते"** इत्यादौ भूतपञ्चकवत्तेषां जीवानामपि ब्रह्मजन्यत्वावगमात्, कार्यकारणयोः परस्परभेदाङ्गीकाराच्च तयोरभेदो न सम्भवति। तस्माद्‌भिक्षीरवदेकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यमुपपन्नम्। अतस्तयोर्भेदांशप्रतिपत्त्यर्थं जीवोपक्रमणमिति **आश्मरथ्यो** मन्यते। उत **"यस्यात्मा शरीरम्"** इत्यादिना सर्वविज्ञानप्रतिज्ञासिद्धिस्सम्भवति। लोके **"कृशोऽहं श्वेतोऽहं"** इत्याद्यनुभूतौ परस्परवैलक्ष्येऽपि धर्मैकत्वदर्शनादङ्गाङ्गिवत्संयुक्तासंयुक्तभेदद्योतनाय वा जीवोपक्रमणमिति सः भेदवादी मन्यते।

### अथाद्वैतवादिमतनिरूपणम्

एवं घटपटवज्जीवब्रह्मणोरसंयुक्तभेदवादिमतं अग्न्याग्निवत्संयुक्तभेदमतं चोपदिश्य शुद्धाद्वैतमतमाह—

## १२८. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २१ ॥

उत्क्रमिष्यतः स्वाविद्योपाधिं त्यजतो जीवस्य घटाकाशे महाकाशवद्ब्रह्माभिन्नत्वात्सर्वदा ब्रह्माभिन्नतया जीवोपक्रमणं तस्माद्ब्रह्मज्ञानेन सर्वविज्ञानमुपपन्नमिति औडुलोम्याचार्यो मन्यते। अथवा रज्ज्वारोपितसर्पभ्रान्तिनिवृत्तौ रज्जुमात्रपरिशेषवत् स्वात्मारोपितजीवभ्रान्तिनिवृत्यनन्तरं स्वात्मा परिशिष्यत इत्यौडुलोमिर्मन्यते। तत्त्वमस्यादिश्रुतिशतेषु जीवब्रह्मणोरेकत्वोपदेशाद्बिम्बप्रतिबिम्बभाववद्घटाकाशमहाकाशवदभेदस्सर्वथा सिद्ध इति केचित्। रज्जुसर्पवद्ब्रह्मणि जीवत्वस्यारोपितत्वादधिष्ठानव्यतिरेकेणाध्यासादर्शनाच्च। वस्तुतस्तु भ्रान्तिनिर्मुक्ततया ब्रह्मैव सिद्धमित्यभेदबुद्ध्या जीवोपक्रमणमित्यद्वैतानुसारिणः केचिन्मन्यन्ते।

### सर्वश्रुत्यभिप्रेतवेदान्तसिद्धान्तसम्मतविशेषाद्वैतराद्धान्तः

तस्मादेवं श्रुत्येकदेशप्रामाण्यमतत्रयमुपपाद्य सर्वश्रुत्यभिप्रेतमुख्यवेदान्तसिद्धान्तमतं दर्शयति—

## १२९. अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

इदमेव सूत्रकारमतम्। "द्वासुपर्णा" इत्यादिभेदश्रुतीनां तत्त्वमस्याद्यभेदश्रुतीनां चाविरोधतया भेदाभेदमते अवस्थितेरवस्थानात् जीवब्रह्मणोर्भेदाभेदप्रदर्शनार्थमत्र जीवोपक्रमणमिति सर्वश्रुतितात्पर्यवेदी मुख्यसिद्धान्ती काशकृत्स्नो मन्यते। तस्मात्सर्वश्रुतिसिद्धतृतीयमतं पारमार्थिकमिति वेदितव्यम्। "**एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते,**" "**यथा नद्यः**" "**ध्यात्वा मुनिर्गच्छति भूतयोनिं**" "**श्रद्धाभक्तिध्यानयोगादवेहि,**" "**ब्रह्मविदाप्नोति**

## चमसाधिकरणम् ॥ २ ॥

नन्वत्र प्रधानस्य जगत्कारणत्वोपदेशात् प्रकृतप्रकरणरहितस्य तस्य त्रिविधत्वानुगतत्वादत्रापि प्रस्तावोऽस्तीत्याशङ्क्य निराकरोति—

## ११५. चमसवदविशेषात् ॥ ७ ॥

भूयोऽपि कापिलवादी प्रकृतेरशब्दत्वं न सम्भवतीत्याह। कुतः ? मन्त्रवर्णात्। "**अजामेकां लोहितशुक्लकृष्णां**" इत्यत्र किमजाशब्देन प्रधानमुपदिश्यते, उत तेजोऽबन्नात्मिका छान्दोग्यसिद्धा अवान्तरप्रकृतिरथवा चिच्छक्तिर्वेति सन्दिह्यते। इह '**न जायत**' इत्यजा सांख्यसिद्धप्रकृतिरिव सत्त्वरजस्तमोगुणात्मकत्वेन लोहितशुक्लकृष्णा च भवति। एतद्गुणसाम्यावस्था प्रकृतिरेवात्रोपदिश्यते।

नन्वजाशब्दस्य छागे मुख्यत्वात्तत्परत्वं किं न स्यादिति चेन्न, विद्याप्रकरणात्। "**बह्वीं प्रजां जनयन्तीं**" इत्यादिबहुप्रजाजनकत्वस्य लोहितशुक्लकृष्णवर्णात्मकत्वस्य च तस्या असम्भवात्। उत "**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।**" इत्यत्र बद्धजीवस्य जननमरणप्रवाहसंसारभोगविशिष्टत्वेन सुखदुःखानुभूतिमत्त्वस्य, तदतिरिक्तस्य मुक्तजीवस्य कृतभोगविवेकेन मायापाशनिवृत्तेश्च दर्शनात्, जीवातिरिक्तव्यपदेशादजा प्रधानमेवात्रोपपद्यते। तस्मादजाशब्दं प्रधानम्। अतः प्रधान जगत्कारणत्वस्य श्रुतिसिद्धत्वेन कापिलं वैदिकमिति प्राप्ते—

ब्रूमः— न प्रधानसापेक्षत्वेन प्रतिपत्तिरस्ति, कस्मात् अविशेषात्। न जायत इत्यजा इत्यन्यत्रापि योजयितुं शक्यम्। लोहितत्वादिरूपस्यान्यत्राप्यर्थे समवेतत्वात् येन केनचित् कल्पनेन सर्वेष्वप्यजात्वादिसंग्रहणोपपत्तेः, कापिलवाद एवात्रोपदिश्यत इति विशेषावधारणहेत्वभावाच्च। चमसवत्, यथा हि "**अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः**" इत्यस्मिन् मन्त्रे अयं चमस इति ज्ञातुं न शक्यते। यथाकथंचिदर्वाग्बिलत्वादेरन्यत्रापि सम्भवात्। एवमजामन्त्रेऽपि न प्रधाननिर्णयः। तस्मादशब्दं प्रधानम्।

ननु "**इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न**" इति वाक्यशेषात् शिरश्चमस निर्णय इह कथमत आह–

## ११६. ज्योतिरुपक्रमात्तथाह्यधीयत एके ॥ ९ ॥

"**यदग्नेर्लोहितं रूपं**" इत्यादिश्रुतेर्ज्योतिरुपक्रमात् तेजोऽबन्नात्मिकाबान्तरप्रकृति-रजाशब्देन प्रतिपाद्यते। एके शाखिनः तथा लोहितशुक्लकृष्णत्वं तेजोऽबन्नानमधीयते। अजाशब्दस्य जन्मरहितवस्तुवाचकत्वात् परमशिववाचकत्वं युक्तम्। हि शब्दोऽवधारणार्थः।

ननु ज्योतिर्वाक्योपक्रमे प्रकृतिः स्वेदजादिचतुर्विधभूतग्रामात्मिका। इह अजा-शब्देनविवक्षिता, गुणत्रयात्मिका जगत्कारणत्वेन प्रतिपत्तव्येति चेन्न, न कापिलत्रैगुण्या-त्मकप्रकृतेर्जगत्कारणत्वम्। "**यदग्नेर्लोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य**" इति सर्ववेदान्तप्रत्ययन्यायात् शाखान्तरप्रसिद्धलोहितादिप्रत्यभिज्ञानात् तेजोऽबन्ना-नामेवात्र ग्रहणम्। लोहितादिशब्दसाम्याद्रोहितादीनां च शब्दानां रूपविशेषेषु रूढत्वात् भाक्तत्वाच्च त्रिगुणपरत्वस्य। [1]सन्देहाभावेन च सन्दिग्धस्य निगमनन्यायान्न प्रधान-मत्रविचार्यते।

अस्मिन्नेव प्रकरणे "**ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म**" इत्युपक्रम्य "**ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्**" इति वाक्योप-क्रमे परमशिवशक्तेर्मायायाः जगज्जनकत्वमवगम्यते। वाक्यशेषेऽपि "**मायान्तु प्रकृतिं विन्द्यात्**" इति "**यो योनिं योनिमधितिष्ठत्येकः**" इति च तस्या एवावगमात् न कदाचिदपि स्वातन्त्र्यम्। परमशिवकारणिकेयमजा प्रकृतिरुच्यते। सैव महेश्वरशक्तिरव्या-कृतनामरूपा नामरुपयोः प्रागवस्थानेन अनेन मन्त्रेणाम्नायते। तस्याः विकारविषये त्रिविधरूपेण त्रिविधात्मकत्वमुक्तम्। कथं पुनः तेजोऽबन्नाना प्रकृतिः त्रिविधरूपेण रूपत्रयात्मिका अजेति वक्तुं शक्यते। तथापि परमेश्वरानुगृहीताया एव तैत्तिरीयकेऽपि स्वातन्त्र्यमाम्नायते। "**अणोरणीयान्महतो महीयान्**" इत्युपक्रम्य "**सप्तप्राणाः प्रभवन्ति तस्मात्**" इत्यादिना जगत्कारणत्वं परमेश्वरस्य प्रसाध्य तज्जन्यत्वेन तदात्म-

---

[1] असन्दिग्धेन (ड)

कल्पोपदेशकाले "**अजामेकां**" इति निर्दिशति। ततः पूर्वापरपर्यालोचनया तेजोऽबन्नात्मिकायाः कार्यप्रकृतेः कारणत्वं परमेश्वरानुग्रहेणेति विधीयते। तस्मान्न स्वतन्त्रसिद्ध इति कापिलवादो युक्तः।

ननु तेजोऽबन्नानां उत्पत्तिश्रवणाद्योगरूढेरसम्भवात्कथमजाशब्देन तेषां ग्रहणमित्यत आह—

## ११७. कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

च शब्दश्चोद्यनिरासे। न अजाशब्दानुपपत्तिः, कुतः कल्पनोपदेशात्। तेजोऽबन्नात्मिकाया अजात्वं कल्प्यते। यथा लोके प्रसिद्धामजां भुक्तभोगां एक अजस्त्यजति। अन्यस्तामनुवर्तते। एवं त्यागभोगयोः कार्यकारणसङ्घाताद्युपादानभूतायास्तेजोऽबन्नात्मिकायाः प्रकृतेस्साम्यप्रतिपत्त्यर्थम्। मध्वादिवत् यथा, "**असौ वा आदित्यो देवमधु**" "**वाचं धेनुमुपासीत**" इत्यादावादित्यादेर्मध्वादिकल्पना तद्वदजात्वकल्पनायामविरोधः।

नन्वत्र स्वातन्त्र्येण प्रकृतेः प्रपञ्चकारणत्वमुपदिश्यत इति चेन्न—

**"छन्दांसि यज्ञाः क्रतवो व्रतानि**
**भूतं भव्यं च वेदा वदन्ति।**
**अस्मान्मायी सृजते विश्वमेतत्**
**तस्मिंश्चान्यो मायया सन्निरुद्धः ॥"**

इति सृष्ट्युपक्रमे मायाविशिष्टस्य परमेश्वरस्यैव कारणत्वोपदेशात्। उत जडप्रकृतेरेव परमेश्वराद्भिन्नत्वं, मोक्षदशायां परमशिवे विलीनत्वं च युक्तम्, न तु चिच्छक्तेः। तथा च स्मृतिः—

**शक्तिरस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः।**
**शक्तिस्तु शक्तिमद्रूपा व्यतिरिक्ता हि न क्वचित् ॥**

**तादात्म्यमनयोर्नित्यं वह्निदाहकशक्तिवत् ।**
**शक्तिशक्तिमतोर्यस्मादभेदस्सर्वदा स्थितः ॥**

इति । अत्र परमेश्वरादपृथक्सिद्धत्वेन परमेश्वरनिष्ठकारणत्वमजाशब्दवाच्यकारणप्रकृतेरिति न विरोधः ।

ननु "**अजोह्येको जुषमाणोऽनुशेते**" इत्यादौ स्वातन्त्र्येणैकस्य जीवस्य मायानुप्रविष्टत्वस्य, एकस्य जीवस्य स्वातन्त्र्येण मायामोचकत्वस्य च व्यपदेशान्न परमेश्वरस्य बन्धमोक्षहेतुत्वमस्तीति चेन्न । "**क्षरात्मानावीशते देव एकः । तस्याभिध्यानाद्योजनात्तत्त्वभावद्भूयश्चान्ते विश्वमायानिवृत्तिः**" इत्यनेनेष्टादिलिङ्गत्रयधारणद्वारा जीवानां मायामोचकत्वव्यवस्थापनान्नान्यथेति सिद्धम् ।

---

संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

पञ्चविंशतितत्त्वापेक्षया षट्त्रिंशत्तत्त्वग्रहणमेव युक्तम् ।

एवं प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वं निरस्य पञ्चविंशतितत्त्वानि निराकरोति—

## ११८. न सङ्ख्योपग्रहणादपि नानाभावादतिरेकाच्च ॥ ११ ॥

बृहदारण्यके षष्ठाध्याये पठ्यतेऽस्य विषयः । "तदेव ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं" इत्यनन्तरं "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" "तमेव मन्ये आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इति "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुस्तेन चिक्युर्ब्रह्म पुराणमग्रयम्" इति । अस्मिन् मन्त्रे पञ्च पञ्च जना आकाशश्चयस्मिन् आश्रिताः तमाश्रयभूतमात्मानं अमृतं मन्ये । एवं ब्रह्म विद्वान् अमृतं स्यात्, "अहममृतो भवामि" इति । अत्र "पञ्च पञ्चजना" इति साङ्ख्यसिद्धान्ति—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति संगृहीतानि पञ्चविंशति तत्वानि ? किं वा प्राणादयः पञ्चपदार्थाः श्रुतिसिद्धाः ? इति संशये तत्त्वानीति प्राप्तम् । पञ्चपञ्चेत्यनेन पञ्चविंशतिसंख्याकाः पदार्था उच्यन्ते । जनशब्दस्य तत्त्वोपलक्षणार्थत्वात् प्राणादिष्वप्यमुख्यत्वाच्च, न प्रधानमशब्दमिति प्राप्ते—

ब्रूमः— उदाहृतश्रुतौ पञ्चविंशतिसङ्ख्याश्रवणात् प्रधानस्य शब्दवत्त्वमित्यपि न सम्भवति । कुतः नानाभावात् । नानात्वादवान्तरसङ्ख्याया अनुगमकधर्माभावेन पञ्चपञ्चकानां प्रतिपादयितुमशक्यत्वात् । नानात्वेऽपि किञ्चित्वस्य पञ्चविंशतिसङ्ख्याप्रतिपादकत्वाङ्गीकारे बाधकान्तरमाह— अतिरेकाच्चेति । पञ्चजनापेक्षया आकाश-पुरुष-कालादीनामतिरिक्तत्वात्

षट्त्रिंशत्सङ्ख्योपपत्तेर्न पञ्चविंशति सङ्ख्याप्रतिपत्तिरित्युपदिश्यते। तथाहि— पञ्चजनशब्दस्य सविशेषणैकपद्यनिश्चयात्तदेकदेशस्य पञ्चशब्दस्य पञ्चशब्देनान्वयायोगात् न पञ्चविंशतिसङ्ख्या-प्रतीतिः।

नन्वत्र कालादितत्वानामदर्शनात् कथं षट्त्रिंशत्तत्त्वसङ्ख्याप्रतिपत्तिरितिचेत् **बृद्ध-जाबालोपनिषदि** प्रथमं पशु-पाश-पतिपदार्थत्रयं निरूप्य तत्रशिवस्य परब्रह्मणः पञ्चकृत्य-कर्तृत्वं प्रसाध्य **"स पुनस्तगँ होवाच कानि षट्त्रिंशत्तत्त्वानीति स तस्मा आह शिव-शक्ति-सदाशिव ईश्वर-शुद्धविद्या इत्येतानि शुद्धानि पञ्चतत्त्वानि; माया कालो-नियतिः, कला, विद्या, रागः— पुरुष इति शुद्धाशुद्धानि सप्त; ततः प्रकृतिः— प्रकृतेर्गुणत्रयं गुणत्रयान्नामरूपक्रियास्पदानि परस्परविभिन्नानि** धरण्यादीनि विंशति-तत्त्वानि। बृद्धजाबालोपानिषदि दृग्विलक्षणां शक्तिं परमेश्वरो यदा संक्रमते तदा प्राज्ञ-तैजसमिश्राख्या आगच्छन्ति इति षट्त्रिंशत्तत्वानामसंकुचितत्वेन व्यपदेशात्। **श्वेताश्वतर-नारायणाद्युपनिषत्सु** अतिविस्पष्टतया तद्दर्शनात् श्रुत्यागमानुसारेण **द्वितीयपादप्रथमाधि-करणे** बहुधा प्रपञ्चितम्। तस्मात् **षट्त्रिंशत्तत्वग्रहणमेवात्र** युक्तम्।

एवं सङ्ख्यान्तरप्रतीतौ निरस्तायां पञ्चजनशब्देन किं विवक्ष्यत इत्याह—

## ११९. प्राणादयो वाक्यविशेषात् ॥ १२ ॥

प्राणश्चक्षुश्श्रोत्रान्नमनांसि पञ्चजनशब्देनोच्यन्ते। कस्माद्वाक्यशेषात्? **उत्तरमन्त्रे**

**"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत।**
**श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो यो मनो विदुः॥"**

इति प्राणादीनां पञ्चानामनुक्रमात् पञ्चजना इत्युच्यन्ते। तर्हि प्राणादीनां कथं जनः शब्दप्रयोगः? सांख्यमते? तत्त्वादीनां च जनशब्दप्रयोगः कथं सम्भवति? समाने तु प्रसिध्यति क्रमे सन्निधानवाक्यविशेषात् प्राणपञ्चकमेवोपदिश्यते। पुरुषवाचकत्वेन प्रसिद्धस्यापि पञ्चजनशब्दस्य प्रकृते तत्सम्बन्धिप्राणादौ लक्षणया वृत्तिरविरुद्धा।

मानुषशब्दपर्यायः पुरुषशब्दस्तु प्राणेषु परिगृह्यते। **"ते वा एते पञ्च ब्रह्मपुरुषाः"** इत्यत्र **"प्राणो हि पिता, प्राणो माता"** इत्यादि च ब्राह्मणम्। समासबलाच्च समुदायस्यरूढत्वमविरुद्धम्। कथमसति प्रथमप्रयोगे रूढिः शक्याश्रयितुं इति चेदुच्यते—

मुख्यार्थसमक्षे ह्यमुख्यार्थशब्दः प्रविष्टस्समभिव्याहारात्तद्विषयो विज्ञायते। यथा **"उद्भिदा यजेत, यूपं छिनत्ति, वेदिं करोति"** इत्यादिवदत्रापि पञ्चजनशब्दस्य समासाद्व्याख्यानादवगतः संज्ञाभावः वाक्यशेषसमभिव्याहृतेषु संज्ञाकांक्षि प्राणादिषु वर्तिष्यते।

कैश्चित् देवपितृगन्धर्वासुररक्षांसि पञ्चपञ्चजनाः व्याख्याताः। अन्यैश्चत्वारो वर्णा निषादपञ्चमाः परिगृहीताः। क्वचिच्च **"यत्पाञ्चजन्यया विशा"** इति प्रजापरप्रयोगः पञ्चजनशब्दस्य श्रूयते। तत्संग्रहणेऽप्यत्र न बाधः।

सूत्रकारस्तु पञ्चविंशतिसङ्ख्यामत्र न परिगृण्हाति। तद्विलक्षणत्वेन प्राणादीनां वाक्यशेषे दर्शनात्, माध्यन्दिनानामन्नस्य प्राणादिष्वाम्नानेऽपि काण्वानां प्राणादिष्वन्नस्यानाम्नायात् कथं प्राणादयः पञ्चजना इत्यत आह—

## १२०. ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानामसत्यन्ने ज्योतिषा पञ्चत्वं पूर्यते। **"तदेव ज्योतिषां ज्योतिः"** इति पूर्ववाक्ये ज्योतिषः प्रकृतत्वात् कथं पुनः द्वयोरपि समानत्वेन इदं ज्योतिः पठ्यमानं सदृशमन्त्रगतपञ्चसङ्ख्यापूर्वकत्वेन केषाञ्चिदवगम्येत न केषांचिदिति। इच्छाभेदादित्याह— माध्यन्दिनानां तुल्यमन्त्रपठितप्राणादिषञ्चजनपरिग्रहात् न मन्त्रान्तरपठिते ज्योतिष्यपेक्षा भवति। काण्वानां तदभावादिच्छा भवति। इच्छाभेदाच्च तुल्येऽपि मन्त्रे ज्योतिषः स्वीकारास्वीकारौ। एवं न तावच्छ्रुतिप्रसिद्धिः। तस्मात् प्रधानस्याशब्दत्वं सिद्धम्—

---

न तृतीयः– "एषोऽणुरात्मा चेतसा वेदितव्यः" "एषोऽणुजीवो हृदये सन्निविष्टः" "वालाग्रशतभागस्य शतधा कल्पितस्य च। जीवो भागः" "आकाशवत्सर्वगतो निरंशः" "महान्तं विभुमात्मानं मत्वा धीरो न शोचति"

"अन्तःपूर्णो वहिःपूर्णः पूर्णकुम्भ इवाम्भसि।
अन्तःशून्यो बहिश्शून्यः शून्यकुम्भ इवाम्बरे॥"

"तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतं" इत्यादौ जीवब्रह्मणोश्चिदेकत्वव्यपदेशेऽपि अणुत्वविभुत्वात्मकपरस्परविरुद्धपरिमाणवत्त्वदर्शनाद्भेदो युक्तः। यथा कुण्डलीभूतसर्पस्य दीर्घीभूतसर्पस्य च सर्पत्वेनैकत्वेऽपि ह्रस्वत्वदीर्घत्वात्मकपरस्परविरुद्धपरिमाणवत्वम्, यथा सूर्यप्रभाया प्रभाश्रयसूर्यमण्डलस्य च तेजस्त्वात् तेजस्त्वेनैकत्वेऽपि व्यापकत्वपरिच्छिन्नत्वात्मकपरस्परविरुद्धधर्मवत्वं, एवं सङ्कुचितविस्तृतपटादिदृष्टान्तानुरोधेनापि भेदाभेदस्य सिद्धत्वात्।

न चतुर्थः– "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति श्रुतिसूत्रेष्वन्योन्यविलक्षणब्रह्मप्रपञ्चयोः कार्यकारणयोः मृत्तिकादिदृष्टान्तेन भेदाभेदव्यपदेशात् तथा अथर्वशिरसि "नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यारभ्य "ज्योतिरित्यहमेकस्सर्वे चाहमेव मां यो वेद स सर्वान्वेद" इति प्रथमखण्डे "यो वै रुद्रः स भगवान्, यश्च ब्रह्मा यश्च विष्णुः" इत्युपक्रम्य ब्रह्मविष्णुकालरुद्रादिकार्यजातस्य प्रपञ्चस्य कारणशिवादभिन्नत्वं द्वितीयखण्डे निर्णीतम्। "स ब्रह्मा स शिवः स हरिस्सेन्द्रः" "स एव विष्णुः स प्राणस्सकालोऽग्निः" "स एव सर्वं यद्भूतं यच्च भव्यम्" "ऋतं सत्यं" इति कैवल्यतैत्तिरीयादौ च कार्यप्रपञ्चस्य कारणपरशिवाभिन्नत्वव्यपदेशात्।

न पञ्चमः– "ब्रह्म वेद ब्रह्मैव भवति" इत्यादौ ब्रह्मणः पृथग्भूतस्य जीवस्य तदुपासनद्वारा तदात्मकत्वदर्शनाद्भेदाभेदयोः प्रामाण्यमविरुद्धम्।

न षष्ठः– "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरम्", "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" "विद्याविद्ये ईशते यस्तु सोऽन्यः" इत्यादिषु द्वैताद्वैतात्मकप्रपञ्चपरमात्मनोर्नियाम्यनियामकत्वस्याविरोधतया दर्शनात्।

न सप्तमः– "ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः" "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्" इत्यादिषु ध्यानधारणादिद्वैतकर्मानुष्ठानद्वारा परमाद्वैतपरमशिवत्वप्राप्तिफलदर्शनात्।

ननु द्वैतकर्मणामद्वैतब्रह्मप्राप्तिहेतुत्वे किमनेन निगमान्तशास्त्रविचारप्रयासेनेति चेन्न; फलाभिलापारहितकर्मणां दुरितक्षयद्वारा स्थूलारुन्धतीन्यायेन ब्रह्मप्राप्तिहेतुत्वात्। तथा च स्मृतिः–

"यस्यैतेऽष्टाचत्वारिंशत्संस्कारा" इत्यारभ्य "स ब्रह्मणस्सायुज्यं सालोक्यं गच्छति" इत्यन्तेन गर्भाधानादिकर्मणां पापक्षयद्वारा ब्रह्मप्रापकत्वोपदेशात्। अत आराधनरूपकर्मणां आराध्यरूपपरमेश्वरस्य च प्राप्यप्रापकत्वे अविरोधः। न च "सर्व एते पुण्यलोका भवन्ति।" इति श्रुत्युक्ताश्रमफलविरोधः। सकामानुष्ठितकर्मणां फलत्वात्। अन्यत्वेऽपि निष्कामानुष्ठितकर्मणामाणवादिमलत्रयनिर्मुक्तपरमपुरुषार्थोपपत्तेः। नो चेत्कर्मानुष्ठानाभावे चित्तशुद्ध्यभावः। तदभावे ज्ञानानुत्पत्तिः। तदभावेऽनिर्मोक्षप्रसङ्गः। तस्मात्पूर्वोक्तमेव विद्वद्रमणीयम्।

नत्वष्टमः– साङ्गवेदवेदान्तविमुखकुतर्ककर्कशवादवारणाय सर्वज्ञशिखामणिना भगवता व्यासेन चतुर्थाध्यायचतुर्थपादे "अभावं बादरिः" "भावं जैमिनिः" इति सूत्रद्वयेन द्वैताद्वैतात्मकमतद्वयं श्रुत्येकदेशप्रामाण्यात्परमतत्त्वेन प्रदर्श्य "द्वादशाहवदुभयविधं बादरायणोऽतः" इत्यनेन सर्वशास्त्रार्थसारभूतस्वाभिप्रेतस्य भेदाभेदमतत्वेन व्यपदेशात्।

न च नवमः– द्वैतमते नदीसमुद्रवत्पुनरावृत्तिरहितब्रह्मैकत्वप्राप्त्यसंभवात्। अद्वैतमते सगुणब्रह्मत्वमीश्वरत्वं च रज्जुसर्पवत्कल्पितमिति सिद्धान्तेन भक्तिशास्त्राणां विधिनिषेधव्यवस्थापकवेदशास्त्राणां पुराणागमादीनां च दत्तजलाञ्जलित्वप्रसङ्गात्पूर्वोक्तमतद्वयं न विधेयम्। "अनीशया शोचति मुह्यमानः" "ब्रह्मवित् ब्रह्मैव भवति" इत्यादौ

मायाबद्धत्वेन जीवस्य दुःखभोक्तृत्वं परमशिवज्ञानेन तस्य तद्वात्मकत्वं च निर्णीयते। तथा **कैवल्ये**– **"उमासहायं"** इत्यारभ्य **"तमसः परस्तात्"** इत्यन्तेन सगुणेश्वर-भक्तिध्यानोपासनद्वारा निर्गुणसाक्षिब्रह्मप्राप्त्युपदेशात्सर्वमतापेक्षया अस्मिन् मते भक्तिक्रिया-ज्ञानात्मककाण्डत्रयसमग्रसद्भावेन सरित्सागरवत्सायुज्यनिर्देशादुभयश्रुत्यनुगमाच्च भेदाभेदयोरवि-रोधः। न चाद्वैतमतेऽपि भक्तिक्रियाज्ञानादयो दृश्यन्त इति वाच्यम्। असति कल्पिते अविद्येश्वरे कृत्रिमसालग्राम इव भक्तिश्रद्धाविश्वासाः कस्य वा भवेयुः? रज्ज्वारोपितसर्प-वत्कल्पितेश्वरः सर्वकर्माराधितत्वेन कथं वा सर्वाभीष्टफलप्रदाता भवेत्?

**नापि दशमः**– यथा व्रीहिप्रोक्षणं दर्शपूर्णमासोत्पत्त्यपूर्वकारणत्वेन स्वर्गे समुच्चीयते, तथा ध्यानधारणादिसर्वकर्माणि मुक्तिप्रयोजकत्वेन सविशेषाद्वैतब्रह्मणि समुच्चीयन्ते। तस्मा-दाघारदर्शपूर्णमासवदङ्गाङ्गित्वेन पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गत्वेन, गोदोहनादिवदधिकारान्तर-प्रयुक्त्युपजीवित्वेन षड्यागवत्फलैक्येन वा सर्वथानिर्बाधकत्वेन भेदाभेदसमन्वयः सिद्धः। **"द्वासुपर्णा"** इति मन्त्रे विद्याऽविद्यावच्छिन्नशिवजीवयोः साहचर्यश्रवणात् शुद्धाऽद्वैतमत-स्थानामविरोधितया अद्वैतब्रह्मणि द्वैतप्रपञ्चस्वीकाराद्भेदाभेदयोर्न चैकत्र विरोधः। न चोभयपरत्वे विरोधः। समिधो यजतीति वाक्यानां पञ्चप्रयाजतदनुष्ठानयोः विधायकत्वात्, करणतया स्वतन्त्रविध्यन्तररहितस्य सौत्रामणिबृहस्पतिसवादेरग्निचयनवाजपेयाद्यङ्गत्वेन तदुभय-बलादुभयसिद्धिवत्, **"आत्मा वारे द्रष्टव्यः"** इत्यादौ वेदान्तानां ब्रह्मप्रमापकत्वब्रह्म-ज्ञानविधायकत्वयोरुभयोरपि सम्भवाच्च। **"अथातो ब्रह्मजिज्ञासा"** इत्यादिप्रत्यधिकरणं पूर्वपक्षसिद्धान्तवद्भेदाऽभेदोभयद्योतनात्।

**किञ्च**– द्वादशाहयज्ञदृष्टान्तेन तदुभयं विधेयमिति स्वमतं प्रदर्श्य **"सन्ध्यवदुप-पत्तेः"** इत्यत्र सन्धिकालदृष्टान्तेन तदुभयसिद्धान्तस्थापनाद्भेदाभेदप्रधान**काशकृत्स्न**मतमेव मुख्यसिद्धान्त इति घण्टाघोषः।

**"य आत्मनि तिष्ठन्"** इत्यादौ विज्ञानात्मनि परमात्मावस्थानव्यपदेशाज्जीव-ब्रह्मणोर्भेदस्सिद्ध इति मध्यवाक्यप्रमाणमादाय **आश्मरथ्यः** तत्त्वमस्याद्यभेदश्रुतिविरोधं सादृश्येन वारयति। **औडुलोमिस्तु** **"नेहनानास्तिकिञ्चन"** इत्यादि वाक्यप्रमाण-मादाय रज्जुसर्पवदद्वैतब्रह्मण्यविरोधतया द्वैतप्रपञ्चभानमुपदिशति। **काशकृत्स्नस्तु** सर्ववेदान्त-पूर्वापरमध्यपरामर्शविचारबुध्या षड्विधतात्पर्यलिङ्गैः भेदाभेदमेव मनुते। एतदेव मुख्य-वेदान्तिमतमिति वेदितव्यम्।

## प्रकृत्यधिकरणम् ॥ ७ ॥

### जगद्ब्रह्मणोः भेदाभेदत्वप्रतिपादनम्

एवं जीवब्रह्मणोरविरुद्धतया भेदाभेदं प्रतिपाद्य जगद्ब्रह्मणोर्भेदाभेदमाह—

## १३०. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" "द्यावापृथिवी जनयन्देव एकः" "ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" "स ईक्षत बहु स्यां" इत्यादि-वाक्यान्वस्य विषयः। "जन्माद्यस्य यतः" इति सूत्रे जगत्कारणत्वं ब्रह्मणो लक्षण-मित्युक्तं तत्र विचार्यते।

यद्यपि जन्मादिसूत्रानन्तरमेतस्य प्रतिपादनं युक्तम्; तथापि षड्विधतात्पर्यलिङ्ग-बोधकैर्वेदान्तैर्निमित्तत्वमात्रसाधकानुमितेर्विरोधोऽस्तेः सुवचत्वात् समन्वयावसाने लिखितमिद-मधिकरणमिति बोध्यम्। न च जन्माधिकरणस्य वैय्यर्थ्यम्। अत्र ब्रह्मणः कुला-लादिवन्निमित्तत्वमेवोपदिश्यते। "स ईक्षाञ्चक्रे" इत्यादावीक्षणपूर्वकजगत्कर्तृत्वदर्शनात्, मृत्पिण्डकुलालादेरन्योन्यवैलक्षण्यद्योतनात्, परमेश्वरस्योपादानकारणत्वे मृदादिवद्विकारित्व-प्रसङ्गाच्च न चैकस्योभयकारणत्वं सम्भवति। घटपटादिनिर्माणे कुलालकुविन्दादीनां तत्परिणामित्वादर्शनात्, लोके कार्यानात्मकहेतुमूला च क्रियाफलसिद्धिः प्रतिभाति। जगत्कारणस्य मृदादिवत्परिसंक्रमणे ईश्वरत्वभङ्गः, निष्प्रयोजनत्वं च। अतः परमेश्वरस्य निमित्तकारणत्वं विज्ञायते।

उत— "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" इत्यादौ निर्गुणस्य परब्रह्मणः कार्यकारणत्वनिषेधात् रज्जुसर्पवत्स्वस्वरूपापरित्यागपूर्वकपरस्वरूपभावात्मकविवर्त-कारणत्वं वा भाव्यते, नोचेत्कारणस्य परशिवब्रह्मणः कार्यात्मकजगन्निष्ठसावयवत्वमपरिशुद्धत्व-मचेतनत्वं च सम्भवेत्। तस्मादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः गौणत्वम्। जगत्कारण-त्वविधायकश्रुतीनां निमित्तमात्रत्वं विवर्तकारणत्वं वाभ्युपगन्तव्यमिति प्राप्तेऽभिधीयते—

अत्र परशिवस्य जगदुभयकारणत्वमेवाभिहितम्। **"यथोर्णनाभिः"** इत्यादिश्रुतिशतेष्वभिन्ननिमित्तोपादानकारणत्वस्य दृष्टान्तमुखेन दर्शनात्। उत– केवलनिमित्तत्वाङ्गीकारे कारणव्यवस्थापनं जगदधिष्ठानत्वं च नोपदिश्येत। प्रकृतिश्च ब्रह्म, चकारान्निमित्तत्वमपि सूचितम्। कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात्, अभिन्ननिमित्तोपादानकारणत्वेनैव प्रतिज्ञादृष्टान्तश्रुतिसमन्वयात्। प्रतिज्ञादृष्टान्तयोरनुपरोधोऽविरोधः सामञ्जस्यं, तस्मादित्यर्थः। **"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं"** इति प्रतिज्ञा। अत्र चैकविज्ञानेन सर्वविज्ञानमुपदिश्यते। तच्चोपादानत्व एव सम्भवति। उपादानोपादेययोरव्यतिरेकात् उपादानात्मकज्ञानेन सर्वज्ञानसम्भवात्; निमित्तोपादानयोर्भेदे सति रथगोपुरप्रासादादिवदेकविज्ञानेन सर्वविज्ञानविरोधात्। दृष्टान्तस्तु– **"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"** इत्युपादानविषय एव दृश्यते; यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्; एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यादिति, तथैवान्यत्रापि **"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति"** इति प्रतिज्ञा। **"यथा पृथिव्यामोषधयस्सम्भवन्ति"** इति दृष्टान्तः। **"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्"** इति प्रतिज्ञाय, **"स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा"** इति दृष्टान्तः।

## शक्तिविशेषविशिष्टशिवाद्वैतपदनिर्देशः

किञ्च– **"यतो वा इमानि भूतानि जायन्ते"** इत्यादिश्रुत्यनुगतजन्माधिकरणे **शक्तिविशेषविशिष्टशिवाद्वैतं** सूत्रकारेण सूचितम्, निर्विशेषस्य ब्रह्मणः कार्यकारणत्वासम्भवात्। विवर्तोपादानकारणत्वं तद्विधायकप्रात्यक्षिकश्रुत्यदर्शनात्, प्रतिज्ञादृष्टान्तश्रुतिविरोधाच्च मुमुक्षुभिर्न परिग्राह्यम्। **"यतो वा इमानि"** इत्यत्र परमेश्वरशक्तेरेव जगदुपादानकारणत्वं, परमेश्वरस्य निमित्तत्वं च सूचितम्; तथापि मृत्पिण्डकुलालयोरिव न पृथक्त्वम्। **"पराऽस्य शक्तिर्विविधैव श्रूयते"** इति श्रुतौ परमेश्वरनिष्ठमायाशक्तेर्वह्नेर्दाहशक्तिवत्स्वाभाविकत्वनिर्देशात्। तस्मात्सर्वदा न निर्विशेषं ब्रह्मेति निश्चितम्।

## ब्रह्मणः– निर्विशेषत्व-सविशेषत्वनिरूपणम्

निर्विशेषत्व-केवलनिमित्तत्वे निराकरोति–

### १३१. अभिध्योपदेशाच्च ॥ २४ ॥

परशिवे ब्रह्मणि कर्तृत्वस्योपादानत्वस्य च निर्देशात्, "सोऽकामयत", इति कामनया ब्रह्मणि कर्तृत्वेन निमित्तत्वम्, "बहुस्यां" इत्यनेनोपादानत्वं च गम्यते। तस्मात् ब्रह्मणः निर्विशेषत्वं निमित्तमात्रत्वं च न सम्भवति।

## अथ परमशिवस्य उभयकारणत्वप्रतिपादनम्

### १३२. साक्षाच्चोभयाम्नायात् ॥ २५ ॥

ननु "विश्वाधिको रुद्रो महर्षिः" "हिरण्यगर्भं पश्यत जायमानं" इति श्रुतौ परमेश्वरः स्वेच्छया जगत्सृष्टिकर्तारं हिरण्यगर्भं सृष्ट्वा कृपया पश्यतीति श्रवणात्कथं तस्य विश्वोपादानत्वमुपपद्यते? "मायान्तु प्रकृतिं विन्द्यात्" इत्यादौ प्रधानस्योपादानत्वमाम्नायते "तस्माद्विराडजायत। विराजो अधिपूरुषः॥" इत्यादौ प्रकृतित्वं दृश्यते। प्रकृतिवाचकत्वेन विश्वोपादानत्वं प्रधानस्यैवेत्याशङ्क्य निराकरोति–

साक्षात्प्रात्यक्षिकवेदान्तेषु शिवस्य ब्रह्मणः जगदुभयकाणत्वमाम्नायते। "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति" इति प्रभवप्रलयहेतुत्वेन निमित्तोपादानकारणत्वं तस्य प्रसिद्धम्। श्रुत्यन्तरेऽपि "ईशानः सर्वविद्यानां" इत्यादौ निमित्तत्वम्। "सर्वो वै रुद्रः" इत्यादिना प्रकृतिरवात्प्रपञ्चस्वरूपत्वेन उपादानत्वं च स्मर्यते। तथा शतरुद्रीये "नमो हिरण्यबाहवे" इत्यारभ्य "कुलुञ्चानां पतये" इत्यन्तेन जगदीश्वरत्वम्। ततः "नमः पर्ण्याय च पर्णशद्याय च" इत्यन्तेन विश्वात्मकत्वं च व्यपदिश्यते। श्रुत्यन्तरे च– "ब्रह्मवनं ब्रह्म स वृक्ष आसीत् ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इत्युभयप्रतीतिः। अथर्वशिरसि "अहमेकः प्रथममासं" इत्यारभ्य प्रथमद्वितीयरुद्रयोस्सर्वजगदात्मकत्वस्य विश्वाधिपतित्वस्य च प्रत्यक्षेणोभयान्मानात् जगदुभयकारणत्वं परमेश्वरस्य सिद्धम्।

पुनर्हेत्वन्तरमाह–

## १३३. आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च निमित्तोपादानत्वे ब्रह्मणः। आत्मनः सम्बन्धिनी कृतिरात्मकृतिः, कर्तृत्वसाधारण्येनात्मकृतेर्दर्शनात् **"तदात्मानं स्वयमकुरुत"** इत्यात्मशब्दवाच्यस्य परमेश्वरस्य स्वयमिति कर्तृत्वं, आत्मानमिति कर्मत्वं चेति कर्मत्वेनोपादानसिद्धिः।

ननु पूर्वसिद्धस्य शिवस्यात्मनः कथं कृतिकर्मत्वमित्याशङ्क्याह—**परिणामात्** निरतिशयानन्दस्वभावस्य निर्लेपस्यानन्तकल्याणगुणाकरस्य निमित्तकारणभूतस्य महेश्वरस्य प्रकृतित्वेन विश्वात्मकत्वं न विरुध्यते, चेतनाचेतनात्मकप्रपञ्चाकारेण परिणामात्।

ननु दधिक्षीरवत्स्वस्वरूपपरित्यागपूर्वकरूपान्तरप्राप्तिरेव परिणामः। नित्यशुद्धस्य महेश्वरस्य परिणामित्वेन स्वरूपनाशित्वं विकारगुणप्रसङ्गश्च स्यादिति चेन्न-इमयोर्निमित्तभूतस्योपादानत्वेऽपि न विकारादिस्पर्शः, परमेश्वरमायाशक्तेः जगद्रूपेण परिणामित्, तदैव परमेश्वरस्य निमित्तकारणत्वस्य च प्रतिपादनात्, **"मायां तु प्रकृतिं विद्यात्"** इत्यादौ स्वाभिन्नमायायाः नियम्यत्वस्य, परमेश्वरस्य नियामकत्वस्य च श्रवणात् ईश्वरोभयकारणत्वं नान्यस्येति सिद्धम्।

पुनर्हेत्वन्तरमाह—

## १३४. योनिश्च हि गीयते ॥ २७ ॥

इतोऽपि परमेश्वर एव प्रकृतिः। हि यस्माद्योनिरिति पठ्यते **"यद्भूतयोनिं परिपश्यन्ति धीराः" "कर्तारमीशं पुरुषं ब्रह्मयोनिं", "ध्यात्वा मुनिर्गच्छति भूतयोनिम्"** इत्यादौ प्रकृतिपर्यायियोनिशब्देन परमेश्वरोऽभिधीयते। तस्मादुपादानत्वं निमित्तत्वं च परमेश्वरस्यैव सिद्धम्। योनिशब्दस्य प्रकृतिपर्यायत्वं लोके दृश्यते। **"पृथिवी योनिरोषधिवनस्पतीनां"** इति। स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानत्वम्, अन्यत्र योनिशब्देन स्थित्यधिकरणमपि दृश्यते। **"योनिष्ट इन्द्र निषदे अकारि"** इति। वाक्यशेषादत्र प्रकृतिपर्यायत्वम् ज्ञायते, तथापि **"यथोर्णनाभिः सृजते गृह्णते च"** इत्यादावुपादानकारणत्वं शिवस्यैव दृश्यते। तस्मादविरोधः।

सर्वव्याख्यानाधिकरणम् ॥ ८ ॥

अथ भेदाभेदप्रधानविशेषाद्वैतमतस्य परमशिवे समन्वयः

## १३५. एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

छान्दोग्ये षष्ठे श्वेतकेतुं प्रत्युद्दालकवाक्यमस्य विषयः। "**न्यग्रोधफलं आहरेति, इदं भगव इति, भिन्धीति, भिन्नं भगव इति, किमत्र पश्यसीति, अण्व इवेमाधाना भगव इति, आसामङ्गैकां भिन्धीति, भिन्ना भगव इति, किमत्र पश्यसीति, न किञ्चन भगव**" इति। "**एतस्यैव सोम्यैषोऽणिम्नो महान्न्यग्रोधस्तिष्ठति**" इति कर्मब्रह्मबोधकवेदवेदान्तानां षड्विधतात्पर्यलिङ्गैः षट्स्थलपरशिवप्रतिपादकत्वमुत शारीरप्रतिपादकत्वं वा परमाणुवादपरत्वं वेति **संन्दिह्यते**। "**विश्वाधिको रुद्रः**" इत्यादौ परमेश्वरस्यैव विश्वाधिकत्वोपदेशात्तस्य विश्वानुगतवेदान्तप्रमाणविषयत्वं न सम्भवति। पूर्वोक्त कर्मप्रकरणपठितशतरुद्रीयादीनां जीवविषयत्वमेव युक्तम्; परमेश्वरपरत्वे प्रकरणप्रयोजनविरोधात्। स्मृत्यागमादीनां तु नानादेवताविषयत्वाच्च।

उत- "**ईक्षतेर्नाशब्दम्**" इत्यादिना प्रधानवादस्य निराकृतत्वेऽपि पुनःछान्दोग्ये सूक्ष्मतत्त्वे स्थूलजगदन्तर्भावप्रतिपादकवचनदर्शनादणुस्वभावासत्कार्यवादो युक्तः। "**न्यग्रोधफलमत आहर**" इत्यारभ्य "**न्यग्रोधस्तिष्ठति**" इत्यन्तेन विश्वप्रागवस्थादृष्टान्तः श्रूयते। तत्र दृष्टान्ते "**न किञ्चन**" इत्यणुशब्दश्रवणाच्छून्यस्वभावाणुवादो दार्ष्टान्तिकत्वेन प्रतिभाति। तस्मात्सर्वथा वेदान्तानां ब्रह्मपरत्वं न सम्भवतीति प्राप्ते—

**ब्रूमः**— नानादेवतापरत्वेऽपि वेदान्तानां मुख्यवृत्त्या लक्षणाया अतद्व्यावृत्त्या च परशिवब्रह्मप्रमापकत्वं भवति। "**तं त्वौपनिषदं पुरुषं पृच्छामि**", "**सर्वे वेदा यत्पदमामनन्ति**", "**नावेदविन्मनुते तं बृहन्तं**" इत्यादिश्रुतिशतेषु **गतिसामान्यन्यायेन** सर्ववेदान्तानां ब्रह्मप्रतिपादकत्वव्यवस्थापनात्। कर्मप्रकरणपठितत्वेऽपि पुरुषसूक्तशतरुद्रीयादीनां नान्यपरत्वम्। लिङ्गेन प्रकरणबाधो न बार्यत इति न्यायेन लिङ्गेन प्रकरणबाधो

युक्त एव । "**पशूनां पतये वृक्षाणां पतये, जगतां पतये**" "**तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय**" इत्यादिब्रह्मलिङ्गभूयस्त्वात् नान्यविषयत्वमत्र।

किञ्च– वेदवेदान्तस्मृतिपुराणेतिहासादिषु यत्र यत्र जगत्कारणत्वादिधर्माः प्रतिपाद्यन्ते तत्र तत्र षट्स्थलपरशिवब्रह्मपरत्वमेवेति राद्धान्तः ।

किञ्च– श्रुतिस्मृत्यागमपुराणादीनामपि नानादेवतापरत्वेऽपि षड्विधतात्पर्यलिङ्गानुसारेण परमशिवे समन्वयात्सर्वं समञ्जसमेव ।

एतेनेत्यात्मविज्ञानेन स्वस्वरूपाभिव्यक्त्या सर्वविज्ञानेन सर्वं विदितं स्यादिति सर्वविज्ञानप्रतिज्ञाविरोधेनैव परमाण्वादिपक्षाः निरस्ततया व्याख्याताः । परमाण्वादेः कारणत्वे चात्मविज्ञानेऽपि न सर्वं विदितं स्यादनुपादानत्वात् । तस्मात् "**न किञ्चन**" इत्यनेन नामरूपानभिव्यक्तिप्रतिपादकेन न विरोधः । सूक्ष्मत्वाच्चाणुत्वं ब्रह्मण्युपचरितम् । तस्माद्वेदान्तेषु ब्रह्मैव जगत्कारणं प्रतीयते । व्याख्याता व्याख्याता इति पदद्वयेन अध्याय परिसमाप्तिः सूचिता । एतेन सविशेषस्य ब्रह्मणः प्रपञ्चाभिन्ननिमित्तोपादानकारणत्वव्यवस्थापनेन **न्यायवैशेषिकपाञ्चरात्रादिश्रुत्येकदेशप्रामाण्यवादभेदारसर्वे** एकतरमिथ्यात्ववादसर्वमिथ्यात्ववादप्रधानाभेदवादाश्च व्याख्याता व्याख्याता निराकृता इत्यर्थः । प्रतिज्ञादृष्टान्तलक्षणदृष्टान्त-**भेदाभेदप्रधानविशेषाद्वैतमतस्य महादेवे परमकारुणिके परमशिवे समन्वयः** । तस्मात्तदेव वैदिकं नान्यदिति सिद्धम् ।

**इत्यष्टमं सर्वव्याख्यानाधिकरणम्**

**इति श्रीमन्निराभारवीरशैवयतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्य-कृतद्वैताद्वैताभिधान-विशेषाद्वैतसिद्धान्तस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके**

## श्रीकरभाष्ये

### समन्वयाभिधानस्य प्रथमाध्यायस्य चतुर्थः पादः

## प्रथमाध्यायस्समाप्तः

---

अथ श्रीपतिपण्डितभगवत्पादाचार्यविरचिते

ब्रह्ममीमांसासूत्र-

# श्रीकरभाष्ये

## द्वितीयाध्यायस्य

### प्रथमः पादः

## स्मृत्यनवकाशाधिकरणम् ॥ १ ॥

### सांख्यस्मृतिनिराकरणम्

**प्रथमाध्याये** स्वाभाविकसर्वशक्तत्व-सर्वज्ञत्व-सर्वकारणत्व-सर्वनियामकत्व-सर्वानन्दप्रदायकत्व-सर्वविलक्षणत्व-सर्वान्तर्यामित्व-सर्वात्मकत्वादिकं शिवस्य परब्रह्मणः सर्ववेदान्ताविरोधित्वेन प्रसाध्य वेदान्तविरुद्धस्मृतितर्कादिनिराकरणपूर्वकं जगज्जन्मादिकारणत्वं तस्यैव दर्शयितुं **द्वितीयाध्यायं** [1]**आरभते ।** अशब्दतया जगज्जन्मादिहेतुत्वमीक्षत्यधिकरणे प्रधानस्य निराकृतमपि तज्जगत्कारणत्वे स्मृतिप्रमाणमस्तीत्याशंक्याह—

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥ १ ॥**

प्रधानस्य जगत्कारणत्वानङ्गीकारेण, **स्मृत्यनवकाशदोषप्रसङ्गः**— सांख्यादिस्मृतीनामप्रामाण्यदोषप्रसङ्ग इति चेन्न । शिवस्य ब्रह्मणः जगत्कारणत्वानङ्गीकारे अन्यस्मृतीनां मन्वादीनां अप्रामाण्यदोषप्रसङ्गात् । न च विनिगमकाभावः । वेदमूलकमन्वादिस्मृतीनां प्रबलत्वात् प्रामाण्यम् । वेदविरुद्धसाङ्ख्यादीनां दुर्बलत्वात् अप्रामाण्यमित्यर्थः ।

एतदध्यायस्य **प्रथमपादे** स्मृतितर्कादिविरोधो निराक्रियते । **द्वितीये** तन्मतानां दुष्टत्वं प्रतिपाद्यते । **तृतीये** पृथिव्यादिकारणत्वे श्रुतिविरोधः, **चतुर्थे** जीवलिङ्गशरीरबोधकश्रुतिविरोधश्च निराक्रियते । **"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत"** इति वाक्ये कपिलस्य ज्ञानातिशयित्वेन सर्वोत्कृष्टत्वदर्शनात् । **"यद्वै किञ्च मनुरवदत् तद्भेषजम्"** इति श्रुतावौषधवन्मनुवाक्यस्य *मुख्यविधेयत्वनिर्देशाच्च तयोः परस्परविरोधद्योतनात् । साङ्ख्यादीनां वा मन्वादीनां वा प्राधान्यम् ? उपनिषद्वाक्यानां साङ्ख्यादिस्मृत्यनुसरणं मन्वादिस्मृत्यनुसरणं वा इति **सन्दिह्यते ।**

---

[1] आरभामहे (ग १). * (सं. वि.) मुख्यं विधेयं यस्य तत्-मुख्यविधेयम्; तस्य भावः मुख्यविधेयत्वम् ।

जगत्कारणत्वपरवेदान्तवाक्यानि प्रधानस्यैवोपपन्नानि—

"वेदार्थो यः स्वयं ज्ञातः तत्राज्ञानं भवेदपि ।
स्मृत्यागमपुराणैश्च वेदार्थं ग्राहयेद्बुधः ॥

इति नियमात् । श्रुतिस्मृतिपुराणेष्वभ्युदयफलजनकदर्शपूर्णमास-सोम-पौण्डरीकादिकर्म यथा दर्शितं तथा परमाप्तकपिलमहर्षिकृतनिश्रेयसफलसाधनभूतसांख्यस्मृत्यनपेक्षतयाया वेदान्तार्थ-निश्चयायोगात्, श्रुतावप्रतिहतज्ञाननिष्ठत्वस्य कपिले निर्देशाच्च महर्षिप्रणीतप्रधानकारणत्व-परसाङ्ख्यस्मृतीनामेव प्राधान्यमिति प्राप्ते—

ब्रूमः— "ऋषिं प्रसूतं कपिलं" इति श्रुतौ कपिलस्य ज्ञानाधिकत्वेन परमाप्त-त्वव्यपदेशात् तत्स्मृत्यनुरोधेन वेदान्तार्थबोधो न्याय्य इति यत्तदयुक्तम् । "तद्विष्णो-रेकमुत्तमम्" इत्यादिषु विष्णोरपि सर्वातिशायित्वसङ्कीर्तनात्तत्प्रणीतवृद्धपाञ्चरात्रागमानुसारेण वेदान्तार्थनिश्चयस्य प्रसंगात् ।

किञ्च— श्रुतिस्मृतिपुराणेष्वप्रतिहतज्ञाननिष्ठत्वेन बृहस्पतेस्सर्वाधिकत्वकथनात्तत्प्रणीत-लोकायतस्मृत्यनुसारेण श्रुत्यर्थनिश्चयप्रसक्तिः स्यात् । किञ्च— नान्यत्स्मृत्यनवकाशदोष-प्रसङ्गात् ।

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥

योऽसावतीन्द्रियग्राह्यस्सूक्ष्मोऽव्यक्तस्सनातनः ।
सर्वभूतमयोऽचिन्त्यस्स एव स्वयमुद्बभौ ॥

सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥"

इत्यन्तेन [1]तमोरूपमायाशक्त्या कालरुद्रस्य ब्रह्मादिसर्वकारणत्वमुपन्यस्तम् ।

"यदा तमस्तन्न दिवा न रात्रिर्न सन्नचासच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥"

"मायान्तु प्रकृतिं विन्द्यात् मायिनन्तु महेश्वरम् ।
तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत् ॥"

"यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै, तँहि देवमात्मबुद्धिप्रकाशं, मुमुक्षुर्वै शरणमहं प्रपद्ये ।" "हिरण्यगर्भं पश्यति जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु"। "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः" इत्यादिप्रत्यक्षश्रुतिसिद्धपरशिवकारणत्वदर्शनान्नानुमेयवेदमूलकसाङ्ख्यस्मृतेः प्रामाण्यम् ।

किञ्च– "सर्वे वेदा यत्पदमामनन्ति" "ध्यायीतेशानं प्रध्यायितव्यम्" "सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते", "सर्वाणि चेन्द्रियाणि न कारणं कारणानां ध्याता, ध्याता कारणन्तु ध्येयः । "सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये" शिव एको ध्येयश्शिवङ्करः सर्वमन्यत्परित्यज्य" इत्यादि श्रुतिषु ।

"कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते ।
इष्टापूर्तानि कर्माणि येनाचरति मानवः ॥

शिवार्पणधिया कामान् परित्यज्य यथाविधि ।
अनुग्रहात्तेन शम्भोर्जायते शुद्धो नरः ॥

ततो भीताः पलायन्ते विघ्नं हित्वा सुरेश्वराः ।
जायते तेन शुश्रूषाचरिते चन्द्रमौलिनः ॥

---

[1] तमोभूत (ग ^).

शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते ।
बहुनात्र किमुक्तेन यस्य भक्तिश्शिवे दृढा ॥
महापापोपपापौघैरपि ग्रस्तो विमुच्यते ।"

इत्यादिशिवगीतादिबहुस्मृतिष्वपि परमपुरुषस्य शिवस्याराध्यत्वं श्रौतस्मार्तनित्यनैमित्तिकादि-सर्वेषां कर्मणां तदाराधनभूतत्वं च प्रदर्शितम् ।

अपि च "प्रधानक्षेत्रज्ञपतिर्गुणेशः", "क्षरं प्रधानममृताक्षरं हरः", "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिश्रुतिषु "तस्मा-दव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति स्मृतिष्वपि प्रधाननियामकत्वं च तस्यैव स्मर्यते ।

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी ।
स्मृतिस्मृत्योर्विरोधे तु वेदानुसरणं वरम् ॥"

इत्यादिमीमांसान्यायदर्शनात् स्मृत्यनुसारिमन्वादिस्मृतीनामेव प्राधान्यमिति निर्दिष्टम् ।

गुणत्रयात्मकस्य जडस्य प्रधानस्य चेतनजीवाविर्भावहेतुत्वायोगेऽपि तत्सान्निध्यवशात्का-पिलस्मृतिप्रसिद्धमहदहंकारादीनां कारणत्वमुपपन्नमित्याशङ्क्य निराकरोति—

## इतरेषाञ्चानुपलब्धेः ॥ २ ॥

**इतरेषामचेतन**महदहंकारादीनां **चानुपलब्धेः** "आत्मन आकाशस्सम्भूतः", "एतस्माज्जायते प्राणः", "अक्षरात्सम्भवतीह विश्वम्" इत्यादिश्रुतिस्मृत्यागमेष्वपि महदहङ्कारकारणत्वस्य परमशिव एव दर्शनाद्घटादिवदचेतनस्य प्रधानस्य महदादिकारणत्वं सर्वथा न सम्भवति । "यद्वै किञ्च मनुरवदत्तद्भेषजम्" इति श्रुतिप्रसिद्धानां मन्वादीनां जगद्भेषजभूतस्ववाक्यानामेव वेदान्तोपयोगित्वं युक्तम् ।

---

## योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

### योगस्मृतिनिराकरणम्

स्वतः प्रधानस्य जगदुपादानत्वाऽसम्भवेऽपि ईश्वरनियोगेन सम्भवतीत्याशङ्क्य तद्विधायकयोगमतं निराकरोति—

## एतेन योगःप्रत्युक्तः ॥ ३ ॥

साङ्ख्ययोगयोः स्वातन्त्र्यास्वातन्त्र्यभेदेऽपि [1]**हिरण्यगर्भस्मृतावपि** प्रधानोपादानप्राधान्यनिर्देशात् । एतेन सांख्यस्मृतिनिराकरणेनैव **योगस्मृतिरपि** प्रत्युक्तः तिरस्कृतः इति सूत्रावयवार्थः ।

**"सर्वो वै रुद्रः", "सर्वं खल्विदं ब्रह्म", "ऐतदात्म्यमिदं सर्वं", "एकस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति"** इत्यादिषु जगदात्मकत्वं ब्रह्मणो निर्दिष्टम् । तदुपादानत्वायोगे तदात्मकत्वायोगात्, **"हिरण्यगर्भः समवर्तताग्रे"** इत्यादिषु हिरण्यगर्भस्य सर्वातिशयत्वस्मरणात्, **"त्रिरुन्नतं प्राप्य समं शरीरं"** इत्यादिना श्वेताश्वतरादिश्रुतिशतेषु अभ्युदयनिःश्रेयसफलसाधनत्वेन योगविद्यायाः प्रपञ्चितत्वात्, योगस्मृत्यनुसारेण प्रधानस्य प्रपञ्चोपादानत्वं उत ब्रह्मण इति **संशयः** ।

मृत्कुलालवत्प्रधानस्योपादानत्वमीश्वरस्य निमित्तत्वं युक्तम् । परमेश्वरस्य जगदुपादानत्वे मृदादिवद्विकारित्वविनाशित्वादिनानादोषभूयस्त्वं दुर्निवारम् ।

[2]**ननु**— अभ्युदयनिःश्रेयसफलहेतुत्वेन स्मृतिपुराणेषु योगभूयस्त्वदर्शनात् । श्रुत्यर्थप्रकाशककामिकादिशैवागमेष्वपि प्राकृतवैकृतात्मक मन्त्र-लय-हठ-राज-विभागेन तस्य प्रपञ्चितत्वात् । **"आकुञ्चनेन कुण्डलिन्या कवाटमुद्घाट्य मोक्षद्वारं विच्छेदयेत्"**,—

---

[1] गर्भस्मृतावपि योगमतस्य हिरण्यगर्भप्रवर्तितत्वात् तथाभिधानम् । एतेन (ग). [2] किञ्च (ग ∧).

"मरुतो मध्यसञ्चारे मनः स्थैर्यं प्रजायते।
सर्वचिन्तां परित्यज्य सावधानेन चेतसा॥
निर्विकल्पप्रसन्नात्मा प्राणायामं समभ्यसेत्॥"

"[1]मरुन्निरोधाभ्यसनं मनीषिणा" इत्याद्युपनिषत्सु, "योगश्चित्तवृत्तिनिरोधः" इत्यादिस्मृतिषु।

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः॥

इति भगवद्गीतायां च चित्तवृत्तिनिरोधकत्व-पापमोचकत्व-ब्रह्मप्राप्त्यादि-साधनत्वेन योगस्यैव निर्देशात्तद्विधायकहिरण्यगर्भस्मृत्यानुगुण्येन वेदान्तार्थनिश्चयो युक्त इति चेत्—

उच्यते— योगस्य श्रुत्यागमादिषु धर्मब्रह्मसाधनत्वेन मनोनिरोधकत्वेन शिष्टैराचरितत्वेन च प्राधान्येऽपि तन्निष्ठप्रधानोपादानकत्वं नोपपन्नम्। "सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञादृष्टान्तस्थापकसर्ववेदान्तविरोधात्।

स्मृत्यागमपुराणेषु योऽर्थः स्मृत्या विरुध्यते।
तन्त्रार्थस्स तु विज्ञेयः गर्हितं वेदवादिभिः।

इति मीमांसान्यायदर्शनात्।

"मायान्तु प्रकृतिं विन्द्यात् मायिनन्तु महेश्वरं।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥"

"परास्य शक्तिर्विविधैव श्रूयते" "यथोर्णनाभिः" इत्यादिषु अभिन्ननिमित्तोपादानकारणत्वस्य परमेश्वरे निर्देशात्। परमेश्वरस्योपादानत्वे मृदादिवद्विकारित्वादि-

---

[1] मरुदभ्यसनं नित्यं मनोयुक्तं समभ्यसेत्। (ग. A).
इतरत्र न कर्तव्या मनोयुक्तः मनीषिणा॥

दोषसक्तिरिति यदुक्तं तदसत्। जीवशक्तिपरमेश्वरशक्तेरुपादानविकारित्वाङ्गीकारात् शक्तस्य परमेश्वरस्यपरिणामविकारित्वादिकं नोपपन्नम्। कुलालवन्निमित्तत्वाङ्गीकारे "यत्प्रयन्त्य-भिसंविशन्ति" इत्यादिश्रुतिविरोधो दुर्निवारः। तस्मात् सांख्यस्मृतिवत् योगो निराकृतः। तदा सांख्ययोगशास्त्रयोः का गतिरिति चेद्वेदान्ताविरोधेन सांख्ययोगशास्त्रसमन्वयो युक्तः।

---

## न विलक्षणत्वाधिकरणम् ॥ ३ ॥

### परशिवब्रह्मणः सर्वविलक्षणत्वादिप्रतिपादनम्

त्रिगुणातीतस्येश्वरस्य कथं त्रिगुणात्मकजगत्कारणत्वमुपपन्नमित्याशङ्क्याह–

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

निर्गुणस्य ब्रह्मणः गुणत्रयात्मकस्य प्रधानस्य च विलक्षणत्वादस्य प्रधानस्यैव त्रिगुणात्मकचेतनाचेतनजगदुपादानत्वं सम्भवतीति चेन्न, **तथात्वं च शब्दात्** तथात्वमुपादानत्वं च शब्देन निमित्तकारणत्वं च, **"यथोर्णनाभिस्सृजते गृह्णते च। यथा पृथिव्यामोषधयः सम्भवन्ति। तथाक्षरात्सम्भवतीह विश्वम्"** इत्यादि वेदशब्दात्परमेश्वरस्यैव जगदुभयकारणत्वं संभवति।

**"अजामेकां"** इति श्रुतौ परमेश्वरस्य जगत्कारणत्वानवगमात्सन्देहः। अस्यां श्रुतौ असंदिग्धतया गुणत्रयविशिष्टप्रधानस्य चेतनाचेतनकारणत्वं सूच्यते। लोके चेतनाचेतनोत्पत्तेरचेतनादचेतनोत्पत्तेश्च स्वधर्मत्वेन दर्शनात्। **"विश्वाधिको रुद्रो महर्षिः"**, **"प्रधानक्षेत्रज्ञपतिः"** इत्यादिषु जगन्नियामकत्वेऽपि तद्विलक्षणत्वं च प्रचक्ष्यते। मनुनापि–

> **आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।**
> **अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥**
> **ततस्स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्।**

इति चतुर्मुखादीनामपि तमोभूतप्रधानहेतुत्वं प्रदर्शितम्। तस्मात्परमेश्वरनिमित्तकारणत्वमात्रप्रतिपादकयोगस्मृत्यनुसारेणैव वेदान्तार्थनिश्चयो युक्त इति चेत्–

**ब्रूमः–** **"यथोर्णनभिःसृजते गृह्णते च"** इति श्रुत्या चेतनोर्णनाभौ अचेतनतन्तुपटोत्पत्तिः, चेतनपुरुषादचेतनलोमनखोत्पत्तिश्चोपदर्शिता। **'अजामेकां'** इति

श्रुतिनिष्ठप्रधानकारणत्वस्य ब्रह्मण्युपपत्तेः । "मायान्तु प्रकृतिं" "प्रधानक्षेत्रपतिः" इत्यादिषु प्रधाननियामकत्वं शिवस्यैवोपदिष्टम् । तस्मादचेतनत्वमलिनत्वानीश्वरत्व[1]दुःखात्मकत्व[2]चिदचिदात्मकत्ववत्प्रपञ्चकारणत्वमविरोधम् । एतेन मनुस्मृत्युक्तप्रधानप्रकृतिकचतुर्मुखादिकारणत्वं [3]तज्जडप्रधानाधिष्ठानेश्वरस्यैव निर्दिष्टं इति ज्ञेयम् ।

ननु "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यदि श्रुतिपुराणेषु चतुर्मुखकारणत्वस्य नारायणे उपदेशात् । किञ्च–

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥"

इति तदुत्तरत्र नारायण[4]शब्दो विवक्षितः । तदुपसंहारे "रुक्माभं स्वप्नधीगम्यं विन्द्यात्तं पुरुषं परम्" इति हिरण्मयत्वादिधर्माश्च तस्यैवोक्ताः ।

ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणस्सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

विष्णोस्सकाशादुत्पन्नं जगदेतच्चराचरम् ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥

अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।
नारायणो जगन्मूर्तिरनन्यात्मा सनातनः ॥

इति विष्णुपुरादिषु जगज्जन्मादिकारणत्वं च स्पष्टमुपदिष्टम् । अत एव मनुस्मृत्यभिहितहिरण्यगर्भादिजनकत्वं नारायणस्याभिप्रेतमिति चेत्– तदसत् ।

---

[1] मलिनत्व अविनाशित्वा (ग. A)　[2] चिदचिदात्मकत्वविशिष्टप्रपञ्च (ग.)
[3] जडाधिष्ठानेश्वरस्य निर्दिष्टं (ग. A)　[4] शब्दार्थो निरूपितः (ग)

"यदा तमस्तन्न दिवा न रात्रिः
न सन्नचासच्छिव एव केवलः ।

तदक्षरस्तत्सवितुर्वरेण्य
प्रज्ञा च तस्मात् प्रसृता पुराणी ॥"

"यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः" "हिरण्यगर्भं पश्यत जायमानँ" "यो ब्रह्माणं विदधाति" पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै। तँ हि देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इत्यादिषु महानारायण-श्वेताश्वतराद्युपनिषत्सु हिरण्यगर्भादिकारणत्वमसन्दिग्धतया शिवस्यैव सूचितत्वात्।

किञ्च– "ध्यायीतेशानं प्रध्यायितव्यम्" "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" इत्यादिना अथर्वशिर-अथर्वणशिखादिषु बहुधा प्रपञ्चितम्। तथा वेद-तुल्य भारते– आनुशासनिकपर्वणि–

सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम्।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥
हृदये कालरुद्राख्यं जगद्विलयकारणम्।

इति। तथा शैवपुराणेषु बहुधा प्रपञ्चितम्। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इत्यादि। माण्डूक्यादिष्वपि मूर्तित्रयातीतत्वं कारणकारणत्वं तस्यैव प्रतिपादितम्। "नारायणाद्ब्रह्मा जायते" इत्यादिषु मूर्तित्रय-कारणत्वस्य नारायणेऽदर्शनात् तदवान्तरसृष्टिविषयं इति वेदितव्यम्।

त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात्।
चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवे ॥

पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः ॥

तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः ।
तपसा तोषयित्वा तं पितरं परमेश्वरम् ॥

ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥

विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः ।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥

इति शैवे वायवीयसंहितायां अवान्तरकल्पभेदसृष्टिः प्रदर्शिता । मनुस्मृत्युपसंहारे–

"मनसीन्दुं दिशश्श्रोत्रे क्रान्ते विष्णुं बले हरम् ।
वाच्यग्निमिन्द्रमुत्सर्गे प्रजने च प्रजापतिम् ॥

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥" इत्युपदिष्टम् ।

"अणोरणीयानहमेव तद्वान् ।
महानहं विश्वमिदं विचित्रम् ।

पुरातनोऽहं पुरुषोऽहमीशो
हिरण्मयोऽहं शिवरूपमस्मि ॥"

"नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमः" "हिरण्याय नमः" हिरण्यलिङ्गाय नमः सुवर्णाय नमः, सुवर्णलिङ्गाय नमः, नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतये उमापतये पशुपतये नमो नमः" "ऋतं सत्यं" "पुरुषो वै रुद्रः", "तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्" इत्यादिश्रुतिशतेषु शिवस्यैव हिरण्मयत्व

पुरुषशब्दवाच्यत्वादि दर्शनात्। श्रुतिविरुद्धविष्णुपुराणवचनानां बौद्धाद्यागमादिविभ्रान्तिमूलकत्वाद्वेदोपबृंहणं न न्याय्यमिति वेदितव्यम्। मनुप्रणीततमश्शब्दस्य—

"अस्ति रुद्रस्य विप्रेन्द्रा अन्तस्सत्वं बहिस्तमः।"

इत्यादिपुराणसिद्धबहिस्तमोगुणविशिष्टकालरुद्रपरत्वमिति व्यवह्रियते।

[1]"ते हेमे प्राणाः शब्दं अहं श्रेयसे विवदमानाः" "मृदब्रवीत्" "आपोऽब्रुवन्" इत्यादिषु अचेतनपृथिव्यादीनां चैतन्ययोगः श्राव्यते। सरित्समुद्रपर्वतवृक्षादीनां अचेतनानामपि पुराणेषु चेतनत्वं पठ्यते। अतो ब्रह्मप्रधानयोर्न वैलक्षण्यमित्याशङ्क्याह—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्दश्शङ्कानिरासार्थः। "पृथिव्यब्रवीत्" इत्यादि श्रुतिसिद्धवचनप्रवर्तकत्वं पृथिव्याद्यभिमानिदेवतानामेवोपदिष्टम्। कुतः? विशेषानुगतिभ्याम्। कौषीतकी ब्राह्मणे "हन्ताहमिमास्तिस्रो देवताः", "सर्वा ह वै देवता अहं श्रेयसे विवदमानाः", "ते देवाप्राणे निःश्रेयसं विदित्वा", "अग्निर्वाग्भूत्वा मुखं प्राविशत्। आदित्यश्चक्षुर्भूत्वाऽक्षिप्राविशत्। "वायुः प्राणो भूत्वा नासिके प्राविशत्।" इत्यादि बहुश्रुतिषु वागाद्यभिमानिदेवतानामेव प्रवचनीयत्वं गम्यते। तस्मादचेतनप्रधानादि वैलक्षण्यम्। किञ्च— "यो रुद्रोऽग्नौ यो अप्सु" इत्यादिषु पृथिव्यादीनां तदधिष्ठानदेवतानामन्तर्यामित्वं रुद्रस्यैवोक्तम्। अतस्सर्वात्मकत्व-सर्वविलक्षणत्व-सर्वनियामकत्व-सर्वकारणत्वादिकं नेतरस्योपपन्नम्।

अस्मिन्नर्थे हेत्वन्तरमाह—

## दृश्यते तु ॥ ६ ॥

तु शब्दोऽवैदिकतर्कनिरासार्थः। "एतस्माज्जायते प्राणो", "यतो वा इमानि भूतानि जायन्ते", "भीषास्माद्वातः पवते", "विज्ञानं चाविज्ञानं च", एवमे-

---

[1] ते हे मे प्राणा अहं श्रेयसे विवदमानाः (ज) पाठान्तरे।

वैता भूतमात्राः प्रज्ञामात्रप्राणेष्वर्पिताः", "समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः", "तरति शोकमात्मवित् "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिषु सर्वकारणत्वादिकं शिवस्यैव दृश्यते। विचित्रनानाशक्तिविशिष्टत्वेन सर्वान्तर्यामितया चेतनपुरुषेष्वचेतनलोमनखदन्ताद्युत्पत्तिः। अचेतन गोमयकाष्ठादिषु चेतनवृश्चिकादिक्रिमिकीटोत्पत्तिः। मधुमाक्षिकेषु क्रिम्याद्युत्पत्तिः। क्रिमीनां कीटकवशात् भ्रमररूपत्वप्राप्तिश्चावगम्यते। तस्मात्तस्य जगदुभयकारणत्वं सिद्धम्[1]।

### जगज्जीवेश्वरमिथ्यावादप्रधानस्मार्तैकदेशाऽद्वैतमतनिरासः

एवं जगज्जीवेश्वरभेदसिद्धान्त-सांख्य-योगात्मकस्मार्तमतद्वयं निरस्य जगज्जीवेश्वरमिथ्यावादप्रधनस्मार्तैकदेशाऽद्वैतमतं निरस्यते।

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

"न तु तद्द्वितीयमस्ति" "ने ह नानास्ति किञ्चन"

"शशशृङ्गेण नागेन्द्रो मृतश्चेदस्त्विदं जगत्।
ज्वालाग्निमण्डले पद्मवृद्धिश्चेदस्त्विदं जगत् ॥

मायाकार्यादिकं नास्ति माया नास्ति भयं न हि।
गगने नीलिमा सत्वे जगत्सत्यं भविष्यति।

इत्यादिश्रुतिस्मृतिषु शशशृङ्गवत्प्रपञ्चस्यासत्यत्वप्रतिपादकवाक्याभासदर्शनात् चेतनाचेतनात्मकं जगदसदिति चेत् मिथ्याभूतमितिचेन्न– कुतः? **प्रतिषेधमात्रत्वात्।** प्रलयेऽपि प्रपञ्चस्य स्थूलावस्थानिषेधमात्रत्वात् प्रळयेऽपि बीजाङ्कुरवत् सूक्ष्मरूपेण परमेश्वरे प्रपञ्चस्य सत्त्वात्तल्लीलया सृष्टिकाले पुनरुत्पद्यते इति सूत्रार्थः[2]।

---

[1] अविरुद्धम् [2] सूत्रावयवार्थः (ग A).

"धाता यथा पूर्वमकल्पयत्", "कर्मचितो लोकः क्षीयते। पुण्यचितो लोकः क्षीयते", "द्वासुपर्णा सयुजा सखायौ", "ज्ञाऽज्ञौ द्वावजावीशानीशौ" इत्यादिश्रुतिषु प्रपञ्चस्य सत्यत्वव्यपदेशात्। "न कदाचिदनीदृशं जगत्"। "नान्यत्काचनमिषत्", "नेह नानास्ति किञ्चन", "सदेव सौम्येदमग्र आसीत्। एकमेवाद्वितीयं ब्रह्म" इत्यादिषु प्रपञ्चस्य मिथ्यात्वश्रवणात् चिदचिदात्मकप्रपञ्चस्य सर्वदा सत्वमसत्वं वेतिसंशयः।

"नेह नानस्ति किञ्चन", "अथात आदेशो नेति नेति", "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा", "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नेतरः",

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।
कार्यकारणतां त्यक्त्वा पूर्णबोधोऽवशिष्यते॥

अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपञ्च्यते।
शिष्याणां बोधनायार्थस्तत्वज्ञैः कल्पितः क्रमात्॥

इति श्रुतिस्मृतिपूर्वाचार्यन्यायदर्शनाज्जगन्मिथ्यात्वं युक्तम्। नोचेत्पूर्वोक्तश्रुतिस्मृतिसमन्वयविरोधो दुर्निवारः इति प्राप्ते—

तत्रोत्तरं वदाम— "अध्यारोपापवादाभ्यां निष्प्रपचं प्रपंचते" इति पूर्वाचार्यकल्पितन्यायेन जगदसत्यत्वं न श्रावणीयम्। तदध्यारोपापवादविधायकप्रात्यक्षिकश्रुतिस्मृतिवाक्यादर्शनात्। "यतो वा इमानि भूतानि" इत्यादि-सृष्टि-स्तिति-प्रळय-विधायकसर्ववेदान्तस्मृतिपुराणागमादीनां दत्ताञ्जलित्वप्रसंगाच्च।

"असद्वा इदमग्र आसीत्" इति प्रळयावस्थायामपि चेतनाचेतनात्मक प्रपञ्चस्य प्रज्ञानघनपरमशिवे ग्रीष्मकालधरित्रीविलीन तृणादिबीजवत्सूक्ष्मरूपेणावस्थानं निर्दिश्यते। "ततो वै सदजायत" इत्युत्तरवाक्ये पुनस्सृष्ट्युपदेशात्। तथा च स्मृतिः—

सत्यज्ञानघनानन्दे शिवे परमकारणे ।
चराचरजगज्जालं ग्रीष्मे क्ष्मालीनबीजवत् ॥

सूक्ष्मरूपेण संस्थित्य पुनः [1]स्वस्वचिकीर्षया ।
स्थूलत्वेन बहिर्याति मुक्तात्मा न पुनर्भवः ॥"

"सदेव सौम्य", "नेह नानास्ति" इत्यादिजगदभावबोधकवाक्यानां प्रळयावस्थाविषयकत्वमिति वेदितव्यम् । "स ऐक्षत लोकान्नुसृज" इत्युत्तरवाक्ये सृष्ट्युपदेशात् । "द्वासुपर्णा" इत्यादिभेदबोधकवाक्यानां संसारदशाविषयत्वं, "सर्वमात्मैवाभूत्—केन कं पश्येत्" इत्यादीनां परमशिवानन्दानुभवपूर्णसमाधिदशाविशेषविशिष्टविद्वदनुभवपरत्वमिति राद्धान्तः । तस्मात् श्रुतिसूत्रादिविरुद्धतदध्यारोपविधायकाद्वैतमतमुपेक्षणीयम् । अतो ब्रह्म-प्रपंचयोः कारण-कार्यत्वसद्भाव एव युक्तः ।

रज्जुसर्पवज्जीवेश्वरादिजगतः अविद्यावशात् संसारदशायां भासमानत्वेऽपि दशमविवेकसन्धानपूर्वकस्वस्वरूपसाक्षात्कारज्ञानानुभवात्प्रळयावस्थावदसत्त्वमेवेत्याशङ्कायामाह—

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अपीतौ प्रळयकाले तद्वत्प्रसङ्गात् मण्डूकादिशरीराणां पृथिव्यामेकभूतानां यथा वर्षाकाले पुनरुत्पत्तिस्तद्वद्ब्रह्मण्येकभूतस्य संस्कारस्वरूपेण विद्यमानस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तेः "स ईक्षत इत्यादिषु प्रसङ्गात् प्रतिपादनात् असमञ्जसम्, जगज्जीवेश्वरमिथ्यावाद अयुक्तः ।

ननु "एकमेवाद्वितीयं ब्रह्म", "आत्मा वा इदमग्र आसीत्" इत्यत्र सृष्टेः प्राग्ब्रह्मण एवावगमात्, "यत्र नान्यत्पश्यति" "सर्वमात्मैवाभूत्" इत्यत्रापि सर्वत्र भेदनिरासोपदेशाच्च तदेत युक्तम् । "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः" "तथाक्षराद्विविधास्सौम्यभावाः", "एष सम्प्रसादोऽस्माच्छ-

---

[1] तस्य (ग A).

**रीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते" "ब्रह्मविदाप्नोति परम्", "तत्त्वमसि", "अहं ब्रह्मास्मि", "ब्रह्म वेद ब्रह्मैव भवति", "यथा नद्यः स्यन्दमानाः"** इत्यादिश्रुतिषु प्राप्यप्रापकत्वेन मुक्तजीवस्य स्वाभाविकजीवभावनिवृत्ति-पूर्वकब्रह्मतापत्तिलक्षणात्मकमुक्तेराकाशवदवर्जनीयत्वेन निर्देशात् द्वैताद्वैतमतमेव सर्ववेदान्त-श्रुतिस्मृतिसूत्रपुराणादिमुख्यसिद्धान्ताभिप्रेतमिति चेत्तदसङ्गतम्, स्वाभाविकभेदभावमापन्नस्य जीवस्य ब्रह्मभावासम्भवात्। शैत्यस्वभावस्य जलस्य ज्वलनादुष्णत्वसम्भवेऽपि यामात्पूर्व-मेव पुनश्शैत्यस्य भावदर्शनाच्च, जीवस्य भेदस्वरूपावच्छिन्नत्वेन सत्त्वात् जीवात्मनो ब्रह्मत्व-सम्भवेऽपि तन्न स्थायि आगन्तुकत्वात्। भेदो न नष्टः। तस्माद्भेद औपाधिकः अभेदः स्वाभाविक इति वेदितव्यम्।

**बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम्।**
**जीवत्वमीश्वरत्वं च तथा ब्रह्मणि कल्पितम्॥**

**कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।**
**कार्यकारणतां त्यक्त्वा पूर्णबोधो विशिष्यते॥"**

इति शास्त्रे जीवेश्वरयोः मायाकल्पितत्वमलीकत्वं चोपदिष्टम्। तस्मात् **"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते"** इत्यादि द्वैताद्वैतविधायक प्राप्यप्रापकश्रुतीनां स्वाभाविकभेदनिवृत्त्ययोगेन सोऽयं देवदत्तवाक्यसिद्ध-जहदजहल्लक्षणोपदिष्टमायाविद्यानिवृत्तिपूर्वकजीवेश्वरचैतन्यैकत्ववादकमतमेव मुख्यमिति चेत्—

**आश्रावय—** स्वाभाविकभेदनिवृत्तिर्भ्रमरकीट-लोहरस-जलमौक्तिकादि-नानाविधदृष्टान्तानु-सारेण जिज्ञासाधिकरणे स्पष्टमुपदिष्टा। **"ज्ञाज्ञौद्वावजा" "अजो ह्येको जुषमा-णोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः" "यतो वा इमानि भूतानि जायन्ते" "न जायते म्रियते वा विपश्चित्"** इत्यादिषु जीवस्य प्राचीनकर्मफलभोगानुसारेण सर्गोपदेशात्। अन्यथा विषमसृष्ट्यनुपपत्तेः[1]। ब्रह्मप्राप्त्युपायभूतकर्म-भक्ति-वैराग्य-शम-दम-भूतदया-विचारश्रवण-मनन-निदिध्यासावधान-ज्ञानसहकृततदुपासनायामनधिकृतत्वप्रसङ्गः।

---

1 सुषुप्त्या पत्ते,

**किञ्च**— तदुपासनविधायकानां वेदवेदान्तागमादीनां निरवकाशत्वप्रसक्तिर्दुर्निवारा बिम्बप्रतिबिम्बभावतया जीवादीनां मायाकल्पितत्वव्यपदेशे घटादिवन्नष्टत्वप्रसङ्गात् मुक्तेरपुरुषार्थत्वापत्तेः '**ज्ञाज्ञौ**' इत्यादि जीवेश्वरयोरजन्यत्व विषायकश्रुतिविरोधाच्च। प्रागपि शारीरस्य ब्रह्मत्वे "**परंज्योतिरुपसम्पद्य**" इति वाक्यविरोधः प्रसज्यते। निरञ्जनस्य नित्यमुक्तस्य निरवयवस्य निरतिशयस्य स्वप्रकाशस्य ब्रह्मणः मायोपाधिकल्पनस्वीकारे तदद्वैतहानिः। प्रागपि ब्रह्मभेदस्य रज्जुसर्पवदपारमार्थिकत्वे जीवब्रह्मप्राप्तिविधायकतत्त्वमस्यादिमहावाक्यप्रामाण्यं कथमुपपद्यते[1] गुरुशिष्ययोर्मौनप्रसक्तिश्च। ब्रह्मणः ब्रह्मत्वप्राप्तिः पिष्टपेषणवदविशेषात्तच्छ्रवणमननादीनां वैफल्यम्। "**छिन्ने पुच्छे लूने कर्णे श्वा श्वा एव भवति नाश्वो न गर्दभः**" इति न्यायात्, ज्ञानानन्दस्वभावस्य नित्यमुक्तस्य स्वप्रकाशस्य परमात्मनः स्वाविद्यातिरोहितत्वे स्वप्रकाशत्व-सर्वज्ञत्व-नित्यमुक्तत्वादिविधायकश्रुतिविरोधः; सावयवत्व-सप्राणत्वादियुक्तिश्च प्रसज्येत। तस्मात्पेर्वोक्तसर्वश्रुतिविहितद्वैताद्वैतमतमेव राद्धान्तः। यथा जाग्रत्स्वप्नयोर्द्वैतसिद्धिः सुप्तावद्वैतञ्च सर्वानुभवसिद्धं दुर्निवारं तथा शिवत्वप्राप्तिपर्यन्तं भेदः, ततो नदीसमुद्रवज्जीवब्रह्मणोरभेदे न विरोधः।

"**अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चते**" एतन्न्यायातिक्रमणे ज्ञानोत्पत्त्यभावतः मुक्त्यभावप्रसङ्गात्, "**अहमज्ञः**" इत्यात्मन्यविद्यानुभवदर्शनाच्च जीवेश्वरयोर्मायाकल्पितत्वेन बिम्बप्रतिबिम्बवदलीकत्वम्। मायायाः "**या मा सा माया**" इति व्युत्पत्त्या विचार्यमाणे सदसद्भाव-चिदचिद्भावादिविरुद्धतया मिथ्यात्वाङ्गीकारात्तत्कृतजगज्जन्मादिकं स्वप्नेन्द्रजालवद्भ्रान्तिमात्रमेवेत्याशङ्कायामाह—

## न च दृष्टान्ताभावात् ॥ ९ ॥

मायायाः मिथ्यात्वस्य जीवेश्वरयोरलीकत्वस्य च प्रात्यक्षिकवेदान्तेषु **मनु-गौतम-पराशरादि स्मृतिषु** च दृष्टान्ताभामात्; पूर्वपक्षस्याप्ययोग्यत्वेन यत्रकुत्रापि दृष्टान्तवार्तया[2] अदर्शनात् जगन्मिथ्यात्ववादो न सर्वथा युक्तः। "**यतो वा इमानि**", "**यथोऽर्णनाभिस्सृजते**" इत्यादि श्रुतिषु असन्दिग्धतया ब्रह्मणः जगज्जन्मादिकारणत्वनिर्देशेन वैदि-

---

[1] कथं सिध्यति (ग A). [2] वाक्यानामप्यदर्शनात् (ग A).

कानां तदेव ग्राह्यम्। "स्वप्नेन्द्रजालसदृशमचिन्त्यरचनात्मकम्" इत्याद्यद्वैतशास्त्रानुसारेण जगत्स्वप्नेन्द्रजालदृष्टान्ताङ्गीकारेऽपि मायाया अजडात्मकत्वात् ब्रह्मणः कर्तृत्वं सूचितम्। तेन निर्गुणत्व-निर्विशेषत्वादिविधायकस्वशास्त्रविरोधः। "या मा सा माया" इति व्युत्पत्त्या मायायाः मिथ्यात्वं न युक्तम्। "मं शिवं अयति प्राप्नोति" इति व्युत्पत्त्या- मायायाः परमशिवनिष्ठस्वाभाविकशक्तित्वेन, "पराऽस्य शक्तिर्विविधैव श्रूयते", "मायान्तु प्रकृतिं" इत्यादि श्रुतिदर्शनात्।

किञ्च- "यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विशिष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यते॥

इति मनुस्मृतौ,

मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी॥

इति **शिवागमे** च शिवशक्तिसामरस्यं निश्चितम्। स्वप्नप्रपञ्चद्रव्यं पुनर्जाग्रत्स्वप्नयोरप्यदृष्टम्। अत्र तु पूर्वदिनदृष्टपदार्थस्योत्तरदिनेऽपि सत्वात्, "ज्योतिष्टोमेन स्वर्गकामो यजेत", "कर्म चितो लोकः क्षीयते" इति श्रुतिनिर्दिष्टेहपरलोककर्मफलभोक्तृत्वस्य च श्रुतिस्मृतिपुराणादिषु दृष्टत्वात्। स्वप्नकृतज्योतिष्टोमब्रह्महत्यादि धर्माधर्मकर्मणोः स्वर्गनरकप्राप्तिविधायकशास्त्रादर्शनाच्च तच्छास्त्रमविचारितरमणीयम्।

लोके, चेतननर-मृग-सूर्य-चन्द्रादिप्रतिबिम्बस्य चेतनत्वायोगात् मृत्पाषाणगोमयादिकल्पितगजाश्वादीनां स्वसामर्थ्येन गमनादिकार्याभावात् श्रुत्युक्त्यनुभवैः जीवेश्वरयोः स्वभावचित्वावगमाच्च जीवेश्वरयोश्चिदाभासत्वविधायकतन्मोहशास्त्रं पारमार्थिकैरनङ्गीकरणीयम्। तथा **शैवपुराणे** दूर्वाससं प्रति व्यासवचनम्-

"अनाद्यविद्यया बद्धं ब्रह्मतत्कालकारणम्।
स्वाविद्यया संसरन्ति मुक्तिः कल्पितवाक्यतः॥

एवं प्रतारणं शास्त्रं सर्वमाहात्मनाशकम्।
उपेक्ष्यं शिवभक्तैश्च श्रुतिस्मृतिविरुद्धतः॥

कलापगादयं मुख्यः फलं वैमुख्यतस्तमः ।
ज्ञाननाशत्वसिध्यर्थं तदेवहि निरूपितम् ॥

ऐन्द्रजालिकपक्षेऽपि तत्कर्तुत्वं तदीरितम् ।
नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित् ॥

तस्मात् परमेश्वरकारणत्वात् जगतस्सत्यत्वमप्रतिहतम् ।

"यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि ।
तावत्सत्यं जगद्भासि शुक्तिकारजतं यथा ॥
यावन्न जायते ब्रह्म सर्वाधिष्ठानमद्वयम् ।"

इति श्रुतिपूर्वाचार्यवाक्येष्वपि स्वरूपज्ञानानुभूत्यन्तं शुक्तिरजतवदज्ञानेन जगद्भानाङ्गीकारात् तावत्पर्यन्तमेव वेदशास्त्रकर्मसत्यत्वप्रवृत्तिस्सम्भवतीत्याशङ्क्य निराकरोति–

## स्वपक्षदोषाच्च ॥ १० ॥

शुक्तिरजतवत् ज्ञानदशायामेव जगद्भानाङ्गीकारे तदद्वैतशास्त्राचार्यपरम्पराऽसम्भवदोषप्रवृत्तेः, तदूर्ध्वं क्षुत्पिपासादिद्वैतकर्मावलम्बने[1]दोषापत्तेश्च सम्भवात् । जगन्मिथ्यात्ववादो न युक्तः । शुक्तिरजतवद्ब्रह्मण्यध्यासाङ्गीकारो ब्रह्मणः ? प्रधानस्य ? चिदाभासस्य वा ? नाद्यः, निर्विकारत्वात् । न द्वितीयः, जडत्वात् । न तृतीयः, कल्पितत्वात् । उत सर्वव्यापकस्य निरवयवस्य ब्रह्मणः प्रतिबिम्बत्वमुपपन्नं, व्योमप्रतिफलनवदिति चेत्तदयुक्तम् । साभ्रनक्षत्राद्यवच्छिन्नाकाशस्यैव लोके प्रतिफलनं दृष्टम् । तमः प्रकाशवैलक्षण्येन व्योमादर्शनात् । अमूर्तस्य प्रतिफलने पवनकालादीनामपि किं न स्यात् ? अतः पूर्वोक्तमेव युक्तम् । शुक-वामदेवादीनां शास्त्रे स्वाविद्यानिवृत्तिपूर्वकजीवन्मुक्तत्वव्यपदेशात् , सर्वेषां मुक्तिप्रसङ्गः स्यात् । तथा चेदहमज्ञ इत्यविद्यानुभवो न स्यात् । **किञ्च–** चेतनाचे-

[1] दोषोपपत्तिश्च ( ग A).

तनशरीरोत्पत्तिर्न सम्भवेत्। तस्मान्न जीवैकत्ववादो युक्तः।

### शाक्योलूक्याक्षपादकापिलादितर्काणां तत्त्वार्थनिश्चयाभावप्रदर्शनम्

प्रात्यक्षिकश्रुतिष्वध्यासादर्शनेऽपि वाचारम्भणश्रुतावपवादद्योतनादध्यासो ग्राह्य इति चेदाह—

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥११॥

**तर्काणां** शाक्योलूक्याक्षपादकपिलादिप्रमुखतर्काणाम् **अप्रतिष्ठानात्**— अन्योन्यव्याघातदोषदुष्टत्वेन तत्त्वार्थनिश्चयाभावादप्यन्यथानुमेयमिति चेत्, "**मृत्तिकेत्येव सत्यम्**" इति वाक्याभासतया जगज्जीवेश्वरमिथ्यात्वं "**पर्वतो वह्निमान् धूमात्**" इत्यादिन्यायेनानुमेयमिति चेत्, **एवमपि** शाक्योलूक्यबौद्धादिवत् **अनिर्मोक्षप्रसङ्ग** "**यथा नद्यः**" इत्यादिबहुश्रुतिसिद्धशिवजीवैक्यात्मकमोक्षाभावप्रसङ्गः। तस्मात् "**यतो वा**" "**एष सम्प्रसादः**", "**न स पुनरावर्तते**" इत्यादि ब्रह्मजगत्कारणत्व-तत्प्रापकत्वादि-प्रात्यक्षिकश्रुतिसिद्धतर्काणामेव मोक्षोपयोगित्वम्। "**वाचारम्भण**" मित्यत्र जगन्मिथ्यात्वावगमात्। "**यत्सत्वे यत्सत्त्वं**" इतिन्यायेन अध्यासो ग्राह्य— इति चेत्तदसत्। "**नावेदविन्मनुते तं बृहन्तम्**" "**नैषा तर्केण मतिरापनेया**" इत्यादि श्रुतिषु—

"**वेदार्थो यः स्वयं ज्ञातः तत्राज्ञानं प्रचक्षते।**
**इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्॥**
**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**

"**यस्तर्केणानुसन्धत्ते**" स धर्मं वेद नेतरः। इत्यादिस्मृतिपुराणादिष्वपि रुचिवैचित्र्यस्वमतिपरिणामकुतर्कनिराकरणस्योपदिष्टत्वात्। पुरुषबुद्धिमूलकतर्कानुसारणे कालान्तरदेशान्तरेषु तदधिककुतर्ककुशलपुरुषेक्षिततर्कदूष्यत्वसंभावनया व्यवस्था दर्शनात्। मिथ्याद्वैतशून्याद्वैत-साङ्ख्य-योग-न्याय-वैशेषिक-बौद्ध-क्षपणकादिकुतर्काणां निर्मोक्षप्रसङ्गो दुर्निवारः। तस्मात् परमात्मविषये भगवता व्यासेन "**शास्त्रयोनित्वात्**" इति सूत्रे वेदात्मकशास्त्रप्रमाणमेवोपदिष्टम्। ब्रह्मोपादानस्य प्रपञ्चस्य मिथ्यात्वाङ्गीकारे "**सर्वं खल्विदं ब्रह्म**", "**सर्वो**

वै रुद्रः" इत्यादि जगद्ब्रह्मात्मकत्वविधायकश्रुतिविरोधप्रसङ्गः। उत्तरत्र भगवताबाद-रायणेन "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रे वाचारम्भणश्रुतीनां ब्रह्मकारण-कस्य प्रपंचस्य ब्रह्मात्मकत्वं जगन्मिथ्यावादनिरासार्थकमिति स्पष्टमुपदिष्टम्। अतो न सन्देहकळङ्कः।

वाचारम्भणवाक्यानां तदनन्यत्वबोधनात्।
न मिथ्यात्वाय कल्प्यन्ते जगतश्शिवरूपतः॥

इति स्कान्दे तथा निर्दिष्टम्। "ब्रह्मविदाप्नोति परं", "ज्ञात्वा शिवं शान्तमत्यन्तमेति", ब्रह्म वेद ब्रह्मैव भवति" इत्यादिषु ज्ञानस्यैव मोक्षहेतुत्वव्यपदे-शात्। "दशमस्त्वमसि" इति दशमीविवेकसन्धानवशात् स्वस्वरूपज्ञानस्यैव मोक्षकारणत्व मिति चेत्तदसङ्गतम्। "क्षरं प्रधानममृताक्षरं हरः", "तस्याभिध्यानाद्योजनात्तत्त्व-भावद्भूमायश्चान्ते विश्वमायानिवृत्तिः॥" "उपासहायं परमेश्वरं प्रभुं", "ध्यात्वा मुनिर्गच्छति भूतयोनिं" "श्रद्धाभक्तिर्ज्ञानयोगादवेहि", "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" इत्यादिश्रुतिशतदर्शनात्। "ब्रह्मविदाप्नोति परं" इत्यादिवाक्यैः उपासनाजन्यज्ञानस्यैव मोक्षहेतुत्वं निश्चीयते। केवलज्ञानस्य वैद्यशास्त्रादिज्ञानवदपुरुषार्थ-कत्वमेव। "यावदुत्पद्यते ज्ञानं तावदनुष्ठेयं कर्म" इति ज्ञानोत्पत्तिपर्यन्तमेव द्वैत-जगद्भासनात्कर्मानुष्ठानमिति यदुक्तं तदविचारितरमणीयम्।

## ज्ञानकर्मणोः समसमुच्चयत्वप्रतिपादनम्

"एवं विद्वानग्निहोत्रं जुहोति" इत्यादिश्रुतिषु।

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहम्॥

---

[1] ध्यासेन (ग A).

आचारहीनः पुरुषो लोके भवति निन्दितः ।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनात् ॥

अपश्यन्नन्धको दग्धः पश्यन् पङ्गुश्च दह्यते ।
अन्धपङ्गुवदन्योन्यं सापेक्षे ज्ञानकर्मणी ॥

पक्षेकेन यथा पक्षी न गच्छति नभस्थलम् ।
तथा ज्ञानैकमार्गेण न मोक्षोऽपि विधीयते ॥ "

इत्यादिश्रुतिस्मृत्यागमेषु ज्ञानसिध्यनन्तरमपि द्वैतकर्मानुष्ठानविधिरुपदिष्टा । तस्माच्छुक्तिरजतन्यायवत् ब्रह्मज्ञानेन जगन्मिथ्यात्वज्ञानमयुक्तम् । "**अद्वैतेऽप्यहमद्वैत**" इति वाक्यप्रवृत्तिर्नोपपद्यते । तेषां स्नानसन्ध्योर्ध्वपुण्ड्रतिर्यक्पुण्ड्रवर्णाश्रमाचारविधायकश्रुतिस्मृतिपुराणप्रसिद्ध द्वैतकर्मणां दत्ताञ्जलिप्रसंगात् । द्वैतरूपप्रपञ्चस्य दृष्टत्वात् नास्तीतिवादे "**मम माता वन्ध्या**" इतिवत् प्रत्यक्षापलापप्रसङ्गः । ब्रह्माद्वैतपक्षे तत्सगुणम् ? निर्गुणम् ? उभयात्मकं वा ? **नाद्यः**, सगुणत्वचतुर्मुखस्वीकारे तल्लाञ्छनकमण्डल्वादिधारणमेव युक्तम् । न चोर्ध्वपुण्ड्र-तिर्यक्पुण्ड्र-शिव-केशवादिपूजावश्यकत्वमुपपद्येत । तथाप्यद्वैतभङ्गप्रसङ्गो दुर्निवारः । **नद्वितीयः**– तदुपासनाऽसम्भवात् । **न तृतीयः**, स्वमतभङ्गप्रसङ्गात् । किञ्चाद्वैते प्रतिपाद्यप्रतिपादकत्वं नोपपद्यते । 'मृतस्याहं मृत' इति वार्तादर्शनात् । 'अद्वैतस्याहमद्वैतं' इति प्रतीतिः कथं निर्णीयते । द्वैतस्यैव व्यवहारोपपत्तिः । व्यावहारिकमात्रत्वाङ्गीकारे व्यावयारिकद्वैतमिति व्यवहर्तव्यम्[1] । अद्वैतस्य व्यवहारासम्भवात्, ब्रह्मद्वैताङ्गीकारे तस्य धर्मत्वात्सगुणब्रह्मवादो दुर्निवारः । अतः पूर्वोक्तमेव समीचीनम् ।

---

[1] वक्तव्यम् (ग A).

## शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

### जैमिनीय-मिथ्याद्वैतादि अवैदिकवादनिरसनम्

"आकाशवत्सर्वगतश्चपूर्णः", "निष्कलं निष्क्रियं शान्तं" इत्यादिषु ब्रह्मणः पूर्णत्वनिर्विशेषत्वावगमात् तदनुसारेण जगत्कारणत्वं प्रधानस्य? उत परमाण्वादीनां युक्तम्—इत्याशङ्कायामाह—

## एतेन शिष्टापरिग्रहा अपि व्याख्याता ॥ १२ ॥

**एतेन**— पूर्वोक्तमिथ्याद्वैत-शून्याद्वैत-कपिल-काणादादि मतनिराकरणेन **शिष्टापरिग्रहा अपि**, शिष्टाश्च अपरिग्रहाश्च शिष्टापरिग्रहाः, शिष्टाः चतुर्थ्यन्तदेवताप्रधानजैमिनीयशास्त्राचारनिपुणाः संयुक्तासंयुक्ताभेदवादिनः। अपरिग्रहाः वेदजगज्जीवेश्वरमिथ्यावादतत्पराः, **मिथ्याद्वैत-शून्याद्वैत-जैन-बौद्ध-लोकायता**दि अवैदिकाश्चापि **व्याख्याताः** वेदान्तस्मृत्यागमपुराणादिभिः वेदवेदान्तनिष्ठागरिष्ठ-**मनु-वामदेवागस्त्य-दूर्वासोपमन्यु-रेवणसिद्ध-मरुलसिद्धा**दिभिश्च निराकृताः। विभुत्वादाकाशवन्निर्विशेषत्वाच्चिन्मयत्वाच्चेत्यादिन्याय-वैशेषिकाद्यनुमानेन परमाणवादीनां जगदुपादानत्वं सूचितम्। "**परीक्ष्य लोकान्**", "**कर्मचितो-लोकः क्षीयते**" इत्यादिषु लोकजीवयोः कर्महेतुत्वावगमात् कर्मणो जगत्कर्तृत्वं दर्शितम्। "**अजामेकां**" "**मायाभासेन जीवेशौ करोति**" इत्यादौ मायायाः जीवेश्वरादिप्रपञ्चकारणत्वं भासते। तस्मात् **सन्देहः**।

"अचक्षुश्श्रोत्रमपाणिपादं" इत्यादिषु ब्रह्मणो व्यापकत्व-निरवयवत्व-ज्ञानात्मकत्वादिनिर्णयेन ब्रह्मकारणत्वस्यानुमानेन बाधितत्वादण्वादीनामेव जगदुपादानत्वं युक्तम्। अथवा "परीक्ष्य लोकानि"त्यत्र लोकानां कर्महेतुत्वावगमात्,

> कर्मणा जायते जन्तुः कर्मणा च प्रवर्धते।
> कर्मणा प्रविलीयन्ते तस्मात्कर्मात्मकं जगत् ॥"
>
> मायया जायते विश्वं मायया परिवर्धते।
> मायया लीयते यस्मात्तस्मान्मायामयं जगत् ॥"

इत्यादिना कर्मात्मकत्वं मायामयत्वं च प्रपञ्चस्य प्रचक्षते। तस्मात्तदपि युक्तम्। **"न तस्य कार्यं करणं च विद्यते"; "न तत्समश्चाभ्यधिकश्च दृश्यते"** इत्यादिषु ब्रह्मणः कार्यकारणत्वादिशून्यतया निर्विशेषत्वावगमात्। सर्वथा शिवस्य परब्रह्मणः न प्रपञ्चोभयकारणत्वमिति प्राप्ते—

**अतिदिशति— "यन्मनसा न मनुते येनाहुर्मनो मतं, तदेव ब्रह्मत्वं विद्धि"** इत्यादि श्रुतिष्वनुमाननिराकरणमुपदिष्टम्। **"यथोऽर्णनाभिस्सृजते गृह्यते च"** इत्यादिभिर्दृष्टान्तानुसारेण श्रुतौ जगदुभयकारणत्वनिर्देशात् जडकर्मप्रधानपरमाण्वादीनां न जगदुभयहेतुत्वमवतिष्ठते। **"प्रधानक्षेत्रज्ञमिति"** इत्यादिषु वेद-जीव-कर्म-प्रधानादीनां परमेश्वराधीनत्वं श्रूयते। लोकशास्त्रयोश्चोरत्वादिदुष्टकर्मविशिष्टानां प्रभुदण्डनविधिरेव दर्शितः न तत्कर्मणाम्।

**अपिच— "यन्निमित्तकृतं धर्ममधर्मं धर्मतां व्रजेत्"** इत्यादिपुराणेषु पितृहननादिपापकर्मकृत्काटकोटादीनां यज्ञादिपुण्यकर्मकृद्दक्षादीनां च विपरीतकर्मफलानुभवो दृष्टः। **"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"** इत्यादि श्रुतयः सर्वा माहात्म्यज्ञापनाय वै। तस्मात् शिवस्य माहात्म्यं ब्रह्मणापि न बुध्यते॥, **"अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपि"** इत्याद्यचिन्त्यमहिमाविशिष्टत्वमुपदिष्टम्। अतः **"न तस्य कार्यं करणं च विद्यते"** इत्यादि श्रुतीनां महादेवस्य परब्रह्मणः शिवस्य महिमाज्ञापनार्थत्वमिति वेदितव्यम्। एतेन शून्यात्मकत्वाशून्यात्मकत्व-ज्ञानात्मकत्वज्ञानात्मकत्व-अर्थात्मकत्व-क्षणिकात्मकत्व-नित्यत्वैकान्तत्व-सत्वासत्वादि विसंवादवादिनो निरस्ताः।

---

## भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

### परब्रह्मणः विश्वाधिकत्वप्रतिपदनम्

"**यः पृथिव्यां तिष्ठन्यस्य पृथिवी शरीरम्**" इत्यारभ्य "**यो विज्ञाने तिष्ठन्**", "**य आत्मनि तिष्ठन् यस्यात्माशरीरम्**" इत्यन्तेन काण्वशाखायामन्तर्यामि-ब्राह्मणे परमात्मनश्शिवस्याष्टमूर्तित्वव्यपदेशाच्छरीर-शरीरिणोरिव जीवशरीरविशिष्टपरमेश्वरस्य जीवनिष्ठसुखदुःखभोक्तृत्वादिकं सम्भवतीत्याशङ्कायामाह—

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

"**यस्यात्मा शरीरमिति**" जीवेश्वरयोः शरीर-शरीरिव्यपदेशात् । भोक्त्रापत्तेः जीवनिष्ठसंसारसुखदुःखापत्तेः । अविभागश्चेत् "**तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन् अन्योऽभिचाकशीति**" इत्यादिश्रुतिसिद्धजीवेश्वरयोः बद्धत्व-नित्यमुक्तत्व-भोक्तृत्वादिविभागो न स्यादिति चेन्न, **स्याल्लोकवत्** । लोके यथाकाशस्यसर्वगतत्वेऽपि सर्वकारणत्वेऽपि स्वसृष्टसर्वजगद्दोषकलङ्कनिर्मुक्ततया व्यवस्थितः तथा परमेश्वरः सर्वकारणत्व-सर्वशरीरत्व-सर्वान्तर्यामित्वेन व्यवस्थितोऽपि सर्वदोषकलङ्कविलक्षणः ।

"**यस्य पृथिवी शरीरं**" इत्यारभ्य "**यस्यात्मा शरीरम्**" इत्यन्तेन चेतना-चेतनशरीरविशिष्टत्वं श्रूयते । "**अचक्षुः श्रोत्रं तदपाणिपादं**", "**अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः**", "**अप्राणो ह्यमनाः शुभ्रः**" इत्यादिश्रुतिषु तस्य अशरीरत्वमुपदिष्टम् । तस्मात्सन्देहः ।

परमेश्वरस्य शरीराद्यभावे सर्वेश्वरत्व-सर्वज्ञत्व-सर्वनियामकत्व-सर्वजनकत्वादिधर्माणा-मसम्भवाज्जीवशरीरविशिष्टत्वं युक्तम् । "**द्वासुपर्णा**" इत्यादिश्रुतिसिद्धजीवेश्वरधर्मविभाग-वत्वमौपचारिकं शरीर-शरीरिवत् जीवनिष्ठसुखदुःखादिकं परमेश्वरस्यैव सिद्धमतो जीवस्या-राधकत्वं-परमेश्वरस्याराध्यत्वं न सम्भवति ।

**विग्रहं पार्वतीशस्य जगदेतच्चराचरम् ।**
**एतदर्थं न जानन्ति पशवः पाशगौरवात् ॥**

इत्यादि **शैवस्कान्दादिपुराणेष्वपि** तस्यैव जगच्छरीरत्वमुपदिष्टम् । तस्मादीश्वरस्य विलक्षणत्वेन निर्देहनिर्विशेषपरमात्मावलम्बनं न युक्तमिति प्राप्ते—

**ब्रूमः**— "**द्वेवाव ब्रह्मणो रूपे मूर्तश्चामूर्तमेव च**" इत्यादिश्रुतिषु पवनादिवन्मूर्तामूर्तत्वमुपदिष्टम् । अमूर्तस्य पवनस्य वृक्षकम्पनोत्पाटनादिसामर्थ्यं दृष्टम् । तथा "**अपाणिपादो जवनो ग्रहीता**" इति श्वेताश्वतरे "**पश्याम्यचक्षुः स शृणोम्यकर्णः न चास्ति वेत्ता मम चित्सदाहम्**", "**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्**", "**न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिररित ।**" इति **कैवल्ये** च शिवस्य शरीरेन्द्रियनिरपेक्षतया सर्वज्ञत्व-सर्वशक्तित्व-सर्वकारणत्व-सर्वनियन्तृत्व-सर्वोपास्यत्व-सर्वानुग्राहकत्वं-सर्वपुरुषार्थहेतुत्वादिकं निर्दिष्टम् । अतो न शङ्काकळङ्कः "**परास्य शक्तिर्विविधैव श्रूयते**" इत्यत्र ब्रह्मणस्स्वाभाविकशक्तिमत्वोपदेशात् न निर्विशेषब्रह्मवादो युक्तः ।

अतः "**अथातो ब्रह्मजिज्ञासा**" इत्यारभ्य "**अनावृत्तिश्शब्दात्**" इत्यन्तं वेदान्तशास्त्रे सविशेषत्वमेव दृश्यते । "**अथातो ब्रह्मजिज्ञासेति** सूत्रे ब्रह्मणः पुरुषविशेषस्य जिज्ञासाविषयत्वव्यपदेशात्, "**जन्माद्यस्य यतः**" इति सूत्रे जगज्जन्म-स्थिति-लय-तिरोधानानुग्रहादीनां ब्रह्मलक्षणत्वेन निर्देशात् । "**शास्त्रयोनित्वा**" दित्यत्र शास्त्रकारणत्वशास्त्रप्रतिपादकत्वोपदेशात् । "**तत्तु समन्वया**"दित्यत्र तस्यैव सर्ववेदान्तसमन्वयत्वेन प्रसाधितत्वाच्च तस्य सविशेषत्वमेव युक्तम् । निर्विशेषे जिज्ञासादिधर्माणामसम्भवात् । "**वाचं धेनुमुपासीत, तस्य यजुरेव शिरः, ऋग्दक्षिणः पक्षः, सामोत्तरः पक्षः ॥ अन्नं ब्रह्म**" इत्यादिवत् तस्य शरीरत्वमौपचारिकम्, तदुपासनामात्रविषयमेव । परमेश्वरस्य शरीरपरिग्रहवादेऽपि न सुखदुःखादिप्राप्तिः ; तच्छरीरस्य कर्मजन्यत्वाभावात् , स्वतन्त्रत्वाच्च । ब्रह्मेश्वरशिवमहादेव शङ्करादिशब्दानां घटकुम्भकलशादिशब्दवत्पर्यायत्वमेवेति वेदितव्यम् । "**ज्ञाज्ञौ द्वावजावीशानीशौ**" इत्यादौ जीवेश्वरयोः अजन्यत्वश्रवणात् , "**मायाभासेन**

**जीवेशौ करोति"** इत्याभासश्रुतेः परमेश्वरस्य शक्त्यात्मकतया मायया सृष्टिकाले परमेश्वरः स्वेच्छया जीवेश्वरभावं प्रकटीकारोतीत्यमिप्रायः। तस्मात्कर्तृत्वं तस्यैवोपदिष्टम्। शक्त्यपृथक्त्वेन शक्तेरसत्वात्। अतः पूर्वोक्तमेव समीचीनम्। **एतद्द्वैताद्वैतमतमेव केचि-द्विशेषाद्वैतमिति सेश्वराद्वैतमिति, शिवाद्वैतमिति, सर्वश्रुतिसारमतमिति** पर्यायत्वेन प्रवदन्ति।

---

आरम्भणाधिकरणम् ॥ ६ ॥

कार्यकारणयोरनन्यत्वप्रतिपादनम्

नित्योनित्यानां चेतनश्चेतनानां "सन्मूलास्सोम्येमाः प्रजाः प्रजायन्ते" "ज्ञाऽज्ञौ द्वाजावीशानीशौ" इत्यादिश्रुतिषु जीवेश्वरयोरजन्यत्वदर्शनात् तन्मिथ्यात्वाभावेऽपि जगत्सत्यत्वश्रुत्यदर्शनात् वाचारम्भणश्रुतौ जगन्मिथ्यात्वावगमात् तदेव युक्तमित्याशङ्क्याह–

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

तदनन्यत्वं– "**शक्तिशक्तिमतोरभेदः**" इतिन्याय सिद्धशिवशक्तिसामरस्येन तयोः स्वशक्त्यंशप्रपञ्चस्य, शक्तस्य परमशिवस्य च अनन्यत्वं मृद्घटादिवत्कार्यकारणयोरभिन्नत्वमङ्गीकर्तव्यम्। कुतः? **आरम्भणशब्दादिभ्यः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', "सर्वो वै रुद्रः", "ऋतं सत्यं परं ब्रह्म", "यथोर्णनाभिः", "तज्जलानीति शान्त",** इत्यादिश्रुतिभ्यः ब्रह्मशक्त्युपादानस्य प्रपञ्चस्य ब्रह्मात्मकत्वमुपदिष्टम्।

एतेन रज्जुसर्पवत्प्रपञ्चस्य ब्रह्मण्यध्यस्तत्वान्मिथ्यात्वमित्यद्वैतमतं, घटपटवत् प्रपञ्च ब्रह्मणोर्भेदाङ्गीकारि **द्वैतमतं,** शरीरिशरीरयोरिव संयुक्तभेदाङ्गीकारि **विशिष्टमतं** च निरस्तमिति सूत्रसूचितार्थो वेदितव्यः। **"खं वायुर्जोतिरापः पृथिवी विश्वस्य धारिणी यत्परं ब्रह्म"** इत्यादिषु ब्रह्मणः मूर्ताऽमूर्तजगद्विलक्षणत्वम्। **"ऐतदात्म्यमिदं सर्वं", ब्रह्मैवेदं सर्वम्"**। इत्यादिना तस्य चिदाचिदात्मकजगदात्मकत्वं च श्रुतम्। अतः कारण-कार्यात्मकशिव-प्रपञ्चयोरशिव-शक्तिसामरस्येन तदनन्यत्वं युक्तं न वेति **शङ्कोत्पद्यते।**

**"ज्ञाऽज्ञौ द्वावजावीशानीशौ"** इत्यत्र जीवेश्वरयोः परस्परवैलक्षण्यम्। **"आत्मन आकाशः सम्भूतः"** इत्यादिना जगद्ब्रह्मणोः कार्यकारणात्मकत्वेन परस्परभिन्नत्वं च दर्शितम्। **सत्यज्ञानानन्दात्मकब्रह्मणः** अनृतजडदुःखात्मकप्रपञ्चस्य च कथं अनन्यत्वम्?

माक्षिकादिषु क्रिम्याद्युत्पत्तिदर्शनान्न कार्यकारणयोरनन्यत्वम्। तन्तुपटादिष्वर्थसिद्धिक्रिया-सिद्धिवैलक्ष्येन भेदोपपत्तिः। कार्यकारणयोरनन्यत्वे जगद्ब्रह्मणोरभेदेनैहिकामुष्मिकसुखदुःख-फलभोगव्यवहारो न स्यादतो जगद्ब्रह्मणोरनन्यत्वं नोपपद्यत इति चेत्।

प्रचक्ष्महे। **"स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येन श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्"** इति कृत्स्नस्य प्रपञ्चस्य परमशिवैककारणत्वं (उक्तम्,) कारणात्कार्यस्यानन्यत्वं च मनसि निधाय कारणात्मक परशिवविज्ञानेन कार्यभूतसर्वप्रपञ्च-विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य शिवैककारणतामजानता **शिष्येण "कथं नु भगवन् स आदेशः"?** इत्यात्मज्ञानेनान्यज्ञाततासम्भवश्चोदितः। प्रपञ्चस्य परमात्मैककारण-तामुद्दिश्यन् **गुरुः** लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावत् **"यथा सौम्येकेन-मृत्पिण्डेन सर्वं मृण्मयं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"** इत्यु-पदिशति। यथैकमृत्पिण्डारब्धाः घटशरावादयः तदनतिरिक्तद्रव्यतया तद्ज्ञानेन ज्ञायन्ते तथा शिवोपादानकं जगत् शिवज्ञानेन ज्ञायत इति आरम्भणश्रुतेराशयः।

अत्र काणादादिमतेन कारणात्कार्यस्य द्रव्यान्तरत्वमाशङ्क्य लोकव्यवहारेणैव कार्य कारणयोरनन्यत्वं दर्शयति वाचारम्भणमित्यादिना। आरभ्यते आलभ्यते स्पृश्यत इत्या रम्भणं **"कृत्यल्युटो बहुलं"** इति कर्मणि ल्युट्। वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। घटेनोदकमाहरेदित्यादिवाक्पूर्वकोदकहरणादिव्यवहारः। तद्व्यवहारसिद्ध्यर्थं तन्मृद्द्रव्येण पृथुबुध्नोदरादिलक्षणो विकारः संस्थानविशेषः, तत्प्रयुक्तं च घट इत्यादिनामधेयं स्पृश्यते। जलाहरणादिव्यवहारविशेषसिध्यर्थं मृद्द्रव्यमेवावस्थान्तरं संज्ञान्तरं च प्राप्नोति : **"तस्माद्घटाद्यपि मृत्तिकाद्रव्यमेव सत्यं इत्युपदिश्यते।" "मृत्तिकेत्येव सत्य"** मित्यत्र कार्यकारणयोरनन्यत्वम्। रज्जुसर्पवत्कार्यस्य मिथ्यात्वमिति यत्तदसत्। तयो-कार्यकारणयोरनन्यत्वं सिध्यति सत्यमिथ्यापदार्थयोः ऐक्यानुपपत्तेः। तथा सति ब्रह्मणः मिथ्यात्वं जगत्सत्यत्वं वा स्यात्। ये च कार्यमपि पारमर्थिकमभ्युपयन्त एव जीव-ब्रह्मणोरौपाधिकमन्यत्वं स्वाभाविकञ्चानन्यत्वं, अचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकमिति वदन्ति। तेषामुपाधेर्ब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्निरवयवस्य परिपूर्णस्य परमशिवस्यैवोपाधि-सम्बन्धाद्ब्रह्मस्वरूपस्यैव हेयाकारपरिणामत्वं स्यात्। जीवाश्रयाऽविद्यायास्तत्त्वज्ञानेन नाशे सति जीवो नश्येद्वा न वा? यदि नश्येत्स्वरूपोच्छेदलक्षणो मोक्षस्स्यात्। नो चेत्

अविद्यानाशेऽस्य निर्मोक्षप्रसङ्गः; ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात्। अतोऽविद्याभ्रान्ति- र्ब्रह्मणो वा तदन्यस्य वा? नाद्यः, तमःप्रकाशवत्परस्परविरुद्धत्वात्। अज्ञस्य ब्रह्मत्वा- भावाच्च। न द्वितीयः चैतन्यान्तरायोगात्। द्वितीयचैतन्याङ्गीकारे स्वशास्त्रविरोधात्। अतः यथोर्णनाभिजन्तुस्स्वकार्यं तन्तुचक्रं कारणावस्थायां नामरूपविभागानर्हसूक्ष्मरूपेण स्वस्मिन्निधाय कार्यावस्थायां नामरूपविभागार्हस्थूलरूपेण प्रकटीकरोति तथा परमेश्वरश्चि- दचिदात्मकं प्रपञ्चं प्रळयावस्थायां सूक्ष्मरूपेण स्वस्मिन् संस्थाप्य, सृष्टिकाले स्थूलात्मकत्वेन प्रकाशयति। अतः कार्यकारणयोरनन्यत्वं सिद्धम्।

### जगत्सत्वप्रतिपादनम्

घटपटवत्कार्यकारणयोरर्थसिद्धिक्रियासिद्धिभेदादनन्यत्वं नोपपद्यते। अतः प्रपञ्चस्य ब्रह्मण्यध्यस्तत्वमङ्गीकृत्याधिष्ठानाध्यस्तयोरनन्यत्वमङ्गीकर्तव्यमित्याशङ्कायामाह—

## भावे चोपलब्धेः ॥ १५ ॥

भावपदं कारणसत्तावाचकम्। उपलब्धिपदं, कार्यसत्तावाचकम्। च पदं तदुभयसामरस्यसत्ताबोधकमुपदिष्टम्। "सन्मूलास्सौम्येमाः सर्वाः प्रजास्सदाय- तनास्सत्प्रतिष्ठिताः", "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इत्यादौ जगतः ब्रह्माधीनसृष्टिस्थिति-लयाविर्भावानुग्रहात्मकत्वदर्शनात् नाध्यासोपपत्तिः। ऐतदात्म्यमिति ब्रह्मकार्यप्रपञ्चस्य ब्रह्मात्मकत्वस्य, जीवानामपि सत्यब्रह्मप्राप्यत्वस्य च दर्शनात्। किञ्च— लोके घटादिकार्यसद्भावे च कारणभूतमृत्पिण्डोपलब्धेः "अयं घटः मृदेव" इति मृदात्मकत्वेन प्रत्यभिज्ञानाच्च कार्यकारणयोरनन्यत्वं युक्तम्।

जगत्सत्यत्वे हेतून् दर्शयति—

## [1]सत्त्वाच्चापरस्य ॥ १६ ॥

"सदेव सौम्येदमग्र आसीत्", "आत्मा वा इदमग्र आसीत्, ब्रह्म वा इदमग्र आसीत्" इत्यदिषु अपरस्य कार्यस्य चेतनाऽचेतनात्मकप्रपञ्चस्य कारणे परशिवब्रह्मणि

---

[1] सत्वाच्चावरस्य इति 'ज' कोशे पाठान्तरम्

सत्त्वाच्च कारणात्कार्यस्यानन्यत्वं सिध्यति। लोके सर्वमिदं घटशरावादिकं पूर्वावस्थायां मृदात्मकमेव भाति अतो जगत्सत्यत्वे न विरोधः।

जगत्सत्यत्वे पुनर्हेत्वन्तरमाह—

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

**असद्व्यपदेशात्** "असद्वा इदमग्र आसीत्" इति श्रुतौ शशशृङ्गवत्सृष्टेः पूर्वं प्रपञ्चस्यासत्वनिर्देशात् वर्तमानकाले रज्जुसर्पवद्ब्रह्मण्यवभासमानोऽपि सर्वदा चिदचिदात्मकप्रपञ्चो नास्तीति चेन्न; **धर्मान्तरेण वाक्यशेषात्**। धर्मान्तरेण सूक्ष्मत्वरूपधर्मान्तरविशिष्टत्वमात्रेणासत्त्वव्यपदेशः, कुतः, वाक्यशेषात्। **"ततो वै सदजायत"** इत्युत्तरवाक्ये सृष्ट्यनन्तरस्थूलावस्थाभिधानात् **"असद्वा इदमग्र आसीत्"** इत्यत्र सृष्टेः प्रागिदं जगदसदासीत् सूक्ष्मावस्थापन्नमासीत्। अतः सृष्ट्यनन्तरं ततः सदजायत स्थूलावस्थाविशिष्टमासीत् इति भावः। **स्वस्वरूपापरित्यागपूर्वकपरस्वरूपभाक्त्वं विवर्तमिति-न्यायेन** रज्जुसर्पवद्ब्रह्मणि प्रपञ्चस्य विवर्तोपादानत्वं प्रसाध्य जगन्मिथ्यात्वं किं न युक्तम्? इति चेत्तदसत्।

**"असदेवेदमग्र आसीत्"** **"इदं वा अग्रे नैव किञ्चनासीत्"** इति श्रुतिषु, लोके च घटशरावादिकं सर्वं प्राक्मृदि नासीदिति ज्ञायते। तस्मात् प्रपञ्चस्य शशशृङ्गवदसत्वं युक्तमिति चेन्न। एकस्यैव शरीरस्य बालत्व-युवत्व-स्थविरत्वप्रपञ्चस्य सूक्ष्मत्व-स्थूलत्व-व्यवस्था कालभेदेन निर्दिष्टा। अतोऽसच्छब्देन सूक्ष्मात्मकत्वं तद्भिन्नसच्छब्देन स्थूलात्मकत्वं निर्दिष्टम्। तस्मात्प्रपञ्चस्य सत्यत्वं ब्रह्माभिन्नत्वं च समञ्जसम्।

मिथ्यात्वनिराकरणे हेत्वंतरमाह—

## युक्तेश्शब्दान्तराच्च ॥ १८ ॥

**युक्तेः**— यथा कूर्मः स्वशक्त्या स्वपादाद्यवयवान् स्वेच्छया बहिर्गतान् कृत्वा पुनःस्वात्मनिवेशनं करोति तथा परमशिवः सृष्टिकाले नामरूपविभागवत्वेन बहिः प्रकटी-

कृत्य प्रळये स्वात्मनि स्वभिन्नं चिदचिदात्मकं प्रपञ्चं गोपयतीत्यादियुक्तेः, शब्दान्तराच्च "इदं वा अग्रे नैव किञ्चिदासीत्", "तदसदेव सन्मनोऽकुरुत स्यां", "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्यादिश्रुतिष्वसच्छब्दव्याकृतादिशब्दाच्च। प्रळयावस्थायां प्रपञ्चस्य सङ्कुचितत्वं सृष्टिकाले विकासवत्वं च स्पष्टमुपदिष्टम्।

एवं जगत्सत्यत्वं प्रसाध्येदानीं कार्यकारणयोरनन्यत्वे निदर्शनं सूत्रद्वयेन दर्शयति—

## पटवच्च ॥ १९ ॥

यथा **पटस्य** कदाचित्सङ्कुचितावस्था कदाचित् विकासावस्था च विलक्षणप्रतीतिविषयत्वेन दृश्यते, तद्वत्परमशिवशक्तिसङ्कुचितावस्थाकारणं शक्तिप्रसारितावस्था कार्यम्। यथा पटस्य वेष्टितप्रसारितभेदेऽप्यभेदः तथा कार्यकारणयोर्मृद्घटादिवदभेदः।

**ननु**— मृद्घटादिदृष्टान्ते मृद्घटौ भिन्नौ, विलक्षणप्रतीतिविषयत्वात्। तस्माद्घटपटवत्तस्य हेतोर्व्यभिचार इति चेन्न; मृद्द्रव्यस्य पृथुबुध्नोदराद्याकारो घट इति व्यवहारहेतुः। तस्यैव तत्प्रतियोग्यवस्थान्तरयोगो घटाभावव्यवहारहेतुः तत्र कपालद्व्यवस्थायाः तत्प्रतियोगित्वेन सैव घटावस्था अस्य नास्तीति व्यवहारहेतुः। न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते, न चापि कल्प्यते, तावतैवाभावस्य व्यवहारोपपत्तेः। तस्माद्यथा मृदात्मनासत्वेऽपि मृदेकांशेन घटशरावात्मकत्वेन परिणामेऽपि मृदात्मकत्वं न विरुध्यते तथा शिवस्य स्वशक्त्येकांशत्वेन जगदात्मना परिणामेऽपि जगदनन्यत्वं न विरुध्यते।

परस्परविलक्षणयोः कार्यकारणयोरभेदे व्यवहारातङ्कमाशङ्क्याह—

## यथा च प्राणादि ॥ २० ॥

यथा वायुरेकः प्राणापानादिवृत्तिभेदेन नामरूपात्मककार्यभेदं भजते, तद्वत्परशिव एव स्वशक्तिमहिम्ना चिदचिदात्मकप्रपञ्चरूपेण भासमानोऽप्यनन्य एव। किञ्च— यथा

शिवयोगी परमशिवध्यानकाले प्राणायामादिना प्राणापानादिवायुसङ्कोचनं करोति, व्यवहार-काले प्रसारणादिकार्यं करोति, तद्वत्परमेश्वरस्सृष्टिकाले जगत्प्रसारणं प्रळयकाले तदाकुञ्चनं करोति। तस्मात्परमकारणपरशिवात्कार्यरूपं जगदनन्यमिति सिद्धम्। तदनन्यत्वाच्चैक-विज्ञानात्सर्वविज्ञानप्रतिज्ञा सिद्धा भवति।

---

## इतरव्यपदेशाधिकरणम् ॥ ७ ॥

### जीवब्रह्मवादिमतनिराकरणम्

एवं जगदीश्वरभेदवादस्य जगन्मिथ्यात्ववादस्य च निरस्तत्वेन **भेदाभेदमतमेव स्वाभिप्रेतमिति** प्रदर्श्य **जीवब्रह्मवादिमतमद्य निराकरोतिः** ।

## इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

**इतरव्यपदेशात्** ब्रह्मेतरस्य जीवस्य ब्रह्मत्वेन व्यपदेशात् **हिताकरणादिदोषप्रसक्तिः** । हितानां **इष्टसाधकानां** स्रक्चन्दनादीनामकरणमसंपादनं, आदिशब्देनानिष्टसाधकव्याघ्रादीनां सम्पादनम् । **एतादृशदोषप्रसक्तिः** । तस्माज्जीव एव ब्रह्मेति वादो न युक्तः । "**द्वासुपर्णेत्यादिषु**" जीवब्रह्मणोर्भेद व्यपदेशात् । "**अयमात्मा ब्रह्म**" इत्यादिश्रुतिषु तयोरभेदनिर्देशात् । तयोर्भेदो न वेति **संशयः** ।

जीवब्रह्मभेदबोधकश्रुतीनां उपाधिपरत्वात्, "**योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः**", "**मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति**" इत्यादिषु जीवब्रह्मणोरभेदश्रवणात् ।

"**बिम्बत्वं प्रतिबिम्बत्वं यथा पूर्वाणि कल्पितम् ।**
**जीवत्वमीश्वरत्वं च ब्रह्मण्येकत्र कल्पितम् ॥**"

इत्यत्र बिम्बप्रतिबिम्बवज्जीवब्रह्मणोरभेदनिर्धारणात्, "**यतो वा इमानि भूतानि जायन्ते**" इत्यादौ तयोः कार्यकारणत्वोपदेशात्, वाचारम्भणश्रुतौ कार्यकारणयोरेकत्वनिर्देशाच्च जीवातिरिक्त ईश्वरो नास्तीति प्राप्ते–

अभिधीयते– "**अन्नं ब्रह्म, प्राणो ब्रह्म**", "**असावादित्यो ब्रह्म**", इत्यादिवज्जीवस्यापि ब्रह्मत्वमौपचारिकम् । जीवस्य ब्रह्मत्वप्रतिपादने जीवानामिष्टसम्पादनमनिष्टसाधनं च यत्तत्सर्वं ब्रह्मण एवाङ्गीकर्तव्यम् । तथा चेदिष्टप्रपञ्चनिर्मातृत्वं स्वतन्त्रब्रह्मणस्स-

म्भवतीति अनिर्मोक्षप्रसङ्गनिर्मोगमनुपपन्नं स्यात्। यच्चोक्तं मणि-कृपाण-दर्पणादिषूपलभ्यमान-मुखमलिनत्व-दीर्घत्व-विमलत्वादिवत् शुध्यशुध्यादिव्यवस्थोपपत्तिरिति तत्रेदं विमर्शनीयम्। अल्पत्वानलिनत्वादयः औपाधिकदोषाः कदा नश्येयुरिति। कृपाणाद्युपाध्यपगम इति चेत्। किं तदल्पत्वाद्याश्रयः प्रतिबिम्बस्तिष्ठति वा न वा? तिष्ठति चेत्तत्स्थानीयस्य जीवस्य स्थितत्वादनिर्मोक्षप्रसङ्गः नश्यतीति चेत्तद्वदेव जीवनाशात्स्वरूपोच्छेदलक्षणो मोक्षस्स्यात्। किञ्च— जीवस्य ब्रह्मत्वे तस्मिन् सर्वज्ञत्व-सर्वेश्वरत्व-सर्वनियामकत्व-सत्यसङ्कल्पत्वादीनाम-दर्शनाज्जीवविलक्षणः परमेश्वर इति सिद्धम्।

### श्रीकण्ठोपज्ञविशिष्टाद्वैतमतनिराकरणम्

जीवब्रह्मणोर्ज्ञानात्मकत्वेनैकत्वेऽप्यविद्योपाधिभेदेन भेददर्शनात्तयोर्भेदविधायकश्रुतीनामौ-पाधिकं भेदविषयत्वमेवेत्याशङ्क्याह—

## अधिकन्तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दो निश्चयार्थः। आध्यात्मिकाधिभौतिकाधिदैविकादिदुःखाकरात्प्रत्यगात्मनः जीवादधिकमर्थान्तरभूतं ब्रह्म। कुतः? **भेदनिर्देशात्।** **"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "सता सौम्य तदा सम्पन्नो भवति"** इत्यादिना प्रत्यगात्मभूतस्य जीवस्य च परमात्मनश्शिवस्य परस्परभेदव्यपदेशाज्जीव एव ब्रह्मेति वादो न युक्तः। जीवब्रह्मभेदसत्यत्वबोधकानां श्रुतीनामौपाधिकभेदविषयत्वं वा? उत आरोपितभेदविषयत्वं वा?

**नाद्यः,** स्वभावतः स्वस्मादभिन्नस्य जीवस्य तदुपासनासम्भवात्। तथापि ब्रह्म तं जानाति वा न वा? न जानाति चेत्सर्वज्ञत्वहानिः, जडत्वप्रसङ्गश्च। जानाति चेत् स्वस्मादभिन्नस्य जीवस्याध्यात्मिकादिदुःखं स्वदुःखमिति जानीयात्। एवं चेत् ब्रह्मणः हिताकरणाहितकरणारूयदोषप्रसक्तिरनिवार्या।

**न द्वितीयः—** तत्रापि जीवाज्ञानपक्षे पूर्वोक्तविकल्पस्थफलतादवस्थ्यात्। ब्रह्मा-ज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणः अज्ञानसाक्षित्वं तत्कृतजगत्सृष्ट्यादिकं च न

सम्भवति। अज्ञानेन प्रकाशस्तिरोहित इति चेत् तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन स्वप्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवावेदितम्। तस्माज्जडजातिलोहादौ ताम्रसुवर्णादिवच्चिज्जातौ, जीव-ब्रह्मणोः स्वभाविकभेदो निर्दिष्टः। तथाप्यचेतनरससंयोगेन ताम्रस्वभावनिवृत्तिपूर्वकाबाधितसुवर्णत्वप्राप्तिवच्चेतनजीवस्यापि परमेश्वरोपासनया तदनुग्रहवशादबाधितशिवत्वं सिध्यति। तस्माज्जीवेश्वरैक्यविधायकानां तत्त्वमस्यादिवाक्यानामविरोधः।

किञ्च– "**आधिकन्तु भेद**" इति सूत्रे जीवब्रह्मणोस्स्वाभाविकभेदनिर्देशात्, "**तदनन्यत्वं**" इति सूत्रे अभेदव्यपदेशाच्च **भेदाभेदमतमेव** सूत्रकारसम्मतमिति बालानामपि विज्ञायते।

**ननु** भेदाभेदयोर्वस्तुविरोधात् स्वाभाबिकभेदस्य निवृत्यसम्भवाच्च भेदाभेदकल्पकं **विशिष्टाद्वैतं चतुर्थमतमेव समञ्जसम्। भेदाभेदमतवदत्राप्यङ्गाङ्गित्वेन सर्वश्रुतिसमन्वयदर्शनात्, सूर्यातपवच्चन्द्रचन्द्रिकावद्धर्मधर्मिवद्गुणगुणिवद्दण्डदण्डिवद्विशिष्टमुपपन्नम्।** अत्र शैवाग्रगण्य **श्रीकण्ठशिवाराध्यकृत ब्रह्ममीमांसाभाष्ये** विशिष्टाद्वैतं स्वाभिप्रेतत्वेन प्रसाधितम्। तत्र मुक्तात्मनां **गौरीपतित्व जगत्कारणत्वसर्वान्तर्यामित्वादिधर्मनिराकरणपूर्वकतत्साम्यपञ्चोपनिषन्मयदिव्यमङ्गलविग्रहात्मकसर्वैश्वर्यविशिष्टकल्याणविभूतिः बहुधा प्रपञ्चिता। "यथा नद्यः स्यन्दमाना"** इत्यादि श्रुतिनिष्ठत्रिपाद्विभूत्यधिककैवल्यविभूत्यात्मक शिवसायुज्यलक्षणामुक्तिर्नाङ्गीक्रियते। तस्मादिदमेव युक्तमिति प्राप्ते–

**ब्रूमः**– भेदाभेदयोर्वस्तुविरोध इति यत्तदविचारितरमणीयम्। श्रुतिस्मृतिपुराणागमसूत्रादिषु भेदाभेदप्रदर्शनात्। जाग्रत्स्वप्नावस्थयोर्भेदस्य सुषुप्त्यवस्थायामभेदस्य सर्वानुभवसिद्धत्वाच्च तथा **शिवागमे**–

**सुप्तिरेव हि दृष्टान्तस्सृष्टिप्रलययोरपि।**
**सृष्टिकाले भवेद्भेदः अभेदः प्रलये स्मृतः॥**

इति जीवस्य ज्ञानाज्ञानोभयविशिष्टत्वदर्शनान्न वस्तुविरोधः।

मेरुमन्दिरमासाद्य काकोऽपि कनकायते।
तथा भक्त्या शिवं प्राप्य जीवो भवति शङ्करः॥

इति वचनात् पदार्थानां पूर्वावस्था न दृश्यते।

शिवध्यानात्तथा जीवो न पुनर्भवमश्नुते।
शुक्तिलब्धजलं लोके मौक्तिकं भवति ध्रुवम्॥

भक्तिसंयुक्तजीवो हि शिवो भवति नान्यथा।
रसवेधाद्यथा ताम्रं काञ्चनं भवति ध्रुवम्॥
गुरोः कटाक्षवेधेन जीवो भवति शङ्करः॥

इत्यादिबहुदृष्टान्तशास्त्रानुभवदर्शनात् स्वाभाविकभेदनिवृत्तेर्न विरोधः। **अन्तर्यामिब्राह्मणे "यः पृथिव्यां तिष्ठन्, य आत्मनि तिष्ठन् यस्यात्मा शरीरं"** इत्यादिवाक्यानां परमेश्वरस्याष्टमूर्तित्व-सर्वान्तर्यामित्वप्रदर्शकानामनन्यभक्त्युपासनापरत्वमिति विवक्षितम्। नोचेत्- "आकाशवत्सर्वं गतश्च पूर्णः", "**अचक्षुश्रोत्रं तदपाणिपादं**", "**अप्राणोह्यमनाश्शुभ्रः**", "**अशरीरं वा वसन्तं**" इत्यादि बहुश्रुतिविरोधः। "**अपाणिपादो जवनो ग्रहीता पश्यात्यचक्षुः स शृणोत्यकर्णः**" इत्यत्र शरीरेन्द्रियनिरपेक्षतया परब्रह्मणःशिवस्य सर्वशक्तत्वावगमात्, विशिष्टाद्वैतविधायकश्रुतिसूत्राद्यदर्शनात्। अङ्गाङ्गित्वस्वीकारे जीवत्परिच्छिन्नत्वप्रसक्तिर्दुर्वारा। "**अन्तःपूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे**", "**पादोऽस्य विश्वाभूतानि**" इत्यादि श्रुतिषु परमशिवशक्त्येकांशप्रपञ्चेषु तद्भिन्नस्थलेषु च ब्रह्मणः पूर्णत्वमुपदिष्टम्। अतस्तन्मतमुपेक्षणीयम्।

**किञ्च- "द्वेवाव ब्रह्मणो रूपे", "सर्वाननशिरोग्रीवः"** इत्यादिना उपासनार्थं ब्रह्मणः पवनवन्मूर्तामूर्तत्वव्यपदेशात्, **जीवमुख्यप्राणलिङ्गसूत्रे** भक्तोपासनार्थं परमेश्वरस्योपासनात्रयमुपदिष्टमिति तत्र बहुधाप्रपञ्चितम्। "**ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे**", "**यो वेद निहितं गुहायां परमेव्योमन्**", "**सोऽश्नुते सर्वान् कामान् सह**", "**निरंजनः परमं साम्यमुपैति**" इत्यादिबहुश्रुतिषु परमशिवत्रिपाद्विभूत्यात्मक**सालोक्य-सामीप्य-सारूप्य**सिद्धकल्याणविभूतेः स्वाभाविकजीवभाव-

निवृत्तिपूर्वकशिवत्वप्राप्तिरूपकैवल्यविभूतेश्च दर्शनाच्चतुर्विधमुक्तिप्रतिपादकं सर्वं शास्त्रं प्रमाणमेव। "**ज्योतिष्टोमेन स्वर्गकामो यजेत**" इत्यादिसिद्धेन्द्राद्यैश्वर्यात्मककार्यविभूतिः हठयोगसिद्धचतुर्मुखब्रह्मलोकैश्वर्यात्मककारणविभूतिश्चेत्यधिकारितारतम्येन सर्वमुपादेयम्। अतो मुमुक्षूणां वीतरागिणां शमदमादिसहकृतगुरुचरेश्वरकैङ्कर्यात्मकबहुजन्मतपस्सिद्धाव्यभिचारभक्तिरेव सालोक्यादिचतुर्विधमुक्तिहेतुरिति वेदितव्यम्। "**श्रद्धाभक्तिज्ञानयोगादवेहि**" इत्यादिश्रुतिदर्शनात्।

**ननु "एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः"** इति सुबालोपनिषदि नारायणस्यैव सर्वशरीरात्मकत्व-सर्वान्तर्यामित्व-दर्शनात्तस्यैव तदुपपत्तिरिति चेन्न; आकाशादिशब्दवन्नारायणादिशब्दोऽपि परमशिवपर एव। "**सर्वो वै रुद्रः**", "**स एव विष्णुस्स प्राणः**", "**योरुद्रोऽग्नौ यो अप्सु**", "**सोऽन्तरादन्तरं प्राविशत्**, इत्यादिश्रुतिषु "**ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति**" इत्यादि स्मृतिष्वपि सर्वान्तर्यामित्वं शिवस्यैवोपदिष्टम्। अष्टमूर्तित्वस्य नारायणे यत्रकुत्राप्यदर्शनात् सुबालवाक्यात्कण्व-माध्यन्दिन-तैत्तिरीयादिश्रुतेर्बलाच्च सर्वात्मकत्व-सर्वान्तर्यामित्व-सर्वाधिकत्वादिधर्माः। शिवस्यैवोपपन्ना इति सिद्धम्।

**जीवब्रह्मणोः स्वभावभिन्नत्वे दृष्टान्तमाह—**

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

**अश्मादिवच्च**-अश्मादिविजातीयदृष्टान्तेन **तदनुपपत्तिः** तत् "**अयमात्मा ब्रह्म**" इत्यादिश्रुतिसिद्धपूर्वोक्तब्रह्मत्वं जीवस्यानुपपन्नमसंभवि इत्यर्थः। तस्मात्सर्वदा स्वभावसिद्धतया जीवब्रह्मणोर्विजातीयाश्मादिदृष्टान्तवत्सजातीयभेदस्सिद्धः। यथा लोहाश्मकाष्ठतरुगुल्मादीनामचेतनानां स्वभावसिद्धपरस्परभेदः तद्वत्सजातीयचेतनयोः जीवेश्वरयोः, परस्परं स्वाभाविको भेदः, यथा भूम्यां वज्र-वैडूर्य-गोमेधिक-पुष्यराग-मरकत-माणिक्यादिमणयः स्वर्ण-रजतादिलोहजातयः व्यर्थपाषाणादयः परस्परभेदेन दृश्यन्ते तथा जीवेश्वरयोरपि भेदो दृश्यते। "**पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति॥**" "**क्षरं**

प्रधानममृताक्षरं हरः", "तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमाया-निवृत्तिः" "ज्ञाज्ञौ द्वावजावीशानीशौ", "प्राज्ञेनात्मना सम्परिष्वक्तः", "नित्यो-नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्", "द्वे वाव ब्रह्मणी वेदितव्ये परं चापरं च", "जुष्टं यदा पश्यत्यन्यमीशं", "एषामीशे पशुपतिः पशूनां। विश्वाधिको रुद्रो महर्षिः", "ईशानस्सर्वविद्यानां", "त्रियम्बकं यजामहे", "एतत्सोमस्य रुद्रस्य सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रम्।" "अमृतस्य देवधारणो भूयासम्" इत्यादिश्रुतिभिः जीवब्रह्मणोः परस्परस्वभाववैलक्षण्यं दर्शितम्। तयोरभेदे पूर्वोक्तहिताहितरूपजगत्कारणत्वमनुपपन्नं इत्यादयो दोषाः प्रसज्येरन्।

---

## उपसंहार दर्शनाधिकरणम् ॥ ८ ॥

### परमेश्वरस्य अघटितघटनसामर्थ्यप्रदर्शनम्

तत्त्वमसीत्युपसंहारेऽपि जीवाभेदब्रह्मनिर्देशात् जीवब्रह्मणोरश्मलोष्ठकाष्ठवत्स्वभावभिन्नत्वे तन्निवृत्त्यसम्भवाच्च ब्रह्मण एव जीवत्वं शुक्तिरजतवदारोपितमात्रमेवेत्याशङ्कायामाह–

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

**"एकमेवाद्वितीयं ब्रह्म"** इत्युपक्रमे **"तत्त्वमसि"** इत्युपसंहारेऽपि जीवब्रह्मणोरभेददर्शनात् मध्यस्थवाक्ये अश्मलोष्ठकाष्ठादिवत्तयोस्वाभाविकभेदाङ्गीकारे स्वाभाविकभेदस्य जलादिवन्निवृत्तिर्नसम्भवतीति चेन्न।

**क्षीरवद्धि–** तक्रादिसम्पर्कवशात् क्षीरस्य दधिरूपेण स्वभावनिवृत्या परिणामस्तथा जीवस्य श्रवणमननादिसहकृतभक्तिभावेन स्वाभाविकजीवत्वनिवृत्तिपूर्वक[1]शिवत्वप्राप्तिर्नविरुध्यत एव। **"द्वासुपर्णा"** इत्यादिषु जीवब्रह्मणोर्भेदावगमात् **"तत्त्वमसी"त्यादिषु** तयोरभेदव्यवस्थापनाच्च तद्भेदस्स्वाभाविकः आगन्तुको वेति **सन्दिह्यते।**

स भेद आगन्तुक एव, स्वभावत्वे निवृत्त्ययोगात्। जलादौ पाकादिना स्वभावतिरोहितत्वेऽपि कालान्तरेण स्वभावस्यैव स्थितत्वात्। अभेदश्रुत्यनङ्गीकारे **अर्धजरतीन्यायवद**वैदिकत्वप्रसङ्गात् परमेश्वरमहिम्ना स्वभावनिवृत्तिस्सम्भवतीति चेन्न, मानुषान्मानुषोत्पत्तेस्तिर्यगादिभ्यस्तिर्यगुत्पत्तेश्च दर्शनात् शुक्तिरजतवदागन्तुकत्वमेव समञ्जसमिति प्राप्ते–

**अभिधीयते–** यथा लोके क्षीरस्य तक्रादिसंयोगेन स्वभावसिद्धक्षीरत्वनिवृत्तिपूर्वकदधित्वपरिणामसिद्धिद्योतनात्, कीटजात्युत्पन्नभृङ्गस्य स्वजात्यतिरिक्तक्रिमिजन्तोस्स्वभावक्रिमित्व-

---

[1] ब्रह्मत्व (ज) (ग A).

निवृत्तिपूर्वकस्वसमानरूपप्राप्तिप्रदायकत्वशक्तिदर्शनाच्च तथा घटनाघटनसमर्थस्य सर्वशक्तिविशिष्टस्य भक्तवत्सलस्य भक्ताभीष्टफलप्रदायकस्य सर्वविद्याश्रयस्य सत्यकामस्य सत्यसंकल्पस्य परशिवस्य स्वभक्तस्वाभाविकजीवभावनिवृत्तिपूर्वकपुनरावृत्तिरहितस्वस्वरूपप्राप्तिप्रदायकशक्तिमत्वे किं हि वक्तव्यम् ?

किञ्च– "[1]द्यावापृथिवी जनयन्देव एक" इत्यादिश्रुतिषु शिवस्य उपकरण-निरपेक्षकतया गगन-पवनानल जलादिविचित्रजगज्जन्मादिकारणत्वं श्रूयते, चेतनपुरुषादचेतन-लोम-नखाद्युत्पत्तिरचेतनगोमये चेतनवृश्चिकाद्युत्पत्तिश्च दृश्यते। अतस्तस्य परमेश्वरस्य अघ-टितघटनसामर्थ्यं सिद्धम्।

तत्र दृष्टान्तं दर्शयति–

## देवादिवदपि लोके ॥ २५ ॥

यथा लोके परिच्छिन्नशक्त्यवच्छिन्नानां देवर्षिसिद्धादीनां स्वानुग्रहेण स्वाश्रयपुरुष-निष्ठमौढ्य-दरिद्रत्वादिनिराकरणपूर्वकविद्या-धन-संन्तानाद्यपूर्वफलप्रदायकत्वं तथा सर्वशक्तिविशिष्टस्य परमेश्वरस्य स्वभक्तस्वाभाविकजीवत्वनिराकरणपूर्वकस्वप्राप्तिरूपकैवल्यविभूतिप्रदायकत्वे किम-साध्यम्! "इमाल्लोकानीशत ईशनीभिर्जननीभिः परमशक्तिभिः।" इत्यादिश्रुतिषु "शिव एव हि देवोन्तरिस्थतमिच्छावशाद्बहिः। योगीव निरुपादानमर्थजातं प्रकाशयेत्॥" इति स्मृतौ परमेश्वरस्याघटितघटनाकर्मसन्धानविचित्रानन्तशक्तिमत्वं श्रूयते। तस्मात्तन्महिमातिशयित्वे न शङ्काकलङ्कः।

---

[1] एक एव रुद्रो न द्वितीयाय तस्थे (ज) (ग A)

## कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

### परशिवस्य ब्रह्मणः मूर्तामूर्तोभयात्मकत्वप्रतिपादनम्

एवं परमेश्वरस्य स्वाभाविकजीवत्वनिवृत्तिपूर्वकस्वात्मप्राप्तिप्रदायकशक्तिमत्वं प्रसाध्य तस्यैव मूर्तामूर्तोभयात्मकत्वं[1] दर्शयति ।

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

वेदान्तेषु ब्रह्म निरवयं सावयवं वा ? निरवयवं चेत् **कृत्स्नप्रसक्तिः**, व्यापकस्य ब्रह्मणः जगन्निर्माणे परिच्छिन्नत्वप्रसङ्गः । सावयवं चेत् **निरवयवत्वशब्दकोपो** वा । निरवयवत्वप्रतिपादकश्रुत्यप्रामाण्यप्रसङ्गः । तस्मात्परमेश्वरस्य स्वतन्त्रत्वात् मूर्तामूर्तोभयत्वमङ्गीकर्तव्यम् । **"सत्यात्मप्राणारामं मन आनन्दम्" "अप्राणो" "अचक्षुः" "आकाश" "अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशान्तममृतं ब्रह्मयोनिम्", "उमासहायं परमेश्वरं प्रभुं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिम्"** इत्यादिश्रुतिशतेषु शिवस्य परब्रह्मणः मूर्तामूर्तात्मकत्वस्य मूर्तशिवोपासनया सर्वाभीष्टसिद्धिपूर्वकनिरवयवसाक्षिप्रापकत्वस्य च दर्शनात् जगत्कारणत्वं निरवयवस्य सावयवस्य वेति **सन्देहः** ।

निरवयवब्रह्मप्रतिपादकानां सावयवब्रह्मप्रतिपादकानां च तमःप्रकाशवत्परस्परविरोधात्तदुभयमप्रमाणमेव । तदुभयश्रुतिस्वीकारे व्यवस्थोच्छेदप्रसङ्गः । तस्मात्प्रधानस्य परमाण्वादीनां वा जगत्कारणत्वमुपपन्नमिति प्राप्ते—

प्रचक्ष्महे— स्वतन्त्रत्वाच्छिवस्य मूर्तामूर्तत्वमुपपन्नम् । **"उदिते जुहोति । अनुदिते जुहोति", "यवैर्वा यजेत, व्रीहिभिर्वा यजेत"** इत्यादिश्रुति प्रामाण्यात् **उभयसिद्धिरिति न्यायेन** तदुभयस्वीकारवदत्रापि मूर्तामूर्तोभयविधायक श्रुतिदर्शनात्तदुभयं विधेयमेव । तदुभयोरेकांशप्राधान्येऽपि **अर्धजरतीन्यायेन** श्रुत्यप्रामाणताप्रसङ्गो दुर्निवारः ।

---

[1] अधिकारान्तरेण दर्शयति (ग A)

शिवस्यावयवित्वेन महाकैलासाद्यप्राकृतदिव्यवैभवस्थानेषु स्थित्वा तदुपासकानां भक्तानां सालोक्यादित्रिविधनित्यकल्याणविभूतिं दत्वा स्वनिरवयवचिद्घनोपासकानां निरस्तसमस्तदोषादिकलङ्कानां कैवल्यविभूत्यात्मकस्वप्राप्तिं विदधाति। तस्मात्तदुभयोपासनमप्युक्तम्। "यत्सत्वे यत्सत्वं" इति न्यायेन शरीरपरिग्रहेण देवादीनां पुराणेषु दुःखित्वदर्शनात् सालोक्यादित्रिविधमुक्तिप्राप्तानां भक्तानां च तदा शरीरपरिग्रहे दुःखप्राप्तिरनिवार्येतिचेन्न, तेषां कारणशरीरत्वात्। पुण्यपापकर्मशरीरिणामेव प्राकृतदुःखादिप्राप्तिः। अप्राकृतानां स्वेच्छाकृतविग्रहाणां तन्नियमो नास्ति। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति" इति श्रुतिदर्शनात्।

"न चक्षुषा गृह्यते नापि वाचा", "यतो वाचो निवर्तन्ते अप्राप्यमनसा सह" इत्यादि वचनैः शिवस्य मनोवाचामगोचरत्वव्यवस्थापनात्तस्य शरीरिस्वाङ्गीकारो न विधेय इत्याशङ्कायामाह–

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तु शब्दः पूर्वपक्षनिरासार्थः। "तं त्वौपनिषदं पुरुषं पृच्छामि", "ऋतं सत्यं परं ब्रह्म", "अणोरणीयान्", "त्रियम्बकं यजामहे", "नावेदविन्मनुते तं बृहन्तं", "आत्मा गुहायां निहितोऽस्य जन्तोः[1]" इत्यादि श्रुतिषु शिवस्य परब्रह्मणः शब्दमूलत्वात् वेदप्रमाणकत्वात्, श्रुतेः तदुभयविधायकश्रुतिबलाच्च, तस्य निरवयवत्व-सर्वोपास्यत्व-विलक्षणत्व-सर्वाधारत्व-सर्वप्रकाशकत्व-सर्वान्तर्यामित्व-सर्वेश्वरत्व-सर्वैश्वर्यवत्वादिकं सर्वं समुपपन्नम्।

नन्वेकस्य भेदाभेदवत्वं मूर्तामूर्तत्वं सत्यासत्यत्वं ज्ञानाज्ञानत्वं कार्यकारणत्वं व्यापकत्वाव्यापकत्वं व्याप्यत्वाव्याप्यत्वं च वस्तुविरोधादयुक्तमिति चेत्तदविचारितरमणीयम्। लोकवेदसिद्धत्वात्। लोके मृद्घटयोर्दीप-प्रभयोश्चन्द्र-चन्द्रिकयोः प्रभाकर-आतपयोः शक्ति-शक्त्योश्च भेदाभेदवत्वम्। प्रधानस्य कारणावस्थायाममूर्तत्वं कार्यावस्थायां मूर्तत्वम्। पवनस्य

---

[1] (श्व)

सावयवत्वेन दिगेकदेशवर्तित्वं निरवयवत्वेन निखिलजगद्व्यापकत्वं। प्रात्यक्षिकसर्पस्य सत्यत्वं रज्ज्वारोपितसर्पस्यानित्यत्वम्। घटादीनां मृदात्मकत्वेन सत्यत्वम्, कम्बुग्रीवादिरूपेणासत्यत्वम्। चित्रस्थितपर्वतादीनामसत्यत्वम्, अर्थक्रियानुगतपर्वतादीनामेव सत्यत्वम्, खद्योतस्य प्रकाशाप्रकाशत्वम्। जीवस्य ज्ञानाऽज्ञानवत्त्वं, पुरुषैकशरीरे शरीरस्य चेतनत्वं नखरोमदन्तानामचेतनत्वम्, देवादीनां योगीश्वरादीनाञ्चैककाले सकललोकवर्तित्वम्, व्योम्नस्तत्कार्यपवनानल-जल-भूम्यादिषु पूर्णत्वमपूर्णत्वं च दृष्टम्। वेदे च– **"विज्ञानं चाविज्ञानं च सत्यं चानृतं ज सत्यमभवत्"** इति दर्शितम्। अतस्तस्य सर्वशक्तत्वात् स्वतन्त्रत्वात्सर्वमविरोधम्। **"अपाणिपादोऽहमचिन्त्यशक्तिः", "पश्याम्यचक्षुः स शृणोम्यकर्णः", "अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम"** इत्यादिना कैवल्येऽपि शरीरेन्द्रियाद्यनपेक्षतया तस्य सर्वशक्तत्वं श्रूयते। अतः सावयवस्य ब्रह्मण एव विचित्रजगन्निर्माणादिहेतुत्वम्।

## निरवयवस्यापि ब्रह्मणः जगत्कारणत्वप्रतिपादनम्

निरवयवस्य ब्रह्मणः कथं सावयवत्वं प्रपञ्चकारणत्वमित्याशङ्कायामाह–

# आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

परिच्छिन्नशक्तिविशिष्टे निरवयवे जीवात्मन्येव स्वमनश्शक्त्या जाग्रत्प्रपञ्चवत्स्वप्नकाले गजतुरगादिनानाविधप्रपञ्चकल्पनाविचित्राः दृष्टाः। एवं सर्वशक्तिविशिष्टे निरवयवे परमात्मनि परशिवे स्वमायाशक्त्या विचित्रनानाविध ब्रह्माण्डकल्पनमुपपन्नम्। किञ्च– चेतनपुरुषेऽचेतनकेशनखादिविचित्राः जलानलादीनामन्योन्यविजातीयानां औष्ण्यादिशक्तयश्च विजातीयाः दृश्यन्ते। तमः प्रकाशवद्विरुद्धस्वभाववह्निसलिलयोरविरोधित्वेन समुद्रे दृष्टत्वात्, पुरुषशरीरे जाठराग्निदर्शनाच्च लोकातीतस्य सर्वमहिमातिशयस्य शिवस्य न किञ्चिदनुपपन्नम् तदुक्तं भगवता **बादरायणेन–**

> **"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।**
> **कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥"**

इति प्रश्ने–

शक्तयस्सर्वभावानां अचिन्त्यज्ञानगोचराः ।
यतस्ततो ब्रह्मणस्ताः सर्गाद्या भावशक्तयः ॥
भवन्ति तपसां श्रेष्ठ पावकस्य यथोष्णता ॥ इति ।

श्रुतिश्च "किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवीनिष्टतक्षुः", "मनीषिणो मनसा पृच्छते", "ब्रह्मवनं ब्रह्म स वृक्ष आसीत्", "मनीषिणो मनसो विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति श्रुतिस्मृतिष्वपि निरवयवस्य परमशिवस्यैव कर्तृत्वदर्शनात्तदेव युक्तम् ।

निरवयवस्य निर्गुणस्य ब्रह्मणः जगत्कारणत्वे जीववन्मायावशत्वमस्तीति आशङ्कायामाह—

## स्वपक्षदोषाच्च ॥ २९ ॥

स्वपक्षेऽप्ययस्कान्तसूचीन्यायेन निर्गुणस्य ब्रह्मणः सत्तावशात् प्रकृतिजगत्कारणप्रतिपादकाद्वैतपक्षे दोषाच्च निरवयवप्रकृतिजगत्कारणदोषाच्च, उत केवलजडस्य जगत्कारणत्वायोगेन तत्सान्निध्यात् प्रधानस्यायस्कान्तसूचीदृष्टान्तेन जगत्कारणत्वाङ्गीकारेऽपि ब्रह्मणः निर्विशेषत्वभङ्गः । तच्छक्तेः तदधीनत्वात् तस्य सगुणत्वमनिवार्यम् । निरवयवस्य प्रधानस्य महदादिविचित्रविश्वाकारपरिणामवत्वं सांख्यैरप्यङ्गीकृतम् । कणादादिभिरपि तथैव निरवयवनिरंशनिष्प्रदेशजडपरमाणुसंयोजनेन जगदाकारपरिणामत्वमङ्गीकृतम् । तथापि जडस्य स्वातन्त्र्यायोगेन तत्कारणत्वं ब्रह्मण्यर्थात्सिद्धम् । तस्मात्स्वपक्षदोषो दुर्वारः ।

या मा सा माया इति व्युत्पत्या मायायाः शशशृङ्गत्वावगमात् जडाजडयोर्मायाब्रह्मणोः सत्यत्वासत्यत्वस्वभावयोः घटपटवत्परस्परविलक्षणत्वात्तद्योगे तस्य जगत्कारणत्वायोगात् निर्विकारस्य मायिकत्वासम्भवाच्च रज्जुसर्पवद्ब्रह्मणि मायाध्यस्तत्ववादसमुचित इत्याशङ्कायामाह—

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

**सर्वोपेता**— जगज्जन्मादिसर्वशक्तिविशिष्टा परा शक्तिः । **तद्दर्शनात्**— तस्मिन् ब्रह्मणि परशिवे दर्शनात् श्रुतिप्रतिपादितत्वादित्यर्थः । "**पराऽस्य शक्तिर्विविधैव श्रूयते**

**स्वाभाविकी ज्ञानबलक्रिया च" "मायान्तु प्रकृतिं विन्द्यात् मायिनन्तु महेश्वरम्।" "इन्द्रो मायाभिः पुरुरूप ईयते"** इत्यादिश्रुतिषु सर्वगतस्य निरवयवस्य परमेश्वरस्य स्वाभाविकसर्वशक्तिमत्वं प्रतिपाद्यते। [1]तस्मान्न कदाचिदपि निर्विशेषं ब्रह्म त्रिगुणात्मकजगदुपादानकारणं भवेत्। तस्य शक्तिद्वयविशिष्टतया माया भिन्नशक्तिः चिच्छक्तिरभिन्नशक्तिः। एवं स्वतन्त्रोऽघटितघटनसमर्थोऽद्वितीयश्शिवः कालत्रयेप्येकरूपतया स्थितः। तस्य निर्विशेषत्वे जगत्कारणत्वं न सम्भवति। एवं तस्य स्वाभाविकशक्तिमत्व सर्वकारणत्वादिदर्शनेन तदध्यस्तमिथ्यावादो न युक्तः।

### ब्रह्मणः सर्वशक्तिविशिष्टत्वप्रतिपादनम्

सर्वशक्तिमत्वेन ब्रह्मणः जगत्कारणत्वाङ्गीकारे मृदादिवत्परिणामित्वविकारित्वादिदोषः प्रसज्येत इत्याशङ्कायामाह—

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

**विकरणत्वात् "अचक्षुः श्रोत्रं तदपाणिपादम्"** इत्यादौ **विकरणत्वात्**— शरीरेन्द्रियादिसाधनरहितत्वात्, **नेतिचेत्**— ब्रह्मणः जगत्कारणत्वं न सम्भवतीति चेत्त दुक्तम्। तत्रोत्तरं— "शब्दमूलत्वात्" "**विचित्राश्च हि**" इत्यादिना। वेदैकप्रमाणस्य ब्रह्मणः शरीरेन्द्रियाद्यभावे हि सर्वकार्यसमर्थत्वमुपपन्नम्। तथाच— "**अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः**" इति श्रुतिर्भगवतः प्रमाणभूता। "**पराऽस्य शक्तिः**", "**पादोऽस्य विश्वा भूतानि**" इत्यादिषु विचित्रानन्तशक्तिकस्य परशिवस्य स्वशक्त्येकांशेन जगदात्मकत्वं स्वतो जगद्विलक्षणत्वं च व्यपदिश्यते। **शैवपुराणे च**—

> **विश्वोत्तरोत्तरविचित्रमनोरथस्य**
> **यस्यैकशक्तिशकले सकलस्समाप्तः।**

---

[1] न ब्रह्मणो निर्विशेषत्वम् (ग ८).

अध्वानमध्वपतिमध्वविदो वदन्ति
तस्मै नमस्सकललोकविलक्षणाय ॥

इति दर्शितम् । अतः सर्वशक्तिविशिष्टस्सर्वेश्वरः परमशिव एव सर्वदा मुमुक्षुभि-राश्रयणीयः ।

### ब्रह्मणः निर्विशेषत्ववादनिरसनम्

निर्विशेषस्य निर्विकारस्य ब्रह्मणः जगत्कारणत्वे विकारित्वं प्रसज्येत, तस्मान्माया शबलितब्रह्मण एव जगत्कारणत्वमित्याशङ्क्य निराकरोति–

## न प्रयोजनवत्वात् ॥ ३२ ॥

**पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"** इति श्रुतिदर्शनात् ब्रह्मणः कदाचिदपि निर्विशेषत्वं न सम्भवति; **प्रयोजनवत्वात् "यतो वा इमानि भूतानि"** इत्यादौ जगज्जन्मादिप्रयोजनस्य ब्रह्मण्येव दर्शनात्; **"प्रधानक्षेत्रज्ञ-पतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः"** इत्यादौ ब्रह्मणः प्रयोजनवत्वावगमात् । **"अमृतस्य देवधारणो भूयासम्", "सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रम्"** इत्यादौ भक्ततारणार्थं स्थूल-सूक्ष्मकारणशरीरेषु **इष्ट-प्राण-भावसंज्ञकलिङ्गरूपेण** धारणप्रयोजन-व्यपदेशात् । प्रकर्षेण योजनमस्यास्तीति प्रयोजनवान् । तद्भावात् प्रकर्षेण परमप्रेमा-स्पदत्वेन योजनं प्रयोजनं संयोजनं स्थूलादिशरीरेषु **इष्टादिलिङ्गरूपेण** धारणं **सम्भवति** । [1]**"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते"** इति **न्यायेन** मुमुक्षूणां प्रयोजनाभावे तं न कोप्याश्रयेत । **सर्वेषां च** भक्तानां ऐहिकामुष्मिकफलप्रयोजनं फलप्राप्तिनिर्विशेषे नोपपद्यते । अतः रज्जुसर्पवन्मायाशबलितब्रह्मकारणत्ववादो ह्यविचारितरमणीयः । जलादि प्रतिबिम्बवदलीकस्य जडस्य मायाप्रतिफलितस्य जगत्कारणत्वायोगात्, **"निष्कलं निष्क्रियं शान्तं", "एतस्माज्जायते प्राणः"** इत्यादिषु निष्क्रियत्वस्य च द्योतनात् जगज्जन्मादि-कारणत्वं निर्विशेषब्रह्मणः सविशेषशबलस्य वेति **सन्दिह्यते** ।

---

[1] प्रयोजनाभावे तं न कोऽप्याश्रयति इति भावः (ग A).

निर्विशेषचिन्मात्रब्रह्मणि न कदाचिदपि जगज्जन्मादिहेतुत्वं सम्भवति; निर्विकारत्वान्निष्क्रियत्वान्निश्शक्तिकत्वाच्च। अतस्तत्रारोपितमायाकल्पितशबलेश्वरस्य जगत्कारणत्वमुपपन्नमिति [1]प्राप्ते सिद्धान्तमाह–

**न प्रयोजनवत्त्वादिति।** **"पराऽस्य शक्तिर्विविधैव श्रूयते"** इति श्रुतिदर्शनाद्ब्रह्मणस्सविशेषत्वं सम्भवति; कुतः, प्रयोजनवत्त्वात्। सविशेषब्रह्मण्येव सर्ववेदान्तप्रतिपाद्यस्य देवमनुष्याणां सर्वाभीष्टप्रदानाख्य प्रयोजनत्वस्य सम्भवात्। तन्मायावादिमतमध्यात्मवादिभिरनादरणीयम्। तथाहि– निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि इदं प्रमाणमिति कथं वक्तुं शक्यते? सविशेषवस्तुविषयत्वात् सर्वप्रमाणानाम्। यस्तु स्वानुभवसिद्धइति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवेन निरस्तः। **"इदमहमदर्शं"** इति कस्यचिद्विशेषविशिष्टविषयत्वात् सर्वेषामनुभवानाम्। सविशेषमनुभूयमानोऽनुभवः, केनचिदुक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः, निष्कर्षहेतुभूतैस्सत्तातिरिक्तैस्स्वासाधारणैरस्वभावविशेषैस्सविशेष एवावतिष्ठते। ततः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषान्निरस्यन्त इति न क्वचिन्निर्विशेषवस्तु सिद्धिः।

धियो हि सोपाधिकत्वस्य स्वप्रकाशत्वस्य च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः स्वाप-मद-मूर्च्छासु च सविशेषानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः। स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेकविशेषास्सन्त्येव। ते च न वस्तुमात्रमिति शक्योपपादनाः। वस्तुमात्राभ्युपगमे सत्यपि [2]तत्प्रकारभेदविवाददर्शनात् स्वाभिमततत्प्रकारभेदैश्च स्वमतोपपादनात् प्रामाणिकैस्सविशेषमेव वस्त्विति वक्तव्यम्। शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यं पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेन हि पदत्वम्। प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः। पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनाऽसामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम्। प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रामाण्यम्। सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम्। निर्विकल्पकमपि सविशेषविषयमेव। सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात्। निर्विकल्पकं नाम केनाचिद्विशेषेण वियुक्तस्य ग्रहणम्, न सर्वविशेष

---

[1] प्राप्ते राद्धान्तमाह (ग. A). [2] विविधाभेद विवाददर्शनात् (ग A).

रहितस्य। तथाभूतस्य कदाचिदपि ग्रहणादर्शनादनुपपत्तेश्च। केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते। तस्मात् पूर्वोक्तमेव समञ्जसम्।

**परमेश्वरः स्वलीलार्थमेव जगत्सृजति**

ननु परमानन्दस्वभावस्य निरवयवस्य शिवस्य किमर्थं जगज्जन्मादिहेतुत्वमित्याशङ्क्याह—

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

शिवस्य परब्रह्मणः कदाचिल्लीलाविलासः, कदाचित्कैवल्यं स्वयमेवावस्थानं च निर्णीयते। यथा लोके सर्वैश्वर्यधैर्यवीर्यपराक्रमधुर्यस्य सप्तद्वीपपरिवृतसर्वमण्डलाधीश्वरस्य महाराजस्य कदाचिद्विलासेन कार्यारम्भकत्वं, कदाचित्तूष्णीमवस्थानं च दृश्यते, किञ्च सर्वेषां चेतनानां यथा स्वाभाविकत्वेन प्राणापानादिवायुसञ्चारः, तथा परमानन्दकन्दस्य परमशिवस्य स्वभावेन जगज्जन्मादिकार्यानुसरणं वा स्यात्। सम्प्राप्तसर्वकामस्य परमानन्दस्वभावस्य शिवस्य स्वलीलया जगज्जन्मादिकार्यारम्भव्यापारकत्वं, प्रळयादूर्ध्वं पुनः सृष्टिपर्यन्तं स्वयमेवावास्थानं च निरवद्यम्।

---

## वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

### परमकारुणिकस्य परमेश्वरस्य वैषम्यनैर्घृण्यादिदोषनिराकरणम् ।

निर्गुणस्य निर्लिप्तस्य परशिवस्य जगत्कारणत्वाङ्गीकारे रोगारोगादिधर्मानुसारेणदेव-तिर्यङ्मनुष्याद्युत्तमाधम-मध्यमसृष्ट्या बद्धजीववद्वैषम्यनैर्घृण्यादिदोषो दुर्वार इत्याशङ्कयाह–

## वैषम्यनैर्घृण्येन सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

लोके जीवानां सुखदुःखभोगदर्शनात्परमेश्वरस्य वैषम्यनैर्घृण्यादिप्रसक्तिर्नोपपद्यते कुतः? **सापेक्षत्वात्**, जीवकृतपुण्यपापसापेक्षत्वात् । **तथा हि दर्शयति** श्रुतिद्योतनात् । यद्यपि परमपुरुषस्य शिवस्य स्वाभाविकचिच्छक्तिसत्त्वेन निरवयस्यापि विचित्रनानाविधजग-ज्जन्मादिहेतुत्वं संभाव्येत ; तथापि देवतिर्यङ्मनुष्याद्युत्तम-मध्यमाधमसृष्ट्या बद्धजीववत्पक्षपातः प्रसज्येत । स्वर्गनरकसुखदुःखादिधर्माणां चेतनेषु द्योतनात् परशिवस्य नैर्घृण्यादिदोषो न वर्जनीय इति चेन्न, तत्रोत्तरं **सापेक्षत्वादिति** । सृज्यमानदेवादिशरीराणां जीवकर्मसापेक्ष-त्वाद्विषमसृष्टिरनिवार्या । देवादितत्तज्जीवनां तत्तत्कर्मसापेक्षत्वं दर्शयन्ति हि श्रुतयः– **"साधुकारी साधुर्भवति, पापकारी पापी भवति", पुण्यः पुण्येन कर्मणा भवति । पापः पापेन कर्मणा भवति"** इति । तथाच व्यासोक्तिः–

**निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।**
**प्रधानकारणीभूताः यतो वै सृज्यशक्तयः ॥**

**निमित्तमात्रमुक्त्वैव नान्यत्किञ्चिदपेक्ष्यते ।**
**नीयते तपसां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम् ॥**

इत्यादिना देवादिवैचित्र्यहेतुः सृज्यमानक्षेत्रज्ञ-प्राचीनकर्म शक्तिरेवेत्युक्तम् ।

## जगन्मिथ्यात्ववादनिरसनम्

अवान्तरसृष्टौ पुण्यपापसापेक्षत्वं शिवस्योपपद्यते। प्राथमिकसृष्टौ जीवनां पुण्यपापकर्मणामभावान्निर्गुणब्रह्मकर्तृत्वे वैषम्यनैर्घृण्यादिदोषो ह्यवर्जनीयः। तस्मान्मिथ्याभूतस्य जगतः मिथ्याभूतशबलब्रह्मकारणत्वमेव युक्तमित्याशङ्क्याह—

### न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

सृष्टेः प्राक् जीवानां कर्मनास्त्येव कुतः? **अविभागात्**। चेतनाचेतनप्रपञ्चस्य प्रळये विनाशेन कर्मणामपि नष्टत्वादिति चेन्न, **अनादित्वात्**। **प्रवाहतरङ्गन्यायेन** सृष्टिप्रळयपरम्परायाः अविच्छिन्नतया सत्त्वेन प्रपञ्चस्यानादित्वात्। **पूर्वसृष्टिकृत** जीवकर्मणां **प्रळयेऽपि** सुप्तिवत्संस्काररूपेण स्थितत्वात्। **उपपद्यते** पुनः सृष्टिकाले जीवकृत पुण्यपापकर्मसापेक्षत्वात् युज्येत। **अपि च** पुनः प्रळयकोल **उपलभ्यते** च। परमेश्वरेच्छया सूक्ष्मरूपत्वमाप्नोति। अतः प्रपञ्चस्य सत्यत्वमनिवार्यम्। सृष्टेः प्राग्जीवानां ब्रह्मणि सूक्ष्मात्मकत्वेन स्थितिः कथमुपपद्यते? कथं जीवकृतपूर्वकर्मसापेक्षत्वं सृष्टिवैषम्यं चोच्यत इति चेन्न; **अनादित्वात्, प्रवाहतरङ्गन्यायेन** जीवानां तत्कृतकर्मणां च तदनादित्वेनाप्यविभाग उपपद्यते। यतस्तदानीं "**जीवानां ग्रीष्मकाले क्षितौ बीजानामिव**-सूक्ष्मरूपेण स्तितिरुपपद्यते। तथा तत्कर्मणामप्येवमङ्गीक्रियते। तदनङ्गीकारे **कृतनाशाकृताभ्यागमदोषः** प्रसज्येत। तस्मात् क्षेत्रज्ञानां तत्तत्कर्मणां चानादित्वमनिवार्यम्। अतः सृष्टेः प्रवाहरूपेण सत्यत्वमुपदिश्यते— "**ज्ञाऽज्ञौ**" इत्यत्र क्षेत्रज्ञानामनादित्वव्यवस्थापनात् तत्तत्कर्मणामप्यर्थात्सिद्धमनादित्वम्।

**ननु** जीवानां तत्तत्कर्मणां च अनादित्वमस्तु; तथापि परशिवस्य जीवदेहकल्पनादेव तत्तत्कर्मोपपद्यते। अचेतनकर्मणां चेतनप्रयोजनत्वेन सामर्थ्यादीश्वरस्यैव तत्तत्कर्मकारणत्वमर्थात्प्रसज्येत। सुप्तिवत्स्वात्मलयसुखानुभवाज्जीवानां सर्वक्लेशायतनशरीरे कुतो भूयः प्रवेशात्मकसृष्टिरुपपद्यते। तस्मात्तस्य निर्दयत्वम्। जीवानां शरीरप्रवेशाभावे तदशेषक्लेशनिर्मुक्तस्वानुग्रहस्वप्राप्त्यभावात् सृष्टिरिति चेदुक्तम्। तथापि सर्वेषां क्षेत्रज्ञानामेककाले

स्वानुग्रहेण सर्वकर्मपाशनिर्मुक्ततया कल्याण कैवल्यात्मकस्वविभूतिः कुतो न दीयते इति चेन्न; शिवः परमकारुणिकोऽपि सर्वक्षेत्रज्ञैककालमुक्तिप्रदानसमर्थोऽपि यथा पृथिवीश्वरवत् स्वशासनानुसारेण जीवकर्मपरिपाकानुसारेण तत्पाशविच्छेदं करोति। लोके प्रभुरपि स्वाज्ञोल्लंघिनं पुत्रमपि स्वदण्डनं विना स्वानुग्रहप्रातिभाजनं न करोति। तथा परमेश्वरः जीवकृतपुण्यपापपालनं विना स्वप्राप्तिं [1]नानुगृह्णाति। प्रभाकरः स्वप्रभाप्रसारणेन विकसनानुकूलपङ्कजान्येव विकासयति तद्वदीश्वरः शम-दम-भक्ति-योगसहकृत जीवानामेव पाशनिवृत्तिं करोति।

ननु "एष एव साधुकर्म कारयति तं य ऊर्ध्वलोकं निनीषयति" इत्यादिश्रुतिषु परमेश्वरस्यैव जीवनियामकत्वश्रवणान्न किञ्चिज्जीवस्य कर्तव्यम्। तस्मात्तस्य वैषम्यनैर्घृण्यदोषस्सम्भवतीति चेत्तदयुक्तम्। जीवानां परमेश्वरवत् सर्वकर्तृत्वसर्वज्ञत्वाद्यभावेऽपि चेतनत्वात् किञ्चिज्ज्ञत्वं किञ्चित्कर्तृत्वं स्वेच्छया सम्भवति। अतस्स्वेच्छाकृत कर्मानुभूतिर्जीवानामनिवार्या। यथा लोके मनुष्यादयः प्रभाकरप्रभानुसारेण स्वस्वव्यापारेषु प्रवर्तन्ते तद्वत् क्षेत्रज्ञाः स्वकर्मानुसारेण परमेश्वरसत्तावशात् तत्तत्कर्म कुर्वन्ति। "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्, इति भगवती श्रुतिस्तस्य सूर्यवत्सर्वसाक्षित्वं दर्शयति। अतस्तस्य न दोषकलङ्कः। तस्माज्जीवजगत्कर्मणां अनादित्वं परमेश्वराधीनत्वं च सिद्धम्। "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" "न जायते न म्रियते वा विपश्चित्"। "इत्यादिश्रुतिषु–

"सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः।
तस्यैवांशो जीवलोके प्राणिनां हृदये स्थितः॥

विस्फुलिङ्गा यथा वह्नौ जायन्ते काष्ठयोगतः।
अनादिकर्मसम्बन्धात् तदंशाश्चमहेशितुः॥

अनादिवासनायुक्तः क्षेत्रज्ञ इति कीर्तितः।
शिवभक्तिश्च सर्वेषां सर्वदा सर्वतोमुखी॥

---

[1] न दास्यति (न A).

तस्यान्तु विद्यमानायां यस्तु मर्त्यः प्रमुच्यते ।
शिवभक्तिमतिर्यस्य सोऽन्त्यजोऽपि विमुच्यते ॥"

इति शिवगीतोपनिषत्सु "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति कृष्णगीतासु च निर्दिष्टम् । अतस्तस्य न कळङ्कलेपः ।

---

## सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥

"निष्कलं निष्क्रियं शान्तं" इत्यादि निष्क्रियत्वविधायकश्रुतीनामधिष्ठानब्रह्मविषयत्वम् । "सत्यकामस्सत्यसंकल्पः" इत्यादिश्रुतीनां मायाप्रतिफलितशबलब्रह्मपरत्वमेवाङ्गीकर्तव्यम् । नोचेत्परस्परविरोधेन वेदान्तानां सर्वेषामप्रामाण्यप्रसक्तिर्दुर्वारेत्याशङ्कायामाह—

## सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

"लोकवत्तु लीलाकैवल्यमि" त्यत्र कदाचित्काले ब्रह्मणः लीलाप्रयोजनत्वस्य कदाचित्काले स्वयमेवावस्थानस्य च व्यवस्थापनात् "यस्सर्वज्ञस्ससर्ववित्" "वामदेवाय नमो" "न तस्य कार्यं करणं च विद्यते" इत्यादिश्रुतिसिद्धसर्वज्ञत्वादि धर्माणां परमेश्वरलीलाकालपरत्वं, निष्क्रियत्वादिधर्माणां स्वशक्तिसंकोचावस्थापरत्वं च तस्मात्सर्वेषां सगुणत्व-निर्गुणत्व-धर्माणां एकस्यैव परशिवस्योपपत्तिः । "एक एव रुद्रो न द्वितीयाय तस्थे" "एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतिषु ब्रह्मैकत्वव्यपदेशात् स्वमुखप्रतिबिम्बवत्कल्पितस्य मायाशबलितस्य सत्तायोगात् व्यापकस्य निरवयवस्य प्रतिफलनाभावात्, स्वमुखप्रतिबिम्बनिष्ठनेत्रोन्मीलनादिधर्माणां स्वस्यैव सम्भवाच्च प्रात्यक्षिकश्रुतिस्मृतिविरुद्धगौतम-दधीचि-व्यासादिशापानुकूलशिव-केशवादिकल्पितजीवेश्वरजगन्मिथ्यात्ववादकमोहशास्त्राणि मुमुक्षूणां शिवभक्तानां अनादरणीयान्यनाश्रयणीयानीति सिद्धम् ।

"केचिदद्वैतमाश्रित्य बिडालप्रतिमा नराः ।
रुद्रेणसाम्यमन्येषां प्रवदन्ति विमोहिताः ॥

दधीचिना गौतमेन ये शप्ताः ब्राह्मणाधमाः ।
फलावतरिष्यन्ति निन्दकास्ते बहिर्नराः ॥

दधीचिव्यासदूर्वासशप्ता लोके द्विजाधमाः ।
जगन्मिथ्यात्वमाश्रित्य पतन्ति नरकार्णवे ॥

जगज्जीवेश्वराणां च मिथ्यात्वप्रतिपादनात् ।
भक्तिभावं परित्यज्य गमिष्यन्ति यमालयम् ॥

अहं ब्रह्मेति वादेन देवताभक्तिवर्जितः ।
नरो याति महाघोरनरकं कालमक्षयम् ॥

इत्यादिस्कान्द-लैङ्ग्य-कूर्मादिपुराणेषु जगन्मिथ्यात्ववादस्य निरस्तत्वात् परब्रह्मण शिवस्य जगज्जन्मादिकारणवेदान्तवादो मुमुक्षुभिराश्रयणीय इति निष्प्रत्यूहम् ॥

इति श्रीमद्यतिव्रजपरिवृढश्रीपतिपण्डितभगवत्पादाचार्यकृतभेदाभेदात्मकविशेषाद्वैत-
सिद्धान्तस्थापकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

विरोधपरिहारपराभिधानस्य द्वितीयाध्यायस्य एकादशाधिकरणावच्छिन्नक्षरमृत्यनव-
काशादिषट्त्रिंशत्सूत्रात्मकः प्रथमः पादः समाप्तः ।

## पञ्चपादिका समाप्ता

---

मध्यमाधिकारिणं प्रति पञ्चपादिका (न्ता ब्रह्मविद्या) "शिवाद्वैतमञ्जरी"

---

## श्रीकरभाष्ये पञ्चपादिकागताधिकरणानां सूत्राणां च संख्यासूची

| प्रथमाध्यायः | पादाः | अधिकरणनि | सूत्राणि |
|---|---|---|---|
| ,, | प्रथमः | ११ | ३२ |
| ,, | द्वितीयः | ७ | ३२ |
| ,, | तृतीयः | १३ | ४३ |
| ,, | चतुर्थः | ८ | २८ |
| द्वितीयाध्यायः | प्रथमः | ११ | ३६ |
| आहत्य | ५ | ५० | १७१ |

# अनुबन्धः - १

## श्रीशङ्करभाष्ये पञ्चपादिकागत ब्रह्मसूत्राणां वर्णानुक्रमणी

# अनुबन्धः - २

## अथ श्रीकरभाष्ये पञ्चपादिकोक्त-वेदोपनिषद्वाक्यानां वर्णानुक्रमणी

अ

### उ



### ऋ



### ए

ध



न

प

ह

---

## अनुबन्धः ३

### अथ श्रीकरभाष्ये षड्वपादिकोदाहृतस्मृत्यागमपुराणोक्तीनां वर्णानुक्रमणी

अ

ई



उ



ऊ



ऋ



ए

## त

द

प

व



भ

य

ह



---

# अनुबन्धः ४

## अथ श्रीकरभाष्ये पञ्चपादिकोदाहृतानां न्यायानामनुक्रमणी

---

# अनुबन्धः ५

## श्रीकरभाष्ये पञ्चपादिकोदाहृतानां व्यक्तीनां ग्रन्थानां च अनुक्रमणी

# अनुबन्धः ६

## श्रीपतिपण्डिताराध्यमहिमान्वितं पल्लकेतराजशिलाशासनपाठः*

शासनस्थानं-विजयवाडीयमल्लेश्वरालयः । (दैर्घ्यं-त्रिपादसार्धद्व्याङ्गुलम ; विस्तारः- सपञ्चाङ्गुलपादः)

१. ओं वितस्ति विहत्रु (स्तृ) तेनापि सर्वैस्तुलिततेजसा । पीतासे (शे) पा-
२. र्थितोयेन कुम्भजेनाप्यगस्तिना ।। पूर्वं कृतजयेशान ना-
३. मापि तदनंत्त (त) रम् । आराध्यमल्लयुद्धेन फल्गुनेन कृता-
४. भिधः ।। मल्लेश्वर इति ख्यात (:) सन्निधत्ते महेश्वरः । श्रीमद्विज-
५. यवाटाख्यपुरे कृष्णाविभूषणे ।। कलौ श्रीमच्छकाब्देऽब्धि-
६. शशिसायकसम्मि (मि) ते । राजा माधववर्माभूद्विख्यातो ध-
७. रणीतले ।। तत (:) स्वपुत्रेण हते तिन्त्रिणीजीविनी सुते । धर्मसं-
८. रक्षणार्थाय स्वपुत्रमवधीत्सराट् ।। ततो मल्लेश्वरः-
९. प्रीतः स्वर्णवृष्टिं ववर्ष च । शिशुपुत्रकयोः प्राणं दत्तवाँ-
१०. स्तस्य कीर्तये ।। तत (:) श्रीपण्डिताराध्यनाम्ना भक्तोत्तमेन-
११. शिवभक्ता एव नूनं देवर्षिभ्योऽधिका इति ।। चीनाम्बरेऽग्निं संस्ता (स्था)-
१२. प्य शमीकोमलशाखया । बद्धे मल्लेश्वरः प्रीतः प्रत्यक्षस्सम-
१३. जायत ।। ईदृग्विधं महादेवं भक्तवत्सलमव्ययम् मल्लेश्व-
१४. रं समाराध्य रेजिरे पृथिवीभुजः ।। स्वस्ति परमवंशोद्भव-भार-
१५. द्वाजगोत्रखट्वाङ्गध्वज वृषभलाञ्छन काञ्चीपुरवरेश्वर कडु-
१६. वायुपरपोषण पल्लवकुलतिलकपादाम्बुजसेवित (वक) अं-

---

श्रीकरभाष्यचतुर्थखण्डे वाराणसी प्रकाशनम्-वास्तविके पृ. ७-८.

१७. नुब (?) कामकुलाधिनायक अनेकवंद्धु (श्च) जनाश्रयपतिहि-

१८. ताभरण पतिमेच्चुगंड्ड (ड) नोड्डुबाडि साहसार्जुन संग्राम-

१९. राम समरैकभीम डक्कुनूलशासनाधिप श्रीवेजवाडमल्ले-

२०. श्वरदेवदिव्यश्रीपादपद्माराधक परबलसूदक विप्रजना-

२१. श्रय श्रीवेङ्गिदेश-चाळुक्यनंककार-परमण्ल-चूरकार-

२२. पतिदेव गुरुद्विजपादभक्तुलनु बररिपुजमुंड्डनु नैन-

२३. श्रीमन्महामण्डलेश्वर पल्लकेतभूपालुण्डु निखिललोक प्र-

२४. [सिद्ध कार्वेटिम] हीपालु-वंशमुननवतरिंचि भुवनविजृ……

---

## ग्रन्थऋणम्

### संस्कृतग्रन्थाः


1) सर्वे वेदाः तद्भाष्याणि च ।

2) प्रकाशिताश्चागमाः ।

3) उपनिषदः ।

4) सिद्धान्तशिखामणिः- श्रीशिवयोगिशिवाचार्यविरचितः ।

5) श्रीकण्ठभाष्यम्- मैसूरु विश्वविद्यालयः, १९०३.

6) श्रीकरभाष्यचतुस्सूत्री- लिं ।। उमचिगी शङ्करशास्त्रिकृत-भावप्रदीपिकाख्यकर्णाटक-भाषाव्याख्यासमेता । १९३८.

7) श्रीकरभाष्यचतुस्सूत्री- लिं ।। चिदिरे मठ वीरभद्रशिवाचार्यसम्पादिता, वाराणसी जङ्गम-वाटिकामठप्रकाशनम् । १९५६.

8) श्रीकरभाष्यचतुस्सूत्री- लिं ।। काशीनाथशास्त्रिसम्पादिता (कर्णाटाक्षररूपा) १९३८.

9) नन्दिकेश्वरकारिका- उपमन्युमुनिविरचितसूत्रविमर्शिनीख्याख्योपेता मैसूरु । १९२६.

10) तन्त्रालोकः- अभिनवगुप्तविरचितः ।

11) शङ्करभाष्यं- वाचस्पतिमिश्रकृत-भामतीव्याख्यासमेतम् ।

12) श्रीभाष्यम्- श्रीमद्रामानुजविरचितम्, सुदर्शनसूरिविरचितश्रुतप्रकाशिकासमेतम् । १९६७.

13) षड्दर्शनसमुच्चयः- हरिभद्रसूरिकृतः, वाराणसी प्रकाशनम् । १८६७.

14) षड्दर्शनसमुच्चयः- राजशेखरविरचितः ।

15) तत्त्वप्रकाशः- श्रीभोजदेवविरचितः ।

16) शिवसूत्रवार्तिकम्- वरदराजकृतम् ।

17) राजतरङ्गिणी- कल्हणविरचिता ।

18) शैवदर्शनबिन्दुः- डा।। कान्तिचन्द्रपाण्डेयः, बाराणसेयसंस्कृतविश्वविद्यानिलयस्य विशिष्ट-प्रवचनमालायाः तृतीयं पुष्पम्। संवत् २०२१.

19) प्रत्यभिज्ञाहृदयम्- क्षेमराजकृतम्।

20) स्पन्दशास्त्रम्।

21) शिवसूत्राणि- वसुगुप्ताचार्योपज्ञानि।

22) शिवदृष्टिः- सोमानन्दविरचिता।

23) ईश्वरप्रत्यभिज्ञाकारिका- उत्पलाचार्यविरचिता।

24) ईश्वरप्रत्यभिज्ञावृत्तिः- उत्पलाचार्यविरचिता।

25) ईश्वरप्रत्यभिज्ञाविवृतिः- उत्पलाचार्यविरचिता।

26) ऋग्वेदादिभाष्यभूमिका- श्रीमद्दयानन्दसरस्वतीविरचिता, अजमीरवैदिकयन्त्रालय-प्रकाशनम्। सं. १९६०.

27) ईश्वरप्रत्यभिज्ञाकारिका- अभिनवगुप्तकृता।

28) ईश्वरप्रत्यभिज्ञाकारिकाविमर्शिनी- अभिनवगुप्तकृता।

29) ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी- अभिनवगुप्तकृता।

30) वाक्यपदीयम्- भर्तृहरिकृतम्।

31) पाशुपतसूत्रम्- लकुलीशकृतम्।

32) पञ्चार्थभाष्यम्- कौण्डिन्यविरचितम्।

33) गणकारिका- हरदत्ताचार्यविरचिता।

34) गणकारिकाटीका- भासर्वज्ञकृता।

35) ब्रह्मसूत्रटीका- यादवप्रकाशकृता।

36) भगवद्गीताटीका- यादवप्रकाशकृता।

37) क्रियासारः- नीलकण्ठशिवाचार्यकृतः भागत्रयोपेतः, मैसूरु विश्वविद्यालय प्रकाशनम्। १९५४.

38) वीरशैवानन्दचन्द्रिका- मरितोण्टदार्यकृता। मूरुसाविरमठ प्रकाशनम्, हुबळी। १९३६.

39) शिवतत्त्वरत्नाकरः- केळदीबसवराजसङ्कलितः। वेनगल् रामराव् सम्पादितं, मदरास् प्रकाशनम्।

40) वीरशैवसदाचारसंग्रहः- बारदमल्लप्पबसप्पा प्रकाशनम्, सोलापुर १९०५.

41) वेदान्तसारवीरशैवचिन्तामणिः- निट्टूरु नञ्जणार्यविरचितः। वारदमल्लप्पा बसप्पा प्रकाशनम्। सोलापुर १९०८.

42) शङ्करविजयः- आनन्दगिरिकृतः।

43) शङ्करदिग्विजयः- विद्यारण्यस्वामिकृतः।

44) गुरुवंशकाव्यम्- श्रीरङ्ग वाणीविलास प्रेस् प्रकाशनम्।

45) लिङ्गधारणचन्द्रिका- नन्दिकेश्वरकृता। वाराणसी जङ्गमवाटिकामठप्रकाशनम्। १९०५

46) लिङ्गधारणचन्द्रिका- श्री एम्. आर्. साखेर सम्पादिता। Lingaraj College, Belgam, 1942.

47) पञ्चब्रह्मोदयभाष्यम्- सासलचिक्कणार्य-विरचितम्। कन्नड अध्ययन संस्था, मैसूरु विश्वविद्यानिलयः, मैसूरु।

48) तैत्तिरीयोपनिषद्भाष्यम्- वृषभपण्डिताराध्यविरचितम्। वाराणसी जङ्गमवाटिकामठ-प्रकाशनम्।

49) श्वेताश्वतरोपनिषद्भाष्यम्- डा. टि. जि सिद्धप्पाराध्यविरचितम्।

50) कैवल्योपनिषत्-सदाशिवभाष्यम्- सदाशिवशिवाचार्य-विरचितम्। १९५०.

51) मुण्डकोपनिषद्भाष्यम्- उमचिगी शङ्करशास्त्रि विरचितम्। प्रबोधपुस्तकमाला, मैसूरु १९६१.

52) ईश-केन-सिद्धान्तशिखोपनिषद्भाष्याणि- उमचिगी शङ्करशास्त्रि-विरचितानि।

53) ब्रह्मसूत्रवृत्तिः- उमचिगी शङ्करशास्त्रिविरचिता। शङ्करविलाससंस्कृतपाठशालाप्रकाशनम्। १९७४.

54) अनुभवसूत्रम्- मोग्गे मायिदेव-विरचितम्। एन्. आर्. करिबसवशास्त्रिसम्पादितम्। मैसूरु।

55) शिवाद्वैतपरिभाषा- नीलकण्ठशिवाचार्य-विरचिता।

56) **वीरशैवाचारकौस्तुभः-** मौनप्प-पण्डितकृतः ।

57) **महिम्नस्तवः-** पुष्पदन्तविरचितः ।

58) **आगमसंस्कृतिः-** 'सारस्वती सुषमा' (त्रैमासिकी) वाराणसेयसंस्कृत-
विश्वविद्यालयपत्रिका । (२०१७)

59) **आगमसंस्कृतिः-** "ऋषिकल्पन्यासः" भारतीयपरिषत्, प्रयागः ।
एम्. जि. नञ्जुण्डाराध्यलेखनसमेतः ।

60) **चन्द्रिका-** श्रीमन्महाराजसंस्कृतमहाविद्यालयवार्षिकसंचिका । एम्. जि. नञ्जुण्डाराध्य-:
लेखनसमेतः । मैसूरु (१९६७).

61) **शैवपरिभाषा-** श्रीशिवाग्रयोगीन्द्रज्ञानशिवाचार्यविरचिता । मैसूरु विश्वविद्यालय
प्रकाशनम् । १९५०.

62) **शक्तिविशिष्टाद्वैतदर्शनम्-** डा. टि. जि. सिद्धप्पाराध्यविरचितम् । १९६१.

63) **चन्द्रज्ञानागमः-** पञ्चाचार्य प्रेस् मैसूरु । १९५६.

64) **कर्णाटकशब्दानुशासनम्-** भट्टाकळङ्कप्रणीतम् । १८९०.

65) **काशकृत्स्नशब्दधातुकलापः-** काशीचन्नवीर-कृतः, । डा ॥ ए. एन्. नरसिंहय्य-सम्पादितः ।
**Printed at the Wesly Press and Publishing House, Mysore.**

66) **सिद्धान्तकौमुदी-** बालमनोरमा-व्याख्या समेता ।

## कर्णाटकग्रन्थाः (कन्नड-तेलुगु-हिन्दी)

67) ವಚನಶಾಸ್ತ್ರರಹಸ್ಯ (ಶ್ರೀ ಆರ್.ಆರ್. ದಿವಾಕರ್ ವಿರಚಿತ)

68) ವೀರಶೈವ ಉಗಮ ಮತ್ತು ಪ್ರಗತಿ– ಶ್ರೀ ಟಿ.ಎನ್. ಮಲ್ಲಪ್ಪನವರು,
ನಿವೃತ್ತ ಹೈಕೋರ್ಟ್ ನ್ಯಾಯಮೂರ್ತಿಗಳು.

69) ಮಣಿಮುಕುರ– ಡಾ॥ ಶ್ರೀ ಜ.ಚ.ನಿ., ನಿಡುಮಾಮಿಡಿ ಶ್ರೀಶೈಲಪುಸ್ತಕ ಭಾಂಡಾಗಾರ
49, ಎಚ್. ಬಿ. ಸಮಾಜ ರಸ್ತೆ, ಬಸವನಗುಡಿ, ಬೆಂಗಳೂರು.

70) ಕನ್ನಡ ವಿಶ್ವಕೋಶ– ಮೈಸೂರು ವಿಶ್ವವಿದ್ಯಾಲಯ.

71) ಭಾರತೀಯ ಸಂಸ್ಕೃತಿ– ಡಾ॥ ಎಸ್. ಶ್ರೀಕಂಠಶಾಸ್ತ್ರೀ, ಮೈಸೂರು ವಿಶ್ವವಿದ್ಯಾಲಯ ಪ್ರಕಾಶನ.

72) ಪ್ರಬುದ್ಧ ಕರ್ನಾಟಕ– ಮೈಸೂರು ವಿಶ್ವವಿದ್ಯಾಲಯ.

73) ರಾಘವಾಂಕಚರಿತ– ಸಂಪಾದನೆಯ ಸಿದ್ಧನಂಜೇಶ ಕೃತ, ಧಾರವಾಡ ಪ್ರಕಾಶನ.

